# अथ चतुर्दशोऽध्यायः

## भारताख्याने कुरुपाण्डवसङ्ग्रामवर्णनम्

अग्निरुवाच– **यौधिष्ठिरी दौर्योधनी कुरुक्षेत्रं ययौ चमूः । भीष्मद्रोणादिकान्दृष्ट्वा नायुध्यत गुरूनिति ॥ १ ॥ पार्थं ह्युवाच भगवानशोच्या भीष्ममुख्यकाः। शरीराणि विनाशीनि न शरीरी विनश्यति ॥ २ ॥ अयमात्मा परं ब्रह्म अहं ब्रह्मास्मि विद्धि तम् । सिध्यसिद्ध्योः समो योगी राजधर्मं प्रपालय ॥ ३ ॥ कृष्णोऽक्तोऽथार्जुनोऽयुध्यद्रथस्थो वाद्यशब्दवान् । भीष्मः सेनापतिरभूदादौ दौर्योधने बले ॥ ४ ॥ पाण्डवानां शिखण्डी च तयोर्युद्धं बभूव ह । धार्तराष्ट्राः पाण्डवांश्च जघ्नुर्युद्धे सभीष्मका : ॥ ५ ॥ धार्तराष्ट्राञ्शिखण्ड्याद्याः पाण्डवा जघ्नुराहवे । देवासुरसमं युद्धं कुरुपाण्डवसेनयोः ॥ ६ ॥ बभूव खस्थदेवानां पश्यतां प्रीतिवर्धनम् । भीष्मोऽस्त्रैः पाण्डवं सैन्यं दशाहोभिर्न्यपातयत् ॥ ७ ॥ दशमे ह्यर्जुनो बाणैर्भीष्मं वीरं ववर्ष ह। शिखण्डी द्रुपदोक्तोऽस्त्रैर्ववर्ष जलदो यथा ॥८॥ हस्त्यश्वरथपादातमन्योन्यास्त्रनिपातितम् । भीष्मः स्वच्छन्दमृत्युश्च युद्धमार्गं**

---

**अग्निदेव ने कहा**– युधिष्ठिर तथा दुर्योधन की सेनाएँ कुरुक्षेत्र पहुँच गयीं । भीष्म तथा द्रोण आदि को देखकर 'ये हमारे गुरुजन हैं' यह सोचकर अर्जुन ने युद्ध नहीं करना चाहा ।। १ ।। **भगवान् ने अर्जुन से कहा**– कौरवों के भीष्म आदि मुख्य योद्धाओं के विषय में शोक करना ठीक नहीं । विनाश तो शरीरों का होता है, आत्मा तो अविनाशी है ।। २ ।।यह आत्मा परंब्रह्म है। 'मैं ब्रह्म हूँ' इसी प्रकार से तुम आत्मा को जानो । सफलता तथा असफलता दोनों को समान रूप से जानने वाला तुम योगी बनो, और राजधर्म का पालन करो ।। ३ ।। विशेष- **आत्मा को परंब्रह्म कहने का अभिप्राय यह है कि जिस तरह इस शरीर का सारा संबन्ध तब तक बना रहता है, जब तक उसके भीतर आत्मा विद्यमान रहती है । आत्मा के शरीर से निकल जाने पर सभी विनष्ट हो जाते हैं । अपने लोग भी पराए हो जाते हैं । बान्धव जन ही उस शरीर को जलाकर विनष्ट कर देते हैं। उसी तरह से आत्मा के भीतर परमात्मा का निवास है । परमात्मा के साथ नित्य ही रहने के कारण आत्मा नित्य ही बनी रहती है । वह परमात्मा ही सभी आत्मओं में अन्तर्यामी रूप से व्याप्त है । जिस तरह से शरीर तथा आत्मा में अभेद का व्याहार-व्यवहार होता है उसी तरह से आत्मा तथा परमात्मा में भी अभेद का व्याहार-श्रुतियों में किया है । छान्दोग्य श्रुति कहती है– 'ऐतदात्म्यमिदं सर्वम् तत्सत्यं स आत्मा, तत्त्वमसि श्वेतकेतो ।' ( छा. उ. ) अर्थात् हे श्वेतकेतो ! यह सम्पूर्ण जगत् ऐतदात्मक ( परमात्मक ) है, वह परमात्मा ही सत्य ( नित्य ) है, तुम भी परमात्मक ही हो। एक दूसरी श्रुति भी कहती है 'अयमात्मा ब्रह्म' ( बृ. उ. २/५/१९+मा. डू. २+. पू. ४/२+नृसिंहो. १/९ ) अर्थात् यह आत्मा जो समस्त शरीरों के भीतर विद्यमान है, ब्रह्मात्मक होने के कारण ब्रह्म ही है । अतएव भीष्म तथा द्रोण आदि को ब्रह्मात्मक समझो, आत्मा नित्य है । उनके विषय में किसी प्रकार का शोक करना ठीक नहीं है, क्योंकि उनकी आत्मा को तो तुम मारने जा नहीं रहे हो । इस समय तुम्हें योगी होना होगा । योगी सफलता से न तो प्रसन्न होता है और तो असफलता से अप्रसन्न । वह दोनों को समान रूप से देखता है । वह कर्तव्य में विश्वास रखता है। तुम क्षत्रिय हो । क्षत्रिय का धर्म है कि वह धर्म युद्ध करे । तुम्हें क्षत्रिय का धर्मपालन करने के लिए युद्ध करना चाहिए । विजय प्राप्ति की इच्छा से नहीं** ।। श्रीकृष्ण के द्वारा इस तरह कहे जाने पर अर्जुन ने रथ पर बैठकर रणबाद्य आदि का शब्द करता हुआ युद्ध किया । सर्वप्रथम दुर्योधन की सेना के सेनापति भीष्म हुए।।४।। पाण्डवों की सेना के सेनापति शिखण्डी हुए । दोनों सेनाओं में युद्ध हुआ । भीष्म के साथ धृतराष्ट्र पुत्रों ने पाण्डवों पर प्रहार किया ।। ५ ।। शिखण्डी आदि पाण्डवों ने कौरवों को युद्ध में मारना प्रारम्भ किया । कौरव तथा पाण्डव की सेनाओं में देवासुर संग्राम के समान युद्ध हुआ । यह युद्ध आकाश में रहने वाले देवताओं के लिए अत्यन्त प्रियकर था । भीष्म ने दस दिन पर्यन्त अपने अस्त्रों से पाण्डवों की सेना का वध किया । दसवें दिन अर्जुन ने वीर भीष्म के ऊपर बाणों की वर्षा की तथा द्रुपद के कहने से शिखण्डी ने उनके ऊपर मेघ के समान अस्त्रों की वर्षा की ।। ६-८ ।।

प्रदर्श्य च ॥ ९ ॥ वसूक्तो वसुलोकाय शरशय्यागतः स्थितः । उत्तरायणमीक्षंश्च ध्यायन् विष्णुं स्तुवन् स्थितः ॥ १० ॥ दुर्योधने तु शोकार्ते द्रोणः सेनापतिस्त्वभूत् । पाण्डवे हर्षिते सैन्ये धृष्टद्युम्नश्चमूपतिः ॥ ११ ॥ तयोर्युद्धं बभूवोग्रं यमराष्ट्रविवर्धनम् । विराटद्रुपदाद्याश्च निमग्ना द्रोणसागरे॥१२॥ दौर्योधनी महासेना हस्त्यश्वरथपत्तिनी । धृष्टद्युम्नाद्धि पतिता द्रोणः काल इवाऽऽबभौ ॥ १३ ॥ हतोऽश्वत्थामा वेत्युक्ते द्रोणः शस्त्राणि चात्यजत्। धृष्टद्युम्नशराक्रान्तः पतितः स महीतले ॥ १४ ॥ पञ्चमेऽहनि दुर्धर्षः सर्वक्षत्रं प्रमथ्य च ॥ दुर्योधने तु शोकार्ते कर्णः सेनापतिस्त्वभूत् ॥ १५ ॥ अर्जुनः पाण्डवानां च तयोर्युद्धं बभूव ह । शस्त्राशस्त्रि महारौद्रं देवासुररणोपमम् ॥ १६ ॥ कर्णार्जुनाख्ये सङ्ग्रामे कर्णोऽरीनवधीच्छरैः । द्वितीयेऽहनि कर्णस्तु अर्जुनेन निपातितः ॥ १७ ॥ शल्यो दिनार्धं युयुधे ह्यवधीत्तं युधिष्ठिरः । युयुधे भीससेनेन हतसैन्यः सुयोधनः ॥ १८ ॥ बहून् हत्वा नरादींश्च भीमसेनमथाऽद्रवत् । गदया प्रहरन्तं तु भीमस्तं तु व्यपातयत् ॥ १९ ॥ गदयाऽन्यानुजांस्तस्य तस्मिन्नष्टादशेऽहनि । रात्रौ सुषुप्तं च बलं पाण्डवानां न्यपातयत् ॥ २० ॥ अक्षौहिणीप्रमाणं तु अश्वत्थामा महाबलः । द्रौपदेयांश्च पाञ्चालान् धृष्टद्युम्नं च सोऽवधीत् ॥ २१ ॥ पुत्रहीनां द्रौपदीं तां रुदतीमर्जुनस्ततः । शिरोमणिं तु जग्राह ऐषीकास्त्रेण तस्य च ॥ २२ ॥ अश्वत्थामास्त्रनिर्दग्धं जीवयामास वै हरिः । उत्तरायास्ततो गर्भं स परीक्षिदभून्नृपः ॥ २३ ॥ कृतवर्मा कृपो द्रौणिस्त्रयो मुक्तास्ततो रणात्। पाण्डवाः सात्यकिः कृष्णः सप्त मुक्ता न चापरे ॥ २४ ॥ स्त्रियश्चाऽऽर्ताः समाश्वास्य भीमाद्यैः स युधिष्ठिरः। संस्कृत्य प्रहतान् वीरान् दत्तोदकधनादिकः॥२५॥ भीष्माच्छान्तनवाच्छ्रुत्वा धर्मान्सर्वांश्च शान्तिदान् । राजधर्मान्

हाथी, घोड़े रथ तथा पैदल सेना एवं परस्पर में एक दूसरे के असंख्य वीर मार गिराए गये । अपनी इच्छा के अनुसार मृत्यु वाले भीष्म युद्ध का मार्ग दिखलाकर वसुओं के द्वारा कहे जाने पर वसुलोक जाने के लिए उत्तरायण आने की इच्छा से भगवान् विष्णु की स्तुति करते हुए शरशय्या पर पड़े रहे ।। ९-१० ।। दुर्योधन के शोकार्त हो जाने पर द्रोण उसकी सेना के सेनापति बने और हर्षित पाण्डवों की सेना के सेनापति राजा धृष्टद्युम्न हुए ।। ११ ।। उन दोनों सेनाओं का ऐसा भयङ्कर युद्ध हुआ कि उससे यमराज का राज्य बढ़ गया । विराट् तथा द्रुपद आदि वीर द्रोण रूपी सागर में डूब गए। अर्थात् द्रोण ने उन्हें मार डाला ।। १२ ।। हाथी, घोड़े, रथ और पैदल सेना से युक्त दुर्योधन की महासेना को धृष्टद्युम्न ने मार गिराया । यह देखकर द्रोणाचार्य काल के समान पाण्डवों की सेना का नाश करने लगे ।। १३ ।। अश्वत्थामा नाम का मनुष्य अथवा हाथी मारा गया, यह सुनकर द्रोण ने शस्त्र का त्याग कर दिया । अत्यन्त पराक्रमी द्रोणाचार्य सशस्त्र क्षत्रियों को मारकर धृष्टद्युम्न के बाणों से जर्जर होकर पृथ्वी पर गिर पड़े । पुनः दुर्योधन के शोकार्त होने पर उसकी सेना के सेनापति कर्ण हुए ।। १४ -१५ ।। पाण्डवों की सेना के सेनापति अर्जुन बने और उन दोनों का परस्पर में शस्त्रों के द्वारा देवासुर संग्राम के समान अत्यन्त भयंकर युद्ध हुआ ।। १६ ।। कर्ण तथा अर्जुन के संग्राम में कर्ण ने बाणों द्वारा शत्रुओं का वध किया । दूसरे दिन अर्जुन ने कर्ण को मार गिराया ।। १७ ।। शल्य ने आधा दिन तक युद्ध किया और उसका वध युधिष्ठिर ने किया । जिसकी सेना मार दी गयी थी उस दुर्योधन ने भीम के साथ युद्ध किया ।। १८ ।। बहुत से मनुष्यों आदि को मारकर वह (दुर्योधन) भीम के ऊपर टूट पड़ा प्रहार करने वाले उस दुर्योधन को भीम ने मार गिराया ।। १९ ।। उस अठारहवें दिन भीम ने गदा से दुर्योधन के अन्य अनुजों को मार गिराया । महाबली अश्वत्थामा ने रात्रि में सोयी हुयी पाण्डवों की एक अक्षौहिणी सेना को मार दिया । उसने द्रौपदी के पुत्रों,पाञ्चाल वीरों तथा धृष्टद्युम्न का वध कर दिया ।। २०-२१ ।। उसके पश्चात् रोती हुई द्रौपदी को सान्त्वना देकर अर्जुन ने अश्वत्थामा को पकड़ लिया तथा ऐषिकास्त्र के द्वारा उसके सिर की मणि को निकाल लिया ।। २२ ।। अश्वत्थामा के अस्त्र से निर्दग्ध (भस्म) उत्तरा के गर्भ को श्रीहरि (भगवान् श्रीकृष्ण) ने जीवित कर दिया । वही राजा परीक्षित हुआ ।। २३ ।। लड़ाई से कृतवर्मा, कृपाचार्य और अश्वत्थामा ये तीन वीर कौरव पक्ष में बचे और पाण्डवों के पक्ष में पाञ्चों पाण्डव, सात्यकि तथा श्रीकृष्ण ये सात वीर बचे दूसरे नहीं ।। २४ ।। आर्त स्त्रियों को आश्वस्त करके भीम आदि के साथ युधिष्ठिर मारे गए वीरों का संस्कार करके उनके निमित्त जलदान तथा धन

मोक्षधर्मान् दानधर्मान् नृपोऽभवत्॥ २६ ॥ अश्वमेधे ददौ दानं ब्राह्मणेभ्योऽरिमर्दनः । श्रुत्वाऽर्जुनान्मौसलेयं यादवानां च संक्षयम् ॥ २७ ॥ राज्ये परीक्षितं स्थाप्य सानुजः स्वर्गमाप्तवान्॥ २८ ॥

इत्यादिमहापुराण आग्नेये भारताख्यानं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

## अथ पञ्चदशोऽध्यायः

## पाण्डवस्वर्गारोहणवर्णनम्

अग्निरुवाच– **युधिष्ठिरे तु राज्यस्थे आश्रमादाश्रमान्तरम् । धृतराष्ट्रो वनमगाद् गान्धारी च पृथा द्विज ॥ १ ॥ विदुरस्त्वग्निना दग्धो वनजेन दिवं गतः। एवं विष्णुर्भुवो भारमहरद् दानवादिकम् ॥ २ ॥ धर्मायाधर्मनाशाय निमित्तीकृत्य पाण्डवान् । स विप्रशापव्याजेन मुसलेनाहरत् कुलम् ॥ ३ ॥ यादवानां भारकरं, वज्रं राज्येऽभ्यषेचयत् । देवादेशात्प्रभासे स देहं त्यक्त्वा स्वयं हरिः ॥ ४ ॥ इन्द्रलोके ब्रह्मलोके पूज्यते स्वर्गवासिभिः । बलभद्रोऽनन्तमूर्तिः पातालस्वर्गमीयिवान् ॥ ५ ॥ अविनाशी हरिर्देवो ध्यानिभिर्ध्येय एव सः । विना तं द्वारकास्थानं प्लावयामास सागरः ॥ ६ ॥ संस्कृत्य यादवान् पार्थो दत्तोदकधनादिकः । स्त्रियोऽष्टावक्रशापे भार्या विष्णोश्च याः स्थिताः ॥ ७ ॥ पुनस्तच्छापतो नीता गोपालैर्लगुडायुधैः । अर्जुनं हि तिरस्कृत्य, पार्थः शोकं चकार ह ॥ ८ ॥ व्यासेनाश्वासितो मेने बलं मे कृष्णसन्निधौ । हस्तिनापुरमागत्य पार्थः सर्वं न्यवेदयत् ॥ ९ ॥**

---

आदि का दान किया ।। २५ ।। पुनः वे शान्ति प्रदान करने वाले सभी धर्मों, राजधर्मों, मोक्षधर्मों तथा दानधर्मों का शन्तनु के पुत्र भीष्म के मुख से श्रवण करके राजा बने ।। २६ ।। शत्रुओं का नाश करने वाले युधिष्ठिर ने अश्वमेघ याग में ब्राह्मणों को दान दिया, अर्जुन के मुख से मूसल जन्य यादवों का विनाश सुनकर युधिष्ठिर ने परीक्षित को राजा बनाया और स्वयं अपने अनुजों के साथ स्वर्ग प्राप्त किए ।। २७-२८ ।।

**इस तरह आदिमहापुराण अग्निपुराण का भारताख्यान वर्णन नामक चौदहवाँ अध्याय सम्पूर्ण हुआ ॥ १४ ॥**

**अग्निदेव ने कहा–** हे द्विज ! युधिष्ठिर के राजा हो जाने पर धृतराष्ट्र एक आश्रम का त्याग करके दूसरे आश्रम को स्वीकार करने के नियमानुसार गार्हस्थ्य के पश्चात् वानप्रस्थाश्रम को स्वीकार करके गन्धारी तथा कुन्ती के साथ वन चले गए ।। १ ।। विदुर तो वनाग्नि में जलकर स्वर्ग चले गए । इस तरह से भगवान् विष्णु ने पृथिवी के भारस्वरूप दानवादिकों का विनाश किया ।। २।। धर्म की रक्षा तथा अधर्म का नाश करने के लिए श्री भगवान् ने पाण्डवों को बहाना बनाकर संहार करने का कार्य किया तथा ब्राह्मणों के शाप के बहाने से मुसल के द्वारा अपने वंश का संहार किया।।३।। यादवों के लिए भारस्वरूप वज्र को राजा बनाकर श्रीभगवान् ने देवताओं के आदेश से स्वयम् प्रभास क्षेत्र में जाकर अपना शरीर त्याग कर इन्द्रलोक में तथा ब्रह्मलोक में स्वर्ग के निवासी देवताओं द्वारा पूजित हुए ।। ४।। अनन्त (शेष) के अवतारस्वरूप बलभद्रजी पाताल स्वर्ग में चले गये । नित्य स्वरूप श्रीभगवान् दिव्यगुण सम्पन्न होने के कारण देव हैं । वे ही ध्यान करने वाले पुरुषों के द्वारा ध्यान करने योग्य हैं । श्रीकृष्ण भगवान् के अभाव में समुद्र ने द्वारका को डुबो दिया ।। ६ ।। अर्जुन यादवों का संस्कार करके तथा उनके (आत्मोन्नयनार्थ) जलदान तथा धन आदि का दान किए । अष्टावक्र मुनि के शाप से जो स्त्रियाँ भगवान् विष्णु (श्रीकृष्ण) की पत्नियाँ बनी थीं, उन्हीं के शाप के प्रभाव से गोपालों ने अपनी लाठी के बल से अर्जुन का अपमान करके उनको लूट लिया। यह देखकर अर्जुन शोक करने लगे ।। ७-८ ।। व्यास जी के द्वारा आश्वाशन प्राप्त करने पर उन्होंने माना कि मेरा सारा बल श्रीभगवान् के ही कारण था। हस्तिनापुर आकर अर्जुन ने सारी कथा

युधिष्ठिराय सभ्रात्रे पालकाय नृणां तदा ॥ तद्धनुस्तानि चास्त्राणि स रथस्ते च वाजिनः ॥ १० ॥ विना कृष्णेन तन्नष्टं दानमश्रोत्रिये यथा। तच्छ्रुत्वा धर्मराजस्तु राज्ये स्थाप्य परीक्षितम् ॥ ११ ॥ प्रस्थानं प्रस्थितो धीमान् द्रौपद्या भ्रातृभिः सह । संसारानित्यतां ज्ञात्वा जपन्नष्टशतं हरेः ॥ १२ ॥ महापथे तु पतिता द्रौपदी सहदेवकः । नकुलः फाल्गुनो भीमो राजा शोकपरायणः ॥ १३ ॥ इन्द्रानीतरथारूढः सानुजः स्वर्गमाप्तवान् । दृष्ट्वा दुर्योधनादींश्च वासुदेवं च हर्षितः ॥ १४ ॥ एतत्ते भारतं प्रोक्तं यः पठेत्स दिवं व्रजेत् ॥ १५ ॥

इत्यादिमहापुराण आग्नेये पाण्डवप्रास्थानिकपर्ववर्णनं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

## अथ षोडशोऽध्यायः

## बुद्धावतारवर्णनम्

अग्निरुवाच– **वक्ष्ये बुद्धावतारं च पठतः शृण्वतोऽर्थदम् । पुरा दे ( दै ) वासुरे युद्धे दैत्यैर्देवाः पराजिताः ॥ १ ॥ रक्ष रक्षेति शरणं वदन्तो जग्मुरीश्वरम्। मायामोहस्वरूपोऽसौ शुद्धोदनसुतोऽभवत् ॥ २ ॥ मोहयामास दैत्यांस्तांस्त्याजिता वेदधर्मकम् । ते च बौद्धा बभूवुर्हि तेभ्योऽन्ये वेदवर्जिताः ॥ ३॥ आर्हतः सोऽभवत्पश्चादार्हतानकरोत्परान् । एवं पाषण्डिनो जाता वेदधर्मादिवर्जिताः ॥ ४ ॥ नरकार्हं कर्म चक्रुर्ग्रहीष्यन्त्यधमादपि। सर्वे कलियुगान्ते तु भविष्यन्ति च सङ्करशः ॥ ५ ॥ दस्यवः शीलहीनाश्च वेदो वाजसनेयकः । दश पञ्च च शाखा वै प्रमाणेन भविष्यति ॥ ६॥**

---

तात्कालिक प्रजाओं के पालक तथा भाइयों के साथ उपविष्ट महाराज युधिष्ठिर को सुनाया ।। ९।। उन्होंने कहा- मेरा वही धनुष् था, वे ही मेरे अस्त्र थे, वही रथ था और वे ही घोड़े थे । किन्तु कृष्ण के अभाव में वे सब उसी तरह व्यर्थ हो गए जिस तरह अश्रोत्रिय को दिया गया दान व्यर्थ होता है ।। १०।। यह सुनकर धर्मराज ने परीक्षित को राजा बना दिया और स्वयम् भाइयों तथा द्रौपदी के साथ संसार की अनित्यता को जानकर श्रीभगवान् के अष्टोत्तर शत नाम को जपते हुए प्रस्थान किया ।। ११-१२ ।। उस महापथ पर द्रौपदी सहदेव के साथ गिर पड़ीं, फिर नकुल, फिर अर्जुन और इसके बाद भीम गिर पड़े । यह देखकर राजा युधिष्ठिर शोकार्त हो गए ।। १३ ।। इन्द्र के द्वारा लाये गये रथ पर चढ़कर छोटे भाइयों के साथ वे स्वर्ग पहुँचे । वहाँ पर दुर्योधन आदि तथा श्रीकृष्ण को देखकर वे हर्षित हुए ।। १४ ।। हे वसिष्ठ ! यह मैंने आपको महाभारत की कथा सुनायी, इसको जो पढ़ेगा वह स्वर्गलोक को प्राप्त करेगा ।। १५ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का पाण्डवप्रास्थानिकपर्व वर्णन नामक पन्द्रहवाँ अध्याय सम्पूर्ण हुआ ॥ १५ ॥**

**अग्निदेव ने कहा–** अब मैं बुद्धावतार का वर्णन करूँगा, जिसके पढ़ने से अर्थ की प्राप्ति होती है । प्राचीनकाल में देवासुर संग्राम में दैत्यों ने देवताओं को परास्त कर दिया ।। १ ।। तब देवता भगवन्! हमारी रक्षा कीजिए । हमारी रक्षा कीजिए !! यह कहते हुए ईश्वर (श्रीभगवान्) की शरण में गए । यह सुनकर माया मोह स्वरूप श्रीभगवान् शुद्धोदन के पुत्र के रूप में अवतीर्ण हुए ।। २ ।। उन्होंने दैत्यों को मोहित करके उन्हें वैदिक धर्म से पराङ्मुख बना दिया । वे ही दैत्य बौद्ध हो गए, उन्हीं से अन्य लोगों ने भी वैदिक धर्म का त्याग कर दिया ।। ३ ।। इसके पश्चात् भगवान् स्वयम् आर्हत् होकर दूसरे लोगों को आर्हत् (जैन) बना दिए । इस तरह से वैदिक धर्म से रहित लोग पाखण्डी हो गए ।। ४ ।। इन सबों ने नरक प्राप्ति के योग्य कर्मों को किया और लोग इस धर्म की शिक्षा अधर्मी लोग से भी प्राप्त करेंगे । सभी लोग कलियुग के अन्त में वर्णसंकर हो जायेंगे ।। ५ ।। सभी लोग दस्यु (चोर) तथा शीलहीन हो जायेंगे तथा एकमात्र शुक्लयजुर्वेद की वाजसनेयी शाखा रह जायेगी । वेदों की केवल दस-पाँच शाखाएँ प्रमाण के लिए रह जायेंगी ।। ६ ।। धार्मिक स्वांग बनाए हुए तथा अधर्म में रुचि रखने वाले राजा के रूप में म्लेच्छ लोग मनुष्यों

धर्मकञ्चुकसंवीता अधर्मरुचयस्तथा। मानुषान् भक्षयिष्यन्ति म्लेच्छाः पार्थिवरूपिणः ॥ ७ ॥ कल्की विष्णुयशः पुत्रो याज्ञवल्क्य पुरोहितः। उत्सादयिष्यति म्लेच्छान् गृहीतास्त्रः कृतायुधः ॥ ८ ॥ स्थापयिष्यति मर्यादां चातुर्वर्ण्ये यथोचिताम्। आश्रमेषु च सर्वेषु प्रजा सद्धर्मवर्त्मनि ॥ ९ ॥ कल्किरूपं परित्यज्य हरिः स्वर्गं गमिष्यति। ततः कृतयुगं नाम पुरावत्सम्भविष्यति ॥ १० ॥ वर्णाश्रमाश्च धर्मेषु स्वेषु स्थास्यन्ति सत्तम। एवं सर्वेषु कल्पेषु सर्वमन्वन्तरेषु च ॥ ११ ॥ अवतारा असङ्ख्याता अतीतानागतादयः। विष्णोर्दशावतारांशान्यः पठेच्छृणुयान्नरः ॥ १२ ॥ सोऽवाप्तकामो विमलः सकुलः स्वर्गमाप्नुयात् धर्माधर्मव्यवस्थानमेवं वै कुरुते हरिः ॥ १३ ॥ अवतीर्णः स जगतः सर्गादेः कारणं हरिः ॥ १४ ॥

इत्यादिमहापुराण आग्नेये बुद्धावतारवर्णनं नाम षोडशोऽध्यायः ॥ १६ ॥

## अथ सप्तदशोऽध्यायः

### जगत्सर्गवर्णनम्

*अग्निरुवाच*— **जगत्सर्गादिकां क्रीडां विष्णोर्वक्ष्येऽधुना शृणु। स्वर्गादिकृत्स सर्गादिः सृष्ट्यादिः सगुणोऽगुणः ॥ १ ॥ ब्रह्माव्यक्तं सदग्रेऽभून्नखं रात्रिदिनादिकम्। प्रकृतिः पुरुषो विष्णुः, प्रविश्याक्षोभयत्ततः॥२॥ सर्गकाले महत्तत्त्वमहङ्कारस्ततोऽभवत्। वैकारिकस्तैजसश्च भूतादिश्चैव तामसः॥३॥ अहङ्काराच्छब्दमात्रमाकाशमभवत्ततः। स्पर्शमात्रोऽनिलस्तस्माद्रूपमात्रोऽनलस्ततः ॥ ४ ॥ रसमात्रा आप इतो गन्धमात्रा धरित्र्यभूत्। अहङ्कारात्तामसात्तु**

---

का भक्षण करने वाले हो जायेंगे ।। ७ ।। इसके पश्चात् श्रीभगवान् का विष्णुयज्ञ के पुत्र के रूप में कल्की अवतार होगा। उनके याज्ञवल्क्य पुरोहित होंगे। वे आयुधज्ञ भगवान् हाथ में आयुध लेकर म्लेच्छों का विनाश करेंगे ।। ८ ।। पुनः वे चारों वर्णों की यथोचित (शास्त्रविहित) मर्यादा की स्थापना करेंगे। सभी आश्रमों की प्रजा सद्धर्म का पालन करने वाली होगी ।। ८ ।। इसके पश्चात् श्री हरिः अपने कल्कि रूप का परित्याग करके स्वर्ग लोक चले जायेंगे। उसके पश्चात् पहले के ही समान सत्ययुग होगा ।। १० ।। हे सर्वश्रेष्ठ ! वसिष्ठ ! सभी वर्णों एवं आश्रमों के लोग अपने धर्म का पालन करेंगे। इसी तरह सभी कल्पों तथा सभी मन्वन्तरों में श्रीभगवान् के अतीतकालिक अवतार होते हैं ।। ११ ।। भगवान् विष्णु के दस अंशावतारों को जो पढ़ेगा अथवा सुनेगा वह निष्पाप होकर अवाप्तसमस्तकाम (अपनी सारी इच्छाओं को पूर्ण करने वाला) होएगा तथा अपने कुल के साथ स्वर्ग प्राप्त करेगा ।। १२ ।। इस तरह जगत् की सृष्टि आदि (पालन तथा संहार) के कारण स्वरूप (को करने वाले) भगवान् श्रीहरि उसी प्रकार से अवतार ग्रहण करके धर्म तथा अधर्म की व्यवस्था करते रहते हैं ।। १३-१४ ।।

**इस तरह से आदि महापुराण अग्निपुराण का बुद्धावतार वर्णन नामक सोलहवाँ अध्याय सम्पूर्ण हुआ ॥ १६ ॥**

**अग्निदेव ने कहा**— अब मैं श्रीभगवान् की जगत् की सृष्टि आदि (पालन तथा संहार) रूपी क्रीड़ा (लीला) का वर्णन कर रहा हूँ, उसे आप सुनें। स्वर्ग आदि का निर्माण करने वाले सृष्टि आदि के कारणस्वरूप जगद्व्यापारकर्ता भगवान् विष्णु सगुण तथा निर्गुण (अगुण) दोनों प्रकार के स्वरूप वाले हैं ।। १ ।। **विशेष— श्रीभगवान् ही जगत् की सृष्टि आदि के कर्ता हैं। तैत्तिरीयोपनिषत् की भृगुवल्ली कहती है- यतो व इमानि भूतानि जायन्ते येन जातानि जीवन्ति, यत् प्रयन्त्यभि संविशन्ति।' (तै. २/१) अर्थात् निश्चय ही जो परब्रह्म इन सम्पूर्ण जगत् की सृष्टि करता है, और जिसके कारण उत्पन्न हुए समस्त भूत जीवित (पालित) रहते हैं, जिसमें जाकर प्रलीन हो जाते हैं और अन्त में जिसमें ही प्रवेश कर जाते हैं।**

तैजसानीन्द्रियाणि च ॥ ५ ॥ वैकारिका दश देवा मन एकादशेन्द्रियम्। ततः स्वयम्भूर्भगवान् सिसृक्षुर्विविधाः प्रजाः ॥ ६ ॥ अप एव ससर्जाऽऽदौ तासु वीर्यमवासृजत् ॥ आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥ ७ ॥ अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः। हिरण्यवर्ण मभवत्तदण्डमुदकेशयम्॥८॥ तस्मिञ्जज्ञे स्वयं ब्रह्मा स्वयम्भूरिति नः श्रुतम् ॥ हिरण्यगर्भो भगवानुषित्वा परिवत्सरम् ॥ ९ ॥ तदण्डमकरोद् द्वैधं दिवं भुवमथापि च। तयोः

'जन्माद्यस्य यतः' (शा. मी.) अर्थात् जिससे इस जगत् की सृष्टि आदि होती है वह ब्रह्म है, यह सूत्र भी ब्रह्म (श्रीभगवान्) को ही जगत् की सृष्टि आदि का कारण बतलाता है कि श्रीभगवान् समस्त दिव्य गुणों से सम्पन्न हैं, 'यः सर्वज्ञः सर्ववित्, पराऽस्यशक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च।' यह श्रुति भी भगवान् के दिव्यगुणों का वर्णन करती हुई बतलाती है कि श्रीभगवान् सर्वज्ञ (सभी वस्तुओं को सामान्य रूप से जानने वाले, तथा सर्ववित् (सभी वस्तुओं को विशेष रूप से जानने वाले हैं। उनकी अनेक प्रकार की परा शक्तियाँ सुनी जाती हैं, उनके ज्ञान तथा बल की क्रियाएँ स्वाभाविक हैं। अगुण पद के द्वारा यह बतलाया गया है कि श्री भगवान् में हेय प्राकृतिक गुणों का अभाव है। उनमें कोई भी प्राकृतिक गुण नहीं है। अगुण पद परंब्रह्म में दिव्यगुणों के सद्भाव का निषेध नहीं करता है। सृष्टि से पूर्व ब्रह्म सत् स्वरूप थे। उस समय वह अव्यक्त स्वरूप थे। उस समय न रात्रि थी और न तो दिन आदि। उसके पश्चात् सृष्टिकाल के आने पर पुरुष स्वरूप भगवान् विष्णु ने प्रकृति में प्रवेश करके उसे क्षुब्ध किया ॥ २ ॥ विशेष- इस श्लोक में अग्नि ने पुरोवादिनी (जगत् कारण तत्त्व का विवेचन करने वाली श्रुति का अनुवाद किया है' श्रुति कहती है– सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्।' (छा. उ. ६/२/१) अर्थात् हे सोमरसपानार्ह ! सच्छिष्य! सृष्टि से पूर्व यह सम्पूर्ण जगत् सत्स्वरूप था। वह अकेला तथा अद्वितीय था। इस श्रुति के 'एकमेवाद्वितीयम्' इन दो पदों के द्वारा ब्रह्म को सहकारी निरपेक्ष जगत् का अभिन्न निमित्तोपादान कारण बतलाया गया है। अर्थात् जगत् का उपादान कारण, निमित्त कारण तथा सहकारी कारण तीनों ब्रह्म ही है। अव्यक्त शब्द के द्वारा ब्रह्म को सूक्ष्म चिढचिद्विशिष्ट नाम तथा रूप (आकार) आदि के विभाग से रहिता वस्थावस्थित बतलाया गया है। भगवान् विष्णु ही परंब्रह्म हैं। वे ही पुरुष शब्द वाच्य हैं। कयोंकि वे अनन्त जीवों के अन्तःकरण में अन्तर्यामी रूप से निवास करते हैं (पुरुषु शेते) यही पुरुष शब्द की व्युत्पत्ति है। अथवा (पुम्सु शेते) यह पुरुष शब्द की व्युत्पत्ति है। इस व्युत्पत्ति के अनुसार (पुरुष शब्द का अर्थ होगा कि चूँकि श्रीभगवान् सबों के हृदयरूपी गुफा में निवास करते हैं अतएव वे पुरुष कहलाते हैं। वे ही अपनी प्रकृति को अधिष्ठान बनाकर अपनी माया के द्वारा सम्पूर्ण जगत् के रूप में परिणत होते हैं। भगवान् ने गीता में कहा भी है– प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया। (गी. ९/८) सृष्टि के समय सर्वप्रथम महत्तत्त्व (बुद्धितत्त्व) उत्पन्न हुआ, उसके पश्चात् अहंकार उत्पन्न हुआ। यह अहंकार तीन प्रकार का हुआ है वैकारिक (सात्विक) तैजस (राजस) तथा भूतादि (तामस) ॥ ३ ॥ अहंकार से शब्दतन्मात्रा उत्पन्न हुई। उससे आकाश उत्पन्न हुआ। आकाश से स्पर्श तन्मात्रा उत्पन्न हुई, और स्पर्शतन्मात्रा से वायु उत्पन्न हुआ। वायु से रूप तन्मात्रा उत्पन्न हुई और उससे अग्नि उत्पन्न हुआ ॥ ४ ॥ अग्नि से रसतन्मात्रा उत्पन्न हुई और उससे जल उत्पन्न हुआ, उससे गन्धतन्मात्रा उत्पन्न हुई और उससे पृथिवी की उत्पत्ति हुई। इन सबों की तामस अहंकार से उत्पत्ति हुई और राजस अहंकार से इन्द्रियों की उत्पत्ति हुई ॥ ५ ॥ वैकारिक (सात्विक) अहंकार से इन्द्रियों के दस अधिष्ठातृ देवता उत्पन्न हुए। (पञ्चज्ञानेन्द्रियों तथा पञ्च कर्मेन्द्रियों) के अतिरिक्त ग्यारहवाँ मन भी इन्द्रिय है। (घ्राण, चक्षु, रसना, श्रोत्र एवं त्वक् ये पाँच ज्ञानेन्द्रियाँ। वाक्, पाणि, पाद, पायु (मल त्याग करने वाली इन्द्रिय) तथा उपस्थ (लिङ्ग) ये पञ्च-कर्मेन्द्रियाँ हैं। **(चूँकि सुख दुःख आदि आभ्यन्तर विषयों का ग्रहण मन के द्वारा ही होता है, अतएव मन को ग्यारहवाँ इन्द्रिय मान लिया जाता है।)** इसके पश्चात् अनेक प्रकार की प्रजाओं की सृष्टि करने की इच्छा वाले भगवान् स्वयम्भू ने सर्वप्रथम जल की सृष्टि की और उसमें अपने वीर्य का आधान किया ॥ ६ ॥ जल को ही नार कहा जाता है। उसे ही नरसूनु कहा जाता है। जल ही सर्वप्रथम चूँकि श्रीभगवान् का आश्रय बना **(अतएव नार अयनम् = आश्रयो यस्याऽसौ) इस विग्रह के अनुसार।** ) भगवान् को नारायण कहा जाता है ॥ ७ ॥ जल में स्थित वह अण्डा सुवर्ण के समान पीत वर्ण का हो गया। उसी से स्वयम्भू ब्रह्मा उत्पन्न हुए, ऐसा मैंने (अपने आचार्यों से) सुना है ॥ ८ ॥ भगवान् हिरण्यगर्भ उसमें एक वर्ष तक रहे उसके पश्चात् उन्होंने उसको दो भागों में विभक्त कर दिया जिसका एक भाग द्युलोक हो गया और दूसरा भाग भूलोक हो गया। उन दोनों भागों के बीच में उन्होंने आकाश की सृष्टि की ॥ ९-१० ॥

शकलयोर्मध्य आकाशमसृजत्प्रभुः ॥ १० ॥ अप्सु पारिप्लवां पृथ्वीं दिशश्च दशधा दधे । तत्र कालं मनो वाचं कामं क्रोधमथो रतिम् ॥ ११ ॥ ससर्ज सृष्टिं तद्रूपां स्त्रष्टुमिच्छन्प्रजापतिः । विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च ॥ १२ ॥ वयांसि च ससर्जादौ पर्जन्यं चाथ वक्त्रतः । ऋचो यजूंषि सामानि निर्ममे यज्ञसिद्धये ॥ १३ ॥ साध्यास्तैरयजन्देवान्भूतमुच्चावचं भुजात् । सनत्कुमारं रुद्रं च ससर्ज क्रोधसम्भवम् ॥ १४ ॥ मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुम् । वसिष्ठं मानसान्सप्त ब्राह्मणानिति निश्चितम् ॥ १५ ॥ सप्तैते जनयन्ति स्म प्रजा रुद्राश्च सत्तम । द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत् ॥ १६॥

इत्यादिमहापुराण आग्नेये जगत्सर्गवर्णनं नाम सप्तदशोऽध्याय : ॥ १७ ॥

## अथाष्टादशोऽध्यायः

## स्वायम्भुवमनुवंशवर्णनम्

अग्निरुवाच–प्रियव्रतोत्तानपादौ मनोः स्वायम्भुवात् सुतौ। अजीजनत् सुतां रम्यां शतरूपा तपोऽन्विताम् ॥१॥ काम्या कर्दमभार्यातः सम्राट् कुक्षिर्विराट्प्रभुः। सुरुच्यामुत्तमो जज्ञे पुत्र उत्तानपादतः ॥ २ ॥ सुनीत्यां च ध्रुवः पुत्रस्तपस्तेपे सुकीर्तये । ध्रुवो वर्षसहस्राणि त्रीणि दिव्यानि हे मुने॥३॥ तस्मै प्रीतो हरिः प्रादान्मुन्यग्रे स्थानकं स्थिरम् । श्लोकं पपाठ स्युशना वृद्धिं दृष्ट्वा स तस्य च ॥ ४ ॥ अहोऽस्य तपसो वीर्यमहो श्रुतमहोऽद्भुतम् । यमद्यपुरतः कृत्वा ध्रुवं सप्तर्षयः स्थिताः ॥ ५ ॥ तस्माद् वृद्धिश्च भव्यश्च ध्रुवाच्छम्भुर्व्यजायत । वृद्धेराधत्त सुच्छाया पञ्च

उन्होंने जल में तैरती हुई पृथ्वी का तथा दश दिशाओं का आधान किया । उसी में उन्होंने काल, मन, वाणी, काम, क्रोध तथा रति की सृष्टि की । पुनः उसी के अनुरूप सृष्टि करने की इच्छा से प्रजापति ने सर्वप्रथम विद्युत, वज्र, मेघ,रोहित, इन्द्रधनुष, तथा पक्षियों की सृष्टि की । उसके पश्चात् उन्होंने यज्ञ कार्य करने के लिए अपने मुख से ऋग्वेद, यजुर्वेद तथा सामवेद की सृष्टि की ।। ११-१३।। उन वेदों के द्वारा ब्रह्मा जी ने साध्य देवों का यजन किया । पुनः उन्होंने अपनी भुजा से छोटे बड़े भूतों की, सनत्कुमार की तथा क्रोध से उत्पन्न होने वाले रुद्र की सृष्टि की ।। १४ ।। उन्होंने अपने मन से उत्पन्न होने वाले मरीचि, अत्रि, अङ्गिरा, पुलस्त्य, पुलह, क्रतु तथा वसिष्ठ इन सातों को ब्राह्मण रूप से निश्चित किया ।। १५ ।। हे द्विजश्रेष्ठ वसिष्ठ ! ये सात सप्तर्षि तथा रुद्र ने प्रजाओं को उत्पन्न किया । ब्रह्मा जी अपने ही शरीर को दो भाग में करके, आधे भाग से नारी तथा आधे भाग से पुरुष हो गए और उन्होंने उस नारी भाग के ही गर्भ से प्रजाओं की सृष्टि की ।। १६ ।।

**इस तरह से आदि महापुराण अग्निपुराण का जगत् सर्ग वर्णन नामक सत्रहवाँ अध्याय सम्पूर्ण हुआ ॥ १७ ॥**

**अग्निदेव ने कहा**– स्वायम्भुव मनु के प्रियव्रत तथा उत्तानपाद ये दो पुत्र उत्पन्न हुए तथा एक सुन्दरी तपस्विनी कन्या शतरूपा के गर्भ से उत्पन्न हुई ।। १ ।। वह सुन्दरी कर्दम महर्षि की माया हुई जिससे चक्रवर्ती सम्राट् कुक्षि उत्पन्न हुए । उत्तानपाद के पुत्र उत्तम उनकी सुरुचि नामक पत्नी के गर्भ से उत्पन्न हुए तथा सुनीति के गर्भ से उनके पुत्र हे मुने ! ध्रुव उत्पन्न हुए । ध्रुव ने सुकीर्ति की प्राप्ति के लिए तीन हजार दिव्य वर्ष पर्यन्त तप किया ।। २-३ ।। प्रसन्न होकर श्री हरि ने ध्रुव को सप्तर्षि मण्डल से ऊपर एक स्थिर स्थान प्रदान किया । ध्रुव के इस उत्कर्ष को देखकर उशना (शुक्राचार्य) ने उनकी प्रशंसा करते हुए कहा ।। ४ ।। ध्रुव की तपस्या का बल प्रशंसनीय है । इनका ज्ञान अत्यन्त अद्भुत है । जिस ध्रुव को अपने आगे करके सप्तर्षि मण्डल स्थित है ।। ५ ।।

पुत्रानकल्मषान् ॥ ६ ॥ रिपुं रिपुञ्जयं पुष्यं वृकसं वृकतेजसम् । रिपोराधत्त बृहती चाक्षुषं सर्वतेजसम् ॥ ७ ॥ मनोरजायन्त दश नड्वलायां सुतोत्तमाः ॥ ८ ॥ ऊरुः पूरुः शतद्युम्नस्तपस्वी सत्यवाक्कविः । अग्निष्टुदतिरात्रश्च सुद्युम्नश्चातिमन्युकः ॥९॥ ऊरोरजनयत्पुत्रान्षडाग्नेयी महाप्रभान्। अङ्गं सुमनसं स्वातिं क्रतुमङ्गिरसं गयम् ॥१०॥ अङ्गात्सुनीथापत्यं वै वेणमेकं व्यजायत । अरक्षकः पापरतः स हतो मुनिभिः कुशैः ॥ ११ ॥ प्रजार्थमृषयोऽथास्य ममन्थुर्दक्षिणं करम् । वेणस्य मथिते पाणौ सम्बभूव पृथुर्नृपः ॥ १२ ॥ तं दृष्ट्वा मुनयः प्राहुरेष वै मुदिताः प्रजाः । करिष्यति महातेजा यशश्च प्राप्स्यते महत् ॥ १३ ॥ स धन्वी कवची जातस्तेजसा निर्दहन्निव । पृथुर्वैण्यः प्रजाः सर्वा ररक्ष क्षत्रपूर्वजः ॥ १४ ॥ राजसूयाभिषिक्तानामाद्यः स पृथिवीपतिः । तस्माच्चैव समुत्पन्नौ निपुणौ सूतमागधौ ॥१५॥ तत्स्तोत्रं चक्रतुर्वीरौ, राजाऽभूज्जनरञ्जनात् । दुग्धा गौस्तेन सस्यार्थं प्रजानां जीवनाय च ॥१६॥ सह देवैर्मुनिगणैर्गन्धर्वैश्चाप्सरोगणैः । पितृभिर्दानवैः सर्पैर्वीरुद्भिः पर्वतैर्जनैः ॥१७॥ तेषु तेषु च पात्रेषु दुह्यमाना वसुन्धरा । प्रादाद्यथेप्सितं क्षीरं तेन प्राणानधारयन् ॥ १८ ॥ पृथोः पुत्रौ तु धर्मज्ञौ जज्ञातेऽन्तर्धिपालितौ । शिखण्डिनी हविर्धानमन्तर्धानाद् व्यजायत ॥ १९ ॥ हविर्धानात्षडाग्नेयी धिषणाजनयत्सुतान्। प्राचीन बर्हिषं शुक्रं गयं कृष्णं व्रजाजिनौ ॥२०॥ प्राचीनाग्राः कुशास्तस्य पृथिव्यां यजतो यतः। प्राचीनबर्हिर्भगवान्महानासीत्प्रजापतिः॥ २१ ॥ सवर्णाऽधत्त सामुद्री दश प्राचीनबर्हिषः । सर्वे प्रचेतसो नाम धनुर्वेदस्य पारगाः ॥ २२ ॥ अपृथग्धर्मचरणास्तेऽतप्यन्त महत्तपः। दश वर्षसहस्राणि समुद्रसलिलेशयाः॥२३॥ प्रजापतित्वं सम्प्राप्य तुष्टा विष्णोश्च

---

ध्रुव के तीन पुत्र उत्पन्न हुए वृद्धि, भव्य और शम्भु । वृद्धि के सुच्छाया नामक पत्नी के गर्भ से पाँच पवित्र पुत्र हुए ।। ६ ।। रिपु, रिपुञ्जय, पुष्य, वृकस और वृकतेजस । रिपु के वृहती नामक पत्नी ने सर्वतेजःसम्पन्नचाक्षुष् नामक पुत्र हुए ।। ७ ।। वीरण की पुत्री पुष्करिणी के गर्भ से चाक्षुष् मनु नामक पुत्र हुए । मनु की पत्नी नड्वला के गर्भ से निम्नांकित दस उत्तम पुत्र उत्पन्न हुए ।। ८ ।। उरु, पुरु, शतद्युम्न, तपस्वी, सत्यवाक्, कवि, अग्निष्टु अतिरात्र, सुद्युम्न और अतिमन्यु ।। ९ ।। आग्नेयी ने उरु के- अङ्ग, सुमनस, स्वाति, क्रतु, अङ्गिरा तथा जप नामक छह अत्यन्त तेजस्वी पुत्रों को उत्पन्न किया ।। १० ।। अङ्ग का सुनीथा के गर्भ से वेण नामक पुत्र उत्पन्न हुआ, जो प्रजाओं की रक्षा नहीं करने वाला और पापी था तथा जिसे मुनियों ने कुश से मार डाला ।। ११ ।। सन्तान के लिए मुनियों ने वेण की दाहिनी भुजा का मन्थन किया उससे राजा पृथु उत्पन्न हुए ।। १२ ।। उन्हें देखकर मुनियों ने कहा- यह बालक अपनी प्रजाओं को प्रसन्न करेगा तथा महान यश प्राप्त करेगा ।। १३ ।। वेन के पुत्र क्षत्रियों के पूर्वज तथा महातेजस्वी पृथु ने धनुष् और कवच धारण कर सम्पूर्ण प्रजा की रक्षा की ।। १४ ।। वे राजसूय यज्ञ करने वाले राजाओं में सर्वप्रथम राजा थे । उस राजसूय यज्ञ से उत्पन्न चतुर तथा वीर सूत एवं मागध ने राजा पृथु की स्तुति की । प्रजाओं का रञ्जन करने के कारण वे (पृथु) राजा कहलाए । उन्होंने धान्य तथा प्रजाओं के जीवन की रक्षा के लिए पृथिवी का दोहन देवता, मुनिगण, गन्धर्व, अप्सरा, पितृगण, दानव, सर्प, विरुध, (लता) पर्वत तथा मनुष्यों के साथ किया ।। १५-१७ ।। विभिन्न पात्रों में दूही जाने वाली पृथिवी ने सबों को यथेप्सित दुग्ध प्रदान किया; जिससे उन सबों ने जीवन धारण किया ।। १८ ।। पृथु के दो धर्मज्ञ पुत्र हुए अन्तर्धि तथा पलित । शिखण्डिनी ने अन्तर्धि के पुत्र हविर्धान को उत्पन्न किया ।। १९ ।। अग्नि की पुत्री आग्नेयी ने अपने गर्भ से हविर्धान के, प्राचीन बर्हिष्, शुक्र, गय, कृष्ण तथा अजिन इन छह पुत्रों को उत्पन्न किया ।। २० ।। भगवान् प्राचीन वहिर्ष महान् प्रजापति थे । यज्ञ के समय उन्होंने पूर्व की ओर मुख करके सम्पूर्ण पृथिवी पर कुश बिछा दिया । अतएव वे प्राचीन वर्हिष कहलाने लगे ।। २१ ।। प्राचीन वर्हिष् की सवर्णा पत्नी तथा समुद्र की पुत्री सामुद्री ने उनके दस पुत्रों को उत्पन्न किया । वे सबके सब प्रचेता के नाम से विख्यात तथा धनुर्वेद में पारङ्गत हुए ।। २२ ।। एक समान धर्म वाले उन सबों ने समुद्र के जल के भीतर रहकर दस हजार वर्ष तक घोर तपस्या की ।। २३ ।। भगवान् विष्णु से प्रजापति होने के वरदान को पाकर बाहर निकलकर वे पृथ्वी तथा आकाश को वृक्षों से व्याप्त देखकर अपने मुख की अग्नि तथा वायु से वृक्षों को जलाने लगे ।

निर्गताः । भूः खं व्याप्तं हि तरुभिस्तांस्तरूनदहंश्च ते ॥ २४ ॥ मुखजाग्निमरुद्भ्यां च दृष्ट्वा चाथ द्रुमक्षयम् । उपगम्याब्रवीदेतान् राजा सोमः प्रजापतीन् ॥ २५ ॥ कोपं यच्छत् दास्यन्ति कन्यां वो मारिषां वराम् । तपस्विनो मुनेः कण्डोः प्रम्लोचायां मयैव च॥ २६॥ भविष्यं जानता सृष्टा भार्या वोऽस्तु कुलङ्करी । अस्यामुत्पत्स्यते दक्षः प्रजाः संवर्धयिष्यति ॥ २७ ॥ प्रचेतसस्तां जगृहुर्दक्षोऽस्यां च ततोऽभवत् । अचरांश्च चरांश्चैव द्विपदोऽथ चतुष्पदः ॥ २८ ॥ स सृष्ट्वा मनसा दक्षः पश्चादसृजत स्त्रियः । ददौ स दश धर्माय कश्यपाय त्रयोदश॥ २९॥ सप्तविंशति (तिं) सोमाय चतस्रोऽरिष्टनेमिने । द्वे चैव बहुपुत्राय द्वे चैवाङ्गिरसे ह्यदात् ॥ ३० ॥ तासु देवाश्च नागाद्या मैथुनान् मनसा पुरा । धर्मसर्गं प्रवक्ष्यामि दशपत्नीषु धर्मतः ॥ ३१ ॥ विश्वेदेवास्तु विश्वायाः साध्या साध्यान्व्यजायत । मरुत्वत्या मरुत्वन्तो वसोस्तु वसवोऽभवन्॥ ३२॥ भानोस्तु भानवः पुत्रा मुहूर्तास्तु मुहूर्तजाः । लम्बाया धर्मतो घोषो नागवीथी च यामिजा ॥ ३३ ॥ पृथिवीविषयं सर्वं मरुत्वत्यां व्यजायत । सङ्कल्पायास्तु सङ्कल्पा इन्दोर्नक्षत्रतः सुताः ॥ ३४ ॥ आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ च नामतः ॥ ३५॥ आपस्य पुत्रौ वैतण्ड्यः श्रमः शान्तो मुनिस्तथा । ध्रुवस्य कालो लोकान्तो वर्चाः सोमस्य वै सुतः ॥ ३६ ॥ धरस्य पुत्रो द्रविणो हुतहव्यवहस्तथा । मनोहराया शिशिरः प्राणोऽथ रमणस्तथा ॥ ३७ ॥ पुरोजवोऽनिलस्यासीदविज्ञातोऽनलस्य च । अग्निपुत्रः कुमारश्च शरस्तम्बे व्यजायत ॥ ३८ ॥ तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठतः । कृत्तिकातः कार्तिकेयो यतिः सनत्कुमारकः ॥ ३९ ॥ प्रत्यूषाद्देवलो जज्ञे विश्वकर्मा प्रभासतः । कर्त्ता शिल्पसहस्राणां त्रिदशानां च वर्धकिः ॥ ४० ॥ मनुष्याश्चोपजीवन्ति शिल्पं वै भूषणादिकम्। सुरभी कश्यपाद्रुद्रानेकादशवि ॥ ४१ ॥ महादेवप्रसादेन तपसा

---

वृक्षों का विनाश होते देखकर प्रजापति सोम इनके पास आकर बोले ।। २४-२५ ।। आप लोग अपने क्रोध को नियन्त्रित करें । ये (वृक्ष) आपको मारिषा नाम की श्रेष्ठ कन्या प्रदान करेंगे । भविष्य को जानने वाला मैं ही उसकी मृकण्डु ऋषि की पुत्री के रूप में प्रम्लोचा के गर्भ से सृष्टि की थी । वह कुल को बढ़ाने वाली आप लोगों की पत्नी होगी । उसका पुत्र दक्ष होगा जो प्रजाओं की वृद्धि करेगा ।। २६-२७ ।। प्रचेताओं ने उसे (मारिषा को) पत्नी के रूप में ग्रहण किया । उसका पुत्र दक्ष हुआ । दक्ष ने सर्वप्रथम अचरों तथा चरों की सृष्टि मन से की उसके पश्चात् द्विपदों तथा चतुष्पदों की । पुनः उन्होंने स्त्रियों की सृष्टि की । उनमें से दस स्त्रियों को उन्होंने धर्म को प्रदान किया तथा तेरह स्त्रियों को महर्षि कश्यप को प्रदान किया ।। २८-२९ ।। सत्ताइस स्त्रियों को सोम को प्रदान किया और चार स्त्रियाँ अरिष्टनेमि को। बहुपुत्र को दो तथा अङ्गिरा महर्षि को दो ।। ३० ।। जिनकी पहले मानसी सृष्टि थी वे देवता तथा नाग उनमें (दक्ष कन्याओं में) मैथुन से उत्पन्न हुए । अब मैं धर्म की दस पत्नियों में होने वाली सृष्टि का वर्णन करूँगा ।। ३१ ।। विश्वानामक पत्नी के पुत्र विश्वेदेव हुए तथा साध्या के पुत्र साध्यदेव हुए ।। मरुत्वती से मरुद्गण उत्पन्न हुए, तथा वसु नामक धर्मपत्नी के पुत्र वसुगण हुए ।। ३२।। भानु नामक धर्मपत्नी के पुत्र भानुगण हुए तथा मुहूर्ता के पुत्र मुहूर्तगण उत्पन्न हुए । लम्बा के गर्भ से धर्म के पुत्र घोष उत्पन्न हुए तथा यामि की सन्तान नागवीथी हुई ।। ३३ ।। मरुत्वती के गर्भ से पृथिवी के समस्त प्राणी उत्पन्न हुए । चन्द्रमा ने अपनी पत्नियों में निम्नांकित नाम वाले पुत्रों को उत्पन्न किया- आप, ध्रुव, सोम, धर, अनिल, अनल, पत्यूष, प्रभास, तथा अष्ट वसु ।। ३४-३५ ।। आप के चार पुत्र हुए- वैतण्ड्य, श्रम, श्रान्त तथा मुनि । ध्रुव के दो पुत्र हुए- काल तथा लोकान्त एवं सोम के पुत्र वर्चा हुए ।। ३६ ।। धर के मनोहरा नामक पत्नी के गर्भ से द्रविण, हुतहव्यवह, शिशिर, प्राण तथा रमण हुए ।। ३७ ।। अनिल के पुत्र पुरोजव हुए तथा अनल के अविज्ञात । अग्नि (अनल) के ही कुमार नामक पुत्र शरस्तम्ब (सरपत) से उत्पन्न हुए ।। ३८ ।। बाद में उनके ही शाख, विशाख तथा नैगमेय नामक पुत्र हुए, कृतिका के पुत्र कार्तिकेय तथा यति सनत्कुमार हुए ।। ३९ ।। प्रत्यूष के पुत्र देवल तथा प्रभास के पुत्र विश्वकर्मा हुए । वे देवताओं के बढ़ई तथा हजारों शिल्पों के आचार्य थे ।। ४० ।। उनके ही भूषण आदि के शिल्प (निर्माण कला) को अपनाकर मनुष्य अपनी जीविका चलाते हैं । सन्तानोत्पन्न करने की

भाविता सती। अनैकपादहिर्बुध्न्यस्त्वष्टा रुद्रश्च सत्तम ॥ ४२ ॥ त्वष्टुश्चात्मजः श्रीमान् विश्वरूपो महायशाः। हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः॥४३॥ वृषाकपिश्च शम्भुश्च कपर्दी रैवतस्तथा। मृगव्याधश्च सर्पश्च कपाली दश चैककः ॥ ४४ ॥ रुद्राणां च शतं लक्षं यैर्व्याप्तं सचराचरम् ॥ ४५ ॥

इत्यादिमहापुराण आग्नेये स्वायम्भुवमनुवंशवर्णनं नामाष्टादशोऽध्यायः ॥ १८ ॥

## अथैकोनविंशोऽध्यायः

## कश्यपवंशवर्णनम्

अग्निरुवाच– **कश्यपस्य वदे सर्गमदित्यादिषु हे मुने। चाक्षुषे तुषिता देवास्तेऽदित्यां कश्यपात्पुनः ॥ १ ॥ आसन् विष्णुश्च शक्रश्च त्वष्टा धाता तथार्यमा। पूषा विवस्वान् सविता मित्रोऽथ वरुणो भगः ॥ २ ॥ अंशुश्च द्वादशादित्या आसन् वैवस्वतेऽन्तरे। अरिष्टनेमिपत्नीनामपत्यानीह षोडश॥३॥ बहुपुत्रस्य विदुषश्चतस्त्रः विद्युतः स्मृताः। प्रत्यङ्गिरसजाः श्रेष्ठाः कृशाश्वस्य सुरायुधाः ॥ ४ ॥ उदयास्तमने सूर्ये तद्वदेते युगे-युगे। हिरण्यकशिपुर्दित्यां हिरण्याक्षश्च कश्यपात् ॥ ५ ॥ सिंहिका चाभवत्कन्या विप्रचित्तेः परिग्रहः। राहुप्रभृतयस्तस्यां सैंहिकेया इति श्रुताः ॥ ६ ॥ हिरण्यकशिपोः पुत्राश्चत्वारः प्रथितौजसः। अनुह्लादश्च ह्लादश्च प्रह्लादश्चातिवैष्णवः ॥ ७ ॥ सह्लादश्च चतुर्थोऽभूत् हजादपुत्रो ह्रदस्तथा। ह्रदस्य पुत्र आयुष्माञ्शिविर्बाष्कल एव च ॥ ८ ॥ विरोचनस्तु प्राह्लादिर्बलिर्जज्ञे विरोचनात्। बलेःपुत्रशतं त्वासीद् बाणज्येष्ठं महामुने ॥ ९ ॥ पुराकल्पे हि बाणेन प्रसाद्योमापतिं प्रभुम्। पार्श्वतो विहरिष्यामि इत्येवं प्राप्त ईश्वरात् ॥ १० ॥ हिरण्याक्षसुताः पञ्च शम्बरः शकुनिस्त्विति। द्विमूर्धा शङ्कुरार्यश्च**

---

कामना वाली सुरभी के गर्भ से कश्यप ऋषि के पुत्र ग्यारह रुद्र उत्पन्न हुए ।। ४१ ।। हे श्रेष्ठ महर्षे ! महादेव की कृपा से सती ने अनैकपाद, अहिर्बुध्न्य, त्वष्टा तथा रुद्र इन चार पुत्रों को उत्पन्न किया ।। ४२ ।। त्वष्टा के पुत्र महायशस्वी तथा श्रीसम्पन्न विश्वरूप हुए। हर, बहुरूप, त्र्यम्बक, अपराजित, वृषाकपि, शम्भु, कपर्दी, रैवत, मृगव्याध, सर्प तथा कपाली ये ग्यारह रुद्र हैं। ऐसे तो रुद्र सैकड़ों तथा लाखों हैं, जिनसे यह सम्पूर्ण चराचर व्याप्त है ।। ४३-४५ ।।

**इस तरह आदिमहापुराण अग्निपुराण का स्वायम्भुव मनुवंश का वर्णन नामक अठारहवाँ अध्याय सम्पूर्ण हुआ ॥ १८ ॥**

**अग्निदेव ने कहा–** हे मुने ! अब मैं अदिति आदि में उत्पन्न कश्यप की सृष्टि का वर्णन करता हूँ। चाक्षुष् नामक मन्वन्तर में जो तुषिता नामक देवगण अदिति के गर्भ से कश्यप के पुत्र हुए। वे ही वैस्वत मन्वन्तर में विष्णु, इन्द्र, त्वष्टा, धाता, अर्यमा, पूषा, विवस्वान्, सविता, मित्र, वरुण, भग, अंशु तथा द्वादशादित्य (बारह आदित्य) नामक कश्यप तथा अदिति के पुत्र हुए ।। अरिष्टनेमि की पत्नियों की सोलह सन्तानें हुईं ।। १-३ ।। विद्वान् बहुपुत्र की चार विजलियाँ (विद्युत्) पुत्रियाँ बतलायी गयी हैं। प्रत्यङ्गिरा ऋषि के श्रेष्ठ पुत्र उत्पन्न हुए और कृशाश्व के पुत्र देवताओं के आयुध हुए।। ४।। ये सब प्रत्येक युग में उसी तरह से होते हैं, जैसे प्रतिदिन सूर्योदय तथा सूर्यास्त होते हैं। दिति नामक पत्नी में कश्यप महर्षि के हिरण्यकशिपु तथा हिरण्याक्ष नामक पुत्र एवं सिंहिका नामक पुत्री हुयी, जो विप्रचिति नामक राक्षस की पत्नी बनी। सिंहिका के पुत्र राहु आदि हुए जो सैंहिकेय कहलाते हैं ।। ५-६ ।। हिरण्यकशिपु के चार प्रख्यात पुत्र हुए,अनुह्लाद, ह्लाद, परमवैष्णव प्रह्लाद तथा चौथा संहलाद। हलाद का पुत्र ह्रद हुए। संह्लाद के तीन पुत्र हुए आयुष्मान्, शिवि तथा वाष्कल ।। ७-८ ।। हे महामुने ! प्रह्लाद के पुत्र विरोचन हुए और विरोचन के पुत्र बलि। बलि के सौ पुत्र हुए जिनमें सबसे बड़ा बाण (असुर)) था ।। ९ ।। पूर्वकल्प में बाणासुर ने भगवान् शङ्कर को प्रसन्न करके उनसे यह वरदान प्राप्त किया कि मैं आपके ही सन्निकट विचरण करता रहूँ।।१०।।

शतमासन्दनोः सुताः ॥ ११ ॥ स्वर्भानोः सुप्रभा कन्या पुलोम्नस्तु शची स्मृता । उपदानवी हयशिरा शर्मिष्ठा वार्षपर्वणी ॥ १२ ॥ पुलोमा कालका चैव वैश्वानरसुते उभे । कश्यपस्य तु भार्ये द्वे तयोः पुत्राश्च कोटयः ॥ १३ ॥ प्रह्लादस्य चतुष्टकोट्यो निवातकवचाः कुले । ताम्रायाः षट् सुताः स्युश्च काकी श्येनी च भास्यपि ॥ १४ ॥ गृध्रिका च शुचिर्ग्रीवा ताभ्यः काकादयोऽभवन् ॥ अश्वाश्चोष्ट्राश्च ताम्राया अरुणो गरुडस्तथा ॥ १५ ॥ विनतायाः सहस्रं तु सर्पाश्च सुरसाभवाः। काद्रवेयाः सहस्रं तु शेषवासुकितक्षकाः ॥ १६ ॥ दंष्ट्रिणः क्रोधवशगा धरायाः पक्षिणो जले । सुरभ्यां गोमहिष्यादि इरोत्पन्नास्तृणादयः ॥ १७ ॥ खसायां यक्षरक्षांसि मुनेरप्सरसोऽभवन् । अरिष्टायास्तु गन्धर्वाः कश्यपाद्धि स्थिरं चरम् ॥ १८ ॥ एषां पुत्रादयोऽसङ्ख्याः देवैर्वै दानवा जिताः । दितिर्विनष्टपुत्रा वै तोषयामास कश्यपम् ॥ १९ ॥ पुत्रमिन्द्रप्रहर्तारमिच्छती प्राप कश्यपात् । पादाप्रक्षालनात्सुप्ता तस्या गर्भं जघान ह ॥ २० ॥ छिद्रमन्विष्य चेन्द्रस्तु ते देवा मरुतोऽभवन् । शक्रस्यैकोनपञ्चाशत्सहाया दीप्ततेजसः ॥ २१ ॥ एतत्सर्वं हरिर्ब्रह्मा अभिषिच्य पृथुं नृपम् । ददौ क्रमेण राज्यानि अन्येषामधिपो हरिः ॥ २२ ॥ द्विजौषधीनां चन्द्रस्तु अपां तु वरुणो नृपः। राज्ञां वै श्रवणो राजा सूर्याणां विष्णुरीश्वरः ॥ २३ ॥ वसूनां पावको राजा मरुतां वासवः प्रभुः । प्रजापतीनां दक्षोऽथ प्रह्लादो दानवाधिपः ॥ २४ ॥ पितृणां च यमो राजा भूतादीनां हरः प्रभुः। हिमवांश्चैव शैलानां नदीनां सागरः प्रभुः ॥ २५ ॥ गन्धर्वाणां चित्ररथो नागानामथ वासुकिः । सर्पाणां तक्षको राजा गरुडः पक्षिणामथ॥२६॥ ऐरावतो गजेन्द्राणां गोवृषोऽथ गवामपि। मृगाणामथ शार्दूलः प्लक्षो वनस्पतीश्वरः ॥२७ ॥ उच्चैः श्रवास्तथाश्वानां सुधन्वा

हिरण्याक्षके पाँच पुत्र थे शम्बर, शकुनि, द्विमूर्धा, शङ्कु तथा आर्य । दनु के सौ पुत्र थे ।। ११ ।। स्वर्भानु की सुप्रभा नामक कन्या थी तथा पुलोमा की शची, नामक कन्या थी । वृषपर्वा की तीन पुत्रियाँ थीं, उपदानवी, हयशिरा तथा शर्मिष्ठा ।। १२ ।। वैश्वानर की दो पुत्रियाँ थीं, पुलोमा तथा कालका । कश्यप महर्षि की दो पत्नियाँ थीं और उन दोनों की करोड़ों सन्तानें थीं ।। १३ ।। प्रह्लाद के वंश में निवातकवच नामक चार करोड़ असुर थे । ताम्रा की छह पुत्रियाँ थीं- काकी, श्येनी, भासी, गृध्रिका, शुचि तथा सुग्रीवा । उन सबों से ही काक आदि उत्पन्न हुए ।। १४ ।। अश्वा से घोड़े तथा ऊँट उत्पन्न हुए, विनता के दो पुत्र हुए अरुण तथा गरुड़ । सुरसा के पुत्र हजारों सर्प उत्पन्न हुए । कद्रू के हजारों शेष, वासुकि तथा तक्षक उत्पन्न हुए ।। १५-१६ ।। ये सभी दाँत वाले तथा क्रोधी सर्प थे । धरा के पुत्र जल में रहने वाले पक्षी उत्पन्न हुए । सुरभि की सन्तान गाय तथा महिष आदि हुए तथा इरा के तृण आदि पुत्र रूप से उत्पन्न हुए ।। १७ ।। खसा की यक्ष तथा राक्षस सन्तानें हुयीं, मुनि की सन्तान अप्सराएँ हुईं, अरिष्टा के गन्धर्व उत्पन्न हुए । इस तरह चर एवं अचर कश्यप की सन्तानें हुयीं ।। १८ ।। इन कश्यप की सन्तानों की असंख्य सन्तानें हुयीं । देवों ने दानवों को पराजित कर दिया । अपने पुत्रों के विनष्ट हो जाने पर दैत्य माता दिति ने अपने पति कश्यप को प्रसन्न किया ।। १९ ।। उसने इन्द्र को मारने वाले पुत्र की प्राप्ति का वरदान कश्यप महर्षि से प्राप्त किया ।। अपने पैरों को धोए विना सोयी हुई दिति के दोष को देखकर इन्द्र उसके गर्भ को काट डाले । वे कटे हुए गर्भ के टुकड़े ही इन्द्र के सहायक तथा तेजस्वी उनचास मरुत् देवता हो गए ।। २०-२१ ।। ये सभी, हरि (भगवान् विष्णु) तथा ब्रह्मा ने राजा पृथु को अभिषिक्त करके सबों के स्वामी श्रीहरि ने- दूसरों को भी राज्य प्रदान किया ।। २२ ।। ब्राह्मणों तथा औषधियों के राजा चन्द्रमा हुए, जल के स्वामी वरुण हुए, राजाओं के राजा वैश्रवण (कुबेर) हुए तथा (द्वादश) सूर्यों के स्वामी भगवान् विष्णु हुए ।। २३ ।। वसुओं के स्वामी पावक हुए, मरुतों के स्वामी इन्द्र हुए, प्रजापतियों के स्वामी दक्ष हुए तथा दानवों के स्वामी प्रह्लाद हुए ।। २४ ।। पितरों के स्वामी यम हुए, भूतों आदि के शङ्कर जी अधिपति हुए, पर्वतों के स्वामी हिमवान हुए तथा नदियों के स्वामी सागर हुए ।। २५ ।। गन्धर्वों के स्वामी चित्ररथ हुए नागों के वासुकि, सर्पों के तक्षक तथा पक्षियों के स्वामी गरुड़ हुए ।। २६ ।। गजेन्द्रों के स्वामी ऐरावत तथा गायों के स्वामी गोवृष मृगों (जंगली जीवों) के स्वामी शार्दूल (सिंह) तथा वनस्पतियों के स्वामी प्लक्ष (वटवृक्ष) हुए ।। २७ ।। उसी तरह से अश्वों के स्वामी उच्चैःश्रवा, पूर्वदिशा के स्वामी सुधन्वा, दक्षिण दिशा के शङ्खपाद

पूर्वपालकः । दक्षिणस्यां शङ्खपादः केतुमान् पालको जले॥ २८ ॥ हिरण्यरोमकः सौम्ये प्रतिसर्गोऽयमीरितः ॥ २९ ॥

इत्यादिमहापुराण आग्नेये प्रतिसर्गे कश्यपवंशवर्णनं नामैकोनविंशोऽध्यायः ॥ १९ ॥

## अथ विंशोऽध्यायः

## जगत्सर्गवर्णनम्

अग्निरुवाच— **प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु स : । तन्मात्राणां द्वितीयस्तु भूतसर्गो हि स स्मृतः ॥ १ ॥ वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकः स्मृतः॥ इत्येषः प्राकृतः सर्गः सम्भूतो बुद्धिपूर्वकः ॥ २ ॥ मुख्यः सर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः । तिर्यक्स्रोतस्तु यः प्रोक्तस्तैर्यग्योन्यस्ततः स्मृतः॥ ३ ॥ तथोर्ध्वस्त्रोतसां षष्ठो देवसर्गस्तु स स्मृतः। ततोऽर्वाक्स्त्रोतसां सर्गः सप्तमः स तु मानुष : ॥ ४ ॥ अष्टमोऽनुग्रहः सर्गः सात्त्विकस्तामसश्च यः। पञ्चैते वैकृताः सर्गाः प्राकृताश्च त्रयः स्मृताः ॥ ५ ॥ प्राकृतो वैकृतश्चैव कौमारो नवमस्तथा । ब्रह्मतो नव सर्गास्तु जगतो मूलहेतवः ॥ ६ ॥ ख्यात्याद्या दक्षकन्यास्तु भृग्वाद्या उपयेमिरे । नित्यो नैमित्तिकः सर्गस्त्रिधाऽथ कथितो जनैः ॥ ७ ॥ प्राकृतो, दैनन्दिनीयादान्तरप्रलयादनु । जायन्ते यत्रानुदिनं नित्यसर्गो हि स स्मृतः॥८॥ देवौ धाताविधातारौ भृगोः ख्यातिरसूयत। श्रियं च, पत्नी विष्णोर्या स्तुता शक्रेण वृद्धये ॥९॥ धातुर्विधातुर्द्वौ पुत्रौ क्रमात्प्राणो मृकण्डुकः। मार्कण्डेयो मृकण्डोश्च जज्ञे वेदशिरास्तथा ॥ १०॥ पौर्णमासश्च सम्भूत्यां मरीचेरभवत्सुतः । स्मृत्यामाङ्गिरसः पुत्राः**

---

हुए । जल के रक्षक केतुमान हुए ।। २८ ।। उत्तर दिशा के स्वामी हिरण्यरोमक हुए। इस तरह से यहाँ तक प्रतिसर्ग का वर्णन किया गया ।। २९ ।।

**इस तरह से आदि महापुराण अग्निपुराण का प्रतिसर्ग वर्णन के प्रसंग में कश्यप वंश वर्णन नामक उन्नीसवाँ अध्याय सम्पूर्ण हुआ ॥ १९ ॥**

**अग्निदेव ने कहा—** सर्वप्रथम महत् तत्त्व की सृष्टि हुयी, उसे ब्रह्मा की सृष्टि समझनी चाहिए । दूसरी सृष्टि पञ्चतन्मात्राओं की हुयी, उसे भूतसर्ग समझना चाहिए ।। १ ।। तीसरी सृष्टि इन्द्रियों की हुयी और वह वैकारिक (सात्त्विकाहंकारजन्य) है । यही प्राकृत सृष्टि है जो बुद्धिपूर्वक है । अर्थात् इस सृष्टि में सर्वप्रथम बुद्धितत्त्व (महत्तत्त्व) की उत्पत्ति हुयी ।। ३।। चौथी सृष्टि मुख्य सृष्टि है। मुख्य शब्द से स्थावरों (वृक्ष, पर्वत आदि) को कहा जाता है । पाँचवीं सृष्टि जिसे तिर्यक्स्रोत कहते हैं, उससे तिर्यग्योनि के जीव उत्पन्न हुए ।। ३ ।। छठी सृष्टि उर्ध्वस्रोतसों की है, उसे ही देवसर्ग (देवसृष्टि) कहते हैं। उसके पश्चात् सातवीं सृष्टि अधः स्रेत वाले जीवों की हुई । उसे ही मानवी सृष्टि कहते हैं ।। ४ ।। आठवीं सृष्टि अनुग्रह सृष्टि है । उसके दो भेद हैं - सात्त्विक तथा तामस । इन आठों प्रकार की सृष्टियों में प्रथम तीन प्रकार की सृष्टि प्राकृत (प्रकृतिजन्य) सृष्टि कहलाती है शेष पाँच सृष्टियाँ वैकृत सृष्टि (प्रकृति के विकारों से उत्पन्न) हैं ।। ५।। प्राकृत वैकृत इन सबों से भिन्न नवाँ कौमार सर्ग (सृष्टि) है । इस सर्ग के कर्ता ब्रह्माजी हैं । ये नव प्रकार के सर्ग ही जगत् के मूल कारण हैं ।। ६ ।। ख्याति आदि दक्ष की कन्याओं का पाणिग्रहण भृगु आदि महर्षियों ने कि। इस तरह से लोग तीन तरह की सृष्टि बतलाते हैं- नित्य, नैमित्तिक तथा प्राकृत । प्रतिदिन होने वाले आभ्यन्तर प्रलय के पश्चात् जो प्रतिदिन सृष्टियाँ होती हैं उसे नित्य सर्ग कहा जाता है ।। ७-८ ।। भृगु ऋषि की पत्नी ख्याति ने पुत्र रूप में धाता और विधाता नामक दो देवताओं तथा श्रीदेवी नामक कन्या को उत्पन्न किया, जो विष्णु की पत्नी हुई तथा अपनी समृद्धि के लिए इन्द्र ने जिनकी स्तुति की ।। ९ ।। धाता तथा विधाता के क्रमशः दो पुत्र हुए प्राण तथा मृकण्डु, मृकण्डु के पुत्र का नाम मार्कण्डेय हुआ तथा उनके पुत्र वेदशिरा हुए ।। १० ।। मरीचि महर्षि की सम्भूति नामक पत्नी

सिनीवाली कुहूस्तथा ॥ ११ ॥ राका चानुमतिश्चात्रेरनसूयाप्यजीजनत्। सोमं दुर्वाससं पुत्रं दत्तात्रेयं च योगिनम् ॥ १२ ॥ प्रीत्यां पुलस्त्यभार्यायां दत्तोलिस्तत्सुतोऽभवत्। क्षमायां पुलहाज्जातः सहिष्णुः सर्वपादिकः ॥ १३ ॥ सन्नत्यां च क्रतोरासन् बालखिल्या महौजसः। अङ्गुष्ठपर्वमात्रास्ते ये हि षष्टिसहस्त्रिणः ॥ १४ ॥ ऊर्जायां च वसिष्ठाच्च राजा गात्रोर्ध्वबाहुकः । सवनश्चानघः शुक्र; सुतपाः सप्त चर्षयः ॥ १५॥ पावकः पवमानोऽभूच्छुचिः स्वाहाग्नितोऽभवत् । अग्निष्वात्ता वर्हिषदोऽनग्नयः साग्नयो ह्यजात् ॥ १६ ॥ पितृभ्यश्च स्वधायां च मेना वैधारिणी सुते । हिंसा भार्या त्वधर्मस्य तयोर्जज्ञे तथानृतम् ॥ १७ ॥ कन्या निकृतिस्ताभ्यां भयं नरकमेव च । माया च वेदना चैव मिथुनं त्विदमेतयोः ॥ १८॥ तयोर्जज्ञेऽथ वै माया मृत्युं भूतापहारिणम् । वेदना च सुतं चापि दुःखं जज्ञेऽथ रौरवात् ॥ १९ ॥ मृत्योर्व्याधिजराशोकतृष्णाक्रोधाश्च जज्ञिरे । ब्रह्मणश्च रुदञ्जातो रोदनाद्रुद्रनामकः ॥ २० ॥ भवं शर्वमथेशानं तथा पशुपतिं द्विज । भीममुग्रं महादेवमुवाच स पितामहः ॥ २१ ॥ दक्षकोपाच्च तद्भार्या देहं तत्याज सा सती । हिमवद्दुहिता भूत्वा पत्नी शम्भोरभूत् पुनः ॥ २२ ॥ ऋषिभ्यो नारदाद्युक्ताः पूजाः स्नानादिपूर्विकाः । स्वायम्भुवाद्यास्ताः कृत्वा विष्ण्वादेर्भुक्तिमुक्तिगाः ॥ २३ ॥

इत्यादिमहापुराण आग्नेये जगत्सर्गवर्णनं नाम विंशोऽध्यायः ॥ २० ॥



में पौर्णमास नामक पुत्र हुआ । अङ्गिरा महर्षि की पत्नी सम्भूति में उनके अनेक पुत्र हुए तथा सिनीवाली, कुहू, शका तथा अनुमति नामक चार पुत्रियाँ हुईं । अनसूया ने अत्रि महर्षि के तीन पुत्रों को जन्म दिया, सोम (चन्द्रमा) दुर्वासा तथा योगी दत्तात्रेय ।। ११-१२ ।। पुलस्त्य की पत्नी प्रीति के गर्भ से उनका दत्तोलि नामक पुत्र उत्पन्न हुआ । पुलह महर्षि ने क्षमा के गर्भ से सहिष्णु तथा सर्षपादिक को जन्म दिया ।।१३।। क्रतु की पत्नी सन्नति के गर्भ से महातेजस्वी साठ हजार बालखिल्य महर्षियों ने जन्म लिया वे अंगूष्ठ के एक पर्व के आकार के थे ।। १४ ।। व्रसिष्ठ की पत्नी उर्जा ने, राजा, गात्र, ऊर्ध्वबाहुक, सवण, अनपघ, शुक्र तथा सुतपा इन सात ऋषियों को जन्म दिया ।। १५ ।। अग्नि की पत्नी स्वाहा ने पावक, पवमान तथा शुचि इन चार पुत्रों को जन्म दिया । अज के अग्निष्वाता, वर्हिषद्, अनग्नि तथा सग्नि नामक चार पुत्र हुए ।। १६ ।। पितृगणों की स्वधा नामक पत्नी से दो पुत्रियाँ उत्पन्न हुईं मेना तथा वैधारिगी । अधर्म की पत्नी हिंसा थी उन दोनों (हिंसा तथा अधर्म) से अनृत (असत्य) की उत्पत्ति हुई ।। १७ ।। इन दोनों की ही पुत्री निकृति हुई और भय तथा नरक ये दो पुत्र हुए । भय तथा नरक की क्रमशः माया तथा वेदना पत्नी हुई ।। १८।। उन दोनों (पत्नियों) में से भय की पत्नी माया ने समस्त भूतों का विनाश करने वाले मृत्यु को जन्म दिया । रौरव नरक की पत्नी वेदना ने भी भय को जन्म दिया ।। १९ ।। व्याधि, जरा, शोक, तृष्णा, तथा क्रोध ये मृत्यु की सन्तानें हुयीं । ब्रह्मा के रुद्र नामक पुत्र हुए क्योंकि उन्होंने रोते हुए ही जन्म लिया थे।। २० ।। हे द्विज वसिष्ठ ! ब्रह्मा ने रुद्र के भव, शर्व, ईशान, पशुपति, भीम, उग्र, तथा महादेव नाम रखा ।। २१।। रुद्र की पत्नी सती ने दक्ष पर क्रोध करके अपने देह का परित्याग कर दिया । पुनः वह हिमवान् की पुत्री होकर शङ्कर की पत्नी बनी ।। २२ ।। नारद आदि ऋषियों से वर्णित स्वायम्भुव आदि की पूजा का मैंने वर्णन किया है । विष्णु आदि की उन पूजाओं को करके स्वायम्भुव मनु आदि ने भुक्ति तथा मुक्ति को प्राप्त किया ।। २३ ।।

**इस तरह से आदि महापुराण अग्निपुराण का जगत् सर्ग वर्णन नामक बीसवाँ अध्याय सम्पूर्ण हुआ ॥ २० ॥**



# अथैकविंशोऽध्यायः

## विष्णवादिदेवानां सामान्यपूजाविधानम्

नारद उवाच– **सामान्यपूजां विष्णवादेर्वक्ष्ये मन्त्रांश्च सर्वदान् । समस्तपरिवाराय अच्युताय नमो यजेत् ॥ १ ॥ धात्रे विधात्रे गङ्गायै यमुनायै, निधी तथा । द्वारश्रियं वास्तुनरं शक्तिं कूर्ममनन्तकम् ॥ २ ॥ पृथिवीं धर्मकं ज्ञानं वैराग्यैश्वर्यमेव च । अधर्मादीन् कन्दनालपद्मकेसरकर्णिकाः ॥ ३ ॥ ऋग्वेदाद्यं कृताद्यं च सत्त्वाद्यर्कादिमण्डलम् । विमलोत्कर्षिणी ज्ञाना क्रिया योगा च ता यजेत् ॥ ४ ॥ प्रह्वी सत्या तथेशा चानुग्रहामलमूर्तिका । दुर्गां गिरं गणं क्षेत्रं वासुदेवादिकं यजेत् ॥ ५ ॥ हृदयं च शिरश्चूडां वर्म नेत्रमथास्त्रकम् । शङ्खं चक्रं गदां पद्मं श्रीवत्सं कौस्तुभं यजेत् ॥ ६ ॥ वनमालां श्रियं पुष्टिं गरुडं गुरुमर्चयेत् । इद्रमग्निं यमं रक्षो जलं वायुं धनेश्वरम् ॥ ७ ॥ ईशानं तमजं चास्त्रं वाहनं कुमुदादिकम् । विष्वक्सेनं मण्डलादौ सिद्धिः पूजादिना भवेत् ॥ ८ ॥ शिवपूजाथ सामान्या पूर्वं नन्दिनमर्चयेत् । महाकालं यजेद् दुर्गां यमुनां च गणादिकम् ॥ ९ ॥ गिरं, श्रियं, गुरुं, वास्तुं**

---

**नारद जी ने कहा–** अब मैं विष्णु भगवान् की सामान्य पूजा का तथा सभी कामनाओं को पूर्ण करने वाले मन्त्रों का वर्णन करता हूँ । भगवान् (विष्णु) की पूजा 'समस्त परिवाराय अच्युताय नमः' अर्थात्- 'अपने समपूर्ण परिवार से विशिष्ट भगवान् अच्युत को नमस्कार है, यह कहकर करे ।। १ ।। इसी तरह धाता, विधाता, गङ्गा, यमुना, शंखनिधि तथा पद्मनिधि, द्वारश्री, वास्तुपुरुष, शक्ति, कूर्म, अनन्त, पृथिवी, धर्म, ज्ञान, वैराग्य, ऐश्वर्य तथा अधर्म आदि की एवं कन्द, नाल,पद्म, केसर, कर्णिका, ऋग्वेद आदि (यजुर्वेद, सामवेद तथा अथर्ववेद) कृत (सत्य) युग आदि (त्रेतायुग, द्वापरयुग, कलियुग, सत्त्वगुण आदि (रजोगुण, तमोगुण) सूर्य आदि मण्डल, विमला, उत्कर्षिणी, ज्ञान, क्रिया तथा योगा का यजन करना चाहिए ।। २-४ ।। प्रह्वी, सत्या, ईशा, अनुग्रहा, अमलमूर्ति, दुर्गा, वाणी, गण, क्षेत्र तथा वासुदेव आदि का यजन करना चाहिएँ ।। ५ ।। हृदय, शिर, शिखा, वर्म (कवच) नेत्र, अस्त्र, शङ्ख, चक्र, गदा, पद्म, श्रीवत्स, (चिह्न) तथा कौस्तुभ (मणि) का पूजन करना चाहिए ।। ६ ।। वनमाला, श्री, पुष्टि,गरुड़ तथा गुरु की अर्चना करे। उसके पश्चात्, इन्द्र, अग्नि, यम, राक्षस, जल, वायु, कुबेर, ईशान (शङ्कर) ब्रह्मा, अस्त्र, वाहन तथा कुमुद आदि (गणों) तथा विष्वक्सेन, आदि की पूजा मण्डल आदि में करने से सिद्धि की प्राप्ति होती है ।। ७-८ ।।

**विशेष- ये सभी विष्णु मण्डल के देवता हैं। अतएव विष्णु भगवान् के पूजन में इन सबों का पूजन अलग-अलग मण्डल में करना चाहिए । सबों का चतुर्थ्यन्त नामोच्चारण करके अन्त में नमः शब्द का प्रयोग करना चाहिए । सुविधा के लिए यहाँ पर सबों का चतुर्थ्यन्त नाम मन्त्र दिया जा रहा है–**

**१. ओम् धात्रे नमः २. विधात्रे नमः ३. ॐ गङ्गायै नमः ४. ओम यमुनायै. ५. ओम् शंखनिधये० ६. ओम् पद्मनिधये० ७. द्वारश्रियै० ८. ओम् वास्तुपुरुषाय० ९. ओम् शक्तये० १०. ओम् कूर्माय० ११. ओम् अनन्ताय० १२. ओम् पृथिव्यै० १३. ओम् धर्माय० १४. ओम् ज्ञानाय० १५. ओम् वैराग्याय० १६. ओम् ऐश्वर्याय० १७. ओम् अधर्मादिभ्यो० १८. ओम् कन्दाय. १०. ओम् नालाय २०. ओम् पद्माय २१. ओम् केसराय २२. ओम् कर्णिकायै० २३. ओम् ऋग्वेदाय० २४. ओम् यजुर्वेदाय २५. ओम् सामवेदाय २६. ओम् सत्त्वाय० २७. ओम् रजसे० २८. ओम् तमसे० २९. ओम् अर्कादि मण्डलेभ्यो० ३०. विमलायै० ३१. ओम् उत्कर्षिण्यै० ३२. ओम् ज्ञानायै० ३३. ओम् क्रियायै० ३४. ओम् योगायै० ३५. ओम् प्रह्व्यै० ३६. ओम् सत्यायै० ३७. ओम् ईशायै० ३८. ओम् अनुग्रहायै० ३९. ओम् अमलमूर्तिकायै० ४०. ओम् दुर्गायै० ४१. ओम् गिरे ४२. ओम् गणाय० ४३. ओम् क्षेत्राय० ४४. ओम् वासुदेवादिभ्यो० ४५. ओम् हृदयाय० ४६. ओम् शिरसे स्वाहा ४७. ओम् शिखायै वौषट् ४८. ओम् कवचाय हुम् ४९. ओम् नेत्राभ्याम् वषट् ५०. ओम् अस्त्राय फट् ५१. ओम् शङ्खाय० ५२. ओम् चक्राय० ५३. ओम् गदायै० ५४. ओम् पद्माय० ५५. ओम् श्रीवत्साय०**

विश्वरूपं सर्वसिद्ध्यै यजेद्राज्यजयाय च । सर्वव्यूहैः समायुक्तमङ्गैरपि च पञ्चभिः।। ४९।। गरुडाद्यैस्तथेन्द्राद्यैः सर्वान्कामनवाप्नुयात् । विष्वक्सेनं यजेन्नाम्ना रौं बीजं नामसंयुतम् ।। ५०।।

इत्यादिमहापुराण आग्नेये वासुदेवादिमन्त्रलक्षणवर्णनं नाम पञ्चविंशोऽध्यायः ।। २५ ।।

## अथ षड्विंशोऽध्यायः

## मुद्रालक्षणानि

नारद उवाच— **मुद्राणां लक्षणं वक्ष्ये सान्निध्यादिप्रकारकम् । अञ्जलिः प्रथमा मुद्रा वन्दनी हृदयानुगा ।। १ ।। ऊर्ध्वाङ्गुष्ठो वाममुष्टिदक्षिणाङ्गुष्ठबन्धनः। सव्यस्य तस्य चाङ्गुष्ठो यस्य चोर्ध्वं प्रकीर्तितः ।। २ ।। तिस्रः साधारणा व्यूहे अथासाधारणा इमाः । कनिष्ठादिविमोकेन अष्टौ मुद्रा यथाक्रमम्।। ३।। अष्टानां पूर्वबीजानां क्रमशस्त्ववधारयेत् । अङ्गुष्ठेन कनिष्ठान्तं नामयित्वाङ्गुलित्रयम् ।। ४ ।। ऊर्ध्वं कृत्वा सम्मुखं च बीजाय नवमाय वै । वामहस्तमथोत्तानं कृत्वोर्ध्वं नामयेच्छनैः ।। ५।। वराहस्य स्मृता मुद्रा अङ्गानां च क्रमादिमाः । एकैकां मोचयेन्मुद्रां वाममुष्टौ तथाङ्गुलीम् ।। ६ ।। आकुञ्चयेत्पूर्वमुक्तां दक्षिणेऽप्येवमेव च । ऊर्ध्वाङ्गुष्ठो वाममुष्टिर्मुद्रासिद्धिस्ततो भवेत् ।। ७ ।।**

इत्यादिमहापुराण आग्नेये मुद्रालक्षणवर्णनं नाम षड्विंशोध्यायः ।। २६ ।।

---

गरुड़ादि पार्षदों तथा इन्द्रादि से युक्त विश्वरूप परमात्मा का पूजन करके साधक अपने सभी मनोरथों को पूर्ण कर लेता है । अन्त में रौं बीज लगाकर नाम से विष्वक्सेन का पूजन करना चाहिए। विष्वक्सेन के पूजन का मन्त्र- 'रौं विष्वक्सेनाय नमः ।' होगा ।। ४६-५० ।।

**इस त रह आदिमहापुराण अग्निपुराण का वासुदेवादि मन्त्र लक्षण वर्णन नामक पच्चीसवाँ अध्याय सम्पूर्ण हुआ ।। २५ ।।**

**श्रीनारदजी ने कहा—** अब मैं सान्निध्य आदि जिनके भेद हैं, उन मुद्राओं का लक्षण बतलाऊँगा । पहली मुद्रा अञ्जलि मुद्रा है दूसरी बन्दनी तथा तीसरी हृदयानुगा मुद्रा है ।। १ ।। हाथ जोड़कर अञ्जलि बनाने को अञ्जलि मुद्रा कहते हैं। हाथ जोड़कर उसे शिर से लगाकर नमस्कार करने को वन्दनी मुद्रा कहते हैं । दोनों हाथों के अंगूठे ऊपर की ओर उठे रहें, वायें हाथ की मुट्ठी से दाहिने हाथ के अंगूठे को बाँध लें, और बाऐं हाथ के अंगूठे को ऊपर की ही ओर उठाए रहे, तो यह हृदयानुगा मुद्रा होती है ।। २ ।। ब्यूह पूजन में ये तीन मुद्राएँ तो साधारण (सामान्य) हैं अब असाधारण मुद्रा बतलायी जा रही है । दोनों हाथों की अंगुलियों को झुका लेने के पश्चात् क्रमशः एक-एक करके कनिष्ठा आदि अंगुलियों को सीधा करने से आठ मुद्राएँ बनती हैं ।। ३ ।। अवर्ग, कवर्ग, चवर्ग, टवर्ग, तवर्ग, पवर्ग, यवर्ग तथा शवर्ग इन आठ वर्गों के बीज अं, कं, चं, टं, तं, पं, यं तथा शं को सूचित करने के लिए पूर्वोक्त आठ मुद्राएँ हैं । अंगुष्ठ से लेकर कनिष्ठि का पर्यन्त की तीन अंगुलियों को झुकाकर पुनः सामने करके हाथ को ऊपर करने पर जो मुद्रा बनती है वह नवें क्षं वीज को सूचित करती है । दाहिने हाथ के ऊपर बाएँ हाथ को उत्तान करके अंगुलियों को धीरे-धीरे ऊपर की ओर झुकाने पर जो मुद्रा बनती है उसे बराह मुद्रा कहते हैं। ये क्रमशः अङ्गों की मुद्राएँ हैं। एक-एक मुद्रा को छोड़ना चाहिए। इसी तरह बाएँ हाथ की मुट्ठी के एक-एक अंगुली को सीधा करना चाहिए, तथा पहले से सीधी की हुई अंगुलियों को एक-एक करके मोड़ना चाहिए । इसी तरह से दाहिने हाथ की भी मुद्रा करनी चाहिए । बाएँ हाथ की मुट्ठी के अंगूठे को ऊपर की ओर उठाए रखना चाहिए । ऐसा करने से मुद्रा की सिद्धि हो जाती है ।। ४-७ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का मुद्रा लक्षण वर्णन नामक छब्बीसवाँ अध्याय सम्पूर्ण हुआ ।। २६ ।।**

## अथ सप्तविंशोऽध्यायः

### शिष्येभ्यो दीक्षादानविधिः

नारद उवाच– **वक्ष्ये दीक्षां सर्वदा च मण्डलेऽब्जे हरिं यजेत् । दशम्यामुपसंहृत्य यागद्रव्यं समस्तकम् ॥ १ ॥ विन्यस्य नारसिंहेन सम्मन्त्र्य शतवारकम् । सर्षपांस्तु फडन्तेन रक्षोघ्नान्सर्वतः क्षिपेत् ॥ २ ॥ शक्तिं सर्वात्मिकां तत्र न्यसेत्प्रासादरूपिणीम् । सर्वौषधीः समाहृत्य विकिरानभिमन्त्रयेत्॥३॥ शतवारं शुभं पात्रे वासुदेवेन साधकः । संसाध्य पञ्चगव्यं तु पञ्चभिर्मूलमूर्तिभिः ॥ ४ ॥ नारायणान्तैः सम्प्रोक्ष्य कुशाग्रैस्तेन तां भुवम् । विकिरान्वासुदेवेन क्षिपेदुत्तानपाणिना ॥ ५ ॥ त्रिधा पूर्वमुखस्तिष्ठन् ध्यायन् विष्णुं तदा हृदि । वर्धन्या सहिते कुम्भे साङ्गं विष्णुं प्रपूजयेत् ॥ ६ ॥ शतवारं मन्त्रयित्वा त्वस्त्रेणैव च वर्धनीम् । अच्छिन्नधारया सिञ्चन्नैशान्यान्तं नयेच्च ताम् ॥ ७ ॥ कलशं पृष्ठतो नीत्वा स्थापयेद्विकिरोपरि । संहृत्य विकिरान्दर्भैः कुम्भेशं कर्करीं यजेत् ॥ ८ ॥ सवस्त्रे पञ्चरत्नाढ्ये स्थण्डिले पूजयेद्धरिम् । अग्नावपि समभ्यर्च्य मन्त्रैः सन्तर्प्य पूर्ववत् ॥ ९ ॥ प्रक्षाल्य पुण्डरीकेण विलिप्यान्तः सुगन्धिना । उखामाज्येन सम्पूर्य गोक्षीरेण तु साधकः ॥ १० ॥ आलोड्य वासुदेवेन ततः सङ्कर्षणेन च । तण्डूलानाज्यसंसृष्टान् क्षिपेत् क्षीरे सुसंस्कृते ॥ ११ ॥ प्रद्युम्नेन समालोड्य दर्व्या सङ्घट्येच्छनैः । पक्वमुत्तारयेत्पश्चादनिरुद्धेन देशिकः ॥ १२॥ प्रक्षाल्यालिप्य तत्कुर्यादूर्ध्वपुण्ड्रं तु भस्मना । नारायणेन पार्श्वेषु चरुमेवं सुसंस्कृतम् ॥ १३ ॥ भागमेकं तु देवाय कलशाय द्वितीयकम् । तृतीयेन तु भागेन प्रदद्यादाहुतित्रयम् ॥१४॥ शिष्यैः सह चतुर्थं तु गुरुरद्याद्विशुद्धये । नारायणेन सम्मन्त्र्य सप्तधा क्षीरवृक्षजम् ॥१५॥ दन्तकाष्ठं भक्षयित्वा**

**नारदजी ने कहा–** अब मैं दीक्षाविधि का वर्णन करता हूँ । सर्वदा पद्ममण्डल पर श्री हरि का यजन करना चाहिए । दशमी तिथि को याग की सारी सामग्री एकत्रित करके रखकर 'क्ष्रौं' इस नारसिंह मन्त्र से सौ बार अभिमन्त्रित करके क्ष्रौं फट् इस रक्षोघ्न मन्त्र से सब जगह सरसो (पीली) छिड़कना चाहिए ।। १-२।। उसके पश्चात् वहाँ पर प्रासाद रूपिणी सर्वात्मिका शक्ति का न्यास करना चाहिए। साधक को चाहिए कि वह सभी औषधियों को एकत्रित करके, शुभ पात्र में [illegible] को रखकर वासुदेव मन्त्र से उसे सौ बार अभिमन्त्रित करे । वासुदेव से लेकर नारायण पर्यन्त पाँच मूलमूर्तियों (वासुदेव, संकर्षण, प्रद्युम्न, अनिरुद्ध तथा नारायण) के मन्त्रों से पञ्चगव्य तैयार करके, कुश के अग्रभाग से उस पञ्चगव्य द्वारा भूमि का प्रोक्षण करके, ऊपर की ओर (उत्तान) हाथ करके वासुदेव मन्त्र से सरसो छींटे ।। ३-५ ।। उस समय पूर्वाभिमुख होकर तीन बार भगवान् विष्णु का ध्यान करते हुए, वर्धनी से युक्त कलश पर भगवान् विष्णु की विधिपूर्वक पूजा करनी चाहिए ।। ६ ।। अस्त्र मन्त्र के द्वारा उसे सौ बार अभिमन्त्रित करके वर्धनी को अविच्छिन्न जल धारा से सिंचित करते हुए ईशानकोण पर लाए ।। ७ ।। पीछे से कलश लाकर विकिर (सरसों) के ऊपर स्थापित करे। कुशे से सरसों को बिटोरकर कुम्भेश तथा कर्करी की पूजा करनी चाहिए ।। ८ ।। वस्तु तथा पञ्चरत्न से समलंकृत वेदी पर श्रीहरि की पूजा करे । अग्नि में भी मन्त्रों द्वारा पूजन करके पहले के ही समान तर्पण करके ।। ९ ।। '**ओमपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि । यः स्मरेत् पुण्डरीकाक्षं स वाह्याभ्यन्तरः शुचिः ।**' इस पुण्डरीकाक्ष मन्त्र से, उखा (बटलोही) का प्रोक्षण करके ऊसके भीतर सुगन्धित घी लगाकर, गोदुग्ध से उसको भरकर, वासुदेव मन्त्र से उसको चलाकर उस सुसंस्कृत दुग्ध में घी मिले हुए चावल को साधक संकर्षण मन्त्र से डाले ।। ९-११ ।। आचार्य को चाहिए कि वे प्रद्युम्न मन्त्र से उसको करछुल से चलाकर धीरे-धीरे उसे मिलाए और पक जाने पर खीर को अनिरुद्ध मन्त्र से उतार दें ।। १२ ।। वहाँ भूमि को धोकर तथा लिपकर चरु के बगल में भस्म से उर्ध्वपुण्ड्र बना देना चाहिए । इस तरह से उस सुसंस्कृत चरु को चार भाग में विभक्त करे ।। १३ ।। उसका एक भाग भगवान् को और दूसरा भाग कलश को समर्पित करके तीसरे भाग से तीन आहुतियाँ प्रदान करनी चाहिए ।। १४ ।। चतुर्थ भाग को आचार्य शिष्यों के साथ खाएँ । दूसरे दिन (एकादशी तिथि को) दूध वाले वृक्ष के दातून को नारायण मन्त्र से सात बार अभिमन्त्रित

त्यक्त्वा ज्ञात्वा स्वपातकम् । ऐन्द्राग्न्युत्तरकैशानीमुखः स्नातो ह्यनुत्तमम् ॥ १६ ॥ शुभं सिद्धमिति ज्ञात्वाचम्य प्राणान्नियम्य च । पूजागारं विशेन्मन्त्री प्रार्थ्य विष्णुं प्रदक्षिणम्॥१७॥ संसारार्णवमग्नानां पशूनां पाशमुक्तये । त्वमेव शरणं देव ! सदा त्वं भक्तवत्सलः ॥ १८ ॥ देवदेवानुजानीहि प्राकृतैः पाशबन्धनैः । पाशितान् मोचयिष्यामि त्वत्प्रसादात्पशूनिमान् ॥ १९ ॥ इति विज्ञाप्य देवेशं सम्प्रविश्य पशूंस्ततः । धारणाभिस्तु संशोध्य पूर्ववज्ज्वलनादिना ॥ २० ॥ संस्कृत्य मूर्त्या संयोज्य नेत्रे बद्ध्वा प्रदर्शयेत् । पुष्पपूर्णाञ्जलींस्तत्र क्षिपेत्तन्नाम योजयेत् ॥ २१ ॥ अमन्त्रमर्चनं तत्र पूर्ववत्कारयेत् क्रमात् । यस्यां मूर्तौ पतेत्पुष्पं तस्य तन्नाम निर्दिशेत् ॥ २२ ॥ शिखान्तसम्मितं सूत्रं पादाङ्गुष्ठादि षड्गुणम् । कन्यया कर्तितं रक्तं पुनस्तत् त्रिगुणीकृतम् ॥ २३॥ यस्यां संलीयते विश्वं यतो विश्वं प्रसूयते। प्रकृतिं प्रक्रियाभेदैः संस्थितां तत्र चिन्तयेत् ॥ २४ ॥ तेन प्राकृतिकान् पाशान् ग्रथित्वा तत्त्वसङ्ख्यया। कृत्वा शरावे तत्सूत्रं कुण्डपार्श्वे निधाय तु ॥ २५॥ ततस्तत्त्वानि सर्वाणि ध्यात्वा शिष्यतनौ न्यसेत् । सृष्टिक्रमात् प्रकृत्यादिपृथिव्यन्तानि देशिकः॥२६॥ त्रेधा वा पञ्चधा वा स्याद् दशद्वादशधापि च । दातव्यः सर्वभेदेन ग्रथितस्तत्त्वचिन्तकैः ॥ २७ ॥ अङ्गैः पञ्चभिरक्रान्तं निखिलं प्रकृतिक्रमात् । तन्मात्रात्मनि संहृत्य मायासूत्रे पशोस्तनौ ॥ २८ ॥ प्रकृतिर्लिङ्गशक्तिश्च कर्ता बुद्धिस्तथा मनः । पञ्चतन्त्रमात्रबुद्ध्याख्यं कर्माख्यं भूतपञ्चकम् ॥ २९ ॥ ध्यायेच्च द्वादशात्मानं सूत्रे देहे तथेच्छया । हुत्वा सम्पातविधिना सृष्टेः सृष्टिक्रमेण तु ॥३०॥ एकैकं शतहोमेन दत्त्वा पूर्णाहुतिं ततः । शरावे सम्पुटीकृत्य कुम्भेशाय निवेदयेत् ॥ ३१ ॥ अधिवास्य यथान्यायं भक्तं शिष्यं तु दीक्षयेत्। करणीं कर्तरीं चापि रजांसि

---

करके, दातून करे, पुनः उसे फेंककर, अपने पापों का स्मरण करते हुए स्थित होने की भावना करनी चाहिए फिर आचमन प्राणायाम के पश्चात् मन्त्रोपदेष्टा गुरु भगवान् विष्णु से प्रार्थना करके उनकी परिक्रमा के पश्चात् पूजा गृह में प्रवेश करे।। १५-१७।। प्रभों संसार पाश में बंधें पशुओं को छुटकारा दिलाने के लिए आप ही शरण दाता हैं। आप अपने भक्तों पर वात्सल्य भाव रखतें हैं।। १८।। देवाधि देव आज्ञा दीजिये प्राकृत पाश बन्धनों से बँधे हुए इन पशुओं को आज आपकी कृपा से मुक्त करूँगा।। १९।। श्री हरि से इस प्रकार प्रार्थना करके पूजा गृह में प्रवेश करे। गुरु पहले के ही समान अग्नि आदि की धारणाओं द्वारा शिष्यभूत समस्त पशुओं का शोधन करके संस्कार करने के पश्चात् उनका वासुदेवादि मूर्तियों से संयोग करो शिष्यों के नेत्र बाँधकर उन्हें मूर्तियों की ओर देखने का आदेश दे। शिष्य उन मूर्तियों की ओर पुष्पाञ्जलि फेंके। तदनुसार उनका नाम निर्देश करे। पूर्ववत् शिष्यों से क्रमशः मूतियों का मन रहित पूजन करावे। जिस शिष्य का फूल जिस मूर्ति पर गिरे उसका वही नाम गुरु करे।। २०-२२।। कुमारी कन्या के हाथ से काता हुआ लाल रंग का सूत उसके उसे छह गुना करके बट दे। उस छह गुने सूत की लम्बाई पैर के अंगूठें से लेकर शिखा तक होनी चाहिए फिर उसे भी मोड़कर तिहरा कर ले। फिर उसमें प्रकृति देवी का चिन्तन करे जिस प्रकृति देवी से विश्व उत्पन्न होकर उसी में लीन हो जाता है।। २४ ।। पुनः प्राकृत तत्त्वों की संख्या के अनुसार उस सूत्र में चौबीस गाँठें लगाकर, उसे परई में करके कुण्ड के बगल में रख देना चाहिए ।। २५ ।। उसके पश्चात् आचार्य प्रकृति से लेकर पृथिवी तत्त्व पर्यन्त समस्त तत्त्वों का सृष्टिक्रम से ध्यान करके, उन तत्त्वों का शिष्य के शरीर में न्यास करे ।। २६ ।। तत्त्वचिन्तन करने वाले आचार्य को यह क्रिया तीन बार, या पाँच बार, या दस बार, या बारह बार करना चाहिए तथा ग्रन्थि बन्धन का कार्य करना चाहिए ।। २७ ।। प्रकृति के क्रम से पाञ्च अङ्गों से संबद्ध, अङ्ग सम्पूर्ण न्यास मन्त्रों को पढ़कर पञ्चतन्मात्रात्मक माया सूत्रस्वरूप शिष्य के शरीर में प्रकृति, लिङ्गशक्तिकर्ता, बुद्धि तथा मन का उपसंहार करना चाहिए । पुनः शिष्य के शरीर में पञ्चतन्त्र मात्राओं, बुद्धि, मन तथा पञ्चमहाभूत का ध्यान करना चाहिए । फिर अपनी इच्छा के अनुसार हवन करके, प्रलय क्रम सें अथवा सृष्टि के क्रम से एक-एक मन्त्र से सौ-सौ बार हवन करके, फिर पूर्णाहुति देकर, सूत्र को शराव (कसोरे) में संपुटित करके उसे कुम्भेभांश को समर्पित करे ।। २८-३१ ।। पुनः उचित

खटिकामपि ॥ ३२ ॥ अन्यदप्युपयोगि स्यात्सर्वंतद् वामगोचरे । संस्थाप्य मूलमन्त्रेण परामृश्याधिवासयेत् ॥ ३३ ॥ नमो भूतेभ्यश्च बलिः कुशे देयः स्मरन्हरिम् । मण्डपं भूषयित्वाथ वितानघटलड्डुकैः ॥ ३४ ॥ मण्डलेऽथ यजेद्विष्णुं ततः सन्तर्प्य पावकम् । आहूय दीक्षयेच्छिष्यान्बद्धपद्मासनस्थितान्॥३५॥ सम्प्रोक्ष्य विष्णुहस्तेन मूर्धानं स्पृश्य वै क्रमात् । प्रकृत्यादिविकृत्यन्तां साधिभूताधिदेवताम् ॥ ३६ ॥ सृष्टिमाध्यात्मिकीं कृत्वा हृदि तां संहरेत्क्रमात्। तन्मात्रभूतां सकलां जीवेन समतां गताम् ॥ ३७ ॥ ततः सम्प्रार्थ्य कुम्भेशं सूत्रं संस्कृत्य देशिकः । अग्नेः समीपमागत्य पार्श्वे तं सन्निवेश्य तु ॥ ३८॥ मूलमन्त्रेण सृष्टीशमाहुतीनां शतेन तम् । उदासीनमथासाद्य पूर्णाहुत्या च देशिकः ॥ ३९ ॥ शुक्लं रजः समादाय मूलेन शतमन्त्रितम् । सन्ताड्य हृदयं तेन हुम्फूट्कारान्तसंयुतैः ॥ ४० ॥ वियोगपदसंयुक्तैर्बीजैः पादादिभिः क्रमात् । पृथिव्यादीनि तत्त्वानि विश्लिष्य जुहुयात्ततः ॥ ४१ ॥ वह्नावखिलतत्त्वानामालये व्याहृते हरौ । नीयमानं क्रमात्सर्वं तत्त्वाधारं स्मरेद् बुधः ॥ ४२ ॥ ताडनेन वियोज्यैवमादायापाद्य साम्यताम् । प्रकृत्याहृत्य जुहुयाद्यथोक्ते जातवेदसि॥ ४३ ॥ गर्भाधानं जातकर्म भोगं चैव लयं तथा । कृत्वाष्टौ तत्र तत्रैव ततः शुद्धं तु होमयेत् ॥ ४४ ॥ शुद्धं तत्त्वं समुद्धृत्य पूर्णाहुत्या तु देशिकः । सन्धयेद्धि परे तत्त्वे यावदव्याकृतं क्रमात् ॥ ४५ ॥ तत्परं ज्ञानयोगेन विलाप्य परमात्मनि । विमुक्तबन्धनं जीवं परस्मिन्नव्यये पदे ॥ ४६॥ निर्वृत्तं परमानन्दे शुद्धे बुद्धे स्मरेद् बुधः। दद्यात् पूर्णाहुतिं पश्चादेवं दीक्षा

विधि से अधिवास कराकर भक्त शिष्यों को आचार्य दीक्षित करें । उस समय शिष्य के बाएँ भाग में,करणी, कर्त्तरी (कैंची) रेत, खड़िया तथा अन्य सभी उपयोगी वस्तुओं को रखना चाहिए । उन सबों की स्थापना करके मूलमन्त्र से उन वस्तुओं का स्पर्श करके उनका अधिवास कराना चाहिए ।। ३२-३३ ।। श्रीहरि का स्मरण करते हुए 'नमो भूतेभ्यः इस मन्त्र से कुश के ऊपर बलि देनी चाहिए। पुनः मण्डप को अलंकृत करके घट की स्थापना करके उसमें लड्डू भर दे।।३४।। उसके पश्चात् मण्डप में भगवान् विष्णु का पूजन करे, उसके पश्चात् हवन करके, शिष्यों को बुलाकर पद्मासन से बैठे हुए शिष्यों को दीक्षा दे ।। ३५ ।। शिष्यों का प्रोक्षण करके विष्णुहस्त (शालग्राम भगवान् को अपने हाथ में लेकर) शिष्यों के शिर से क्रमशः स्पर्श कराए । पुनः साधिभूत तथा साधिदैवत प्रकृति से लेकर विकृति पर्यन्त (प्रकृति के चौबीस तत्त्वों प्रकृति, महान, अहंकार, पञ्चतन्मात्राएँ, पञ्चमहाभूत, पञ्चज्ञानेन्द्रियाँ, पञ्चकर्मेन्द्रियाँ और मन) की आध्यात्मिक सृष्टि करके, उन सबों का क्रमशः लय के क्रम से अपने हृदय में संहार करे । इस तरह सम्पूर्ण तन्मात्र स्वरूपा सृष्टि जीव के समान हो जाती है ।। ३६-३७ ।। इसके पश्चात् आचार्य कुम्भेश की प्रार्थना करके, सूत्र का संस्कार करें । पुनः अग्नि के समीप आकर शिष्य को अपने सन्किट बैठाएँ । पुनः (ब्रह्मा के) मूल मन्त्र से सृष्टि के स्वामी, ब्रह्म के लिए सौ आहुतियाँ दे । पुनः उदासीन भाव से आचार्य पूर्णाहुति के साथ शिष्य के सन्निकट आकर उजली मिट्टी (पासा) लेकर उसे सौ बार वराह भगवान् के मूलमन्त्र से अभिमन्त्रित करे पुनः उससे (अभिमन्त्रित धूल) करके, जिनके अन्त में हुं फट् लगा हो इस तरह के वियोग के वाचक क्रिया पद से तथा बीज मन्त्रों से युक्त वाक्य रचना करके (जैसे- रां नमः कर्मेन्द्रियाणि वियुंक्ष्व हुं फट् । ओं णं नमः भूतानि वियुंक्ष्व हुम्फट् । इत्यादि से पृथिवी आदि तत्त्वों का विश्लेषण करके हवन करना चाहिए ।। ३८-४१ ।। विद्वान् आचार्य को इस तरह से सभी तत्त्वों का क्रमशः (कार्य तत्त्वों का कारण तत्त्व में लय के क्रम से) लय कर लेने के पश्चात् उन समस्त तत्त्वों के आधार समस्त तत्त्वों के ताडन के द्वारा समस्त तत्त्वों को शिष्य से विश्लिष्ट करके शिष्य को शुद्ध बनाकर उसकी प्रकृति को पूर्वोक्त अग्नि में हवन कर देना चाहिए ।। ४३ ।। उसके पश्चात् गर्भाधान, जातकर्म, भोग तथा लय आठ बार करके आठों बार शुद्ध हवन करे ।। ४४ ।। आचार्य को चाहिए कि वे पूर्णहुति के द्वारा शुद्ध तत्त्व को उद्धृत करके अव्याकृत प्रकृति पर्यन्त समस्त तत्त्वों का क्रमशः परं तत्त्व में लय करे ।। ४५ ।। उसके पश्चात् ज्ञानयोग के द्वारा संसार के बन्धन से मुक्त जीव को अव्यय तथा परमप्राप्य परमात्मा में विलीन करके आचार्य यह अनुभव करें कि वह जीव शुद्ध बुद्ध तथा परमानन्द स्वरूप को प्राप्त कर चुका है । अन्त में आचार्य को पूर्णाहुति करनी चाहिए । ऐसा करने से दीक्षा पूर्ण होती है ।। ४६-४७ ।। अब मैं उन प्रयोग मन्त्रों को बतला रहा हूँ, जिन मन्त्रों

समाप्यते ॥ ४७ ॥ प्रयोगमन्त्रान् वक्ष्यामि यैर्दीक्षाहोमसंलयः । ओं यं भूतानि विशुद्धं हुं फट्। अनेन ताडनं कुर्याद् वियोजनमिह द्वयम् ॥ ४८ ॥ ॐ यं भूतान्यापातयेऽहम् । आदानं कृत्वा चानेन प्रकृत्या योजनं शृणु । ॐ यं भूतानि पुंश्चाहो । होममन्त्रं प्रवक्ष्यामि ततः पूर्णाहुतेर्मनुम् ॥ ४९॥ ॐ अं ॐ नमो भगवते वासुदेवाय ओ वौषट् । पूर्णाहुत्यनन्तरं तु तत्त्वे शिष्यं तु सन्धयेत् ॥ ५० ॥ एवं तत्त्वानि सर्वाणि क्रमात् संशोधयेद् बुधः। नमोन्तेन स्वबीजेन ताडनादिपुरःसरम् ॥ ५१ ॥ ॐ रां कर्मेन्द्रियाणि, ॐ दें बुद्धीन्द्रियाणि ( च ) । यं बीजेन समानं तु ताडनादिप्रयोगकम् ॥ ५२॥ ओं सुं तं गन्धतन्मात्रे विम्बं युंक्ष्व हुं फट् । ॐ सं पाहि हां ॐ स्वं स्वं युङ्क्ष्व प्रकृत्या ॥ ५३ ॥ ओं जं हुं गन्धतन्मात्रे संहर स्वाहा । ततः पूर्णाहुतिश्चैवमुत्तरेषु प्रयुज्यते ॥ ५४ ॥ ॐ रां रसतन्मात्रे। ॐ तें रूपतन्मात्रे ॥ ५५ ॥ ॐ वं स्पर्शतन्मात्रे । ॐ यं शब्दतन्मात्रे ॥ ५६ ॥ ॐ भं नमः । ॐ मौ अहङ्कारः ॐ नं बुद्धौ । ॐ ॐ ॐ प्रकृतौ ॥ ५७ ॥ एकमूर्तावयं प्रोक्तो दीक्षायोगः समासतः । एवमेव प्रयोगस्तु नवव्यूहादिके स्मृतः॥५८॥ दग्ध्वा परस्मिन् सन्दध्यान्निर्वाणे प्रकृतिं नरः । शोधयित्वाथ भूतानि कर्माक्षाणि विशोधयेत् ॥ ५९ ॥ बुद्ध्यक्षाण्यथ तन्मात्रं मनो ज्ञानमहङ्कृतिम् । लिङ्गात्मानं विशोध्यान्ते प्रकृतिं शोधयेत्पुनः ॥ ६० ॥ पुरुषं प्राकृतं शुद्धमैश्वरे धाम्नि संस्थितम् । स्वगोचरीकृताशेषभोगं मुक्तौ कृतास्पदम् ॥६१॥ ध्यायेत्पूर्णाहुतिं दद्याद्दीक्षेयं त्वधिकारदा । अङ्गैराराध्य मन्त्रस्य नीत्वा तत्त्वगणं समम् ॥ ६२ ॥ क्रमादेवं विशोध्यान्ते सर्वसिद्धिसमन्वितम् । ध्यायन् पूर्णाहुतिं दद्याद्दीक्षेयं साधके स्मृता ॥ ६३ ॥ द्रव्यस्य वा न सम्पत्तिरशक्तिर्वात्मनो यदि । इष्ट्वा देवं यथापूर्वं

से दीक्षा, होम तथा लय का कार्य सम्पन्न होता है । 'ओम् यं भूतानि विशुद्धं हुम् फट् ।' इस मन्त्र से आचार्य को शिष्य के हृदय में श्वेत रज से प्रताडन करना चाहिए । वियोजन मन्त्र दो हैं । (जिन्हें पहले कहा जा चुका है ।) ।। ४८ ।। 'ओम् यं भूतान्यापातयेऽहम्' इस मन्त्र से भूतों का आदान (ग्रहण) करके, शिष्य को प्रकृति से जोड़ने वाले मन्त्र को सुनो । 'ओ यं भूतानि पुंश्च' यह वियोजन मन्त्र है । मैं पहले होम मन्त्र कहूँगा उसके पश्चात् पूर्णाहुति का मन्त्र है । 'ओम् भूतानि संहर स्वाहा' यह होममन्त्र है । 'ओम् अं नमो भगवते वासुदेवाय ऊँ वौषट्' यह पूर्णाहुति मन्त्र है । पूर्णाहुति के पश्चात् शिष्य को तत्त्व से संयुक्त कर देना चाहिए ।। ४९ ।। अपने-अपने बीज मन्त्रों के अन्त में नमः पद लगाकर ताडनादि क्रिया पुरस्सर संशोधन करे ।। ५१ ।। ओम् नमः कर्मेन्द्रियाणि वियुंक्ष्व हुम् फट्' ओम् दें नमः बुद्धीन्द्रियाणि वियुंक्ष्व हुं फट्' इन दो मन्त्रों से भी पूर्वोक्त यं बीज के ही समान ताडनादि प्रयोग होते हैं ।। ५२ ।। ओम् सुं तं गन्धतन्मात्रे बिम्बं युंक्ष्व हुं फट्' 'ओम् सं पाहि हाँ ओम् स्वं स्वं युंक्ष्व प्रकृत्या' जं हुं गन्धतन्मात्रे संहर स्वाहा ।' ये दोनों क्रमशः संयोजन के तथा होम के मन्त्र हैं ।।५३।। उसके पश्चात् आगे कहे जाने वाले इन मन्त्रों से पूर्णाहुति की जाती है– (१) ओम् रां रस तन्मात्रे (२) ओम् तें रूप तन्मात्रे, (३) ओम् वं स्पर्शतन्मात्रे, (४) ओम् यं शब्दतन्मात्रे, (५) ओम् भं नमः, (६) ओम् मौ अहंकारः, (७) ओम् नं बुद्धौ, (८) ओम् ओम् ओम् प्रकृतौ । इस तरह से एक मूर्ति में यह संक्षेप में दीक्षा का विधान बतलाया गया । इसी तरह नवव्याहृत्यादि में भी प्रयोग बतलाया गया है ।। ५४-५८ ।। इस तरह से नर प्रकृति को दग्ध करके परं ब्रह्म से संयुक्त हो जाता है । उसके पश्चात् उसे भूतशुदि करके कर्मेन्द्रियों का शोधन करना चाहिए ।। ५९ ।। उसके पश्चात् ज्ञानेन्द्रियों, पञ्चतन्मात्राओं मन, अहंकार तथा लिङ्ग शरीर का शोधन करके उसके पश्चात् प्रकृति का शोधन करे । उसके पश्चात् सम्पूर्ण भोगों को अपना विषय बना चुकने वाले (प्रकृति के संबन्ध से युक्त पुरुष जीवात्मा का ईश्वर के धाम में अवस्थित तथा मुक्ति का पात्र बने हुए शुद्ध रूप का ध्यान करके पूर्णाहुति देना चाहिए । यह दीक्षा अधिकार प्रदान करने वाली है । अङ्गों के साथ मन्त्र की आराधना करके तत्त्व समूह को समावस्था में लाकर इसी क्रम से तत्त्वों का विशोधन किया जाता है । उसके पश्चात् सभी सिद्धियों का समन्वित रूप से ध्यान करते हुए पूर्णाहुति देनी चाहिए । यह साधक के लिए दीक्षा बतलायी गयी है ।। ६०-६३ ।। यदि शिष्य के पास द्रव्य के लिए सम्पत्ति न हो अथवा किसी प्रकार की असमर्थता हो तो देशिकोत्तम (उत्तम आचार्य) को चाहिए कि वे सम्पूर्ण उपकरणों को एकत्रित करके पहले उक्त विधि से श्रीभगवान् की आराधना

सर्वोपकरणान्वितः॥ ६४ ॥ सद्योऽधिवास्य द्वादश्यां दीक्षयेद्देशिकोत्तमः । भक्तो विनीतः शारीरैर्गुणैः सर्वैः समन्वितः ॥ ६५ ॥ शिष्यो नातिधनी यस्तु स्थण्डिलेऽभ्यर्च्य दीक्षयेत् । अध्वानं निखिलं दैवं भौतं वाध्यात्मिकीकृतम् ॥ ६६ ॥ सृष्टिक्रमेण शिष्यस्य देहे ध्यात्वा तु देशिकः । अष्टाष्टाहुतिभिः पूर्वं क्रमात्सन्तर्प्य सृष्टिमान् ॥ ६७ ॥ स्वमन्त्रैर्वासुदेवादीञ् ज्वलनादीन् विसर्जयेत् । होमेन शोधयेत् पश्चात् संहारक्रमयोगतः॥६८॥ यानि सूत्राणि बद्धानि मुक्त्वा कर्माणि देशिकः । शिष्यदेहात्समाहृत्य क्रमात्तत्त्वानि शोधयेत् ॥ ६९ ॥ अग्नौ प्राकृतिके विष्णौ लयं नीत्वाधिदैविके। शुद्धं तत्त्वमशुद्धेन पूर्णाहुत्या तु सन्धयेत् ॥ ७० ॥ शिष्ये प्रकृतिमापन्ने दग्ध्वा प्राकृतिकान्गुणान् । मोचयेदधिकारे वा नियुज्ज्याद्देशिकः शिशून्॥७१॥ अथान्यां शक्तिदीक्षां वा कुर्याद् भावे स्थितो गुरुः । भक्त्या सम्प्रतिपन्नानां यतीनां निर्धनस्य च ॥ ७२ ॥ सम्पूज्य स्थण्डिले विष्णुं पार्श्वस्थं स्थाप्य पुत्रकम् । देवताभिमुखः शिष्यस्तिर्यगास्यः स्वयं स्थितः ॥ ७३॥ अध्वानं निखिलं ध्यात्वा पर्वभिः स्वैर्विकल्पितम्। शिष्यदेहे तथा देवमाधिदैविकयाजनम्॥७४॥ ध्यानयोगेन सञ्चिन्त्य पूर्ववत्ताडनादिना । क्रमात्तत्त्वानि सर्वाणि शोधयेत्स्थण्डिले हरौ ॥ ७५ ॥ ताडनेन वियोज्याथ गृहीत्वात्मनि तत्पुनः । देवे संयोज्य संशोध्य गृहीत्वा तत्स्वभावतः ॥ ७६ ॥ आनीय शुद्धतत्त्वेन सन्धयित्वा क्रमेण तु । शोधयेद्ध्यानयोगेन सर्वत्रोत्तानमुद्रया ॥ ७७॥ शुद्धेषु सर्वतत्त्वेषु प्रधाने चेश्वरे स्थिते । दग्ध्वा निर्वापयेच्छिष्यान् पदे चैशे नियोजयेत्॥ ७८॥ निनयेत् सिद्धिमार्गेण साधकं देशिकोत्तमः। एवमेवाधिकारस्थो गृही कर्माण्यतन्द्रितः ॥ ७९॥ आत्मानं शोधयंस्तिष्ठेद्यावद्रागक्षयो भवेत् । क्षीणरागमथात्मानं ज्ञात्वा

करके द्वादशी तिथि को सद्यः (शीघ्र ही) अधिवास कराकर शिष्य को दीक्षा प्रदान कर दें । जो शिष्य अत्यन्त धनवान् न हो किन्तु भक्त, विनीत तथा आत्मा के सभी गुणों से सम्पन्न हो तो आचार्य को चाहिए कि वे समस्त दैविक तथा भौतिक मार्ग को आध्यात्मिक बनाकर उनका सृष्टि के क्रम से शिष्य के शरीर में ही ध्यान करके स्थण्डिल पर ही भगवान् की अर्चना करके शिष्य को दीक्षा प्रदान करें । पुनः सृष्टि से युक्त आचार्य तत्-तत् वासुदेवादि मूर्तियों के मन्त्रों से आठ-आठ आहुतियों से वासुदेव आदि को प्रसन्न करके अग्नि आदि का विसर्जन करें। उसके पश्चात् होम के द्वारा संहार क्रम से शोधन करें ।।६४-६८।। जो सूत्र पहले बाँधे गए थे उन सबों को खोलकर शिष्य के देह से कर्मों को खींचकर आचार्य क्रमशः तत्वों का शोधन करें ।।६९।। पूर्णाहुति के द्वारा प्राकृतिक विष्णु अग्नि में लीन करके आधिदैविक अग्नि में अशुद्धतत्त्व से शुद्धतत्त्व को योजित करें ।। ७० ।। प्राकृतिक गुणों को भस्म करके शिष्य के प्रकृतिस्थ हो जाने पर आचार्य को चाहिए कि उस शिष्य को या तो छोड़ दें अथवा दूसरे शिशुओं को दीक्षित करने का अधिकार प्रदान कर दें ।। ७१ ।। शक्ति सम्पन्न आचार्य यदि चाहें तो वे अपने संयमी अथवा निर्धन शिष्यों को दूसरी शक्ति दीक्षा भी दे सकते हैं ।। ७२ ।। स्थण्डिल (वेदी) पर विष्णु भगवान् की पूजा करके अपने सन्निकट में शिष्य को बैठाये; अधिकार प्राप्त शिष्य तिरछा मुँह करके देवताभिमुख होकर स्वयं बैठे ।। ७३ ।। अपने पर्वों द्वारा विकल्पित समस्त मार्गों का शिष्यों के देह में ध्यान करके देवता, तथा उनका आधिदैविक क्रमशः समस्त तत्वों का वेदी पर श्रीभगवान् में शोधन करें ।।७४-७५ ।। श्वेत रज के द्वारा ताडन करके उन तत्त्वों का शिष्य से वियोजन करके, पुनः उनको अपने में धारण करके, देवता से उसका संयोग कराकर तथा संशोधन करके, पुनः उनको स्वाभावानुसार ग्रहण करके शुद्ध तत्त्व के साथ संयुक्त करके सर्वत्र ध्यानयोग के द्वारा उत्तानमुद्रा करते हुए शोधन करे ।। ७६-७७ ।। सभी तत्त्वों के शुद्ध हो जाने पर तथा प्रधान ईश्वर तत्त्व के होने पर, अशुद्ध तत्त्वों को जलाकर शिष्यों का निर्वापण करे तथा उनका परमात्मा के चरणों से संबन्ध कराये ।। ७८ ।। उत्तम आचार्य को चाहिए कि वे साधक को सिद्धि के मार्ग पर सर्वदा चलाते रहें । इस तरह से अधिकार प्राप्त गृहस्थ को सदा कर्मों को करने में निरालस रहना चाहिए ।। ७९ ।। उसको तब तक आत्मशोधन करते रहना चाहिए जब तक कि राग का विनाश न हो जाय । जब वह समझ ले कि मेरा राग विनष्ट हो गया है तो निष्पाप वह पुत्र अथवा शिष्य को अधिकार सौंपकर स्वयं संयमी (संन्यासी) हो जाय । माया के बन्धन को जलाकर वह संन्यस्त होकर अपनी आत्मा में स्थित होकर अपने शरीर के पात की आकांक्षा

संशुद्धकिल्विषः॥८०॥ आरोप्य पुत्रे शिष्ये वा ह्यधिकारं तु संयमी। दग्ध्वा मायामयं पाशं प्रव्रज्य स्वात्मनि स्थितः शरीरपातमाकाङ्क्षन्नासीताव्यक्तलिङ्गवान्॥८१॥

इत्यादिमहापुराण आग्नेये सर्वदीक्षाविधिकथनं नाम सप्तविंशोऽध्यायः ॥ २७ ॥

## अथाष्टाविंशोऽध्यायः

## आचार्याभिषेकविधानम्

नारद उवाच– **अभिषेकं प्रवक्ष्यामि यथाचार्यस्तु पुत्रकः । सिद्धिभाक्साधको येन रोगी रोगात्प्रमुच्यते ॥ १ ॥ राज्यं राजा सुतं स्त्री च प्राप्नुयान्मलनाशनम् । मृत्साकुम्भान्सुरत्नाढ्यान् मध्यपूर्वादितो न्यसेत् ॥ २ ॥ सहस्रावर्तितान् कुर्यादथवा शतवर्तितान् । मण्डपे मण्डले विष्णुं प्राच्यैशान्योश्च पीठके ॥ ३ ॥ निवेश्य सकलीकृत्य पुत्रं साधकादिकम् । अभिषेकं समभ्यर्च्य कुर्याद् गीतादिपूर्वकम् ॥ ४ ॥ दद्याच्च योगपीठादींस्त्वनुग्राह्यास्त्वया नराः । गुरुश्च समयान् ब्रूयाद् गुरुः शिष्योऽथ सर्वभाक् ॥ ५॥**

इत्यादिमहापुराणे आग्नेये आचार्याभिषेकविधिवर्णनं नाम अष्टाविंशोऽध्यायः ॥ २८ ॥

## अथैकोनत्रिंशोऽध्यायः

## मन्त्रसाधनविधिः सर्वतोभद्रादिमण्डललक्षणानि च

नारद उवाच– **साधकः साधयेन्मन्त्रं देवतायतनादिके । शुद्धभूमौ गृहे प्राच्र्य मण्डले हरिमीश्वरम् ॥ १ ॥ चतुरस्त्रीकृते क्षेत्रे मण्डलादीनि वै**

---

करने लगे, किन्तु वह उसे किसी मुद्रा द्वारा व्यक्त करे ॥ ७९-८१ ॥

**इस तरह आदिमहापुराण अग्निपुराण का सर्वदीक्षाविधि कथन नामक सत्ताइसवाँ अध्याय सम्पूर्ण हुआ ॥ २७ ॥**

**श्रीनारदजी ने कहा–** अब मैं अभिषेक की उस विधि का वर्णन कर रहा हूँ जिस तरह आचार्य के द्वारा अभिषिक्त होकर साधक शिष्य सिद्धि को प्राप्त कर लेता है और रोगी रोगमुक्त हो जाता है ॥ १ ॥ जिस मलनाशक अभिषेक के द्वारा राजा राज्य को तथा कोई स्त्री पुत्र को प्राप्त कर लेती है । रत्न से भरे मिट्टी के घड़ों को मण्डप के मध्य भाग से पूर्व दिशा में स्थापित करना चाहिए ॥ २ ॥ पुनः उन घड़ों को सौ बार अथवा हजार हुए सूत से अथवा कपड़े से लपेटे फिर मण्डप में पद्ममण्डल के ऊपर पूर्व अथवा ईशानकोण में पीठ पर स्थापित करके पुनः एकत्रित करके पुत्र आदि को प्रदान करने वाले अभिषेक को गीत आदि गाते हुए करना चाहिए ॥ ३ ॥ पुनः योगपीठ का दान कर दे । उस समय गुरु यह उपदेश दे कि तुम्हें लोगों पर कृपा करनी चाहिए । ऐसा करके गुरु तथा शिष्य दोनों सम्पूर्ण मनोरथों को प्राप्त कर लेते हैं ॥ ५ ॥

**इस तरह से आदिमहापुराण अग्निपुराण का आचार्याभिषेक विधि वर्णन नामक अठाइसवाँ अध्याय सम्पूर्ण हुआ ॥ २८ ॥**

**श्री नारदजी ने कहा–** साधक को चाहिए कि वह मन्त्र की सिद्धि देवता के मन्दिर में, अथवा घर में शुद्ध भूमि पर बैठकर मण्डल में भगवान् विष्णु की अर्चना करके करे ॥ १ ॥ चौकोर

लिखेत् । रसबाणाक्षिकोष्ठेषु सर्वतोभद्रमालिखेत् ॥ २ ॥ षट्त्रिंशत्कोष्ठकैः पद्मं पीठे पङ्क्त्या बहिर्भवेत् । द्वाभ्यां तु वीथिका तस्माद् द्वाभ्यां द्वाराणि दिक्षु च ॥ ३ ॥ वर्तुलं भ्रामयित्वा तु पद्मक्षेत्रं पुरोदितम् । पद्मार्धे भ्रामयित्वा तु भागं द्वादशमं ( कं ) बहिः ॥ ४ ॥ विभज्य भ्रामयेच्छेषं चतुष्क्षेत्रं तु वर्तुलम् । प्रथमं कर्णिकाक्षेत्रं केसराणां द्वितीयकम् ॥ ५ ॥ तृतीयं दलसन्धीनां दलाग्राणां चतुर्थकम् । प्रसार्य कोणसूत्राणि कोणदिङ्मध्यमं ततः॥६ ॥ निधाय केसराग्रे तु दलसन्धींस्तु लाञ्छयेत्। पातयित्वाथ सूत्राणि तत्र पत्राष्टकं लिखेत् ॥ ७ ॥ दलमध्यान्तरालं तु मानं मध्ये निधाय तु । दलाग्रं भ्रामयेत्तेन तदग्रं तदनन्तरम् ॥ ८ ॥ तदन्तरालं तत्पार्श्वे कृत्वा बाह्यक्रमेण च । केसरौ तु लिखेद् द्वौ द्वौ दलमध्ये ततः पुनः ॥ ९ ॥ पद्मलक्ष्मैतत्सामान्यं तद् द्विषड्दलमुच्यते । कर्णिकार्धेन मानेन प्राक्संस्थं भ्रामयेत्क्रमात् ॥ १० ॥ तत्पार्श्वे भ्रमयोगेन कुण्डल्यः षड् भवन्ति हि । एवं द्वादश मत्स्याः स्युर्द्विषट्कदलकं च तैः ॥ ११ ॥ पञ्चपत्रादिसिद्ध्यर्थं मत्स्यैः कृत्वैवमब्जकम् । व्योमरेखाबहिःपीठं तत्र कोष्ठानि मार्जयेत्॥१२॥ त्रीणि कोणेषु पादार्थं द्विद्विकान्यपराणि तु । चतुर्दिक्षु विलिप्तानि पत्रकाणि भवन्त्युत ॥ १३ ॥ ततः पङ्क्तिद्वयं दिक्षु वीथ्यर्थं तु विलोपयेत् । द्वाराण्याशासु कुर्वीत चत्वारि चतसृष्वपि ॥ १४ ॥ द्वाराणां पार्श्वतः शोभा अष्टौ कुर्याद् विचक्षणः । तत्पार्श्व उपशोभास्तु तावत्यः परिकीर्तिताः । चतुर्दिक्षु ततो द्वे द्वे चिन्तयेन्मध्यकोष्ठकैः ॥ १६॥ चत्वारि बाह्यतो मृज्यादेकैकं पार्श्वयोरपि । शोभार्थं पार्श्वयोस्त्रीणि त्रीणि लुम्पेद् दलस्य तु॥ १७॥ तद्वद्विपर्यये कुर्यादुपशोभां ततः परम् । कोणस्यान्तर्बहिस्त्रीणि चिन्तयेन्निर्विभेदतः ॥ १८ ॥ एवं षोडशकोष्ठं स्यादेवमन्यत्तु मण्डलम् । द्विषट्कभागे षड्विंशत्पदं पद्मं तु वीथिका ॥ १९ ॥ एका पङ्क्तिः पराभ्यां तु द्वारशोभादि पूर्ववत् । द्वादशाङ्गुलिभिः पद्ममेकहस्ते तु मण्डले ॥ २० ॥ द्विहस्ते

---

बनाए हुए क्षेत्र में वह मण्डल आदि का निर्माण करे कोष्ठों में सर्वतोभद्र मण्डल बनाए ।। २ ।। पीठ के ऊपर छत्तीस कोष्ठों में पद्म (कमल) का निर्माण बाहर करे ।। दो कोष्ठों के द्वारा वीथी तथा दो-दो कोष्ठों के द्वारा चारों दिशाओं में द्वारों का निर्माण करे ।। ३ ।। पूर्वाक्त पद्मक्षेत्र में सूत्र को गोला घुमाकर पद्म के आधे भाग में सूत्र को घुमाकर उसके बाहर वाले भाग को बारह भागों में विभक्त कर दे । अवशिष्ट भीतर के आधे भाग में चार गोला क्षेत्र बनाए उसमें सबसे भीतर का जो गोला क्षेत्र होगा वह कर्णिका क्षेत्र है, दूसरा केसरों का क्षेत्र है, तीसरा कमल दलों की सन्धि का क्षेत्र है और दलों के अग्रभाग का क्षेत्र चौथा क्षेत्र होगा । कोण के सूत्रों को फैलाकर कोणों तथा दिशाओं को बना दे । उसके पश्चात् केसर के अग्रभाग में कमल दल की सन्धियों को बनाए । फिर सूत्रों को गिराकर कमल के आठ पत्रों को बनाए ।। ४-७ ।। दलों के मध्य को अन्तराल का मान बीच में बनाकर, दलों के अग्रभाग को घुमाकर दल के अग्रभाग को बनाए । उसके पश्चात् उस दल के अन्तराल को उसके बगल में बाह्यक्रम से बनाना चाहिए । उसके पश्चात् दल के बीच में दो-दो केसरों को बनाना चाहिए ।। ८-९ ।। यह पद्ममण्डल का सामान्य लक्षण है । वह कमल बारह दलों (द्विषड्दल) वाला होता है । कर्णिका के आधे भाग के बराबर पूर्वस्थित भाग में सूत्र को क्रमशः घुमाए ।। १० ।। उसके बगल में छह गोली-गोली कुण्डलियों को बना देना चाहिए । इस तरह बारह दलों से बारह मत्स्यों का स्वरूप बन जाता है ।। ११ ।। पाञ्चपत्र आदि की सिद्धि के लिए मत्स्यों के द्वारा कमल का निर्माण करके, व्योम रेखा से बाहर जो पीठ है वहाँ पर कोष्ठों का मार्जन करना चाहिए ।। १२ ।। तीन कोनों में चरण के लिए दो-दो रेखाओं को खींच देना चाहिए । कमल के चारों ओर पत्ते बने रहते हैं ।। १३ ।। पुनः वीथी के लिए चारों दिशाओं में दो पंक्तियों को मिटा दे और चारों दिशाओं में चार द्वारों का निर्माण करे ।। १४ ।। विद्वान् को चाहिए कि वह द्वारों के बगल में आठ शोभामयी आकृतियों को बनाए और उन सबों के बगल मे उतनी ही उपशोभाओं को बनाए ।। १५ ।। उपशोभाओं के सन्निकट में कोण बतलाए गए हैं । उसके पश्चात् चारो दिशाओं में मध्य कोष्ठकों के द्वारा दो-दो आकृतियों का चिन्तन करना चाहिए ।। १६ ।। पीठ के बाहर शोभा के लिए चार बगल में एक-एक आकृति बनाए । शोभा को बढ़ाने के लिए दल के बगल में तीन-तीन आकृतियाँ बनाए ।। १७ ।। उसी तरह उसके विपरीत दिशा में भी उपशोभाओं को बनाना

हस्तमात्रं स्याद् वृद्धया द्वारेण चाचरेत् । अपीठं चतुरस्त्रं स्याद् द्विकरं चक्रपङ्कजम् ॥ २१ ॥ पद्मार्धं नवभिः प्रोक्तं नाभिस्तु तिसृभिः स्मृता । अष्टाभिस्त्वारकान् कुर्यान्नेमिं तु चतुरङ्गुलैः ॥ २२ ॥ त्रिधा विभज्य च क्षेत्रमन्तर्द्वाभ्यामथाङ्कयेत् । पञ्चान्तस्त्वारसिद्ध्यर्थं तेष्वास्फाल्य लिखेदरान् ॥ २३ ॥ इन्दीवरदलाकारानथ वा मातुलुङ्गवत् । पद्मपत्रायतान्वापि लिखेदिच्छानुरूपतः ॥ २४ ॥ भ्रामयित्वा बहिर्नेमावरसन्ध्यन्तरे स्थितः । भ्रामयेदरमूलं तु सन्धिमध्ये व्यवस्थितः ॥ २५ ॥ अरमध्ये स्थितो मध्यमराणां भ्रामयेत्समम् । एवं सिध्यन्त्यराः सम्यङ्मातुलुङ्गनिभाः समाः ॥ २६ ॥ विभज्य सप्तधा क्षेत्रं चतुर्दशकरं समम् । त्रिधा कृते शतं ह्यत्र षण्णवत्यधिकानि तु ॥ २७ ॥ कोष्ठकानि चतुर्भिस्तैर्मध्ये भद्रं समालिखेत् । परितो विसृजेद् वीथ्यै तथा दिक्षु समालिखेत् ॥ २८ ॥ कमलानि पुनर्वीथ्यैपरितः परिमृज्य तु । द्वे द्वे मध्यकोष्ठे तु ग्रीवार्थं दिक्षु लोपयेत् ॥ २९ ॥ चत्वारि बाह्यतः पश्चात्त्रीणि त्रीणि तु लोपयेत् । ग्रीवापार्श्वे बहिस्त्वेकः शोभा सा परिकीर्तिता ॥ ३० ॥ विसृज्य बाह्यकोणेषु सप्तान्तस्त्रीणि मार्जयेत् । मण्डलं नवनालं स्यान्नवव्यूहं हरिं यजेत् ॥ ३१ ॥ पञ्चविंशतिकव्यूहं मण्डलं विश्वरूपगम्। द्वात्रिंशद्हस्तकं क्षेत्रं भक्तं द्वात्रिंशता समम् ॥ ३२ ॥ एवं कृते चतुर्विंशत्यधिकं तु सहस्त्रकम् । कोष्ठकानां समुद्दिष्टं मध्ये षोडशकोष्ठकैः ॥ ३३॥ भद्रकं परिलिख्याथ पार्श्वे

---

चाहिए। कोण के भीतर तथा बाहर विना किसी अन्तराल के तीन कोष्ठों को बनाए ।। १८ ।। इसी तरह सोलह कोष्ठों वाला एक दूसरा मण्डल बनाना चाहिए । उसके बाहरी भाग में छब्बीस पदों वाला पद्म होता है तथा बाद के दो कोष्ठों से एक-एक वीथी की पंक्ति होती है । द्वार शोभा आदि पहले मण्डल के ही समान बनाना चाहिए । एक हाथ के मण्डल में बारह अंगुल का एक पद्म बनाना चाहिए ।। १९-२० ।। दो हाथ के मण्डल में भी एक हाथ का ही कमल होना चाहिए वृद्धि हाथ के द्वारा करनी चाहिए । चक्राब्ज मण्डल को चौकोर दो हाथ का तथा विना पीठ का होना चाहिए।।२१।। पद्म का आधा भाग नव अंगुल का होना चाहिए, उसकी नाभि तीन अंगुल की, आठ अंगुल का आर बनाए तथा चक्र चार अंगुल का बनाना चाहिए ।। २२ ।। पूरे क्षेत्र को तीन भागों में विभक्त करके उसके अन्दर वाले भाग को दो भागों में चिह्नत करे । भीतर पाँच अरों के निर्माण सूत्र को पटककर करना चाहिए ।। २३ ।। उन अरों को नीलकमल दल के समान, अथवा मातुलुङ्ग (जम्बीरी नीबू) अथवा पद्मपत्र के समान विस्तृत अपनी इच्छा के अनुसार बनाना चाहिए ।। २४ ।। अरों की सन्धि में रखकर सूत्र बाहर नेमि तक ले जाना चाहिए और उसे घुमाना चाहिए । सन्धि के मध्य में ही रखकर अर के मूल भाग में सूत्र को घुमाए ।। २५ ।। अरों के बीच मे सूत रखकर अरों के समान ही सूत्र को घुमाना चाहिए । इस तरह से मतुलुङ्ग (नीबू) के समान आकार वाले अर बन जाते हैं ।। २६।। चौदह हाथ के चौकोर क्षेत्र को सात भागों में विभक्त करके तीन-तीन भागों में विभक्त करने पर यहाँ पर एक सौ छियानबे कोष्ठक बनेंगे । उन सबों के बीच में चार कोष्ठों में 'भद्र' शब्द लिख देना चाहिए । पुनः सभी दिशाओं में कमलों को बनाना चाहिए । फिर वीथी बनाने के लिए चारों तरफ कोष्ठों को परिमार्जित करके सभी दिशाओं में ग्रीवा के लिए बीच में दो-दो कोष्ठों को मिला देना चाहिए ।। २७-२९ ।। यहाँ कोष्ठों की संख्या १९६ जो बतलायी गयी है, वह ठीक नहीं बनती है । १४×७×३ = २९४ कोष्ठक बनते हैं। हिन्दी साहित्य सम्मेलन वाले संस्करण में २९६ कोष्ठ लिखा है वह भी ठीक नहीं प्रतीत होता है । ) बाहर के चार तथा पीछे के तीन-तीन कोष्ठों को मिला देना चाहिए । ग्रीवा के पास बाहर एक कोष्ठक होना चाहिए । उसे ही शोभा कहते हैं ।। ३० ।। बाहर के कोष्ठों में सात कोष्ठों को छोड़कर तीन कोष्ठों का मार्जन करना चाहिए । इस तरह मण्डल नव नालों वाला बन जायेगा । उस मण्डल में श्रीभगवान् के नव व्यूहों का पूजन करना चाहिए ।। ३१ ।। पच्चीस व्यूहों वाला मण्डल विश्वरूप स्वरूप होता है । बत्तीस हाथ के क्षेत्र को समान आकार वाले बत्तीस भागों में विभक्त करना चाहिए ।। ३२।। ऐसा करने से १०२४ (एक हजार चौबीस) कोष्ठ बनेंगे । उनके मध्य के सोलह कोष्ठों में वेदी का निर्माण करके बगल की एक पंक्ति छोड़कर पुनः सोलह-सोलह कोष्ठों वाली आठ वेदियों का निर्माण करना

पङ्क्तिं विसृज्य तु । ततः षोडशभिः कोष्ठैर्दिक्षु भद्राष्टकं लिखेत् ॥ ३४ ॥ ततोऽपि पक्तिं सम्मृज्य तद्वत् षोडशभद्रकम् । लिखित्वा परितः पंक्तिं विमृज्याथ प्रकल्पयेत् ॥ ३५ ॥ द्वारद्वादशकं दिक्षु त्रीणि-त्रीणि यथाक्रमम् । षड्बहिः परिलुप्यान्तर्मध्ये चत्वारि पार्श्वयोः ॥ ३६ ॥ चत्वार्यन्तर्बहिर्द्वे तु शोभार्थं परिमृज्य तु । उपद्वारप्रसिद्ध्यर्थं त्रीण्यन्तः पञ्च बाह्यतः ॥ ३७ ॥ परिमृज्य तथा शोभां पूर्ववत्परिकल्पयेत् । बहिः कोणेषु सप्तान्तस्त्रीणि कोष्ठानि मार्जयेत् ॥ ३८ ॥ पञ्चविंशतिकव्यूहे परं ब्रह्म यजेत् कजे । मध्ये पूर्वादितः पद्मे वासुदेवादयः क्रमात् ॥ ३९ ॥ वाराहं पूजयित्वा तु पूर्वपद्मे ततः क्रमात् । व्यूहान् सम्पूजयेत्तावद्यावत् षड्विंशगो भवेत् ॥ ४० ॥ यथोक्तं व्यूहमखिलमेकस्मिन् मण्डले क्रमात् । यष्टव्यमिति मन्त्रेण प्रचेता मन्यतेऽध्वरम् ॥ ४१ ॥ सत्यस्तु मूर्तिभेदेन विभक्तं मन्यतेऽच्युतम् । चत्वारिंशत्करं क्षेत्रं ह्युत्तरं विभजेत्क्रमात् ॥ ४२ ॥ एकैकं सप्तधा भूयस्तथैकैकं द्विधा पुनः । चतुःषष्ट्युत्तरं सप्त शतान्येकं सहस्रकम् ॥ ४३ ॥ कोष्ठकानां भद्रकश्च मध्ये षोडशकोष्ठकैः । पार्श्वे वीथी ततश्चाष्टभद्राण्यथ च वीथिका ॥ ४४ ॥ षोडशाब्जान्यथो वीथी चतुर्विंशतिपङ्कजम् । वीथीपद्मानि द्वात्रिंशत् पङ्क्तिवीथीकजान्यथ ॥ ४५ ॥ चत्वारिंशत् ततो वीथी शेषपङ्क्तित्रयेण तु । द्वारशोभोपशोभाः स्युर्दिक्षु मध्ये विलोप्य च ॥ ४६ ॥ द्विचतुष्षड्द्वारसिद्ध्यै चतुर्दिक्षु विलोपयेत् । पञ्चत्रीण्येककं बाह्ये शोभोपद्वारसिद्धये ॥ ४७ ॥ द्वाराणां पार्श्वयोरन्तः षट्चत्वारि च मध्यतः । द्वे द्वे लुम्पेदेवमेव षड् भवन्त्युपशोभिकाः ॥ ४८ ॥ एकस्यां दिशि सङ्ख्या

---

चाहिए।।३३-३४।। उसके पश्चात् भी एक पंक्ति को सम्मार्जित करके सोलह वेदियों को बनाकर उसके चारों तरफ एक पंक्ति को मिटाकर बारह द्वारों को बनाए । प्रत्येक दिशा में तीन तीन दरवाजे होने चाहिए । फिर बाहर के छह कोष्ठों को मिलाकर भीतर तथा बीच में चार, बगल के चार तथा भीतर तथा बाहर के दो-दो कोष्ठों की परिमार्जित करके उपहार बनाने के लिए भीतर के तीन तथा बाहर के पाञ्च कोष्ठकों को मिलाकर पहले के ही समान शोभाओं की रचना करनी चाहिए । बाहर के कोनों में सात अन्दर के तीन कोष्ठों को परिमार्जित कर देना चाहिए ।। ३५-३८ ।। पच्चीस व्यूहों में ब्रह्म की कमल पर पूजा करनी चाहिए । पूर्व से लेकर मध्य में कमल पर क्रमशः वासुदेव आदि का पूजन करना चाहिए ।। ३९ ।। पूर्वकमल पर बराह का पूजन करके उसके पश्चात् यह पूजन का क्रम तब तक चलाना चाहिए जब तक छब्बीसवें व्यूह श्रीभगवान् की पूजा न हो जाय ।। ४० ।। जैसे एक व्यूह में सभी व्यूह क्रमशः बतलाए गये हैं उसी तरह से सभी व्यूहों का क्रमशः पूजन उनके मन्त्र से करना चाहिए । इस तरह से इस यज्ञ को प्रचेता (वरुण) मानते हैं ।। ४१ ।। सत्य (ब्रह्मा) तो यह मानते हैं कि छब्बीस व्यूह के रूप में भगवान् अच्युत ही विभक्त हो गए हैं। यदि चालीस हाथ का चक्र, मण्डप हो तो प्रत्येक हाथ को सात-सात भाग में विभक्त करके पुनः उसे दो-दो भागों में विभक्त करना चाहिए । इस तरह कोष्ठकों की संख्या १७३४ होगी । बीच के सोलह कोष्ठों में वेदी बनानी चाहिए । उसके बगल में बीथी होनी चाहिए । इसके बाद आठ वेदियों का निर्माण करना चाहिए । फिर उनके बगल में वीथी होनी चाहिए ।। ४२-४४ ।। पुनः सोलह कमलों को बनाने के बाद वीथी बनानी चाहिए फिर चौबिस कमल बनाना चाहिए । इस तरह से वीथी कमलों की संख्या बत्तीस हो जाती है । उसके पश्चात् चालिस पंक्ति में वीथी के कमलों को बनाना चाहिए । उसके पश्चात् वीथी को बनाना चाहिए । बची तीन पंक्तियों के द्वारा द्वार की शोभा तथा उपशोभा को बीच में तथा मध्य में कोष्ठों को मिटाकर करना चाहिए ।। ४६ ।। चार दिशाओं में द्वार बनाने के लिए दो चार अथवा छह कोष्ठों को मिटा देना चाहिए । शोभा तथा उपशोभा बनाने के लिए बाहर की पाँच, तीन तथा एक कोष्ठ को मिटाना चाहिए ।। ४७ ।। द्वारों के बगल में छह-छह, भीतर चार-चार तथा मध्य में दो-दो कोष्ठों को मिटाए इस तरह से छह उपशोभाएँ बनती हैं ।। ४८ ।। इन उपशोभाओं की एक-एक दिशा में चार-चार संख्या होनी चाहिए । अतएव

स्युश्चतस्त्रः परिसङ्ख्यया । एकैकस्यां दिशि त्रीणि द्वाराण्यपि भवन्त्यतः ॥ ४९ ॥ पञ्च पञ्च तु कोणेषु पङ्क्तौ पङ्क्तौ क्रमात् सृजेत् । कोष्ठकानि भवेदेवं सतीष्टं मण्डलं शुभम्॥ ५० ॥

इत्यादिमहापुराण आग्नेये सर्वतोभद्रादिमण्डलवर्णनं नामैकोनत्रिंशोऽध्यायः ।। २९ ।।

## अथ त्रिंशोऽध्यायः

## सर्वतोभद्रमण्डलादिविधिकथनम्

नारद उवाच– **मध्ये पद्मे यजेद् ब्रह्मा साङ्गं पूर्वेऽब्जनाभकम् । आग्नेयेऽब्जे च प्रकृतिं याम्येऽब्जे पुरुषं यजेत् ॥ १ ॥ पुरुषाद् दक्षिणे वह्निं नैर्ऋते वारुणेऽनिलम्। आदित्यमैन्दवे पद्मे ऋग्यजुश्चैश पद्मके ॥ २ ॥ इन्द्रादींश्च द्वितीयायां पद्मे षोडके तथा । सामाथर्वाणमाकाशं वायुं तेजस्तथा जलम् ॥ ३ ॥ पृथिवीं च मनश्चैव श्रोत्रं त्वक्चक्षुरर्चयेत् । रसनां च तथा घ्राणं भूर्भुवश्चैव षोडशम् ॥ ४ ॥ महर्जनस्तपः सत्यं तथाग्निष्टोममेव च। अत्यग्निष्टोमकं चोक्थं षोडशीं वाजपेयकम् ॥ ५ ॥ मनो बुद्धिमहङ्कारं शब्दं स्पर्शं च रूपकम् ॥ ६ ॥ रसं गन्धं च पद्मेषु चतुर्विंशतिषु क्रमात् । जीवं मनो धियं चाहं प्रकृतिं शब्दमात्रकम् ॥ ७ ॥ वासुदेवादिमूर्तींश्च तथा चैव दशात्मकम् । मनः श्रोत्रं त्वचं प्राच्र्य चक्षुश्च रसनं तथा ॥ ८ ॥ घ्राणं वाक्पाणिपादं च द्वात्रिंशद्वारिजेष्विमान् । चतुर्थावरणे पूज्याः साङ्गाः सपरिवारकाः॥९॥ पायूपस्थौ च सम्पूज्य मासानां द्वादशाधिपान्। पुरुषोत्तमादिषड्विंशान् बाह्यावरणके यजेत् ॥१०॥ चक्राब्जे तेषु सम्पूज्या मासानां पतयः क्रमात् । अष्टौ प्रकृतयः षड् वा पञ्च वा चतुरोऽपरे॥११॥**

---

एक-एक दिशा में तीन-तीन द्वार भी होते हैं ।। ४९ ।। प्रत्येक पंक्ति के कोणों में पाञ्च-पाञ्च कोष्ठ होते हैं । इस तरह से अभीष्ट मण्डप शुभप्रद होता है ।। ५० ।।

**इस तरह से आदि महापुराण अग्निपुराण का सर्वतोभद्रादि मण्डल विधि वर्णन नामक उनतीसवाँ अध्याय सम्पूर्ण हुआ ॥ २९ ॥**

**श्रीनारदजी ने कहा–** सर्वतोभद्र मण्डल में मध्य के कमल पर ब्रह्मा जी का साङ्गपूजन करना चाहिए । अग्निकोण के पद्म पर प्रकृति का तथा दक्षिण के कमल पर पुरुष का पूजन करना चाहिए ।। १ ।। पुरुष से दक्षिण तरफ अग्नि का नैर्ऋत्य कोण तथा पश्चिम में वायु का पूजन करना चाहिए । पूर्वकमल पर आदित्य का ईशान कमल पर ऋग्वेद तथा यजुर्वेद का, द्वितीय पंक्ति के षोडशदल कमल पर इन्द्र आदि का पूजन करना चाहिए । कमल के सोलह दलों पर निम्नांकित सोलह देवताओं का पूजन करना चाहिए– सामवेद, अथर्ववेद, आकाश, वायु, तेज, जल, पृथिवी, मन, श्रोत्र,त्वक्, चक्षु, रसना, घ्राण, भूर्लोक तथा स्वर्लोक ।। २-४ ।। चौबीस कमलों पर क्रमशः महर्लोक, जनलोक, तपोलोक, सत्यलोक, अग्निष्टोम, अत्यग्निष्टोम, उक्थ, षोडशी, वाजपेय, अतिरात्र, आप्तोर्याम, मन, बुद्धि, अहंकार, शब्द, स्पर्श, रूप, रस तथा गन्ध का पूजन क्रमशः करना चाहिए । पुनः बत्तीस कमलों पर क्रमशः जीव, मन, बुद्धि, अहंकार, प्रकृति, शब्द तन्मात्रा, वायुदेव आदि की मूर्नियों, मन, श्रोत्र, त्वचा, चक्षु, रसना, घ्राण, वाक्, पाणि तथा पाद का पूजन करना चाहिए । चतुर्थ आवरण में इन सबों का साङ्ग तथा सपरिवार पूजन करना चाहिए ।।५-९।। पायु तथा उपस्थ की पूजा करके बारह महीनों के जो बारह 'केशव, नारायण, माधव, गोविन्द, विष्णु, मधुसूदन, त्रिविक्रम, वामन, श्रीधर, हृषीकेश, पद्मनाभ तथा दामोदर स्वामी हैं, उनकी और पुरुषोत्तम आदि छब्बीस व्यूहों की पूजा करनी चाहिए।।१०।। चक्राब्जमण्डल में उन कोष्ठों में मासों के स्वामियों तथा आठ प्रकृति तथा चार, पाञ्च अथवा छह विकृतियों की पूजा करनी चाहिए ।।११।।

रजःपातं ततः कुर्याल्लिखिते मण्डले शृणु । कर्णिका पीतवर्णा स्याद्रेखाः सर्वाः सिताः समाः ॥ १२ ॥ द्विहस्तेऽङ्गुष्ठमात्राः स्युर्हस्ते चार्धसमाः सिताः। पद्मं शुक्लेन सन्धींस्तु कृष्णेन श्यामतोऽथ वा ॥ १३ ॥ केसराः रक्तपीताः स्युः कोणान् रक्तेन पूरयेत् । भूषयेद्योगपीठं तु यथेष्टं सार्ववर्णिकैः॥१४॥ लतावितानपत्राद्यैर्वीथिकामुपशोभयेत् । पीठद्वारे तु शुक्लेन शोभा रक्तेन पूरिताः ॥ १५ ॥ उपशोभाश्च नीलेन कोणशङ्खांश्च वै सितान् । भद्रके पूरणं प्रोक्तमेवमन्येषु पूरणम् ॥ १६ ॥ त्रिकोणं सितरक्तेन कृष्णेन च विभूषयेत् । द्विकोणं रक्तपीताभ्यां नाभिं कृष्णेन चक्रवे॥१७॥ अरकान्पीतरक्ताभिः श्यामान्नेमिस्तु रक्ततः । सितश्यामारुणाः कृष्णाः पीता रेखास्तु बाह्यतः॥ १८ ॥ शालिपिष्टादि शुक्लं स्याद्रक्तं कौसुम्भकादिकम् । हरिद्रया च हारिद्रं कृष्णं स्याद्दग्धधान्यतः ॥ १९ ॥ शमीपत्रादिकैः श्यामं बीजानां लक्षजाप्यतः । चतुर्लक्षैस्तु मन्त्राणां विद्यानां लक्षसाधनम् ॥ २० ॥ अयुतं वृद्धविद्यानां स्तोत्राणां च सहस्त्रकम् । पूर्वमेवाथ लक्षेण मन्त्रशुद्धिस्तथात्मनः ॥ २१ ॥ तथापरेण लक्षेण मन्त्रः क्षेत्रीकृतो भवेत्। पूर्वमेवासमो होमो बीजानां सम्प्रकीर्तितः ॥ २२ ॥ पूर्वमेवदशांशेन मन्त्रादीनां प्रकीर्तिता । पुरश्चर्या तु मन्त्रेण मासिकं व्रतमाचरेत्॥२३ ॥ भुवि न्यसेद्वामपादं न गृह्णीयात्प्रतिग्रहम् । एवं द्वित्रिगुणेनैव मध्यमोत्तमसिद्धयः ॥ २४ ॥ मन्त्रध्यानं प्रवक्ष्यामि येन स्यान्मन्त्रजं फलम् । स्थूलं शब्दमयं रूपं विग्रहं बाह्यमिष्यते ॥ २५ ॥ सूक्ष्मं ज्योतिर्मयं रूपं हार्दं चिन्तामयं भवेत् । चिन्तया रहितं यत्तु तत्परं परिकीर्तितम्॥२६॥ वराहसिंहशक्तीनां स्थूलं रूपं प्रधानतः। चिन्तया रहितं रूपं वासुदेवस्य कीर्तितम्॥२७॥ इतरेषां स्मृतं रूपं हार्दं चिन्तामयं सदा। स्थूलं वैराजमाख्यातं

इसके बाद मैं यह बतला रहा हूँ कि किस प्रकार से उन कोष्ठों में रंगीन चूर्ण डालना चाहिए, उसे सुनो । कर्णिका को पीली तथा सभी रेखाओं को उजली बनाना चाहिए ।। १२ ।। दो हाथ के मण्डल में सभी रेखाएँ अंगूठे के समान, तथा एक हाथ के मण्डल में सभी रेखाएँ अर्ध अंगूष्ठ के समान होनी चाहिए । सभी रेखाएँ समान उजली हों । कमल को श्वेत चूर्ण से तथा उनकी सन्धियों को काले अथवा श्यामवर्ण के चूर्ण से बनाना चाहिए ।। १३ ।। केसर को लाल तथा पीतवर्ण से बनाना चाहिए तथा कोणें को रक्त चूर्ण से भरना चाहिए । येगपीठ को अपनी इच्छा के अनुकूल सभी वर्ण के चूर्णों से भरना चाहिए ।। १४ ।। लताओं, वितानों तथा पत्रों से वीथियें को रंगना चाहिए । पीठ के द्वार पर शोभा को श्वेत तथा रक्त वर्ण के चूर्ण को भरना चाहिए ।। १५ ।। उपशोभा को नील चूर्ण से तथा कोणों के शङ्खों को उजला बनावे । इस तरह से वेदी को रंगना बतलाया गया है । इसी प्रकार से अन्य वेदी में भी रंग भरना चाहिए ।। १६ ।। त्रिकोण को उजले तथा लाल वर्ण से तथा काले वर्ण से सुशोभित करे चक्राब्ज मण्डल में द्विकोण को लाल तथा पीले रङ्ग से, तथा उसकी नाभि को कृष्ण वर्ण से रंगना चाहिए ।। १७ ।। चक्र के अरों को पीत, लाल तथा श्यामवर्ण से एवं नेमि को रक्त वर्ण से रंगना चाहिए ।मण्डल की बाहरी रेखाओं को उजली, श्यामवर्ण की, काली तथा पीली होनी चाहिए ।। १८ ।। चावल के चूर्ण का उजले के लिए, कुसम आदि के रस को रक्त वर्ण के लिए, पीले वर्ण के लिए हल्दी का चूर्ण तथा काले रंग के लिए जले हुए धान्य के चूर्ण का प्रयोग करना चाहिए ।। १९ ।। श्यामवर्ण के लिए शमी पत्र के चूर्ण का प्रयोग करना चाहिए। बीजमन्त्रों का एक लाख बार, मन्त्रों का चार लाख तथा विद्याओं का एक लाख जप करने से सिद्धि होती है ।। २० ।। वृद्धविद्याओं की दस हजार, तथा स्तोत्रों की एक हजार जप करने से सिद्धि होती है । इससे पहले एक लाख मन्त्र का जप करने से आत्मा की शुद्धि होती है । पुनः दूसरी बार एक लाख जप करने से मन्त्र की सिद्धि होती है । जिस मन्त्र का पहली बार जितना जप किया जाता है, उसका उतना ही होम करना चाहिए ।। १२ ।। अन्य मन्त्रों के जप का दशांश होम बतलाया गया है ।। २३ ।। ब्रती पुरुष पृथिवी पर पहले बायाँ पैर न रखे, दूसरे का दिया हुआ दान न ले। इस तरह से व्रत तथा पुरश्चरण दो एवं तीन बार करने से क्रमशः मध्यम तथा उत्तम कोटि की सिद्धियाँ प्राप्त होती हैं ।। २४ ।। अब मैं मन्त्र का ध्यान बतलाता हूँ जिससे मन्त्रों का पूर्णफल प्राप्त होता है । मन्त्र का बाह्य विग्रह स्थूल तथा शब्दमय होता है ।। २५ ।। मन्त्र का सूक्ष्म रूप ज्योतिःस्वरूप तथा हृदय में चिन्तामय होता है । मन्त्र का सर्वोत्कृष्ट रूप अचिन्त्य होता है ।। २६ ।।वराह, नृसिंह तथा शक्तियों के मन्त्रों का स्थूल रूप प्रधान होता है । वासुदेव मन्त्र का रूप अचिन्त्य बतलाया गया है ।। २७ ।। इनसे भिन्न देवताओं तथा के मन्त्रों का रूप हृदय में चिन्तनीय बतलाया

सूक्ष्मै लिङ्गितं भवेत् ॥ २८ ॥ चिन्तया रहितं रूपमैश्वरं परिकीर्तितम् । हृत्पुण्डरीकनिलयं चैतन्यं ज्योतिरव्ययम् ॥ २९ ॥ बीजं जीवात्मकं ध्यायेत् कदम्बकुसुमाकृतिम् । कुम्भान्तरगतो दीपो निरुद्धप्रसवो यथा ॥ ३० ॥ संहतः केवलस्तिष्ठेदेवं मन्त्रेश्वरो हृदि । अनेकसुषिरे कुम्भे तावन्मात्रा गभस्तयः ॥ ३१ ॥ प्रसरन्ति बहिस्तद्वन्नाडीभिर्बीजरश्मयः । अन्त्रावभासका दैवीमात्मीकृत्य तनुं स्थितः ॥ ३२ ॥ हृदयात्प्रस्थिता नाड्यो दर्शनेन्द्रियगोचराः । द्वेऽग्नीषोमात्मिके तासां नाड्यौ नासाग्रसंस्थिते ॥ ३३ ॥ सम्यगुद्घातयोगेन जित्वा देहसमीरणम् । जपध्यानरतो मन्त्री मन्त्रजं फलमश्नुते ॥ ३४ ॥ संशुद्धभूततन्मात्रः सकामो योगमभ्यसन् । अणिमादिकमवाप्नोति विरक्तः प्रविलङ्घ्य च ॥ ३५ ॥ चिदात्मको भूतमात्रान् मुच्यते चेन्द्रियग्रहात् ॥ ३६ ॥

इत्यादिमहापुराण आग्नेये सर्वतोभद्रमण्डलादिविधिकथनं नाम त्रिंशोऽध्यायः ॥ ३० ॥

## अथैकत्रिंशोऽध्यायः

## अपामार्जनविधानम्

अग्निरुवाच– **रक्षां स्वस्य परेषां च वक्ष्येऽपामार्जनाह्वयाम् । यया विमुच्यते दुःखैः सुखं च प्राप्नुयान्नरः ॥ १ ॥ ॐ नमः परमार्थाय पुरुषाय महात्मने । अरूपबहुरूपाय व्यापिने परमात्मने ॥ २ ॥ निष्कल्मषाय शुद्धाय ध्यानयोगरताय च । नमस्कृत्य प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः ॥३॥**

गया है। वैराज तथा सूक्ष्म रूप को लिङ्गित कहा जाता है ।। २८ ।। ईश्वर का रूप अचिन्त्य बतलाया गया है, वह हृदयकमल में रहने वाला, ज्ञानस्वरूप, ज्योतिःस्वरूप तथा अव्यय है ।। २९ ।। बीज का जीवात्मक रूप से तथा कदम्ब के पुष्प के समान आकार वाला ध्यान करना चाहिए । जिस तरह से घड़े के भीतर रखा हुआ दीप निर्वात होने के कारण सदा एक समान संहत ज्योति वाला होता है, उसी प्रकार ज्योतिस्वरूप मन्त्रेश्वर का हृदय में निवास है । जिस तरह अनेक छिद्रों वाले घड़े में रखे गए दीपक की उतनी ही ज्योतियाँ बाहर निकलती हैं जितने उसके छिद्र होते हैं, उसी तरह से नाड़ी के माध्यम से बीज की रश्मियाँ निकलती हैं । अंतड़ियों को प्रकाशित करने वाली तथा दिव्य शरीर को अपनी आत्मा बनाकर शरीर के भीतर हृदय में स्थित रहने वाला यह बीजमन्त्र होता है ।। ३२ ।। हृदयप्रदेश से फैलने वाली तथा चक्षुरिन्द्रिय से दिखायी देने वाली ये नाड़ियाँ होती हैं । उनमें से सूर्यात्मक तथा चन्द्रात्मक दो नाड़ियाँ नासिका के अग्रभाग में स्थित हैं ।। ३३ ।। उद्घात योग के द्वारा अच्छी तरह से अपने शरीर की वायु को अच्छी तरह से जीतकर जप तथा ध्यान करने वाला मन्त्रज्ञ पुरुष मन्त्र के पूर्ण फल को प्राप्त करता है ।। ३४ ।। जिस साधक ने अपने भूतों तथा तन्मात्राओं की अच्छी तरह से शुद्धि कर ली है, तथा जो कामना से युक्त होकर योग का अभ्यास करता है वह अणिमा महिमा गरिमा लघिमा प्राप्ति, प्रकाम्य, ईशित्व, तथा, वशित्व सिद्धियों को प्राप्त करता है । इन कामनाओं से विरक्त निष्काम साधक भूतों, तन्मात्रों तथा इन्द्रियों के संबन्ध से मुक्त होकर ज्ञानस्वरूप मुक्त हो जाता है ।। ३५-३६ ।।

**इस तरह आदिमहापुराण अग्निपुराण का सर्वतोभद्र मण्डल आदि विधि वर्णन नामक तीसवाँ अध्याय सम्पूर्ण हुआ ॥ ३० ॥**

**अग्निदेव ने कहा–** अपनी तथा दूसरों की रक्षा स्वरूप अपामार्जन नामक विधि का अब मैं वर्णन कर रहा हूँ । जिसके द्वारा मनुष्य दुःखों से छुटकारा प्राप्त करके सुख प्राप्त करता है ।।१।। ओम् जो परमार्थ पुरुष स्वरूप हैं, प्राकृतिक रूप (शरीर) से रहित तथा अनेक दिव्य रूप वाले हैं, उन महात्मा, तथा व्यापक परमात्मा को नमस्कार है ।। २ ।। सम्पूर्ण दोषों से रहित (अखिलहेय प्रत्यनीक) शुद्धस्वरूप तथा ध्यान योग में सर्वदा रत रहने वाले परमात्मा को नमस्कार करके मैं जिस वाणी को कह रहा हूँ मेरी वह वाणी सिद्ध (सफल) हो जाए ।। ३ ।। वराह भगवान् नृसिंह भगवान्, तथा

वराहाय नृसिंहाय वामनाय महात्मने । नमस्कृत्य प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः ॥ ४ ॥ त्रिविक्रमाय रामाय वैकुण्ठाय नराय च । नमस्कृत्य प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः ॥ ५ ॥ वराह नरसिंहेश वामनेश त्रिविक्रम । हयग्रीवेश सर्वेश हृषीकेश हराशुभम् ॥ ६ ॥ अपराजितचक्राद्यैश्चतुर्भिः परमायुधैः । अखण्डितानुभावैस्त्वं सर्वदुष्टहरो भव ॥ ७ ॥ हरामुकस्य दुरितं सर्वं च कुशलं कुरु । मृत्युबन्धार्तिभयदं दुरितस्य च यत्फलम् ॥ ८ ॥ पराभिध्यानसहितैः प्रयुक्तं चाभिचारिकम् । गरस्पर्शमहारोगप्रयोगं जरया जर ॥ ९ ॥ ॐनमो वासुदेवाय नमः कृष्णाय खड्गिने । नमः पुष्करनेत्राय केशवायादिचक्रिणे ॥ १० ॥ नमः कमलकिञ्जल्कपीतनिर्मलवाससे । महाहयरिपुस्कन्धधृष्टचक्राय चक्रिणे ॥ ११ ॥ दंष्ट्रोद्धृतक्षितिभृते त्रयीमूर्तिमते नमः । महायज्ञवराहाय शेषभोगाङ्कशायिने ॥ १२ ॥ तप्तहाटककेशान्त ज्वलत्पावकलोचन । वज्राधिकनखस्पर्श दिव्यसिंह नमोऽस्तु ते ॥ १३ ॥ काश्यपायातिह्रस्वाय ऋग्यजुःसामभूषिते । तुभ्यं वामनरूपायाक्रमते गां नमो नमः ॥ १४ ॥ वराहाशेषदुष्टानि सर्वपापफलानि वै । मर्द मर्द महादंष्ट्र मर्द मर्द च तत्फलम् ॥ १५ ॥ नारसिंह करालास्य दन्तप्रान्तानलोज्ज्वल। भञ्ज भञ्ज निनादेन दुष्टान् पश्यार्तिनाशन ॥ १६ ॥ ऋग्यजुःसामगर्भाभिर्वाग्भिर्वामनरूपधृक् । प्रशमं सर्वदुःखानि नयत्वस्य जनार्दनः ॥ १७ ॥ ऐकाहिकं द्व्याहिकं च तथा त्रिदिवसं ज्वरम् । चातुर्थिकं तथात्युग्रं तथैव सततं ज्वरम् ॥ १८ ॥ दोषोत्थं सन्निपातोत्थं तथैवागन्तुकं ज्वरम् । शमं नयाशु गोविन्द छिन्धि छिन्ध्यस्य वेदनाम्॥१९॥ नेत्रदुःखं शिरोदुःखं दुखं चोदरसम्भवम् । अनिश्वासमतिश्वासं परितापं सवेपथुम् ॥ २० ॥ गुदघ्राणाङ्घ्रिरोगांश्च कुष्ठरोगांस्तथा

---

महात्मा वामन भगवान् को नमस्कार करके मैं जो कहता हूँ वह मेरी वाणी सफल होए ।। ४ ।। त्रिविक्रम श्रीराम, वैकुण्ठ तथा नर को नमस्कार करके जो मैं कह रहा हूँ वह मेरी वाणी सत्य हो ।।५।। हे वराह ! नृसिंह ! भगवन् ! हे वामन भगवन् ! हे हयग्रीव भगवन् ! हे सर्वेश ! हे हृषीकेश ! आप अमङ्गल का नाश करें ।। ६ ।। हे भगवन् ! जो कभी भी पराजित नहीं होते उन अपने चार (शंख, चक्र, गदा तथा शार्ङ्ग धनुष) श्रेष्ठ आयुधों जिनका अखण्डित प्रभाव है, उनके द्वारा आप समस्त दुष्टों का विनाश करें ।। ७ ।। अमुक व्यक्ति के पापों को विनष्ट करें, इसका सभी प्रकार का मङ्गल करें, मृत्यु, बन्धन तथा आर्ति रूपी भय प्रदान करने वाले दुर्दैव का जो फल है, शत्रुता की भावना से ग्रस्त होकर प्रयोग किए गए अभिचार कर्म रूपी विष के स्पर्श, तथा महारोग के प्रयोग को आप जरा से जीर्ण बना दें ।। ८-९ ।। ओङ्कारस्वरूप, वासुदेव, भगवान् कृष्ण, खड्ग धारण करने वाले, कमल के समान नेत्र वाले, चक्र आदि को धारण करने वाले भगवान् केशव को नमस्कार है ।। १० ।। कमल के पराग के समान पीत एवं स्वच्छ वस्त्र धारण करने वाले महाश्व (हयग्रीव) नामक राक्षस शत्रु की गर्दन को चक्र से काटने वाले चक्रधारी श्रीभगवान् को नमस्कार है ।। ११।। शेष की शय्या पर शयन करने वाले, मूर्तिमान त्रयी (ऋग्वेद, यजुर्वेद, तथा सामवेद स्वरूप) अपने दाँतों के ऊपर पृथिवी को धारण करने वाले महायज्ञ वराह भगवान् को नमस्कार है ।। १२ ।। जिनके केश (आयाल) का अन्तिम भाग सुतप्त सुवर्ण के समान चमकने वाला है, जिनके नेत्र जलती हुयी आग के समान चमकते हैं, जिनके नखों का स्पर्श वज्र से भी अधिक कठोर है, ऐसे दिव्य सिंह नृसिंह भगवन् ! आपको नमस्कार है ।। १३ ।। महर्षि कश्यप के आत्मज, अत्यन्त छोटे शरीर वाले, ऋग्वेद, यजुर्वेद तथा सामवेद से समलङ्कृत तथा पृथिवी को अपने डग से नापने वाले भगवन् वामन ! आपको बारम्बार नमस्कार है ।। १४ ।। हे बड़े-बड़े दाँतों वाले वराह भगवन् ! सम्पूर्ण दुःखों तथा समस्त पापों के फलों को विनष्ट करके उनके फलों को भी आप विनष्ट कर दें।।१५।। हे भयंकर मुख वाले ! दाँतों के सन्निकट चमकने वाली अग्नि की ज्वाला से देदीप्त भगवन्, हे भक्तों के दुःखों को विनष्ट करने वाले नृसिंह भगवन् आप अपनी गर्जना से दुष्टों को विनष्ट करके मुझे कृपापूर्वक देखें ।। १६ ।। हे वामन रूप धारण करने वाले भगवन् ! ऋग्, यजुः तथा साम से युक्त वाणी के द्वारा भगवन् जनार्दन इस (व्यक्ति) के दुःखों को विनष्ट कर दें ।। १७ ।। हे गोविन्द! आप इसके ऐकाह्निक, द्वयाह्निक, त्र्याह्निक, चातुर्थिक, तथा अत्यन्त उग्ररूप से सदा बने रहने वाले ज्वर को,दोषजन्य, सन्निपातजन्य, तथा आगन्तुक ज्वर को शीघ्र शान्त करके इसकी वेदना को विनष्ट कर दें ।। १८-१९ ।। नेत्र के दुःख, सिर के दुःख, उदरजन्य दुःख, श्वास का रुकना, अत्यधिक श्वास का आना, जलन, कँपकँपी, गुदा, घ्राण, तथा पैर के रोग, कुष्ठरोग, क्षयरोग, कामल

क्षयम् । कामलादींस्तथा रोगान् प्रमेहांश्चातिदारुणान् ॥ २१ ॥ भगन्दरातिसारांश्च मुखरोगांश्च वल्गुलीम् । अश्मरीं मूत्रकृच्छ्रांश्च रोगानन्यांश्च दारुणान्॥ २२ ॥ ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः । कफोद्भवाश्च ये केचिद्ये चान्ये सन्निपातिकाः ॥ २३ ॥ आगन्तुकाश्च ये रोगा लूताविस्फोटकादयः । ते सर्वे प्रशमं यान्तु वासुदेवस्य कीर्तनात् ॥ २४ ॥ विलयं यान्तु ते सर्वे विष्णोरुच्चारणेन च । क्षयं गच्छन्तु चाशेषास्ते चक्राभिहता हरेः ॥ २५ ॥ अच्युतानन्तगोविन्दनामोच्चारणभेषजात् । नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥ २६ ॥ स्थावरं जङ्गमं वापि कृत्रिमं चापि यद् विषम् । दन्तोद्भवं नखभवमाकाशप्रभवं विषम् ॥ २७ ॥ लूतादिप्रभवं यच्च विषमन्यत्तु दुःखदम् । शमं नयतु तत् सर्वं वासुदेवस्य कीर्तनम् ॥ २८ ॥ ग्रहान् प्रेतग्रहांश्चापि तथा वै डाकिनीग्रहान् । वेतालांश्च पिशाचांश्च गन्धर्वान् यक्षराक्षसान् ॥ २९ ॥ शकुनीपूतनाद्यांश्च तथा वैनायकान् ग्रहान् । मुखमण्डीं तथा क्रूरां रेवतीं वृद्धरेवतीम् ॥ ३० ॥ वृद्धकाख्यान् ग्रहां श्चोग्रांस्तथा मातृग्रहानपि । बालस्य विष्णोश्चरितं हन्तु बालग्रहानिमान् ॥ ३१ ॥ वृद्धाश्च ये ग्रहाः केचिद्ये च बालग्रहाः क्वचित् । नरसिंहस्य ते दृष्ट्या दग्धा ये चापि यौवने ॥ ३२ ॥ सटाकरालवदनो नारसिंहो महाबलः। ग्रहानशेषान्निःशेषान्करोतु जगतो हितः ॥ ३३ ॥ नरसिंह महासिंह ज्वालामालोज्ज्वलानन । ग्रहानशेषान् सर्वेश खाद खादाग्निलोचन ॥ ३४ ॥ ये रोगा ये महोत्पाता यद् विषं ये महाग्रहाः । यानि च क्रूरभूतानि ग्रहपीडाश्च दारुणाः ॥ ३४ ॥ शस्त्रक्षतेषु ये दोषा ज्वालागर्दभकादयः । तानि सर्वाणि सर्वात्मन् परमात्मन् जनार्दन ॥ ३६ ॥ किञ्चिद्रूपं समास्थाय वासुदेवास्य नाशय । क्षिप्त्वा सुदर्शनं चक्रं ज्वालामालातिभीषणम् ॥ ३७ ॥ सर्वदुष्टोपशमनं कुरु देववराच्युत ! सुदर्शन महाज्वाल च्छिन्धि च्छिन्धि महारव ॥ ३८ ॥ सर्वदुष्टानि रक्षांसि क्षयं यान्तु विभीषण । प्राच्यां प्रतीच्यां च दिशि दक्षिणोत्तरतस्तथा ॥ ३९ ॥ रक्षां करोतु सर्वात्मा नरसिंहः स्वगर्जितैः । दिवि भुव्यन्तरिक्षे च पृष्ठतः

---

(पीलिया) आदि रोग, मुख के रोग, अत्यन्त भयंकर प्रमेह रोग, भगन्दर, अतिसार, मुख के रोग, बल्गुली नामक रोग, अश्मरी नामक रोग, मूत्रकृच्छ्र तथा दूसरे भयंकर रोग, वातजन्य रोग, पित्तजन्य रोग, कफजन्य रोग, सन्निपातिक रोग, लूता तथा विस्फोटक आदि आगन्तुक रोग ये सबके सब रोग भगवान् वासुदेव के नाम संकीर्तन से शान्त हो जायें ।। २० ।। २१-२४ ।। ये सभी रोग भगवान् विष्णु के नामोच्चारण से विनष्ट हो जायें तथा भगवान् विष्णु के चक्र के प्रहार से विनष्ट हो जायँ ।। २५ ।। मैं यह सत्य-सत्य कह रहा हूँ कि श्रीभगवान् के अच्युत, अनन्त, गोविन्द इन नामों के उच्चारण रूपी भेषज से सभी रोग विनष्ट हो जाते हैं ।। २६ ।। जो स्थावर, जङ्गम अथवा कृत्रिम विष हैं, दाँत से उत्पन्न, नख से उत्पन्न, तथा आकाश से उत्पन्न होने वाले विष हैं, जो लूता इत्यादि से उत्पन्न होने वाले दुःखद विष हैं वे सबके सब भगवान् वासुदेव के नामोच्चारण से शान्त हो जायँ ।। २७-२८ ।। ग्रह, प्रेतग्रह, डाकिनीग्रह, वेताल, पिशाच, गन्धर्व, यक्ष, राक्षस, शकुनी, पूतना आदि, वैनायकग्रह, मुखमण्डी, क्रूररेवती, वृद्धरेवती, वृद्धिकाग्रह, उपमातृग्रह आदि जो बालकों के ग्रह हैं,उनको बालक रूपधारी भगवान् विष्णु का चरित्र विनष्ट कर दे ।। २९-३१ ।। जो कोई हृदयग्रह बालग्रह अथवा यौवन के ग्रह हैं, वे भगवान् नृसिंह की दृष्टिसे ही विनष्ट हो जायँ।। ३२ ।। जगत् का कल्याण करने वाले महाबलवान् तथा आयालों के कारण भयंकर मुख वाले भगवान् नृसिंह सम्पूर्ण ग्रहों को विनष्ट कर दें ।। ३३ ।। हे ज्वाला समूह से देदीप्यमान मुखड़े वाले महासिंह नृसिंह भगवन् ! हे अग्निलोचन ! हे सर्वेश ! सम्पूर्ण ग्रहों को आप खा जाइये-खा जाइये ।।३४।। इसके जो रोग हैं, महाउत्पात, विष, महाग्रह, क्रूरभूत, भयंकर ग्रहजन्यपीड़ा, शस्त्रप्रहारजन्य दोष, ज्वालागर्दभ आदि, उन सबों को हे सर्वात्मन् ! परमात्मन्! जनार्दन् ! ज्वाला समूह से अत्यन्त भयंकर बने हुए सुदर्शन चक्र को चलाकर विनष्ट कर दें ।। ३५-३६ ।। हे देवताओं में श्रेष्ठ, अच्युत भगवन् ! आप सभी दुष्टों को विनष्ट कर दें । हे सुदर्शन! हे महाज्वाल, हे महारव ! आप इसके समस्त अशुभों को छिन्न-भिन्न कर दें ।। ३८ ।। हे भयंकर ! सुदर्शनचक्र ! सभी दुष्टों तथा राक्षसों का क्षय हो जाय । पूर्व, पश्चिम, उत्तर तथा दक्षिण दिशा में सर्वात्मा भगवान् नृसिंह अपनी गर्जना

पार्श्वतोऽग्रतः ॥ ४० ॥ रक्षां करोतु भगवान् बहुरूपी जनार्दनः । यथा विष्णुर्जगत्सर्वं सदेवासुरमानुषम् ॥ ४१ ॥ तेन सत्येन दुष्टानि शममस्य व्रजन्तु वै । यथा विष्णौ स्मृते सद्यः सङ्क्षयं यान्ति पातकाः ॥ ४२ ॥ सत्येन तेन सकलं दुष्टमस्य प्रशाम्यतु । यथा यज्ञेश्वरो विष्णुर्देवेष्वपि हि गीयते॥४३॥ सत्येन तेन सकलं यन्मयोक्तं तथास्तु तत् । शान्तिरस्तु शिवं चास्तु दुष्टमस्य प्रशाम्यतु ॥ ४४ ॥ वासुदेवशरीरोत्थैः कुशैर्निर्णाशितं मया । अपमार्जतु गोविन्दो नरो नारायणस्तथा ॥ ४५ ॥ तथास्तु सर्वदुःखानां प्रशमो वचनाद्धरेः । अपमार्जनकं शस्तं सर्वरोगादिवारणम् ॥ ४६ ॥ अहं हरिः कुशो विष्णुर्हता रोगा मया तव ॥ ४७ ॥

इत्यादिमहापुराण आग्नेये कुशापामार्जनस्तोत्रवर्णनं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

## अथ द्वात्रिंशोऽध्यायः

## निर्वाणदीक्षासिद्धार्थानां संस्काराणां वर्णनम्

अग्निरुवाच— **निर्वाणादिषु दीक्षासु चत्वारिंशत्तथाष्ट च । संस्कारान् कारयेद्धीमाञ्शृणु तान् यैः सुरो भवेत् ॥ १ ॥ गर्भाधानं तु योन्यां वै ततः पुंसवनं चरेत्। सीमन्तोन्नयनं चैव जातकर्म च नाम च ॥ २ ॥ अन्नाशनं ततश्चूडा ब्रह्मचर्यव्रतानि च । चत्वारि वैष्णवी पार्थी भौतिकी श्रौतिकी तथा॥३॥ गोदानं स्नातकत्वं च पाकयज्ञाश्च सप्त च। अष्टका पार्वणश्राद्धं श्रावण्याग्रायणीति च ॥ ४ ॥ चैत्री चाश्वयुजी सप्त हविर्यज्ञांश्च ताञ्शृणु।**

से इसकी रक्षा करें । स्वर्ग, पृथिवी, तथा अन्तरिक्ष में पीछे,बगल में तथा आगे अनेक रूप धारण करने वाले भगवान् नारायण रक्षा करें । भगवान् विष्णु देवता, असुर तथा मनुष्यात्मक सम्पूर्ण जगत् की आत्मा हैं, इस सत्य के द्वारा इसके सम्पूर्ण पाप शान्त हो जायँ । जिस तरह से भगवान् विष्णु के स्मरण मात्र से सम्पूर्ण पाप विनष्ट हो जाते हैं, उसी सत्य के द्वारा इसके समस्त पाप विनष्ट हो जायँ । जिस तरह से देवता भी भगवान् विष्णु का यज्ञेश्वर रूप से गान करते हैं, उसी सत्य के द्वारा मैंने जो कुछ कहा है, वह सब सत्य होए । शान्ति हो, कल्याण हो तथा इसके सारे दोष दूर हो जायँ ।। ३९-४४ ।। जिस तरह से भगवान् वासुदेव के शरीर से उत्पन्न कुश इसके समस्त पापों को विनष्ट कर दिया है, उसी तरह से भगवान् गोविन्द, नर तथा नारायण उसका अपमार्जन करें।।४५।। श्रीभगवान् के स्मरण मात्र से इसके समस्त दुःखों का नाश हो जाय । यह अपमार्जन स्तोत्र प्रशस्त तथा सभी रोगों को दूर करने वाला है ।। ४६।। मैं श्रीहरि हूँ,कुश विष्णु स्वरूप है, मैंने तुम्हारे रोगों को विनष्ट कर दिया है ।। ४७ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का कुशापमार्जन स्तोत्र वर्णन नामक इकतीसवाँ अध्याय सम्पूर्ण हुआ ॥ ३१ ॥**

**अग्निदेव ने कहा—** निर्वाण आदि दीक्षाओं में बुद्धिमान पुरुष को अड़तालिस संस्कारों को करना चाहिए, उन सबों को करने से मनुष्य भी देवता हो जाता है । उसे आप सुनें ।। १ ।। सर्वप्रथम योनि में गर्भाधान संस्कार करना चाहिए, फिर पुंसवन संस्कार करना चाहिए । उसके पश्चात् क्रमशः सीमन्तोन्नयन, जातकर्म, नामकरण, अन्नप्राशन, चूडाकरण, तथा ब्रह्मचर्य व्रत करना चाहिए । वैष्णवी, पार्थी, भौतिक तथा श्रौत ये चार संस्कार की विधियाँ हैं । पुनः गोदान (बाल काटना) स्नातकत्व और पाकयज्ञ, ये सब मिलकर संस्कारों की संख्या सात हो जाती है । अष्टकाश्राद्ध, पार्वण श्राद्ध, श्रावणीकर्म, तथा आग्रायणी कर्म, चैत्री, तथा अश्वयुजी ये पाकयज्ञ हैं । आप हविर्यज्ञों को सुनें । आधान, अग्निहोत्र, दर्श, पौर्णमास, चातुर्मास्य, पशुबन्ध और सौत्रामणि । अब सात सोमसंस्थाओं

आधानं चाग्निहोत्रं च दर्शो वै पौर्णमासकः ॥ ५ ॥ चातुर्मास्यं पशुबन्धः सौत्रामणिरथापरः । सोमसंस्थाः सप्त शृणु अग्निष्टोमः क्रतूत्तमः ॥ ६ ॥ अत्यग्निष्टोम उक्थ्यश्च षोडशी वाजपेयकः। अतिरात्रोऽप्तोर्यामश्च सहस्रेशासवा इमे ॥ ७ ॥ हिरण्याङ्घ्रिर्हिरण्याक्षो हिरण्यमित्र इत्यतः । हिरण्यपाणिर्हेमाक्षो हेमाङ्गो हेमसूत्रकः ॥ ८ ॥ हिरण्यास्यो हिरण्याङ्गो हेमजिह्वो हिरण्यवान् । अश्वमेधो हि सर्वेशो गुणाश्चाष्टाथ ताञ्छृणु ॥ ९ ॥ दया च सर्वभूतेषु क्षान्तिश्चैव तथार्जवम् । शौचं चैवमनायासो मङ्गलं चापरो गुणः ॥ १० ॥ अकार्पण्यं चास्पृहा च मूलेन जुहुयाच्छतम् । सौरशाक्तेयविष्णवीशदीक्षास्वेते समाः स्मृताः ॥ ११ ॥ संस्कारैः संस्कृतश्चैतैर्भुक्तिमुक्तिमवाप्नुयात्। सर्वरोगादिनिर्मुक्तो देववद् वर्तते नरः ॥ १२॥ जप्याद्धोमात्पूजनाच्च ध्यानाद्देवस्य चेष्टभाक् ॥ १३ ॥

इत्यादिमहापुराण आग्नेये निर्वाणदीक्षासिद्ध्यर्थानां संस्काराणां वर्णनं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

## अथ त्रयस्त्रिंशोऽध्यायः

## पवित्रकारोपणविधिकथनम्

अग्निरुवाच— **पवित्रारोहणं वक्ष्ये वर्ष पूजाफलं हरेः। आषाढाऽदौ कार्तिकान्ते प्रतिपद्वनदा तिथिः ॥ १॥ श्रिया गौर्या गणेशस्य सरस्वत्या गुहस्य च । मार्तण्डमातृदुर्गाणां नागर्षिहरिमन्मथैः ॥ २ ॥ शिवस्य ब्रह्मणस्तद्वद् द्वितीयादितिथिक्रमात्। यस्य देवस्य यो भक्तः पवित्रा तस्य सा तिथिः॥३॥ आरोहणे तुल्यविधिः पृथङ्मन्त्रादिकं यदि। सौवर्णं राजतं ताम्रं नेत्रकार्पासिकादिकम्॥ ४ ॥ ब्राह्मण्या कर्तितं सूत्रं तदलाभे तु संस्कृतम्।**

---

के विषय में सुनें। उत्तम यज्ञ अग्निष्टोम, अत्यग्निष्टोम, उक्थ्य, षोडशी, बाजपेय, अतिरात्र, आप्तोर्याम, तथा सहस्रसव ।। २-७ ।। हिरण्याङ्घ्रि, हिरण्याक्ष, हिरण्यमित्र, हिरण्यपाणि, हेमाक्ष, हेमाङ्ग, हेमसूत्रक, हिरण्यास्य, हिरण्याङ्ग, हेमजिह्व, हिरण्यवान् तथा सर्वेश अश्वमेघ ये उत्तम यज्ञ हैं ।। ८-९ ।। सभी प्राणियों पर दया करना, क्षमा, ऋजुता, शौच (पवित्रता), श्रम राहित्य, मंङ्गलमयता, औदार्य, अस्पृहा (सन्तोष) मूलमन्त्र से सौबार होम ये सभी, सौर, शाक्त, वैष्णव तथा शैव दीक्षाओं में समान रूप से अपेक्षित होते हैं ।। १०-११ ।। इन संस्कारों से संस्कृत मनुष्य भोग तथा मोक्ष को प्राप्त करता है, सभी रोगों से मुक्त होकर वह देवता के समान व्यवहार करता है ।। १२ ।। जप, होम, पूजन तथा ध्यान से मनुष्य अपने समस्त मनोरथों को पूर्ण कर लेता है ।। १३ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का निर्वाणदीक्षा सिध्यर्थ संस्कारों का वर्णन नामक बत्तीसवाँ अध्याय सम्पूर्ण हुआ ॥ ३२ ॥**

***अग्निदेव ने कहा***— *मै। पवित्रारोपण विधि तथा श्रीहरि के वर्ष पूजा के फल का वर्णन करूँगा ।* इस विधि का अनुष्ठान आषाढ़ मास से लेकर कार्तिक मास पर्यन्त किया जाता है, किन्तु इसमें प्रत्येक मास की प्रतिपत् तिथि त्याज्य होती है ।। १ ।। श्री, गौरी, गणेश, सरस्वती, कार्तिकेय, सूर्य, मातृका, दुर्गा, नाग, ऋषि, हरि, कामदेव, शिव तथा ब्रह्मा (ये चौदह देवता) द्वितीया आदि क्रमशः तिथियों के अधिष्ठातृ देवता हैं । इन देवताओं में से जो जिस देवता का भक्त होता है उसके लिए उस देवता की ही तिथि पवित्र होती है ।। २-३ ।। पवित्रक के लिए सुवर्ण, चाँदी, ताम्बा, नेत्रक (रेशम), रेशम तथा कपास के सूत्र उत्तम हैं । सूत ब्राह्मणी के हाथ का काता हुआ होना चाहिए । यदि ब्राह्मणी के हाथ का काता हुआ सूत न मिले तो संस्कार किया हुआ सूत ले लेना चाहिए । द्विगुण सूत को त्रिगुण करके उसी से पवित्रक बनाना चाहिए । सभी देवताओं की पवित्रक विधि एक समान है, मन्त्र भले ही पृथक् पृथक् होते हैं ।। ४-५ ।। पवित्रक एक सौ आठ अंगुल से ऊपर उत्तम

द्विगुणं त्रिगुणीकृत्य तेन कुर्यात्पवित्रकम् ॥ ५ ॥ अष्टोत्तरशतादूर्ध्वं तदर्धं चोत्तमादिकम् । क्रियालोपविघातार्थं यत्त्वयाभिहितं प्रभो ॥ ६ ॥ मया तत् क्रियते देव यथा यत्र पवित्रकम् । अविघ्नं तु भवेदेतत् कुरु नाथ तथाव्यय ॥ ७ ॥ प्रार्थ्य तन्मण्डलादौ तु गायत्र्या बन्धयेन्नरः । ॐ नारायणाय विद्महे वासुदेवाय धीमहि ॥ ८ ॥ तन्नो विष्णुः प्रचोदयात् । देव देवानुरूपतः ॥ ९ ॥ जानूरूनाभिपादान्तं प्रतिमासु पवित्रकम्। पादान्ता वनमाला स्यादष्टोत्तरसहस्रतः ॥ १०॥ मालां तु कल्पसाध्यां वा द्विगुणां षोडशाङ्गुलात् । कर्णिकाकेसरं पत्रमन्त्राद्यं मण्डलान्तकम् ॥ ११ ॥ मण्डलाङ्गुलमात्रैकचक्राङ्कादौ पवित्रकम् । स्थण्डिलेऽङ्गुलमानेन आत्मनः सप्तविंशतिः॥ १२ ॥ आचार्याणाञ्च सूत्राणि पितृमात्रादिकैः स्वकैः। नाभ्यन्तं द्वादशग्रन्थिं तथा गन्धपवित्रके ॥ १३ ॥ अङ्गुलात्कल्पनादौ द्विर्माला चाष्टोत्तरं शतम् । अथवार्कचतुर्विंशषट्त्रिंशन्मालिका द्विज ॥ १४॥ अनामामध्यमाङ्गुष्ठैर्मन्दाद्यैर्मालिकार्थिभिः । कनिष्ठादौ द्वादश वा ग्रन्थयः स्युः पवित्रके ॥ १५ ॥ रवेः कुम्भहुताशादेः सम्भवे विष्णुवन्मतम् । पीठस्य पीठमानं स्यान्मेखलान्तं च कुण्डके ॥ १६ ॥ यथाशक्ति सूत्रग्रन्थिः परिचारेऽथ वैष्णवे। सूत्राणि वा सप्तदशसूत्रेण त्रिविभक्तके ॥ १७॥ रोचनागुरुकर्पूरहरिद्राकुंकुमादिभिः। रञ्जयेच्चन्दनाद्यैर्वा स्नानसन्ध्यादिकृन्नरः ॥ १८ ॥ एकादश्यां यागगृहे भगवन्तं हरिं यजेत्। समस्तपरिवाराय बलिं दद्यात्समर्चयेत् ॥ १९ ॥ क्षौं क्षेत्रपालाय द्वारान्ते द्वारोपरि तथा श्रियम् । धात्रे दक्षविधात्रे च गङ्गां च यमुनां तथा ॥ २०॥ शङ्खपद्मनिधी पूज्य मध्ये वस्त्रप्रसारणम् । सारङ्गायेति भूतानां भूतशुद्धिं स्थितश्चरेत् ॥ २१ ॥ ॐ हूं हः फट् हूं गन्धतन्मात्रं संहरामि नमः । ॐ हूं हः फट् हूं

होता है तथा उसके आधा मध्यम आदि के क्रम से होता है । सर्वप्रथम देवता से प्रार्थना करना चाहिए कि हे प्रभो ! क्रियालोपजन्य दोष का विघात (विनाश) करने के लिए आपने जो शास्त्रीय विधान किया है, हे केशव मैं उसका अनुष्ठान करता हूँ । जहाँ पर जो पवित्र है उसको मैं कर रहा हूँ । यह कार्य जिस तरह से निर्विघ्न पूरा हो हे अव्यय आप वैसा ही करें ।। ६-७ ।। इस तरह से प्रार्थना करके पवित्र मण्डल का गायत्री से बन्धन करें ।। 'ओम् नारायणाय विद्महे, वासुदेवाय धीमहि, तन्नोविष्णुः प्रचोदयात् ।' यह विष्णु गायत्री है । गायत्री मन्त्र का भिन्न-भिन्न देवता के अनुकूल प्रयोग करना चाहिए । सभी देवताओं की गायत्री अलग अलग हैं ।। ८-९ ।। प्रतिमा के घुटना, ऊरु, नाभि तथा पैर के अन्तिम भाग में पवित्रक लगाना चाहिए । अष्टोत्तर सहस्रमनियों वाली वनमाला पैर पर्यन्त की होनी चाहिए ।। १० ।। कल्प से बनी हुई माला को सोलह अंगुल के दुगना अर्थात् बत्तीस अंगुल की होनी चाहिए । प्रथम मण्डल से लेकर अन्तिम मण्डल पर्यन्त कर्णिका, केसर तथा पत्र का मन्त्र से पूजन करना चाहिए ।। ११ ।। मण्डल के अंगुलमात्र के एक चक्र आदि में पवित्र किया जाता है । अपने अंगुल से सत्ताइस अंगुल वेदी के ऊपर नाभि के अन्त में एक ओर आचार्य, पिता, माता आदि के बारह ग्रन्थि वाले पवित्रकसूत्र का चन्दन आदि से पूजन करना चाहिए ।। १२-१३ ।। अङ्गुलि से माला बनाने पर दो अष्टोत्तरशत (१०८) दाने की माला बनाना चाहिए अथवा हे द्विज बारह दाने की, या चौबीस दाने की अथवा छत्तीस दाने की माला बनाना चाहिए ।। १४ ।। अनामिका मध्यमा तथा अंगुष्ठ तथा मन्द अंगुलियाँ जिनसे माला बनायी जाता है, उनसे माला बनाना चाहिए । अथवा कनिष्ठा अंगुलि से पवित्रक में बारह, ग्रंथि लगाना चाहिए ।। १५ ।। सूर्य, कुम्भ, अग्नि के लिए यदि सम्भव हो तो विष्णु के ही समान माला बनाए और पूजन करे। वेदी की माला वेदी के बराबर तथा कुण्ड की माला मेखला के बराबर होनी चाहिए ।। १६ ।। स्नान तथा सन्ध्या आदि करके मनुष्य को चाहिए कि वह विष्णु भगवान् के पूजन में अपनी शक्ति के अनुसार सूत्र में ग्रन्थि लगाकर अथवा विना ग्रन्थि के ही सूत्र के द्वारा तीन भागों में विभक्त करके सत्रह सूत्रों को गोरोचन, अगरु, कर्पूर, हल्दी, कुंकुम तथा चन्दन आदि से रंगें ।।१७-१८।। एकादशी के दिन यज्ञशाला में श्रीभगवान् की पूजा करे तथा श्रीभगवान् के सम्पूर्ण परिवार के लिए बलि प्रदान करे एवं अर्चना करे ।। १९ ।। इसके पश्चात् ओम् क्षौं क्षेत्रपालाय नमः ।' इस मन्त्र से क्षेत्रपाल के द्वारान्त पर बलि देनी चाहिए । द्वार पर श्रीदेवि, धाता, दक्ष, विधाता, गङ्गा, यमुना, शङ्खनिधि तथा पद्मनिधि की पूजा करके मध्य में सारङ्गाय नमः इस वाक्य का उच्चारण करके एक वस्त्र फैला देना चाहिए । उसके पश्चात् बैठकर भूतों की भूतशुद्धि करनी चाहिए ।। २०-२१ ।। (१) ओम् हूं हः फट् हूं गन्धतन्मात्रं संहरामि नमः', (२) ओम् हूं हः फट् हूं रसतन्मात्रं संहरामि नमः, (३) ओम् हूं हः फट् हूं रूपतन्मात्रं संहरामि नमः, (४) ओम् हूं हः फट् हूं स्पर्शतन्मात्रं संहरामि नमः ।। ५ ।। ओम् हूं हः फट् हूं शब्द तन्मात्रं संहरामि नमः । इन पाञ्च उद्घात मन्त्रों के

रसतन्मात्रं संहरामि नमः ॥ २२ ॥ ॐ हूं हूः फट् हूं रूपतन्मात्रं संहरामि नमः । ॐ हूं हूः फट् हूं स्पर्शतन्मात्रं संहरामि नमः॥ २३ ॥ ॐ हूं हूः फट् हूं शब्दतन्मात्रं संहरामि नमः । पञ्चोद्घातैर्गन्धतन्मात्रस्वरूपं भूमिमण्डलम् ॥ २४ ॥ चतुरस्त्रं च पीठं च काञ्चनं वज्रलाञ्छितम्। इन्द्रादिदैवतं पादयुग्ममध्यगतं स्मरेत् ॥ २५ ॥ शुद्धं च रसतन्मात्रं प्रविलाप्याथ संहरेत् । रसमात्रं रूपमात्रे क्रमेणानेन पूजकः ॥ २६ ॥ ॐ हूं हूः फट् हूं रसतन्मात्रं संहरामि नमः । ॐ हूं हूः फट् हूं रूपतन्मात्रं संहरामि नमः ॥ २७ ॥ ॐ हूं हूः फट् हूं स्पर्शतन्मात्रं संहरामि नमः । ॐ हूं हूः फट् हूं शब्दतन्मात्रं संहरामि नमः ॥ २८ ॥ जानुनाभिमध्यगतं श्वेतं वै पद्मलाञ्छितम् । शुक्लवर्णं चार्धचन्द्रे ध्यायेद्वरुणदैवतम् ॥ २९ ॥ चतुर्भिश्च तदुद्घातैः शुद्धं तद्रसमात्रकम् । संहरेद्रसतन्मात्रं रूपमात्रे च संहरेत् ॥ ३० ॥ ॐ हूं हूः फट् हूं रूपतन्मात्रं संहरामि नमः । ॐ हूं हूः फट् हूं स्पर्शातन्मात्रं संहरामि नमः ॥ ३१ ॥ ॐ हूं हूः फट् हूं शब्दतन्मात्रं संहरामि नमः । इति त्रिभिस्तदुद्घातैस्त्रिकोणं वह्निमण्डलम् ॥ ३२॥ नाभिकण्ठमध्यगतं रक्तं स्वस्तिकलाञ्छितम् । ध्यात्वानलाधिदैवं तच्छुद्धं स्पर्शे लयं नयेत् ॥ ३३ ॥ ॐ हूं हूः फट् हूं स्पर्शतन्मात्रं संहरामि नमः। ॐ हूं हूः फट् हूं शब्दतन्मात्रं संहरामि नमः ॥ ३४॥ कण्ठनासामध्यगतं वृत्तं वै वायुमण्डलम् । द्विरुद्घातैर्धूमवर्णं ध्यायेच्छुद्धेन्दुलाञ्छितम् ॥३५॥ स्पर्शमात्रं शब्दमात्रे संहरेद् ध्यानयोगतः । ॐ हूं हूः फट् हूं शब्दतन्मात्रं संहरामि नमः ॥ ३६ ॥ एकोद्घातेन चाकाशं शुद्धस्फटिकसन्निभम् । नासापुटशिखान्तस्थमाकाशमुपसंहरेत् ॥ ३७ ॥ शोषणाद्यैर्देहशुद्धिं कुर्यादेवं क्रमात्ततः । शुष्कं कलेवरं ध्यायेत् पादाद्यं च शिखान्तकम् ॥ ३८ ॥ यं-बीजेन वं-बीजेन ज्वालामालासमायुतम्। देहं रमित्यनेनैव ब्रह्मरन्ध्राद् विनिर्गमम्॥३९॥ बिन्दुं ध्यात्वा चामृतस्य तेन भस्मकलेवरम् । सम्प्लावयेल्लमित्यस्माद्

---

द्वारा गन्ध तन्मात्र स्वरूप भूमिमण्डल वज्र (हीरा) के द्वारा अलङ्कृत सुवर्णनिर्मित चतुरस्र पीठ तथा इन्द्रादि देव समूह को भी भगवान् के दोनों चरणों में विद्यमान रूप से स्मरण करना चाहिए । पुनः शुद्ध रस तन्मात्रा का प्रविलापन करके उसका संहार करे और इसी क्रम से साधक रस तन्मात्रा का रूपतन्मात्रा में प्रविलापन करे ।।२२-२६।। ओम् हूं हः फट् हूं रसतन्मात्रं संहरामि नमः, ओम् हूं हः फट् हूं रूपतन्मात्रं संहरामि नमः । ओम् हूं हः फट् हूं स्पर्शतन्मात्रं संहरामि नमः । ओम् हूं हः फट् हूं शब्दतन्मात्रं संहरामि नमः । इन चार उद्धात मन्त्रों के द्वारा श्रीभगवान् के घुटनों तथा नाभि के मध्य में विद्यमान, श्वत वर्ण के, कमल से अलंकृत, शुक्लवर्ण वाले, वरुणदैवत, अर्द्धचन्द्र के ऊपर विद्यमान, शुद्ध रसतन्मात्रा का ध्यान करे । उस रसतन्मात्रा का संहार करके उसका रूपतन्मात्रा में प्रविलापन करे ।।२७-३०।। ओम् हूं ह्न फट् हूं रूपतन्मात्रं संहरामि नमः। ओम् हूं हः फट् हूँ स्पर्शतन्मात्रं संहरामि नमः । ओम् हूं हः फट् हूँ शब्दतन्मात्रं संहरामि नमः । इन तीन रूप तन्मात्रा के उद्घात के मन्त्रों के द्वारा त्रिकोण बह्निमण्डल, स्वस्तिक चिह्न से चिह्नित रक्त वर्णन के अग्न्यधिदैवत रूपतन्मात्रा का श्रीभगवान् के नाभि तथा कण्ठ के मध्य में विद्यमान रूप से ध्यान करके उस शुद्ध रूप तन्मात्रा का स्पर्श तन्मात्रा में लय करना चाहिए ।। ३१-३३ ।। ओम् हूं हः फट् हूँ स्पर्शतन्मात्रं संहरामि नमः । ओम हूँ हः फट हूँ शब्दतन्मात्रं संहरामि नमः । इन दो उद्घात मन्त्रों का उच्चारण करके, धूम्रवर्ण के शुद्ध चन्द्रमा से लाञ्छित, श्रीभगवान् के कण्ठ तथा नासिका के मध्य में विद्यमान वायुमण्डल का ध्यान करना चाहिए । पुनः स्पर्शतन्मात्रा का शब्दतन्मात्रा में ध्यानयोग के द्वारा लय करना चाहिए । 'ओम् हूं हः फट हू शब्दतन्मात्रं संहरामि नमः' इस एक उद्घात मन्त्र के द्वारा शुद्ध स्फटिक के समान आकाश का श्रीभगवान् की नासिका तथा शिखा के बीच में ध्यान करके उपसंहार करना चाहिए ।। ३४-३७ ।। इसी प्रकार से शोषणादि क्रिया के द्वारा देहशुद्धि करनी चाहिए । पाद से लेकर शिखा पर्यन्त शुष्क शरीर का ध्यान करना चाहिए ।। ३८ ।। 'यं' तथा 'वं' इन दो बीजों के द्वारा ज्वाला समूह से व्याप्त देह को 'रं' बीज के द्वारा ब्रह्मरन्ध्र से निकले हुए अमृत की विन्दु का ध्यान करके उसमें भस्म शरीर को डुबाए तथा 'लं' बीज के द्वारा दिव्य शरीर को सम्पन्न करके अङ्गन्यास तथा करन्यास करके मानस-याग करना चाहिए । साङ्ग सपरिवार विष्णु का अपने हृदयकमल में मानस पुष्पों आदि सामग्रियों से तथा मूलमन्त्र

देहं सम्पाद्य दिव्यकम् ॥ ४० ॥ न्यासं कृत्वा करे देहे मानसं यागमाचरेत् । बिष्णुं साङ्गं हृदि पद्मे मानसैः कुसुमादिभिः॥४१॥ मूलमन्त्रेण देवेशं प्रार्चयेद् भुक्ति मुक्तिदम् । स्वागतं देव ! देवेश सन्निधौ भव केशव ॥ ४२ ॥ गृहाण मानसीं पूजां यथार्थं परिभाविताम् । आधारशक्तिः कूर्मोऽथ पूज्योऽनन्तो महीं ततः ॥ ४३ ॥ मध्येऽग्न्यादौ च धर्माद्या अधर्माद्याश्च मुख्यगाः । सत्त्वादिमध्ये पद्मं च मायाविद्याख्यतत्त्वके ॥ ४४ ॥ कालतत्त्वं च सूर्यादिमण्डलं पक्षिराजकः । मध्ये ततश्च वायव्यादीशान्ता गुरुपङ्क्तिका ॥ ४५ ॥ गणः सरस्वती पूज्या नारदो नलकूबरः । गुरुर्गुरोः पादुका च परोगुरुश्च पादुका ॥ ४६ ॥ पूर्वसिद्धाः परसिद्धाः केसरेषु च शक्तयः । लक्ष्मी सरस्वती प्रीतिः कीर्तिः शान्तिश्च कान्तिका ॥ ४७ ॥ पुष्टिस्तुष्टिर्महेन्द्राद्या मध्ये चावाहितो हरेः । धृतिः श्रीरतिकान्त्याद्या मूलेन स्थाप्यतेऽच्युतः ॥ ४८ ॥ ॐ अभिमुखो भवेति प्राथ्य प्राच्यां सन्निहितो भव। विन्यस्यार्घ्यादिकं दत्त्वा गन्धाद्यैर्मूलतो यजेत् ॥ ४९ ॥ ॐ भीषय भीषय हृच्छिरस्त्रासय वै नमः । मर्दय मर्दय शिखामग्न्यादौ क्रमतोऽस्त्रकम्॥५०॥ ''रक्ष रक्ष प्रध्वंसय कवचाय नमः । हूं फट् अस्त्राय नमो मूलबीजेन चाङ्गकम् ॥ ५१ ॥ पूर्वदक्षाप्यसौम्येषु मूर्त्यावरणमर्चयेत् । वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ॥ ५२ ॥ अग्न्यादौ श्रीरतिधृतिकान्तयो मूर्तयो हरेः । शङ्खं चक्रं गदां पद्ममग्न्यादौ पूर्वकादिकम् ॥ ५३ ॥ शार्ङ्गं च मुसलं खड्गं वनमालां च तद्बहिः । इन्द्राद्यांश्च तथानन्तं नैर्ऋत्यां वरुणं ततः ॥ ५४ ॥ ब्रह्मेन्द्रेशानयोर्मध्ये अस्त्रावरणकं बहिः । ऐरावतस्ततश्छागो महिषोऽथ

से भोग तथा मोक्ष प्रदान करने वाले श्रीभगवान् की पूजा करनी चाहिए और प्रार्थना करनी चाहिए कि- हे देवताओं के भी देव भगवन् ! आपका स्वागत है । यथोचित रूप से श्रद्धापूर्वक की गयी मानसिक पूजा को आप स्वीकार करें । उसके पश्चात् आद्याशक्ति, कूर्म, अनन्त तथा पृथिवी का पूजन करना चाहिए ।। ३९-४३ ।। वेदों के मध्य में तथा अग्नि आदि कोष्ठों में धर्म आदि तथा अधर्म आदि मुख्य देवताओं की, सत्त्व आदि में पद्म, माया तथा अविद्या तत्त्व का पूजन करना चाहिए ।। ४४ ।। वहीं पर कालतत्त्व, सूर्यादिमण्डल तथा पक्षिराज गरुड़ का पूजन करना चाहिए । उसके पश्चात् मध्य में ही वायव्य कोण से लेकर ईशानकोण पर्यन्त गुरुपंक्ति (आचार्य परम्परा) सरस्वती, नारद, नलकूबर, परमगुरु की पादुका तथा गुरु के गुरु की पादुका का पूजन करना चाहिए । कमल केसरों में पूर्वसिद्ध तथा परसिद्धशक्तियों– लक्ष्मी, सरस्वती, प्रीति, कीर्ति, शान्ति, कान्ति, पुष्टि, तुष्टि तथा महेन्द्र आदि का पूजन करना चाहिए । सावधान होकर बीच में श्रीहरि की धृति, श्री तथा अतिकान्ति आदि का पूजन करके मूलमन्त्र से भगवान् अच्युत की स्थापना करनी चाहिए ।। ४५-४८ ।। पुनः श्री भगवान् की 'अभिमुखो भव' अर्थात् हे भगवन् ! आप मेरे सम्मुख होएं, इस तरह से प्रार्थना करके 'प्राच्यां सन्निहितो भव' अर्थात् पूर्व दिशा में आप प्रतिष्ठित होएँ, इस मन्त्र से प्रतिष्ठा करके मूलमन्त्र के द्वारा चन्दनादि सामग्रियों से श्रीभगवान् की पूजा करनी चाहिए।। ४९ ।। पुनः निम्नांकित मन्त्रों से अङ्गन्यास करना चाहिए । (१) ओम् भीषय-भीषय हृदयाय नमः, (२) ओम् त्रासय त्रासय शिरसे स्वाहा, (३) ओम् मर्दय मर्दय शिखायै वषट्, (४) ओम् रक्ष रक्ष प्रध्वंसय प्रध्वंसय नमः कवचाय हुम्, (५) ओम् मर्दय मर्दय नेत्राभ्यां वषट् तथा (६) ओम् हुम् अस्त्राय फट् इन मन्त्रों से तथा अच्युत भगवान् के मूल मन्त्र 'ओम् नमो नारायणाय' से अपना अङ्गन्यास करना चाहिए तथा अग्नि में भी ध्यानपूर्वक अङ्गन्यास करना चाहिए ।। ५०-५१ ।। पूर्व, दक्षिण, पश्चिम तथा उत्तर दिशाओं में, वासुदेव, सङ्कर्षण, प्रद्युम्न तथा अनिरुद्ध मूर्तियों की तथा आवरण की पूजा करनी चाहिए।।५२ ।। अग्नि आदि कोणों में श्री, रति, गदा तथा पद्म की अग्नि आदि दिशाओं में शार्ङ्ग, मुसल, खड्ग तथा वनमाला की उसके बाहर पूर्वादि दिशाओं में इन्द्रादि देवताओं की नैर्ऋत्य कोण में अनन्त की, उसके पश्चात् पश्चिम दिशा में वरुण की, पूर्व तथा ईशान के बीच में ब्रह्मा की उसके बाहर अस्त्रों तथा आवरण की पूजा करनी चाहिए । दिक्पालों के पश्चात् बाहर में क्रमशः ऐरावत, छाग, महिष, नगेशय, (सिंह) मृग, शशक (खरगोश) वृषभ, कूर्म, एवं हंस इन वाहनों की पूजा करनी चाहिए । उसके पश्चात् पृश्निगर्भ तथा कुमुद आदि दो-दो श्रीभगवान् के द्वारपालों की पूजा करके पूर्व आदि (दक्षिण, पश्चिम) द्वारों से लेकर उत्तर द्वार पर्यन्त सभी द्वारों पर श्रीहरि को नमस्कार करके उसके पश्चात् बलिपीठ पर 'विष्णु पार्षदेभ्यो नमः' इस मन्त्र से भगवान् विष्णु के पार्षदों

नगेशयः ॥ ५५ ॥ मृगः शशोऽथ वृषभः कूर्मो हंसस्ततो बहिः । पृश्निगर्भः कुमुदाद्या द्वारपाला द्वयं द्वयम् ॥ ५६ ॥ पूर्वाद्युत्तरद्वारान्तं हरिं नत्वा बलिं बहिः । विष्णुपार्षदेभ्यो नमो बलिपीठे बलिं ददेत् ॥ ५७॥ विश्वाय विष्वक्सेनात्मने ईशानके यजेत् । देवस्य दक्षिणे हस्ते रक्षासूत्रं च बन्धयेत्॥५८॥ संवत्सरकृतार्चायाः सम्पूर्णफलदायिने । पवित्रारोहणायेदं कौतुकं धारय ॐ नमः ॥ ५९ ॥ उपवासादिनियमं कुर्याद्वै देवसन्निधौ। उपवासेन नियतो देवं सन्तोषयाम्यहम् ॥ कामक्रोधादयः सर्वे मा मे तिष्ठन्तु सर्वथा । अद्यप्रभृति देवेश यावद् वैशेषिकं दिनम् ॥ ६१ ॥ यजमानो ह्यशक्तश्चेत्कुर्यान्नक्तादिकं व्रती । हुत्वा विसर्जयेत् स्तुत्वा श्रीधरं नित्यपूजनम् ॥ ६२ ॥ ॐ ह्रीं श्रीं श्रीधराय त्रैलोक्यमोहनाय नमः ॥ ६३ ॥

इत्यादिमहापुराण आग्नेये सर्वदेवतासाधारणपवित्रकारोपणविधिकथनं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## अथ चतुस्त्रिंशोऽध्यायः

### पवित्रकारोपणे पूजाहोमादिविधिः

अग्निरुवाच— **विशेदनेन मन्त्रेण यागस्थानं च भूषयेत् । नमो ब्रह्मण्यदेवाय श्रीधरायाव्ययात्मने ॥ १ ॥ ऋग्यजुः सामरूपाय शब्ददेहाय विष्णवे। विलिख्य मण्डलं सायं यागद्रव्यादि चाहरेत् ॥ २ ॥ प्रक्षालितकाराङ्घ्रिः सन् विन्यस्यार्घ्यकरो नरः । अर्घ्याद्भिस्तु शिरः प्रोक्ष्य द्वारदेशादिकं तथा ॥ ३ ॥ आरभेद्द्वार यागञ्च तोरणेशान् प्रपूजयेत् अश्वत्थोदुम्बरवटप्लक्षाः पूर्वादिगानगाः ॥ ४ ॥ ऋगिन्द्रशोभनं प्राच्यां यजुर्यमसुभद्रकम् ।**

---

को बलि प्रदान करना चाहिए ।। ५४-५७ ।। इसके पश्चात् ईशानकोण पर 'विष्वक्सेनात्मने विश्वाय नमः' इस मन्त्र से विष्वक्सेन की पूजा करनी चाहिए । पुनः श्रीभगवान् के दाहिने हाथ में- '**संवत्सरकृतार्चायाः सम्पूर्णफलदायिने । पवित्रारोहणायेदं कौतुकं धारय ओम् नमः ।**' अर्थात् संवत्सर पर्यन्त की जाने वाली अर्चा का फल देने वाले प्रभो आपको नमस्कार है । आप पवित्रारोहण के लिए इस कौतुक सूत्र (रक्षासूत्र) को धारण करें । इस मन्त्र से रक्षा बाँधनी चाहिए ।। ५८-५९ ।। 'निश्चित उपवास के द्वारा मैं श्रीभगवान् को सन्तुष्ट करता हूँ' इस संकल्प को करके श्रीभगवान् के सन्निकट में ही उपवास आदि नियमों को करना चाहिए ।। ६० ।। पुनः प्रार्थना करनी चाहिए कि- हे भगवन् ! आज से लेकर मेरे लिए विशेष दिन पर्यन्त मुझमें काम, क्रोध आदि विल्कुल न रहें ।। ६१।। यदि यजमान अधिक दिनों का उपवास करने में असमर्थ हो तो उसे एक दिन तथा एक रात का उपवास करके, हवन करके भगवान् श्रीधर का नित्यपूजन करके स्तुतिपूर्वक विसर्जन करना चाहिए ।। ६२ ।। श्रीभगवान् के विसर्जन का मन्त्र है- **ओम् ह्रीं श्रीं श्रीधराय त्रैलोक्यमोहनाय नमः** ।। ६३ ।।

**इस तरह आदिमहापुराण अग्निपुराण का सर्वदेवता साधारण पवित्रकारोपण विधि कथन नामक तैतीसवाँ अध्याय सम्पूर्ण हुआ ॥ ३३ ॥**

**अग्निदेव ने कहा**— 'नमो ब्रह्मण्यदेवाय श्रीधरायाव्यात्मने । ऋज्यजुः सामरूपाय शब्ददेहाय विष्णवे ।' अर्थात् ब्राह्मणों को देवता मानने वाले, लक्ष्मीपति, निर्विकारस्वरूप, ऋक् यजुः तथा सामवेदस्वरूप, शब्दशरीर भगवान् विष्णु को नमस्कार है । इस मंत्र को पढ़ते हुए यज्ञशाला में प्रवेश करके उसको अलंकृत करे सायंकाल में समस्त मण्डलों को चित्रित करके याग की सामग्री को एकत्रित करना चाहिए ।। १-२ ।। अर्चक अपना हाथ पैर धोकर हाथ में अर्घ्य लेकर अर्घ्य के जल से अपने शिर तथा द्वार का प्रोक्षण करके, द्वारयाग (पञ्चाङ्ग) प्रारम्भ करे तथा तोरणाधिष्ठातृ देवों का पूजन करे । पीपल, गूलर, बड़ तथा पाकड़ की लकड़ी के पूर्वादि दिशाओं के द्वार होते हैं । पूर्व दिशा के द्वार पर ऋग्वेद, इन्द्र तथा शोभन की, दक्षिण दिशा पर यजुर्वेद यम तथा सुभद्र की, पश्चिम दिशा के द्वार पर सामवेद, वरुण तथा सुधन्वा की एवं उत्तर दिशा के द्वार पर अथर्ववेद, सोम तथा सुहोत्र की पूजा करनी चाहिए ।। ३-५ ।। यज्ञशाला के प्रत्येक द्वार पर अपने नाम

सामापश्च सुधन्वाख्यं सोमाथर्वसुहोत्रकम् ॥ ५॥ तोरणान्ताः पताकाश्च कुमुदाद्या घटद्वयम्। द्वारि द्वारि स्वनाम्नार्च्याः पूर्वे पूर्णश्च पुष्करः ॥ ६ ॥ सम्भवप्रभवौ सौम्ये द्वारपांश्चैव पूजयेत् ॥ ७॥ अस्त्रजप्तपुष्पक्षेपाद्विघ्नानुत्सार्य संविशेत् । भूतशुद्धिं विधायाथ विन्यस्य कृतमुद्रकः ॥ ८ ॥ फट्कारान्तं शिखां जप्त्वा सर्षपान्दिक्षु निक्षिपेत् । वासुदेवेन गोमूत्रं सङ्कर्षणेन गोमयम् ॥ ९ ॥ प्रद्युम्नेन पयस्तज्जाद्दधि नारायणाद् घृतम् । एकद्वित्र्यादिवारेण घृताद्वै भागतोऽधिकम् ॥ १० ॥ घृतपात्रे तदेकत्र पञ्चगव्यमुदाहृतम् । मण्डपप्रोक्षणायैकं चापरं प्राशनाय च ॥ ११ ॥ स्नानाय दशकुम्भेषु इन्द्राद्याँल्लोकपान्यजेत् । पूज्याज्ञां श्रावयेत्तांश्च स्थातव्यं चाज्ञया हरेः ॥ १२ ॥ यागद्रव्यादि संरक्ष्य विकिरान् विकरेत्ततः । मूलाष्टशतसञ्जप्तान् कुशकूर्चान् हरेच्च तान् ॥ १३ ॥ ऐशान्यां दिशि तत्रस्थं स्थाप्य कुम्भं च वर्धनीम् । कुम्भे साङ्गं हरिं प्राच्य वर्धन्यामस्त्रमर्चयेत् ॥ १४ ॥ प्रदक्षिणं यागगृहं वर्धनीछिन्नधारया । सिञ्चन्नयेत्ततः कुम्भं पूजयेच्च स्थिरासने ॥ १५ ॥ सपञ्चरत्नवस्त्राढ्ये कुम्भे गन्धादिभिर्हरिम् । वर्धन्यां हेमगर्भायां यजेदस्त्रं च वामतः ॥ १६ ॥ तत्समीपे वास्तुलक्ष्मीभूविनायकमर्चयेत् । स्नपनं कल्पयेद् विष्णोः सङ्क्रान्त्यादौ तथैव च ॥ १७ ॥ पूर्णकुम्भानवस्थाप्य नवकोणेषु निर्व्रणान् । पाद्यमर्घ्यं चाचमनं पञ्चगव्यं च निक्षिपेत् ॥ १८ ॥ पूर्वादिकलशेऽग्न्यादौ पञ्चामृतजलादिकम् । दधिक्षीरं मधूष्णोदं पाद्यं स्याच्चतुरङ्गकम् ॥ १९ ॥ पद्मश्यामाकदूर्वाश्च विष्णुपत्नी च पाद्यकम् । तथाष्टाङ्गार्घ्यमाख्यातं यवगन्धफलाक्षतम् ॥ २०॥ कुशाः सिद्धार्थपुष्पाणि तिला द्रव्याणि चाऽऽहरेत्। लवङ्गकक्कोलयुतं दद्यादाचमनीयकम् ॥२१॥ स्नपयेन्मूलमन्त्रेण देवं पञ्चामृतैरपि । शुद्धोदं मध्यकुम्भेन देवमूर्ध्नि

से तोरण, पताका, कुमुदादि द्वारपाल तथा दो घड़ों की स्थापना करके पूजन करना चाहिए । पूर्व द्वार पर पूर्ण तथा पुष्कर नामक द्वारपाल का, दक्षिण द्वार पर आनन्द तथा नन्दन का, पश्चिम द्वार पर वीरसेन तथा सुषेण का तथा उत्तर द्वार पर सम्भव तथा प्रभव नामक द्वारपालों का पूजन करना चाहिए ।। ६-७ ।। अस्त्र मन्त्र का जप करके, पुष्पों को चारो तरफ विखेरकर, विघ्नों को दूर करके यज्ञशाला में प्रवेश करना चाहिए । भूतशुद्धि करके उसके पश्चात् सामान्य एवं विशेष मुद्राओं (जिनका वर्णन २६वें अध्याय में किया जा चुका है) को करना चाहिए । अङ्गन्यास करके पुनः फट्कार पर्यन्त शिखामन्त्र का जप करके चारो दिशाओं में गौर सर्षप छींटे । पञ्चगव्य बनाने में वासुदेवमन्त्र से गोमूत्र को, सङ्कर्षण मन्त्र से गोमय (गोबर) को, प्रद्युम्न मन्त्र से दूध को, प्रद्युम्नपुत्र (अनिरुद्ध) मन्त्र से दधि को एवं नारायण मन्त्र से घी को मिलाना चाहिए । अन्य द्रव्यों को घी की अपेक्षा- क्रमशः एक, दो, तीन और चार भाग अधिक मिलाना चाहिए । इन सभी पदार्थों को किसी घी के पात्र में मिलाना चाहिए, इसे ही पञ्चगव्य कहते हैं। इसके एक भाग से मण्डप का प्रोक्षण करना चाहिए तथा दूसरे भाग से आचमन एवं स्नान करना चाहिए । दश कुम्भों पर इन्द्रादि दश लोकपालों की पूजा करनी चाहिए । पूजा करके उन सबों को सुनाना चाहिए कि आप लोगों को यहाँ भगवान् की आज्ञा से स्थित रहना चाहिए ।। ८-१२ ।। याग की सामग्री की रक्षा करके छींटने वाली सामग्री को छींट देना चाहिएँ पुनः मूलमन्त्र का अष्टोत्तरशत जप करके कुश की कूंची से उन सबों को बिटोर लेना चाहिए ।। १३ ।। पुनः ईषानकोण में कुम्भ की स्थापना करके उसके सन्निकट में वर्धनी स्थापित करे । कुम्भ में श्रीहरि की साङ्ग पूजा करके वर्धनी में अस्त्र की पूजा करनी चाहिए ।। १४ ।। वर्धनी (कमण्डलु) की जल धारा से सिञ्चते हुए, प्रदक्षिणा करते हुए उस घड़े को यज्ञशाला में लाकर उसको स्थिर आसन पर रखकर पूजन करना चाहिए ।। १५ ।। पञ्चरत्न तथा वस्त्र से सुशोभित उस कुम्भ पर श्रीहरि की चन्दन आदि से पूजा करके घट को वायीं ओर रखकर सुवर्ण युक्त वर्धनी में अस्त्र की पूजा करनी चाहिए ।। १६ ।। उसके समीप ही, वास्तु, लक्ष्मी तथा पृथ्वी की पूजा करनी चाहिए । उसी प्रकार से संक्रान्ति आदि के दिन विष्णु के स्नान की व्यवस्था करनी चाहिए।।१७।। शेष नव कोणों में निश्छिद्र नव जलपूर्ण घड़ों की स्थापना करके, पाद्य, अर्घ्य, आचमन तथा पञ्चगव्य उनके ऊपर छिड़कना चाहिए ।। १८ ।। पूर्वादि दिशाओं तथा अग्न्यादि कोणों में स्थापित पञ्चामृत, दधि, दुग्ध, मधु तथा दर्भजल मिश्रित करके चतुरङ्गक पाद्य देना चाहिए ।। १९ ।। कमल, सावाँ, दूर्वा, तुलसी, यव, चन्दन, फल तथा अक्षत को मिलाकर अष्टाङ्ग अर्घ्य देना चाहिए ।। २० ।। कुश, सिद्धार्थपुष्प (पीली सरसो का फूल) तिल तथा द्रव्य एकत्रित करके लवङ्ग तथा ककोल से युक्त जल से आचमन का जल देना चाहिए ।। २१ ।। श्रीभगवान् का मूलमन्त्र

विनिक्षिपेत्॥ २२ ॥ कलशान्निः सृतं तोयं दूर्वाग्रं संस्पृशेन्नरः । शुद्धोदकेन पाद्यं च अर्घ्यमाचमनं ददेत् ॥ २३ ॥ परिमृज्य पटेनाङ्गं सवस्त्रं मण्डलं नयेत् । तत्राभ्यर्च्याचरेद् होमं कुण्डादौ प्राणसंयमी ॥ २४ ॥ प्रक्षाल्य हस्तौ रेखाश्च तिस्रः पूर्वाग्रगामिनीः । दक्षिणादुत्तरान्ताश्च तिस्रश्चैवोत्तराग्रगाः॥२५॥ अर्घ्योदकेन सम्प्रोक्ष्य योनिमुद्रां प्रदर्शयेत् । ध्यात्वात्मरूपं चाग्निं तु योन्या कुण्डे क्षिपेन्नरः ॥ २६ ॥ पात्राण्यासदयेत्पश्चाद् दर्भस्त्रुक्स्त्रुवकादिभिः। बाहुमात्राः परिधय इघ्मव्रश्चनमेव च ॥ २७ ॥ प्रणीता प्रोक्षणीपात्रमाज्यस्थालीघृतादिकम् । प्रस्थद्वयं तण्डुलानां युग्मं युग्ममधोमुखम् ॥ २८ ॥ प्रणीता प्रोक्षणीपात्रे न्यसेत्प्रागग्रगं कुशम् । अद्भिः पूर्य प्रणीतां तु ध्यात्वा देवं प्रपूज्य च ॥ २९ ॥ प्रणीतां स्थापयेदग्नेर्द्रव्याणां चैव मध्यतः। प्रोक्षणीमद्भिः सम्पूर्य प्राच्र्य दक्षे तु विन्यसेत् ॥ ३० ॥ चरुं च स्त्रपयेदग्नौ ब्रह्माणं दक्षिणेन्यसेत्। कुशानास्तीर्य पूर्वादौ परिधीन् स्थापयेत् ततः॥३१॥ वैष्णवीकरणं कुर्याद्गर्भाधानादिना नरः । गर्भाधानं पुंसवनं सीमन्तोन्नयनं जनिः ॥ ३२ ॥ नामादिसमावर्तनान्तं जुहुयादष्टचाऽऽहुतीः। पूर्णाहुतिं प्रतिकर्म स्त्रुचास्त्रुक्सुयुक्तया ॥ ३३ ॥ कुण्डमध्ये ऋतुमतीं लक्ष्मीं सञ्चिन्त्य होमयेत् । कुण्डलक्ष्मीः समाख्याता प्रकृतिस्त्रिगुणात्मिका॥३४॥ सा येनिः सर्वभूतानां विद्यामन्त्रगणस्य च । विमुक्तेः कारणं वह्निः परमात्मा तु मुक्तिदः ॥ ३५ ॥ प्राच्यां शिरः समाख्यातं बाहू कोणे व्यवस्थितौ। ईशानाग्नेयकोणे तु जङ्घे वायव्यनैर्ऋते ॥ ३६ ॥ उदरं कुण्डमित्युक्तं योनिर्योनिर्विधीयते । गुणत्रयं मेखलाः स्युर्ध्यात्वैवं समिधो दश ॥ ३७ ॥ पञ्चाधिकास्तु जुहुयात् प्रणवान् मुष्टिमुद्रया । पुनराघारौ जुहुयाद् वाय्वग्न्यन्तं ततः श्रपेत् ॥ ३८ ॥ ईशान्तं मूलमन्त्रेण आज्यभागौ तु होमयेत् ।

---

तथा पञ्चामृत से स्नान कराकर उनके ऊपर बीच के घड़े से शुद्धोदक डाले ।। २२ ।। कलश से निकाले गए जल को दूर्वा के अग्रभाग से छूना चाहिए । शुद्धोदक से ही पाद्य अर्घ्य तथा आचमन कराना चाहिए। २३ ।। किसी वस्त्र से श्रीभगवान् के अङ्गों को पोंछकर वस्त्र पहनाकर भगवान् को मण्डप में ले जाना चाहिए । वहाँ पर श्रीभगवान् की अच्छी तरह से पूजा करके प्राणों का संयम करके (प्राणायाम करके) कुण्ड आदि में होम करना चाहिए ।। २४ ।। हाथ धोकर स्थण्डिल अथवा कुण्ड में पहलें पश्चिम से पूर्व की ओर जाने वाली तीन रेखाओं को तथा दक्षिण से उत्तर की ओर तीन रेखाओं को खींचना चाहिए ।। २५ ।। पुनः उन रेखाओं पर अर्घ्य जल से सिञ्चन करके योनिमुद्रा दिखाए । पुनः आत्मस्वरूप का ध्यान करके योनिमार्ग से अग्नि को कुण्ड में डालना चाहिए।।२६।। उसके पश्चात् पात्रासादन करना चाहए । कुश,स्रुक्, स्रुवा, बाहों के बराबर परिधियाँ, इध्मव्रश्चन (कुल्हाड़ी) प्रणीता, प्रोक्षणी पात्र, आज्यस्थाली तथा घी आदि दो दो प्रस्थ (पसेरी) चावल भरकर दो औंधामुख पात्र रखना चाहिए ।। २७-२८।। प्रणीता को प्रोक्षणी पात्र में रखकर उसके ऊपर पूर्वाग्र कुश रखे । जल से प्रणीता को भरकर श्रीभगवान् का ध्यान करके उनका पूजन करना चाहिए । अग्नि तथा द्रव्यों के बीच में प्रणीता की स्थापना करे (रखे ) । फिर प्रोक्षणी को जल से भरकर पुनः पूजा करके उसे दाहिनी ओर रखे ।। २९-३० ।। अग्नि में चरु डाले तथा ब्रह्मा की कुण्ड के पश्चिम भाग में स्थापना करे । पूर्वादि दिशाओं में कुशों को फैलाकर उसके पश्चात् परिधियों की स्थापना करे ।। ३१ ।। तदनन्तर गर्भाधान आदि संस्कारों के द्वारा अग्नि का वैष्णवीकरण करे । गर्भाधान, पुंसवन, सीमन्तोनयन, जातकर्म, नामकरण से लेकर समावर्तन संस्कार पर्यन्त के समस्त संस्कार के लिए आठ-आठ आहुतियाँ देनी चाहिए । प्रत्येक कर्म के लिए स्रुक् तथा स्रुवा को मिलाकर पूर्णाहुति देनी चाहिए ।। ३२-३३ ।। ऋतुमती लक्ष्मी का (कुण्ड में) ध्यान करके हवन करना चाहिए, त्रिगुणात्मिका प्रकृति को ही कुण्ड लक्ष्मी कहा गया है ।। ३४ ।। वही सभी भूतों, विद्याओं तथा मन्त्रों की माता है, मुद्रा मुक्ति का साधन अग्नि है तथा भगवान् मुक्ति प्रदान करने वाले हैं ।। ३५ ।। पूर्व में कुण्ड लक्ष्मी के शिर ईशान तथा अग्नि कोण में दोनों भुजाएँ, वायव्य तथा नैऋत्य कोण में दोनों जंघे होते हैं, कुण्ड ही उसका उदर है, योनि ही उसकी योनि है, तीनों मेखलाएँ ही उसके तीन गुण हैं, इस तरह से ऋतुमती कुण्ड लक्ष्मी का ध्यान करके उसमें पन्द्रह समिधाएँ प्रणवोच्चारणपूर्वक मुष्टिमुद्रा से डालनी चाहिए । तदनन्तर वायव्यकोण से लेकर अग्निकोण पर्यन्त आघार होम करना चाहिए ।। ३६-३८ ।। इसके पश्चात् नैर्ऋत्य कोण पर्यन्त मूलमन्त्र से आज्यभाग की दो आहुतियों को देना चाहिए । द्वादशाक्षर मन्त्र से उत्तर में तथा दक्षिण एवं कुण्ड के मध्य में व्याहृतियों से हवन करना चाहिए । कमलदल के मध्य में विराजमान संस्कारयुक्त, सात जिह्वा वाले, करोड़ों सूर्य के

उत्तरे द्वादशान्तेन दक्षिणे तेन मध्यतः॥ ३९ ॥ व्याहृत्या पद्ममध्यस्थं ध्यायेद् वह्निं तु संस्कृतम् । वैष्णवं सप्तजिह्वं च सूर्यकोटिसमप्रभम् ॥ ४० ॥ चन्द्रवक्त्रं च सूर्याक्षं जुहुयाच्छतमष्ट च । तदर्धं चाष्टमूलेन अङ्गानां च दशांशतः ॥ ४१ ॥

इत्यादिमहापुराण आग्नेये पवित्रकारोपणसम्बन्धिपूजाहोमादिविधिकथनं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

## अथ पञ्चत्रिंशोऽध्यायः

## पवित्राधिवासनविधिः

अग्निरुवाच— **सम्पाताहुतिनासिच्य पवित्राण्यधिवासयेत् । नृसिंहमन्त्रजप्तानि गुप्तान्यस्त्रेण तानि तु ॥ १ ॥ वस्त्रसंवेष्टितान्येव पात्रस्थान्यभिमन्त्रयेत्। बिल्वाद्यद्भिः प्रोक्षितानि मन्त्रेण चैकधा द्विधा ॥ २ ॥ कुम्भपात्रे तु संस्थाप्य रक्षां विज्ञाप्य देशिकः । दन्तकाष्ठं चामलकं पूर्वे सङ्कर्षणेन तु ॥ ३ ॥ प्रद्युम्नेन भस्मतिलान् दक्षे गोमयमृत्तिकाम् । वारुणे चानिरुद्धेन सौम्ये नारायणेन च ॥ ४ ॥ दर्भोदकं चाथ हृदा अग्नौ कुङ्कुमरोचनम् । ऐशान्यां शिरसा धूपं शिखया नैर्ऋतेऽप्यथ ॥ ५ ॥ मूलपुष्पाणि दिव्यानि कवचेनाथ वायवे । चन्दनाम्ब्वक्षतदधिदूर्वाश्च पुटिकास्थिताः ॥ ६ ॥ गृहं त्रिसूत्रेणाऽऽवेष्ट्य पुनः सिद्धार्थकान् क्षिपेत्। दद्यात् पूजाक्रमेणाथ स्वैः स्वैर्गन्धपवित्रकम् ॥ ७ ॥ मन्त्रैर्वै द्वारपादिभ्यो विष्णुं कुम्भे त्वनेन च । विष्णुतेजोद्भवं रम्यं सर्वपातकनाशनम् ॥ ८ ॥ सर्वकामप्रदं देव तवाङ्गे धारयाम्यहम् । सम्पूज्य धूपदीपाद्यैर्व्रजेद् द्वारसमीपतः ॥ ९ ॥ गन्धपुष्पाक्षतोपेतं**

---

समान कान्ति वाले, चन्द्रमा के सदृश मुख तथा सूर्य के सदृशनेत्र वाले वैष्णवाग्नि का ध्यान करके अष्टोत्तरशत आहुति देनी चाहिए। उसके आधे भाग से आठ अधिक तथा सम्पूर्ण अंगों के दशांश मूलमन्त्र से आहुति देनी चाहिए ।। ३९-४१ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का पवित्रकारोपण सम्बन्धी पूजा तथा होमादि विधि वर्णन नामक चौंतीसवाँ अध्याय सम्पूर्ण हुआ ॥ ३४ ॥**

**अग्निदेव ने कहा–** सम्पात आहुति के द्वारा सींच कर पवित्रों का अधिवास कराना चाहिए । नृसिंह मन्त्र तथा अस्त्र मन्त्र का जप करके पवित्रों को वस्त्र में छिपाकर उन्हें वस्त्रवेष्टित रूप से ही किसी पात्र में रखकर अभिमन्त्रित करना चाहिए । मन्त्र पढ़कर एक अथवा दो बार विल्व आदि के जल से पवित्र का प्रोक्षण करे । पुनः उसे मिट्टी के पात्र में रखकर आचार्य उसकी रक्षा करें । संकर्षणमन्त्र से पूर्वदिशा में दन्तधावन और आँवला, प्रद्युम्न मन्त्र से भस्म तथा तिल दक्षिण दिशा में, अनिरुद्ध मन्त्र से पश्चिम दिशा में गोबर तथा मिट्टी, तथा उत्तर दिशा में नारायण मन्त्र से कुश तथा जल रखना चाहिए । हृदयन्यास के मन्त्र से अग्निकोण में कुंकुम तथा गोरोचन, शिरोन्यास मन्त्र से ईशानकोण में धूप, शिरोन्यास मन्त्र से नैऋत्य कोण में दिव्य मूलपुष्पों को, पुनः कवचन्यास मन्त्र से वायव्य कोण में एक दोने में चन्दन, जल, अक्षत,दधि तथा दूब रखना चाहिए ।। १-६ ।। तदनन्तर गृह को त्रिसूत्री से वेष्टित करके पीली सरसो छिड़कना चाहिए । पुनः पूजा के क्रम से अपने अपने मन्त्रों से गन्ध (चन्दन) तथा पवित्र को द्वारपालों को चढ़ाना चाहिए । विष्णु को पवित्रक चढ़ाने का मन्त्र है- '**विष्णुतेजोद्भवं रम्यं सर्वपातकनाशनम् । सर्वकामप्रदं देव तवाङ्गे धारयाम्यहम्।**' अर्थात् हे देव ! विष्णु तेज से उत्पन्न, मनोहर, सभी पापों को विनष्ट करने वाले तथा सभी कामनाओं को प्रदान करने वाले पवित्रक को आपके अङ्गों में मैं धारण कराता हूँ । पुनः श्रीभगवान् की धूप तथा दीप आदि से पूजा करके द्वार के समीप जाना चाहिए ।। ७ -९ ।। पुनः गन्ध तथा पुष्प से युक्त पवित्रक को स्वयम् भी इस मन्त्र से धारण करना चाहिए- '**पवित्रं वैष्णवं**

पवित्रं चाऽऽत्मनोऽर्पयेत् । पवित्रं वैष्णवं तेजो महापातकनाशनम् ॥ १० ॥ धर्मकामार्थसिद्ध्यर्थं स्वकेऽङ्गे धारयाम्यहम् । आसने परिवारादौ गुरौ दद्यात्पवित्रकम् ॥ ११ ॥ गन्धादिभिः समभ्यर्च्य गन्धपुष्पाक्षतादिभिः । विष्णुतेजोद्भवेत्यादिमूलेन हरयेऽर्पयेत् ॥ १२ ॥ बह्निस्थाय ततो दत्त्वा देवं सम्प्रार्थयेत् ततः । क्षीरोदधिमहानागशय्यावस्थितविग्रह ॥ १३ ॥ प्रातस्त्वां पूजयिष्यामि सन्निधौ भव केशव ! इन्द्रादिभ्यस्ततो दत्त्वा विष्णुपार्षदके बलिम् ॥ १४ ॥ ततो देवाग्रतः कुम्भं वासोयुगसमन्वितम् । रोचनाचन्द्रकाश्मीरगन्धाद्युदकसंयुतम् ॥ १५ ॥ गन्धपुष्पादिनाऽऽभूष्य मूलमन्त्रेण पूजयेत् । मण्डपाद् बहिरागत्य विलिप्ते मण्डलत्रये ॥ १६ ॥ पञ्चगव्यं चरुं दन्तकाष्ठं चैव क्रमाद् भजेत् । पुराणश्रवणं स्तोत्रं पठञ्जागरणं निशि॥१७॥ परप्रेषकबालानां स्त्रीणां भोगभुजां तथा । सद्योऽधिवासनं कुर्याद्विना गन्धपवित्रकम् ॥ १८ ॥

इत्यादिमहापुराण आग्नेये पवित्राधिवासनविधिर्णनं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

## अथ षट्त्रिंशोऽध्यायः

## विष्णुपवित्रारोपणविधिः

अग्निरुवाच– **प्रातः स्नानादिकं कृत्वा द्वारपालान् प्रपूज्य च । प्रविश्य गुप्ते देशे च समाकृष्याथ धारयेत् ॥ १ ॥ पूर्वाधिवासितं द्रव्यं वस्त्राभरणगन्धकम् । निरस्य सर्वं निर्माल्यं देवं संस्नाप्य पूजयेत् ॥ २ ॥ पञ्चामृतैः कषायैश्च शुद्धगन्धोदकैस्ततः। पूर्वाधिवासितं दद्याद् वस्त्रं गन्धं च पुष्पकम् ॥ ३ ॥ अग्नौ हुत्वा नित्यवच्च देवं सम्प्रार्थयेन्नमेत् । समर्प्य कर्म देवाय पूजां नैमित्तिकीं चरेत् ॥ ४ ॥ द्वारपालविष्णुकुम्भवर्धनीः**

---

**तेजो महापातकनाशनम्। धर्मकामार्थ सिद्ध्यर्थं स्वकेऽङ्गे धारयाम्यहम् ॥**' अर्थात्– धर्म, काम तथा अर्थ की प्राप्ति के लिए वैष्णवतेज से समन्वित महापातक को विनष्ट करने वाले पवित्रक को मैं अपने अङ्ग में धारण कर रहा हूँ । आसन पर परिवार आदि में, तथा गुरु को भी पवित्रक देना चाहिए ।। १०-११ ।। चन्दन आदि से तथा गन्ध, पुष्प तथा अक्षत आदि से पूजन करके '**विष्णुतेजोद्भवं रम्यम्**' इत्यादि उपर्युक्त मन्त्र से श्री हरि को भी पवित्रक अर्पित करें ।। १२ ।। पुनः अग्नि में विद्यमान श्रीभगवान् को पवित्रक प्रदान करके प्रार्थना करनी चाहिए– '**क्षीरोदधिमहानाग शय्यावस्थित विग्रह। प्रातस्त्वां पूजयिष्यामि सन्निधौ भव केशव ।**' अर्थात्– हे क्षीरसागर में महानाग (शेषनाग) की शय्या पर अवस्थित शरीर वाले भगवन् ! केशव ! मैं आपकी प्रातःकाल पूजन करूँगा आप मेरे सन्निकटस्थ होएँ । पुनः इन्द्रादि विष्णु भगवान् के पार्षद देवताओं को बलि प्रदान कराना चाहिए ।। १३-१४ ।। उसके पश्चात् दो वस्त्रों से वेष्टित कुम्भ को गोरोचन, कर्पूर, केसर आदि से अलंकृत करके उसकी मूलमन्त्र से पूजा करनी चाहिए । मण्डप से बाहर आकर पुते हुए तीन मण्डलों में क्रमशः पञ्चगव्य चरु और दतौन रखे और रात्रि में पुराणों का श्रवण करे, स्तोत्रपाठ करते हुए रात्रि में जागरण करे ।।१५-१७ ।। दूसरों को भेजने वाले बालकों, स्त्रियों तथा भोगी पुरुषों का विना गन्ध तथा पवित्रक के ही शीघ्र ही अधिवासन करना चाहिए ।। १८ ।।

**इस तरह आदिमहापुराण अग्निपुराण का पवित्राधिवासन विधि वर्णन नामक पैंतीवाँ अध्याय सम्पूर्ण हुआ ॥ ३५ ॥**

**अग्निदेव ने कहा–** प्रातःकाल स्नान आदि करके तथा द्वारपालों आदि की पूजा करके, गुप्त स्थान में प्रवेश करके उसके पश्चात् पहले से अधिवासित वस्त्र, आभरण तथा गन्ध आदि द्रव्य को हटाकर उन्हें स्वयं धारण करे । पुनः निर्माल्य द्रव्य को हटाकर श्रीभगवान् को स्नान कराकर पूजन करना चाहिए ।। १-२ ।। क्रमशः पञ्चामृत, कषाय जल तथा शुद्ध गन्धोदक से स्नान कराकर

प्रार्थयेद्धरिम् । अतो देवेति मन्त्रेण मूलमन्त्रेण कुम्भके ॥ ५ ॥ कृष्ण कृष्ण नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् । पवित्रीकरणार्थाय वर्षपूजाफलप्रदम्॥६॥ पवित्रकं कुरुष्वाद्य यन्मया दुष्कृतं कृतम् । शुद्धो भवाम्यहं देव त्वत्प्रसादात्सुरेश्वर ॥ ७ ॥ पवित्रं च हृदाद्यैस्तु आत्मानमभिषिच्य च । विष्णुकुम्भं च सम्प्रोक्ष्य व्रजेद् देवसमीपतः ॥ ८ ॥ पवित्रमात्मने दद्याद्रक्षाबन्धं विसृज्य च । गृहाण ब्रह्मसूत्रं च यन्मया कल्पितं प्रभो ॥ ९ ॥ कर्मणां पूरणार्थाय यथा दोषो न मे भवेत् । द्वारपालासनगुरुमुख्यानां च पवित्रकम् ॥ १० ॥ कनिष्ठादि च देवाय वनमालां च मूलतः । हृदादिविष्वक्सेनान्ते पवित्राणि समर्पयेत् ॥ ११ ॥ वह्नौ हुत्वा वह्निगेभ्यो विश्वादिभ्यः पवित्रकम् । प्राच्य पूर्णाहुतिं दद्यात् प्रायश्चित्ताय मूलतः ॥ १२ ॥ अष्टोत्तरशतं वापि पञ्चोपनिषदैस्ततः। मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः ॥ १३ ॥ इयं सांवत्सरी पूजा तवास्तु गरुडध्वज । वनमाला यथा देव कौस्तुभं सततं हृदि॥१४॥ तद्वत्पवित्रतन्तूंश्च पूजां च हृदये वह । कामतोऽकामतो वापि यत्कृतं नियमार्चने॥१५॥ विधिना विघ्नलोपेन परिपूर्णं तदस्तु मे । प्रार्थ्य नत्वा क्षमाप्याथ पवित्रं मस्तकेऽर्पयेत् ॥ १६ ॥ दत्त्वा बलिं दक्षिणाभिर्वैष्णवं तोषयेद् गुरुम् । विप्रान् भोजनवस्त्राद्यैर्दिवसं पक्षमेव वा ॥ १७ ॥ पवित्रं स्नानकाले वा अवतार्य समर्चयेत् । अनिवारितमन्त्राद्यं दद्याद् भुङ्क्तेऽथ केवलम् ॥ १८ ॥ विसर्जनेऽह्नि सम्पूज्य पवित्राणि विसर्जयेत्। सांवत्सरीमिमां पूजां सम्पाद्य विधिवन्मम ॥ १९ ॥ व्रज पवित्रकेदानीं विष्णुलोकं विसर्जितः । मध्ये सोमेशयोः प्राच्य विष्वक्सेनं हि तस्य च॥२०॥

---

श्रीभगवान् पर पहले से ही अधिवासित वस्त्र, चन्दन आदि पुष्प चढ़ाना चाहिए ।। ३ ।। नित्य की भाँति अग्नि में हवन करके भगवान् की प्रार्थना करके उन्हें नमस्कार करना चाहिए । श्रीभगवान् को कर्म समर्पण करके नैमित्तिकी पूजा करनी चाहिए ।। ४ ।। फिर द्वारपाल,विष्णुकुम्भ, वर्धनी (कमण्डलु) तथा श्रीहरि की प्रार्थना **अतो देवा अवन्तु नो** इत्यादि वैदिक मन्त्र से श्रीभगवान् की प्रार्थना करनी चाहिए और मूलमन्त्र से घड़े पर पवित्रक चढ़ाकर यह प्रार्थना करनी चाहिए ।। ५ ।। हे कृष्ण आपको नमस्कार है, आप इस वर्ष पूजा का फल प्रदान करने वाले पवित्र बना देने के लिए धारण करें । मैंने जो कुछ भी पाप किया है उससे मुझे पवित्र बना दें । हे देवाधिदेव आपकी कृपा से मैं पवित्र हो रहा हूँ ।। ६-७ ।। पवित्रक तथा अपने शरीर को हृदयादिन्यास से सिक्त करके तथा विष्णुकुम्भ का प्रोक्षण करके श्रीभगवान् के समीप जाना चाहिए ।। ८ ।। पवित्रक स्वयं धारण करके भगवान् के रक्षा बन्धन को हटाकर (खोलकर) भगवान् की प्रार्थना करनी चाहिए- हे भगवन्! मेरे द्वारा रचित ब्रह्मसूत्र को आप धारण करें, जिससे कि मुझे कोई दोष न लगे तथा मेरे कर्म पूरे हों । द्वारपाल तथा आसनासीन प्रमुख आचार्यों को कनिष्ठादि पवित्रक तथा श्रीभगवान् को मूलमन्त्र से माला समर्पित करनी चाहिए । हृदय आदि से लेकर विष्वक्सेन पर्यन्त को पवित्रक समर्पित करना चाहिए ।। ९-११ ।। अग्निस्थ विश्वादि देवताओं के लिए पवित्रक का अग्नि में हवन करके, पूजन करके, प्रायश्चित्त के लिए मूलमन्त्र से पूर्णाहुति देनी चाहिए । मूलमन्त्र का अष्टोत्तरशत जप करना चाहिए । पुनः पञ्चोपनिषत् के मन्त्रों से श्रीभगवान् को मणि, मूँगा, तथा मन्दार पुष्पों की माला से पूजन करके यह प्रार्थना करनी चाहिए- हे गरुड़ध्वज भगवन् ! इस संवत्सर पूजा को आप स्वीकार करें । इस वनमाला को आप अपने हृदय पर कौस्तुभमणि के समान धारण करें । उसी प्रकार पवित्र तन्तुओं तथा पूजा को हृदय में धारण करें । सकाम तथा निष्काम रूप से मैंने इस नियमार्चन में जो कुछ भी विधिपूर्वक किया है, वह निर्विघ्न होकर मेरे लिए परिपूर्ण हो ।' इस प्रकार से प्रार्थनापूर्वक नमस्कार एवं क्षमापन करके अपने सिर पर पवित्रक को धारण करना चाहिए ।। १३-१६ ।। पुनः बलि देकर दक्षिणा से वैष्णव आचार्य को सन्तुष्ट करना चाहिए तथा ब्राह्मणों को एक दिन अथवा एक पक्ष तक भोजन तथा वस्त्र प्रदान करके सन्तुष्ट करना चाहिए ।। १७ ।। स्नान के समय पवित्रक को उतार कर पूजा करनी चाहिए, मन्त्रों से पवित्र अन्न को भोग लगाकर उसे खाना चाहिए ।।१८।। विसर्जनकाल में दिन में पूजन करके पवित्रकों का विसर्जन करना चाहिए । 'मेरी इस सांवत्सरी पूजा को विधि पूर्वक सम्पादित करके हे पवित्रक ! मेरे द्वारा विसर्जित होकर आप विष्णुलोक में जायँ। सोम तथा ईशान के बीच में विष्वक्सेन की पूजा करके, उनके पवित्रक को ब्राह्मण को समर्पित करना चाहिए ।उस पवित्रक में जितने तन्तु होते हैं, उतने हजार युग पर्यन्त अर्चक विष्णुलोक में समाहृत

पवित्राणि समभ्यर्च्य ब्राह्मणाय समर्पयेत् । यावन्तस्तन्तवस्तस्मिन् पवित्रे परिकल्पिताः ॥ २१ ॥ तावद्युगसहस्राणि विष्णुलोके महीयते । कुलानां शतमुद्धृत्य दशपूर्वान् दशापरान् ॥ २२ ॥ विष्णुलोके तु संस्थाप्य स्वयं मुक्तिमवाप्नुयात् ॥ २३ ॥

इत्यादिमहापुराण आग्नेये विष्णुपवित्रारोपणविधिनिरूपणं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

## अथ सप्तत्रिंशोऽध्यायः

## अथ संक्षेपतः सर्वदेवसाधारणः पवित्रारोपणविधिः

अग्निरुवाच– संक्षेपात्सर्वदेवानां पवित्रारोपणं शृणु। पवित्रं पूर्वलक्ष्म स्यात् स्वरसानलगं त्वयि ॥ १ ॥ जगद्योने समागच्छ परिवारगणैः सह। निमन्त्रयाम्यहं प्रातर्दद्यां तुभ्यं पवित्रकम् ॥ २ ॥ जगत्सृजे नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् । पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ॥ ३ ॥ शिव देव नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् । मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः ॥ ४ ॥ इयं सांवत्सरी पूजा तवास्तु वेदवित्पते । सांवत्सरीमिमां पूजां सम्पाद्य विधिवन्मम ॥ ५ ॥ व्रज पवित्रकेदानीं स्वर्गलोकं विसर्जितः । सूर्यदेव नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् ॥ ६ ॥ पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् । शिव देव नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् ॥ ७ ॥ पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् । गणेश्वर नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् ॥ ८ ॥ पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् । शक्तिदेवि नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् ! ॥ ९ ॥ पवित्रीकरणार्थाय वर्षपूजाफलप्रदम्। नारायणमयं सूत्रमनिरुद्धमयं वरम् ॥ १० ॥ धनधान्यायुरारोग्यप्रदं सम्प्रददामि ते । कामदेवमयं सूत्रं संकर्षणमयं वरम् ॥ ११ ॥ विद्यासन्ततिसौभाग्यप्रदं

---

होता है । अपने पहले के दस तथा बाद के दस पीढ़ी को इस तरह से सौ वंशों को विष्णुलोक में संस्थापित करके वह स्वयं मुक्त हो जाता है ।।१९-२३ ।।

**इस तरह आदिमहापुराण अग्निपुराण का विष्णुपवित्रारोपण विधि वर्णन नामक छत्तीसवाँ अध्याय सम्पूर्ण हुआ ॥ ३६ ॥**

**अग्निदेव ने कहा–** अब संक्षेप में सभी देवताओं का पवित्रारोपण सुनें । स्वरस अग्नि से युक्त पवित्रक को पूर्वोक्त समस्त लक्षणों से युक्त होना चाहिए ।। १ ।। पुनः प्रार्थना करे– हे जगत् के कारण भगवन् ! मैं आपको निमन्त्रित कर रहा हूँ । आप अपने परिवार समूह के साथ पधारें । मैं प्रातःकाल आपको पवित्रक समर्पित करूँगा ।। २ ।। हे जगत् की सृष्टि करने वाले, ब्रह्मन् आपको नमस्कार है, इस वर्ष पूजा का फल देने वाले पवित्रक को आप मुझे पवित्र बनाने के लिए स्वीकार करें ।। ३ ।। हे शिव देव ! आपको नमस्कार है । आपको नमस्कार है । देवों में सर्वश्रेष्ठ ब्रह्मन्! मणि तथा विद्रुम (मूँगा) को मालाओं तथा मन्दार कुसुम आदि से की गयी संवत्सर की पूजा आपको प्राप्त हो । हे पवित्र ! मेरी इस पूजा को विधिवत् सम्पादित करके मेरे द्वारा विसर्जित आप अब स्वर्गलोक जायँ । हे सूर्यदेव ! आपको नमस्कार है । मुझे पवित्र बनाने के लिए आप वर्षपूजा का फल प्रदान करने वाले पवित्रक को स्वीकार करें । हे शिवदेव ! आपको नमस्कार है । वर्ष पूजा का फल प्रदान करने वाले इस पवित्रक को आप मुझे पवित्र बनाने के लिए स्वीकार करें ।। ४-७ । हे गणेश्वर ! आपको नमस्कार है । मुझे पवित्र बनाने के लिए आप वर्ष पूजा का फल प्रदान करने वाले इस पवित्रक को स्वीकार करें ।। ८ ।। शक्तिदेवी ! आपको नमस्कार है । मुझको पवित्र बनाने के लिए आप इस वर्ष पूजा का फल प्रदान करने वाले पवित्रक को स्वीकार करें ।। ९ ।। यह सूत्र नारायणमय तथा अनिरुद्धमय है । धनधान्य आयु तथा आरोग्य प्रदान करने वाले इस सूत्र को मैं आपको प्रदान कर रहा हूँ ।। १० ।। यह सूत्र कामदेवमय तथा सङ्कर्षणमय है । विद्या सौभाग्य तथा सन्तान

सम्प्रददामि ते । वासुदेवमयं सूत्रं धर्मकामार्थमोक्षदम् ॥ १२ ॥ संसारसागरोत्तारकारणं प्रददामि ते । विश्वरूपमयं सूत्रं सर्वदं पापनाशनम् ॥ १३॥ अतीतानागतकुलसमुद्धारं ददामि ते । कनिष्ठादीनि चत्वारि मनुभिस्तु क्रमाद्ददे ॥ १४ ॥

**इत्यादिमहापुराण आग्नेये संक्षेपतः सर्वदेवसाधारणं पवित्रारोपणं नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥**

## अथाष्टात्रिंशोऽध्यायः

## देवालयनिर्माणफलादिवर्णनम्

अग्निरुवाच– **वासुदेवाद्यालयस्य कृतौ वक्ष्ये फलादिकम् । चिकीर्षोर्देवधामादि सहस्रजनिपापनुत् ॥ १ ॥ मनसा सद्मकर्तॄणां शतजन्माघनाशनम्। येऽनुमोदन्ति कृष्णस्य क्रियमाणं नरा गृहम् ॥ २ ॥ तेऽपि पापैर्विनिर्मुक्ताः प्रयान्त्यच्युतलोकताम् । समतीतं भविष्यञ्च कुलानामयुतं नरः ॥ ३ ॥ विष्णुलोकं नयत्याशु कारयित्वा हरेर्गृहम् । वसन्ति पितरो हृष्टा विष्णुलोके ह्यलङ्कृताः ॥ ४ ॥ विमुक्ता नारकैर्दुःखैः कर्तुः कृष्णस्य मन्दिरम् । ब्रह्महत्यादिपापौघघातकं देवतालयम् ॥ ५ ॥ फलं यन्नाप्यते यज्ञैर्धाम कृत्वा तदाप्यते । देवागारे कृते सर्वतीर्थस्नानफलं लभेत् ॥ ६ ॥ देवाद्यर्थे हतानां च रणे यत्तत्फलादिकम् । शाठ्येन पांसुना वापि कृतं धाम च नाकदम् ॥ ७ ॥ एकायतनकृत्स्वर्गी त्र्यगारी ब्रह्मलोकभाक् । पञ्चागारी शम्भु-लोकमष्टागाराद्धरौ स्थितिः ॥ ८॥ षोडशालयकारी तु भुक्तिं मुक्तिमवाप्नुयात् । कनिष्ठं मध्यमं श्रेष्ठं कारयित्वा हरेर्गृहम् ॥ ९ ॥ स्वर्गं च वैष्णवं लोकं**

---

प्रदान करने वाले इस सूत्र को मैं आपको प्रदान कर रहा हूँ ।। ११ ।। यह सूत्र वासुदेवमय है तथा धर्म, काम, अर्थ तथा मोक्ष प्रदान करने वाला है, संसार सागर को पार करने के साधनभूत इसे मैं आपको प्रदान कर रहा हूँ ।। १२ ।। यहसूत्र विश्वरूपमय है, सब कुछ देने वाला तथा पापों का नाश करने वाला है । अतीत कालिक तथा अनागतकालिक अपने कुल का उद्धार करने के लिए इसे मैं आपको प्रदान कर रहा हूँ। उपर्युक्त मन्त्रों के द्वारा कनिष्ठ आदि चारो को क्रमशः प्रदान करना चाहिए ।। १३-१४ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का संक्षेपतः सर्वदेवसाधारण पवित्रारोपण नामक सैंतीसवाँ अध्याय सम्पूर्ण हुआ ॥ ३७ ॥**

**अग्निदेव ने कहा–** श्रीभगवान् के मन्दिर निर्माण से होने वाले फल आदि का मैं अब वर्णन कर रहा हूँ । श्रीभगवान् के मन्दिर निर्माण करने की इच्छा वाले के हजारों जन्मों के पाप विनष्ट हो जाते हैं ।। १ ।। जो लोग मन से श्रीभगवान् के मन्दिर निर्माण करने का विचार करते हैं, उनके सौ जन्मों के पाप विनष्ट हो जाते हैं। जो लोग भगवान् के बनाए जाने वाले मन्दिर के निर्माण का समर्थन करते हैं ।। २ ।। वे भी पापों से मुक्त होकर भगवान् अच्युत के लोक को प्राप्त करते हैं । भगवान् के मन्दिर का निर्माण कराकर मानव अपने दस हजार बीती हुई पीढ़ी को तथा दस हजार आगे की पीढ़ी को शीघ्र ही विष्णुलोक में पहुँचा देता है । उसके पितृगण विष्णुलोक में अलंकृत होकर निवास करते हैं ।। ३-४ ।। भगवान् के मन्दिर का निर्माण करने वाला व्यक्ति नारकीय दुःखों से मुक्त हो जाता है । देवमन्दिर का निर्माण ब्रह्महत्या आदि पापसमूह को विनष्ट करने वाला है ।। ५ ।। यज्ञों के करने से जिस फल की प्राप्ति नहीं होती है, उस फल की प्राप्ति मन्दिर के निर्माण से होती है। देवमन्दिर का निर्माण करने से सभी तीर्थों में स्नान करने का फल प्राप्त हो जाता है ।। ६ ।। देवता आदि (गौ, ब्राह्मण आदि) के लिए संग्राम में मारे जाने वालों को जिन फलों की प्राप्ति होती है उस स्वर्ग आदि फल की विष्णु का मन्दिर निर्माण शठतापूर्वक (कंजूसी के कारण) मिट्टी से भी करके, प्राप्त किया जा सकता है ।। ७ ।। एक मन्दिर को बनाने वाला स्वर्गलोक को, तीन मन्दिरों को बनाने वाला ब्रह्मलोक को, पाँच मन्दिरों को बनाने वाला शिवलोक को तथा आठ मन्दिरों को बनाने वाला मनुष्य विष्णु लोक को प्राप्त करता है ।। ८ ।। सोलह मन्दिरों को

चतुरङ्गुलम्। चिबुकेन समं विद्धमविद्धं वा षडङ्गुलम् ॥ १६ ॥ गन्धपात्रं तथावर्तं शष्कुलीं कल्पयेत्तथा । अङ्गुलेनाधरः कार्यस्तस्यार्धेनोत्तराधरः॥१७॥ अर्धाङ्गुलं तथा नेत्रं वक्त्रं तु चतुरङ्गुलम् । आयामेन तु वैपुल्यात्सार्धमङ्गुलमुच्यते ॥ १८ ॥ अव्यात्तमेवं वक्त्रं व्यात्तं द्वयङ्गुलमिष्यते। नासावंशसमुच्छ्रायं मूले त्वेकाङ्गुलं मतम् ॥ १९॥ उच्छ्रायाद् द्वयङ्गुलं चाग्रे करवारोपमा स्मृता । अन्तरं चक्षुषोः कार्यं चतुरङ्गुलमानतः ॥ २०॥ द्वयङ्गुलं चाक्षिकोशं च द्वयङ्गुलं चान्तरं तयोः । तारा नेत्रत्रिभागेण दृक्तारा पञ्चमांशिका ॥ २१॥ त्र्यङ्गुलं ( लो ) नेत्रस्तिारं ( रो ) द्रोणी चार्धाङ्गुला मता । तत्प्रमाणा भ्रुवोर्लेखा भ्रुवौ चैव समे मते ॥ २२॥ भ्रूमध्यं द्वयङ्गुलं कार्यं भ्रूदैर्घ्यं चतुरङ्गुलम् । षड्विंशदङ्गुलायामं मस्तकस्य तु वेष्टनम् ॥२३॥ मूर्तीनां केशवादीनां द्वात्रिंशद्वेष्टनं भवेत् । पञ्चनेत्रा त्वधोग्रीवा विस्ताराद्वेष्टनं पुनः ॥ २४॥ त्रिगुणं तु भवेदूर्ध्वं विस्तृताष्टाङ्गुलं पुनः । ग्रीवात्रिगुणमायामं ग्रीवावक्षोन्तरं भवेत् ॥ २५॥ स्कन्धावष्टाङ्गुलौ कार्यौ त्रिकलावंशकौ शुभौ । सप्तनेत्रौ स्मृतौ बाहू प्रबाहू षेडशाङ्गुलौ॥ २६॥ त्रिकलौ विस्तृतौ बाहू प्रबाहू चापि तत्समौ । बाहुदण्डोर्ध्वतो ज्ञेयः परिणाहः कला नव ॥ २७॥ सप्तदशाङ्गुलो मध्ये कूर्परोऽर्धे च षोडश । कूर्परस्य भवेन्नाहस्त्रिगुणः कमलोद्भव ॥ २८॥ नाहः प्रबाहूमध्ये तु षोडशाङ्गुल उच्यते । अग्रहस्ते परीणाहो द्वादशाङ्गुल उच्यते॥ २९॥ विस्तारेण करतलं कीर्तितं तु षडङ्गुलम् । दैर्घ्यं सप्ताङ्गुलं कार्यं मध्या पञ्चाङ्गुला मता ॥ ३०॥ तर्जन्यनामिका चैव तस्मादर्धाङ्गुलं विना । कनिष्ठाङ्गुष्ठकः कार्यौ चतुरङ्गुलसम्मितौ॥३१॥ द्विपर्वोऽङ्गुष्ठकः कार्यः शेषाङ्गुल्यस्त्रिपर्विकाः । सर्वासां पर्वणोऽर्धेन नखमानं विधीयते ॥ ३२॥ वक्षसो यत्प्रमाणं तु जठरं तत्प्रमणतः । अङ्गुलैका भवेन्नाभिर्वेधेन च प्रमाणतः ॥ ३३॥ ततो मेढ्रान्तरं कार्यं तालमात्रं प्रमाणतः । नाभिमध्ये परीणाहो द्विचत्वारिंशदङ्गुलैः ॥ ३४॥ अन्तरं स्तनयोः

तथा शष्कुली (कानों के छिद्र की) भी रचना करनी चाहिए । एक अंगुल में नीचे के ओष्ठ को तथा आधे अंगुल में ऊपर के ओठ को बनाना चाहिए ।। १७ ।। आधे अंगुल का नेत्र तथा मुँह चार अंगुल का होना चाहिएआयाम की अपेक्षा मुख की चौड़ाई डेढ़ अंगुल अधिक होनी चाहिए ।। १८ ।। नासिका की जड़ में ऊँचाई एक अंगुल होनी चाहिए करवीर कुसुम के समान नासिका की अग्रभाग की ऊँचाई दो अंगुल की होनी चाहिए ।। १९ ।। दोनों आँखों को चार अंगुल में होना चाहिए ।। २१ ।। दोनों भौहें एक बराबर और साढ़े तीन अंगुल की होनी चाहिए । भौहें के बीच में दो अंगुल का और भौहों की लम्बाई चार अंगुल की होनी चाहिए ।। २२ ।। श्रीभगवान् श्री केशव आदि मूर्तियों के मस्तक का पूरा विस्तार छब्बीस अथवा बत्तीस अंगुल का होना चाहिए ।। २३ ।। उसके नीचे ग्रीवा (गला) पाञ्चनेत्र अर्थात् दस अंगुल की होनी चाहिए और गले के विस्तार से तीन गुना अर्थात् तीस अंगुल उसका वेष्टन (घेरा) होना चाहिए ग्रीवा की लम्बाई आठ अंगुल की होनी चाहिए।।२४।। ग्रीवा तथा वक्षस्थल का अन्तर ग्रीवा के तीन गुना अर्थात् तीस अंगुल होना चाहिए । दोनों कन्धों को आठ-आठ अंगुल का बनाना चाहिए और दोनों अंसों को तीन-तीन अंगुल का बनाना चाहिए । दोनों भुजाओं को (सात नेत्र) अर्थात् चौदह-चौदह अंगुल का होना चाहिए और यदि प्रवाहु (घुटनों) तक लटकने वाली भुजाएँ हों तो उन्हें सोलह-सोलह अंगुल का होना चाहिए । दोनों बाहुओं तथा प्रबाहुओं को तीन-तीन कला का होना चाहिए ।। २५-२६ ।। ऊपर से भुजदण्डों की मोटाई नव कला होनी चाहिए । मध्य में उसको सत्रह अंगुल होना चाहिए और कूर्पर (कोहुनी) के बीच में सोलह अंगुल ।। २७ ।। हे ब्रह्मन् ! कूर्पर कोहनी का घेरा त्रिगुणी होना चाहिए । प्रलम्बबाहू के मध्य में नाह (घेरा) तो सोलह अंगुल का होता है ।। २८ ।। हाथ के अगले भाग की मोटाई हथेली का विस्तार (छह अंगुल) होता है ।। २९ ।। हथेली की लम्बाई सात अंगुल की होती है । मध्यमा अंगुली की लम्बाई पाञ्च अंगुल की, उससे आधा अंगुल छोटी तर्जनी तथा अनामिका अंगुली को होना चाहिए ।। ३० ।। कनिष्ठा तथा अंगुष्ठ को चार-चार अंगुल का बना होना चाहिए । अंगुष्ठ को दो पर्वों वाला और शेष अँगुलियों को तीन-तीन पर्वों वाली बनाना चाहिए ।। ३१ ।। जिन अंगुलियों का पर्व जितना बड़ा हो उसके ठीक आधे का नख उस अंगुलि का बनाना चाहिए । जितनी बड़ी छाती हो उतना ही बड़ा पेट बनाना चाहिए ।। ३२ ।। नाभि को एक अंगुल गहरी होनी चाहिए।

कार्यं तालमात्रं प्रमाणतः । चूचुकौ यवमानौ तु मण्डलं द्विपदं भवेत् ॥ ३५॥ चतुष्षष्ट्यङ्गुलं कार्यं वेष्टनं वक्षसः स्फुटम् । चतुर्मुखं च तदधो वेष्टनं परिकीर्तितम् ॥ ३६॥ परिणाहस्तथा कट्याश्चतुष्पञ्चदशाङ्गुलैः। विस्तारश्चोरुमूले तु प्रोच्यते द्वादशाङ्गुलः॥ ३७॥ तस्मादभ्यधिकं मध्ये ततो निम्नतरं क्रमात् । विस्तृताष्टाङ्गुलं जानु त्रिगुणा परिणाहतः ॥ ३८॥ जंघामध्ये तु विस्तारः सप्ताङ्गुल उदाहृतः । त्रिगुणाः परिधिश्चास्य जङ्घाग्रं पञ्च विस्तरात् ॥ ३९॥ त्रिगुणा परिधिश्चास्य पादौ तालप्रमाणकौ । आयामादुत्थितौ पादौ चतुरङ्गुलमेव च ॥ ४०॥ गुल्फात्पूर्वं तु कर्तव्यं प्रमाणाच्चतुरङ्गुलम्। त्रिकलं विस्तृतौ पादौ त्र्यङ्गुलो गुह्यकः स्मृतः ॥ ४१॥ पञ्चाङ्गुलस्तु नाहोऽस्य दीर्घा तद्वत्प्रदेशिनी । अष्टमाष्टांशमध्योनाः शेषाङ्गुल्यः क्रमेण तु ॥४२॥ सपादाङ्गुलमुत्सेधमङ्गुष्ठस्य प्रकीर्तितम् । तदेव द्विगुणं कार्यमङ्गुष्ठस्य नखं तथा ॥ ४३॥ अर्धाङ्गुलं तथान्यासां क्रमान्न्यूनं तु कारयेत् । त्र्यङ्गुलौ वृषणौ कार्यौ मेढ्रं तु चतुरङ्गुलम्॥ ४४॥ परिणाहोऽत्र कोषाग्रं कर्तव्यं चतुरङ्गुलम् । षडङ्गुलपरिणाहौ वृषणौः परिकीर्तितौ ॥ ४५॥ प्रतिमा भूषणाढ्या स्यादेतदुद्देशलक्षणम् । अनयैव दिशा कार्यं लोके दृष्ट्वा तु लक्षणम् ॥ ४५॥ दक्षिणे तु करे चक्रमधस्तात् पद्ममेव च । वामे शङ्खं गदाधस्ताद् वासुदेवस्य लक्षणात् ॥ ४७॥ श्रीपुष्टी चापि कर्तव्ये पद्मवीणाकरान्विते । ऊरुमात्रोच्छ्रितायामे मालाविद्याधरौ तथा ॥ ४८॥ प्रभामण्डलसंस्थौ तौ प्रभा हस्त्यादिभूषणा । पद्माभं पादपीठं तु प्रतिमास्वेवमाचरेत् ॥ ४९ ॥

इत्यादिमहापुराण आग्नेये वासुदेवादिप्रतिमालक्षणकथनं नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

उसके एक हाथ नीचे मेढ्र (लिङ्ग) बनाना चाहिए ।। ३३ ।। नाभि के बीच की मोटाई बयालिस अंगुल होना चाहिए । दोनों स्तनों का अन्तर एक बित्ता होना चाहिए ।। ३४ ।। चुचुक (स्तन के अग्रभाग) को यव के बराबर होना चाहिए । स्तन का घेरा दो पद का होना चाहिए । वक्षस्थल का घेरा चौसठ अंगुल का होना चाहिए ।। ३५ ।। वक्षःस्थल के नीचे तथा चारों ओर के घेरे को वेष्टन कहा जाता है । कमर का घेरा साठ अंगुल चाहिए । उसका मध्यभाग उससे अधिक और निचला भाग क्रमशः कम होना चाहिए ।। ३७ ।। घुटने का विस्तार आठ अंगुल का और उसका घेरा चौबीस अंगुल का होना चाहिए । जंघा के मध्यभाग का विस्तार सात अंगुल होना चाहिए ।। ३८ ।। उसका घेरा उसके तीन गुना अर्थात् इक्कीस अंगुल का होना चाहिए । जंघा के अग्रभाग का विस्तार पाँच अंगुल और उसका घेरा पन्द्रह अंगुल होना चाहिए । दोनों पैरों को एक-एक बीतों का होना चाहिए ।। ३९ ।। अपने विस्तार से पैरों की ऊँचाई चार अंगुल होनी चाहिए । मुट्ठी से पहले का भाग भी चार अंगुल का ही बनाना चाहिए । गुप्ताङ्ग तीन अंगुल का होना चाहिए । उसकी घेरा पाँच अंगुल का होना चाहिए । उसी प्रकार से पैर के अंगूठे को बड़ा होना चाहिए । अंगूठे के ऊँचाई सवा अंगुल बतलायी गयी है । अन्य अंगुलियों के नख की अपेक्षा अंगूठे के नख को दुगुना करना चाहिए । अन्य अंगुलियों के नख को आधा अुगल का और उनको क्रमशः छोटी-छोटी होनी चाहिए।।४१-४३।। दोनों अण्डकोषों को तीन-तीन अंगुल का तथा शिश्न (लिङ्ग) को चार अंगुल का बनाना चाहिए । उसके ऊपर का भाग चार अंगुल का होना चाहिए ।। ४४ ।। दोनों अण्डकोषों का घेरा छह-छह अंगुल का होना चाहिए । प्रतिमा को भूषणों से भूषित होनी चाहिए । यह प्रतिमा का लक्षण बतलाया गया है ।। ४५ ।। इसी प्रकार से लोक में देखकर लक्षण बनाना चाहिए । भगवान् के ऊपर के दाहिने हाथ में चक्र और नीचे के दाहिने हाथ में पद्म, ऊपर के बाएँ हाथ में शंख और नीचे के बाएँ हाथ में गदा बनानी चाहिए । यही वासुदेव भगवान् की मूर्ति का लक्षण है। भगवान् के सन्निकट में हाथ में कमल लिए हुए लक्ष्मी जी की तथा वीणा लिए हुए पुष्टि देवी की मूर्ति बनानी चाहिए ।।४६-४७।। इन दोनों की ऊँचाई भगवान् के जंघे के बराबर होनी चाहिए। इसके अतिरिक्त प्रभामण्डल को हाथी आदि से अलंकृत होना चाहिए । भगवान् की चरण चौकी कमल के आकार की होनी चाहिए । इस प्रकार से भगवान् की प्रतिमा की अर्चना करनी चाहिए ।।४६-४९।।

**इस तरह से आदिमहापुराण अग्निपुराण का वासुदेवादि प्रतिमा लक्षण वर्णन नामक चौवालिसवाँ अध्याय सम्पूर्ण हुआ ॥ ४४ ॥**

अथ पञ्चत्वारिंशोऽध्यायः

## पिण्डिकादिलक्षणम्

हयग्रीव उवाच– **पिण्डिकालक्षणं वक्ष्ये दैर्घ्येण प्रतिमासमा । उच्छ्रायः प्रतिमार्धं तु चतु;षष्टिपुटां च ताम् ॥ १ ॥ त्यक्त्वा पङक्तिद्वयं चाधस्तदूर्ध्वं यत्तु कोष्ठकम्। समन्तादुभयोः पार्श्वे अन्तस्थं परिमार्जयेत् ॥ २ ॥ ऊर्ध्वं पङ्क्तिद्वयं त्यक्त्वा अधस्ताद्यत्तु कोष्ठकम् । अन्तः सम्मार्जयेद्यत्नात्पार्श्वयोरुभयोः समम् ॥ ३ ॥ तयोर्मध्यगतौ तत्र चतुष्कौ मार्जयेत्ततः । चतुर्धा मार्जयित्वा तु ऊर्ध्वपङ्क्तिद्वयं बुधः । । ४ ॥ मेखला भागमात्रा स्यात् खातं तस्यार्धमानतः । भागं भागं परित्यज्य पार्श्वयोरुभयोः समम् ॥ ५ ॥ दत्त्वा चैकं पदं बाह्ये प्रमाणं कारयेद् बुधः । त्रिभागेण च भागस्याग्रे स्यात्तोयविनिर्गमः ॥ ६ ॥ नानाप्रकारभेदेन भद्रेयं पिण्डिका शुभा । अष्टताला तु कर्तव्या देवी लक्ष्मीस्तथा स्त्रियः ॥ ७ ॥ भ्रुवौ यवाधिके कार्ये यवहीना तु नासिका । गोलकेनाधिकं वक्त्रमूर्ध्वं तिर्यग्विवर्जितम् ॥ ८ ॥ आयते नयने कार्ये त्रिभागोनैर्यवैस्त्रिभिः । तदर्धेन तु वैपुल्यं नेत्रयोः परिकल्पयेत् ॥ ९ ॥ कर्णपाशोऽधिकः कार्यः सृक्कणी समसूत्रतः । नम्रं कलाविहीनं तु कुर्यादंशद्वयं तथा ॥ १० ॥ ग्रीवा सार्धकला कार्या तद्विस्तारोपशोभिता । नेत्रं विना तु विस्तारौ ऊरू जानू च पिण्डिका ॥ ११ ॥ अङ्घ्रिपृष्ठौ स्फिचौ कट्यां यथायोगं प्रकल्पयेत् । सप्तांशोनास्तथाङ्गुल्यो दीर्घं विष्कम्भनाहतम् ॥१२॥ नेत्रैकवर्जितायामा जंघोरू च तथा कटिः । मध्यपार्श्वं च तद्वृत्तं घनं पीनं कुचद्वयम्॥१३॥**

---

**श्री हयग्रीव भगवान् ने कहा–** अब मैं पिण्डिका का लक्षण बतला रहा हूँ । पिण्डिका की लम्बाई प्रतिमा के समान ही होनी चाहिए, उसकी ऊँचाई प्रतिमा की ऊँचाई की आधी होनी चाहिए। उसमें चौंसठ खाना बनाना चाहिए । दोनों तरफ से आठ-आठ लाइन खींचने से चौंसठ खाने बन जाते हैं । नीचे की दो पक्ति छोड़कर ऊपर जो खाना हो उसके दोनों बगल में बीच का भाग पूरी तरह से धो देना चाहिए । ऊपर की दो पंक्ति छोड़कर उसके नीचे जो कोष्ठ हो उसके बीच तथा दोनों बगल के भागों को पूरी तरह से धो देना चाहिए ।। १-३ ।। उसके पश्चात् बीच के जो चार कोष्ठक हैं उन सबों को भी धो दे । विद्वान् को चाहिए कि वह ऊपर की दो पंक्तियों को चार भागों में विभक्त करे ।। ४ ।। मेखला जितने भाग में हो उसके आधे भाग में खात (गड्ढा) होनी चाहिए। उसके दोनों भाग में बराबर भाग छोड़कर उसके एक भाग में नाली बनानी चाहिए । उस भाग के आगे से तीन भाग में पानी निकलने का रास्ता होना चाहिए ।। ५-६ ।। पिण्डिका के अनेक प्रकारों में यह भद्रा नामक पिण्डिका है । लक्ष्मी देवी तथा अन्य स्त्रियों की प्रतिमा आठ ताल की होनी चाहिए । दोनों भौहों को नासिका की अपेक्षा एक-एक यव बड़ी तथा नासिका को उससे एक यव छोटी बनाना चाहिए । मुख को नेत्रों को गोलक से बड़ा उससे ऊपर होना चाहिए तथा तिरछा नहीं होना चाहिए ।। ७-८ ।। आंखों को सवा दो यव विस्तृत बनाना चाहिए । उसके आधा आंखों का विस्तार बनाना चाहिए ।। ९ ।। मुख के एक कोने से लेकर दूसरे कोने तक जितनी लम्बाई हो उससे कुछ बड़ा ही सूत्र से नापकर कर्णपाश (कान का घेरा) बनाना चाहिए । उसी तरह (सूत्र से नापकर) एक काला छोटे तथा झुके हुए कन्धों को बनाना चाहिए । ग्रीवा को डेढ़ कला लम्बा तथा डेढ़ कला चौड़ा होना चाहिए । ग्रीवा की अपेक्षा एक नेत्र कम विस्तृत दोनों ऊरुओं को होना चाहिए । दोनों घुटनों, पिण्डिका, चरण, पीठ नितम्ब तथा कटि की यथा योग्य कल्पना करनी चाहिए ।। १०-११ ।। अंगुलियों को लम्बी तथा परस्पर में अनवरुद्ध होना चाहिए । बड़ी अंगुलि की अपेक्षा छोटी अंगुलियों को १/७ भाग छोटी होनी चाहिए । जंघा, ऊरु तथा कटि इन सबों को एक नेत्र कम विस्तृत होना चाहिए । मध्य भाग के बगल का भाग गोला होना चाहिए । दोनों स्तनों को आपस में सटे हुए और मोटा होना चाहिए । स्तनों को ताल फल के बराबर होना चाहिए । कटि को डेढ़ कला अधिक विस्तृत होना चाहिए । शेष सारे चिह्न पहले के समान हों । लक्ष्मी के दाहिने हाथ में

तालमात्रौ स्तनौ कार्यौ कटिः सार्धकलाधिका । लक्ष्म शेषं पुरावत्स्याद्दक्षिणे चाम्बुजं करे ॥ १४ ॥ वामे बिल्वं स्त्रियौ पार्श्वे शुभे चामरहस्तके ।
दीर्घघोणस्तु गरुडश्चक्राङ्काद्यानथो वदे ॥ १५ ॥

इत्यादिमहापुराणे आग्नेये पिण्डिकादीनां लक्षणवर्णनं नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

## अथ षट्चत्वारिंशोऽध्यायः

## शालग्राममूर्तीनां लक्षणानि

हयग्रीव उवाच– **शालग्रामादिमूर्तीश्च वक्ष्येऽहं भुक्तिमुक्तिदाः । वासुदेवः सितो द्वारि शिलालग्नद्विचक्रकः ॥ १ ॥ ज्ञेयः सङ्कर्षणो लग्नद्विचक्रो रक्त उत्तमः । सूक्ष्मचक्रो बहुच्छिद्रः प्रद्युम्नो नीलदीर्घकः ॥ २ ॥ पीतोऽनिरुद्धः पद्माङ्को वर्तुलो द्वित्रिरेखवान् । कृष्णो नारायणो नाभ्युन्नतः सुषिरदीर्घवान् ॥ ३ ॥ परमेष्ठी साब्जचक्रः पृष्ठछिद्रश्च बिन्दुमान् । स्थूलचक्रोऽसितो विष्णुर्मध्ये रेखा गदाकृतिः ॥ ४ ॥ नृसिंहः कपिलः स्थूलचक्रः स्यात्पञ्चबिन्दुकः । वराहः शक्तिलिङ्गः स्यात्तच्चक्रौ विषमौ स्मृतौ ॥ ५ ॥ इन्द्रनीलनिभः स्थूलस्त्रिरेखालाञ्छितः शुभः । कूर्मस्तथोन्नतः पृष्ठे वर्तुलावर्तकोऽसितः ॥ ६ ॥ हयग्रीवोऽङ्कुशाकाररेखो नीलः सबिन्दुकः । वैकुण्ठ एकचक्रोऽब्जी मणिभः पुच्छरेखकः ॥ ७ ॥ मत्स्यो दीर्घस्त्रिबिन्दुः स्यात्काचवर्णस्तु पूरितः । श्रीधरो वनमालाङ्कः पञ्चरेखस्तु वर्तुलः ॥ ८ ॥ वामनो वर्तुलश्चातिह्रस्वो नीलः सबिन्दुकः । श्यामस्त्रिविक्रमो दक्षरेखो**

---

कमल होना चाहिए ।। १२-१४ ।। उनके बाऐं हाथ में विल्व हो । उनके बगल में दो चमर धारिणियाँ हों । गरुड़ की नाक बड़ी हो । अब चक्रांकित (शालग्राम) आदि की मूर्तियों का वर्णन कर रहा हूँ ।। १५ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का पिण्डिका का स्वरूप वर्णन नामक पैंतालिसवाँ अध्याय सम्पूर्ण हुआ ॥ ४५ ॥**

**श्री हयग्रीव भगवान् ने कहा–** अब मैं भोग तथा मोक्ष प्रदान करने वाली शालग्राम आदि की मूर्तियों का वर्णन कर रहा हूँ । जिस शालग्राम शिला के द्वार में दो चक्र हों तथा जिसका वर्ण श्वेत हो, वह वासुदेव शिला होती है ।। १ ।। रक्तवर्ण की तथा दो चक्रों वाली शालग्राम शिला संकर्षण कहलाती है तथा वह उत्तम शालग्राम शिला होती हैं । जिस शालग्राम शिला में चक्र छोटे हों, अनेक छिद्र हों नील वर्ण हो, तथा बड़ी मूर्ति हो वह प्रद्युम्न मूर्ति होती है । जिसमें दो तीन रेखाएँ हों, कमल का चिह्न हो और पीतवर्ण हो तथा जो गोल हो वह अनिरुद्ध मूर्ति होती है । वह शालग्रामशिला नारायण मूर्ति होती है जिसका वर्ण काला हो, नाभि उठी हो और छिद्र बड़े हों ।। २-३ ।। जिसमें कमल का चिह्न हो, पृष्ठ में छिद्र हो तथा विन्दुएँ हों वह परमेष्ठिमूर्ति होती है । वे शालग्राम विष्णुमूर्ति होते हैं जिनमें चक्र बड़ा हो,उजला वर्ण हो, मध्य में गदा की आकृति हो ।। ४ ।। शालग्राम की नृसिंह मूर्ति, कपिल वर्ण की, पाञ्च विन्दुओं वाली तथा स्थूलचक्र वाली होती है ।। ५ ।। शालग्राम की वाराह मूर्ति में शक्ति का चिह्न होता है तथा परस्पर में विषम दो चक्र होते हैं । इन्द्र नील के समान वर्ण वाली, स्थूल तीन रेखाओं से चिह्नित शुभ मूर्ति भगवान् कूर्म की होती है, उसका पीठ उठा हुआ श्यामवर्ण होता है तथा वह गोल आवर्त से युक्त होती है ।। ६ ।। हयग्रीव भगवान् की शालग्राम मूर्ति अंकुश के आकार वाली रेखाओं से युक्त, नीलवर्ण की, एवं विन्दुयुक्त होती है । शालग्राम की वैकुण्ठ मूर्ति एक चक्र वाली, कमल के चिह्न से चिह्नित मणि की आभा वाली तथा पुच्छ के समान रेखाओं वाली होती है ।। ७ ।। दीर्घ आकार वाली तीन विन्दुओं वाली तथा कांच के समान चमकने वाली एवं भरी-पूरी शालग्राम मूर्ति मत्स्य भगवान् की होती है । श्रीधर भगवान् की शालग्राम मूर्ति वनमाला से चिह्नित गोल तथा पाँच रेखाओं वाली होती है ।। ८ ।। वामन मूर्ति गोल, अत्यन्त

वामेन रिक्तकः॥ ९ ॥ अनन्तो नागभोगाङ्को नैकाभो नैकमूर्तिमान् । स्थूलो दामोदरो मध्यचक्रोऽधः सूक्ष्मबिन्दुकः ॥ १० ॥ सुदर्शनस्त्वेकचक्रो लक्ष्मीनारायणो द्वयात् । त्रिचक्रश्चाच्युतो देवस्त्रिचक्रो वा त्रिविक्रमः ॥ ११ ॥ जनार्दनश्चतुश्चक्रो वासुदेवश्च पञ्चभिः । षट्चक्रश्चैव प्रद्युम्नः सङ्कर्षणश्च सप्तभिः ॥ १२ ॥ पुरुषोत्तमोऽष्टचक्रो नवव्यूहो नवाङ्कितः । दशावतारो दशभिर्दशैकेनानिरुद्धकः । द्वादशात्मा द्वादशभिरत ऊर्ध्वमनन्तकः ॥ १३ ॥

इत्यादिमहापुराण आग्नेये शालग्रामादिमूर्तिलक्षणकथनं नाम षट्चत्वारिंशोऽध्यायः॥ ४६॥

## अथ सप्तचत्वारिंशोऽध्यायः

## शालग्रामादिपूजाकथनम्

श्रीभगवानुवाच– **शालग्रामादिचक्राङ्कपूजाः सिद्ध्यै वदामि ते । त्रिविधा स्याद्धरेः पूजा काम्याकाम्योभयात्मिका ॥ १ ॥ मीनादीनां तु पञ्चानां काम्यार्था वोभयात्मिका । वराहस्य नृसिंहस्य वामनस्य च मुक्तये ॥ २ ॥ चक्रादीनां त्रयाणां तु शालग्रामार्चनं शृणु । उत्तमा निष्कला पूजा कनिष्ठा सकलार्चना ॥ ३ ॥ मध्यमा मूर्तिपूजा स्याच्चक्राब्जे चतुरस्रके । प्रणवं हृदि विन्यस्य षडङ्गं करदेहयोः ॥ ४ ॥ कृतमुद्रात्रयश्चक्राद्बहिः पूर्वे गुरुं यजेत्। आप्ये गणं वायवे च धातारं नैर्ऋते यजेत् ॥ ५ ॥ विधातारं च कर्तारं हर्तारं दक्षसौम्ययोः । विष्वक्सेनं यजेदीश आग्नेये क्षेत्रपालकम् ॥ ६ ॥**

---

छोटी, नीलवर्ण की तथा विन्दुओं से युक्त होती है । श्यामवर्ण की दाहिने तरफ रेखा वाली तथा बायीं ओर विन्दुओं से युक्त त्रिविक्रम भगवान् की शालग्राम शिला होती है ।। ९ ।। अनन्त नाम की शालग्राम शिला नाग के फणों के चिह्न से चिह्नित, अनेक प्रकार की आभाओं वाली तथा अनेक मूर्तियों वाली होती है । दामोदर भगवान् की शालग्राम शिला छोटी विन्दुओं वाली बीच में चक्र वाली तथा स्थूल आकार वाली होती है ।। १० ।। एक चक्र वाली शालग्राम शिला सुदर्शन संज्ञक होती है । दो चक्रों वाली शालग्राम शिला लक्ष्मी नारायण संज्ञक होती है । तीन चक्रों वाली शालग्राम शिला अच्युत संज्ञक अथवा त्रिविक्रम संज्ञक होती है ।। ११ ।। चार चक्रों वाली शालग्राम शिला जनार्दन संज्ञक तथा पांच चक्रों वाली वासुदेव संज्ञक होती है । छह चक्रों वाली प्रद्युम्न संकर्षण संज्ञक होती है । आठ चक्रों वाली शालग्राम शिला पुरुषोत्तम संज्ञक तथा नव चक्रों वाली नवव्यूह संज्ञक होती है । दश चक्रों वाली शालग्राम शिला दशावतार संज्ञक तथा ग्यारह चक्रों वाली अनिरुद्ध संज्ञक होती है। द्वादश (बारह) चक्रों वाली शालग्राम शिला द्वादशात्मक संज्ञक तथा इससे अधिक चक्रों वाली अनन्त संज्ञक शिलाएँ होती हैं ।। १३ ।।

**इस तरह आदिमहापुराण अग्निपुराण का शालग्राम आदि मूर्तियों का लक्षण वर्णन नामक छियालिसवाँ अध्याय सम्पूर्ण हुआ ॥ ४६ ॥**

**श्रीभगवान् ने कहा–** तुम्हें सिद्धि प्राप्त करने के लिए अब मैं चक्राङ्कित शालग्राम की पूजा आदि का वर्णन कर रहा हूँ । श्रीभगवान् की पूजा तीन प्रकार की होती है, सकाम, निष्काम तथा सकाम निष्काम ।। १ ।। मत्स्य आदि पाँच मूर्तियों की पूजा काम्या तथा काम्याकाम्या दोनों प्रकार की होती है । वराह नृसिंह तथा वामन भगवान् की पूजा मुक्ति प्राप्ति के लिए करनी चाहिए ।। २।। जो चक्र आदि तीन प्रकार के शालग्राम होते हैं, उनके पूजन के विषय में सुनो । उनकी निष्कल (निष्काम) पूजा उत्तम तथा सकल कला से युक्त पूजा कनिष्ठ होती है ।। ३ ।। चतुष्कोण चक्राब्ज मण्डल पर मूर्ति की पूजा मध्यम होती है । ओंकार का हृदय में न्यास करके षडङ्गन्यास तथा करन्यास करना चाहिए ।। ४ ।। पुनः तीन मुद्रा प्रदर्शित करके चक्राब्ज मण्डल से बाहर पूर्व दिशा में गुरु की पूजा करनी चाहिए । पश्चिम दिशा में यम की पूजा, वायव्य कोण में धाता की, नैर्ऋत्य कोण में विधाता की, दक्षिण दिशा में कर्ता की तथा उत्तर दिशा में हर्ता की पूजा करनी चाहिए ।

ऋगादिवेदान्प्रागादावाधारानन्तकं भुवम्। पीठं पद्मं चार्कचन्द्रब्रह्माख्यं मण्डलत्रयम् ॥ ७ ॥ आसनं द्वादशान्तेन तत्र स्थाप्य शिलां यजेत् । व्यस्तेन च समस्तेन स्वबीजेन यजेत्क्रमात् ॥ ८ ॥ पूर्वादावथ वेदाद्यैर्गायत्रीभ्यां जितादिना । प्रणवेनार्चयेत्पश्चान्मुद्रास्तिस्रः प्रदर्शयेत् ॥ ९ ॥ विष्वक्सेनस्य चक्रस्य क्षेत्रपालस्य दर्शयेत् । शालग्रामस्य प्रथमा पूजाऽथो निष्कलोच्यते ॥ १० ॥ पूर्ववत्षोडशारं च सपद्मं मण्डलं लिखेत् । शंखचक्रगदाखड्गैर्गुर्वाद्यं पूर्ववद्यजेत् ॥ ११ ॥ पूर्वे सौम्ये धनुर्बाणान् वेदाद्यै रासनं ददेत्। शिलां न्यसेद् द्वादशार्णैस्तृतीयं पूजनं शृणु ॥ १२ ॥ अष्टारमब्जं विलिखेद् गुर्वाद्यं पूर्ववद् यजेत् । अष्टार्णेनासनं दत्त्वा तेनैव च शिलां न्यसेत् ॥ १३ ॥ पूजयेद् दशधा तेन गायत्रीभ्यां जितं ततः ॥ १४ ॥

इत्यादिमहापुराण आग्नेये शालग्रामादिपूजाकथनं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

## अथाष्टचत्वारिंशोऽध्यायः

## चतुर्विंशतिमूर्तिस्तोत्रकथनम्

श्रीभगवानुवाच— **ओंरूपः केशवः पद्मशङ्खचक्रगदाधरः । नारायणः शंखपद्म गदाचक्री प्रदक्षिणम् ॥ १ ॥ ततो गदी माधवोऽरिशङ्खपद्मी नमामि तम् । चक्रकौमोदकीपद्मशङ्खी गोविन्द ऊर्जितः ॥ २ ॥ मोक्षदः श्रीगदी पद्मी शङ्खी विष्णुश्च चक्रधृक् । शङ्खचक्राब्जगदिनं मधुसूदनमानमे ॥ ३ ॥**

ईशानकोण में विष्वक्सेन की एवं अग्निकोण में क्षेत्रपाल की पूजा करनी चाहिए ।। ५-६ ।। पुनः पूर्व आदि दिशाओं में ऋग्वेद आदि की पूजा करके आधार शक्ति, अनन्त,पृथ्वी, योगपीठ, पद्म, सूर्य, चन्द्रमा, तथा ब्रह्मा नामक तीन मण्डलों की पूजा करनी चाहिए ।। ७ ।। द्वादशाक्षर मन्त्र से आसन देकर उसी पर शालग्राम शिला का पूजन करना चाहिए ।। सभी मूर्तियों का एक साथ अथवा अलग-अलग उनके मन्त्र से क्रमशः पूजन करना चाहिए ।। ८ ।। उसके पश्चात् पूर्व आदि दिशाओं में ओम् तथा दोनों गायत्रियों तथा जितादि से, तथा प्रणव से पूजन करे । सबके अन्त में तीन मुद्राओं को प्रदर्शित करना चाहिए ।। ९ ।। इन मुद्राओं को विष्वक्सेन, चक्र तथा क्षेत्रपाल को दिखाना चाहिए । यह शालग्राम की प्रथम पूजा है । अब निष्कल पूजा बतलायी जा रही है ।। १०।। पहले के ही समान सोलह अरों तथा कमल से युक्त चक्राब्ज मण्डल बनाना चाहिए । शंख, चक्र, गदा तथा खड्ग आदि की तथा गुरु आदि की पूजा पहले की ही भांति करनी चाहिए ।। ११ ।। पूर्वदिशा में धनुष् की तथा उत्तर दिशा में बाणों की पूजा करनी चाहिए। प्रणव से आसन प्रदान करनी चाहिए । द्वादशाक्षर से शिला को स्थापित करके । अब तीसरे प्रकार की पूजा सुनो ।। १२।। आठ आरों वाले चक्राब्ज बनाए। पहले के ही समान गुरु आदि की पूजा करे । अष्टाक्षर मन्त्र से आसन प्रदान करके उसी मन्त्र से शिला को उस पर स्थापित करे । उसी मन्त्र से दस बार पूजा कर फिर दोनों गायत्रियों से तथा जितन्ते मन्त्र से पूजन करें ।। १३-१४ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का शालग्राम आदि का पूजन वर्णन नामक सैंतालिसवाँ अध्याय समपूर्ण हुआ ॥ ४७ ॥**

**श्री भगवान् ने कहा–** ओंकार स्वरूप भगवान् केशव व कमल, शंख, चक्र और गदा धारण करते हैं । भगवान् नारायण शंख, पद्म, गदा एवं चक्र धारण करने वाले हैं, मैं उनकी प्रदक्षिणा करता हूँ ।। १ ।। उसके पश्चात् गदा,चक्र, शंख और पद्म धारण करने वाले भगवान् माधव को मैं नमस्कार करता हूँ । चक्र, कौमोदकी गदा, पद्म तथा शंख धारण करने वाले भगवान् गोविन्द तेजः सम्पन्न हैं ।। २ ।। मोक्ष देने वाले श्री विष्णु भगवान् गदा, पद्म, शंख, तथा चक्र धारण करने वाले हैं । शंख, चक्र,पद्म तथा गदा धारण करने वाले भगवान् मधुसूदन को मैं पुनः पुनः भक्तिपूर्वक

भक्त्या त्रिविक्रमः पद्मगदी चक्री च शङ्ख्यपि । शङ्खचक्रगदापद्मी वामनः पातु मां सदा ॥ ४ ॥ गतिदः श्रीधरः पद्मी चक्रशार्ङ्गी च शंख्यपि । हृषीकेशो गदी चक्री पद्मी शङ्खी च पातु नः ॥ ५ ॥ वरदः पद्मनाभस्तु शंखाब्जादिगदाधरः। दामोदरः पद्म शंख गदाचक्री नमामि तम् ॥ ६ ॥ तेने गदी शङ्खचक्री वासुदेवोऽब्जभृज्जगत् । सङ्कर्षणो गदी शङ्खी पद्मी चक्री च पातु वः ॥ ७ ॥ गदी चक्री शङ्खगदी प्रद्युम्नः पद्मभृत्प्रभुः। अनिरुद्धश्चक्रगदी शङ्खी पद्मी च पातु नः ॥ ८ ॥ सुरेशोऽर्यब्जशङ्खाढ्यः श्रीगदी पुरुषोत्तमः । अधोक्षजः पद्मगदी शङ्खी पद्मी च पातु नः ॥ ९ ॥ देवो नृसिंहचक्राब्जगदा शंखी नमामि तम् । अच्युतः श्रीगदी पद्मी चक्री शङ्खी च पातु वः ॥ १० ॥ बालरूपी शङ्खगदी उपेन्द्रश्चक्रपद्म्यपि । जनार्दनः पद्मचक्री शंखधारी गदाधरः ॥ ११ ॥ शङ्खी पद्मी च चक्री च हरिः कौमोदकीधरः । कृष्णः शङ्खी गदी पद्मी चक्री मे भुक्तिमुक्तिदः ॥१२॥ आदिमूर्तिर्वासुदेवस्तस्मात् सङ्कर्षणोऽभवत् । सङ्कर्षणाच्च प्रद्युम्नः प्रद्युम्नादनिरुद्धकः ॥ १३ ॥ केशवादिप्रभेदेन एकैकः स्यात्त्रिधा क्रमात् । द्वादशाक्षरकं स्तोत्रं चतुर्विंशतिमूर्तिमत् ॥ १४॥ यः पठेच्छृणुयाद्वापि निर्मलः सर्वमाप्नुयात् ॥ १५ ॥

इत्यादिमहापुराणे आग्नेये चतुर्विंशतिमूर्तिस्तोत्रं नाम अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

प्रणाम करता हूँ । पद्म, गदा चक्र तथा शंख धारण करने वाले भगवान् त्रिविक्रम और शंख, चक्र, गदा, पद्म धारण करने वाले श्रीवामन भगवान् मेरी रक्षा करें ।। ३-४ ।। पद्म, चक्र, शार्ङ्ग, धनुष् तथा शंख धारण करने वाले भगवान् श्रीधर गति प्रदान करने वाले हैं । गदा, चक्र, पद्म तथा शंख धारण करने वाले भगवान् हृषीकेश हम सबों की रक्षा करें ।। ५ ।। शंख, पद्म, चक्र, तथा गदा धारण करने वाले वराह भगवान् पद्मनाभ हैं । भगवान् दामोदर, पद्म, शंख, गदा एवं चक्र धारण करने वाले हैं, मैं उनको नमस्कार करता हूँ ।। ६ ।। गदा, शंख, चक्र एवं कमल धारण करने वाले भगवान्, वासुदेव ने जगत् की रचना की, गदा, शंख, पद्म तथा चक्र धारण करने वाले भगवान् संकर्षण आप सबों की रक्षा करें ।। ७ ।। गदा, चक्र, शंख, गदा तथा कमल धारण करने वाले भगवान् प्रद्युम्न मेरे स्वामी हैं, चक्र, गदा, शंख तथा पद्म धारण करने वाले भगवान् अनिरुद्ध, हम सबों की रक्षा करें ।। ८ ।। देवताओं के स्वामी, चक्र, पद्म, शंख तथा गदा से सम्पन्न श्री पुरुषोत्तम भगवान् हैं, पद्म, गदा, शंख तथा चक्र धारण करने वाले भगवान् अधोक्षज आप सबों की रक्षा करें ।। ९ ।। चक्र, कमल, गदा तथा शंख धारण करने वाले भगवान् नृसिंह को मैं नमस्कार करता हूँ । गदा, पद्म,चक्र तथा शंख धारण करने वाले श्री अच्युत भगवान् आप सबों की रक्षा करें ।। १० ।। बालस्वरूप भगवान् उपेन्द्र शंख,गदा, चक्र तथा पद्म धारण करने वाले हैं । भगवान् जनार्दन पद्म, चक्र, शंख तथा गदा धारण करने वाले हैं ।। ११ ।। भगवान् श्रीहरि शंख, पद्म, चक्र तथा कौमोदकी धारण करने वाले हैं । भगवान् श्रीकृष्ण शंख, गदा, पद्म, तथा चक्र धारण करने वाले हैं । वे मुझे भोग तथा मोक्ष प्रदान करें ।। १२ ।। भगवान् वासुदेव आदिमूर्ति हैं, उनके पश्चात् भगवान् संकर्षण हुए । संकर्षण से प्रद्युम्न तथा प्रद्युम्न से अनिरुद्ध हुए ।। १३ ।। इनमें से भगवान् की प्रत्येक मूर्ति केशव आदि तीन-तीन रूपों में अभिव्यक्त हुई ।। १४ ।। श्रीभगवान् की चौबीस मूर्तियों से संबद्ध इस द्वादश (बारह) अक्षर (श्लोक) वाले स्तोत्र को जो पढ़ता अथवा सुनता है, वह निर्मल होकर अपने सम्पूर्ण मनोरथों को प्राप्त कर लेता है ।। १५ ।।

**इस तरह से आदि महापुराण अग्निपुराण का चतुर्विंशति मूर्ति स्तोत्र वर्णन नामक अड़तालिसवाँ अध्याय सम्पूर्ण हुआ ॥ ४८ ॥**

# अथैकोनपञ्चाशत्तमोऽध्यायः

## मत्स्यादिदशावतारप्रतिमालक्षणवर्णनम्

श्रीभगवानुवाच– **दशावतारं मत्स्यादिलक्षणं प्रवदामि ते । मत्स्याकारस्तु मत्स्यः स्यात्कूर्मः कूर्माकृतिर्भवेत् ॥ १ ॥ नराङ्गो वाथ कर्तव्यो भूवराहो गदादिभृत् । दक्षिणे वामके शङ्खं लक्ष्मीर्वा पद्ममेव वा ॥ २ ॥ श्रीर्वामकूर्परस्था तु क्ष्मानन्तौ चरणानुगौ । वराहस्थापनाद्राज्यं भवाब्धितरणं भवेत्॥३॥ नरसिंहो विवृतास्यो वामोरुधृतदानवः । तद्वक्षो दारयन्माली स्फुरच्चक्रगदाधरः ॥ ४ ॥ छत्री दण्डी वामनः स्यादथवा स्याच्चतुर्भुजः। रामश्चेपुहस्तः स्यात् खड्गी परशुनान्वितः॥ ५ ॥ रामश्चापी शरी खड्गी शङ्खी वा द्विभुजः स्मृतः । गदालाङ्गलधारी च रामो वाथ चतुर्भुजः ॥ ६॥ वामोर्ध्वे लाङ्गलं दद्यादधः शङ्खं सुशोभनम् । मुसलं दक्षिणोर्ध्वे तु चक्रं चाधः सुशोभनम्॥ ७॥ शान्तात्मालम्बकर्णश्च गौराङ्गश्चाम्बरावृतः। ऊर्ध्वपद्मस्थितो बुद्धो वरदाभयदायकः॥ ८॥ धनुस्तूणान्वितः कल्की म्लेच्छोत्सदकरो द्विजः। अथवाश्वत्थस्थितः खड्गी शंखचक्रशरान्वितः॥ ९॥ लक्षणं वासुदेवादिनवकस्य वदामि ते। दक्षिणोर्ध्वे गदा वामे वामोर्ध्वे चक्रमुत्तमम् ॥ १०॥ ब्रह्मेशौ पार्श्वगौनित्यं वासुदेवोऽस्ति पूर्ववत् । शंखी स वरदी वाऽथ द्विभुजो वा चतुर्भुजः॥ ११॥ लाङ्गली मुसली रामो गदापद्मधरः स्मृतः। प्रद्युम्नो दक्षिणे चक्रं शङ्खं वामे धनुः करे ॥ १२॥ गदाधन्वावृतः प्रीत्या प्रद्युम्नो वा धनुःशरी । चतुर्भुजोऽनिरुद्धः स्यात्तथा नारायणो विभुः ॥ १३ ॥ चतुर्मुखश्चतुर्बाहुर्बृहज्जठरमण्डलः । लम्बकूर्चो**

---

**श्रीभगवान् ने कहा–** अब मैं आपको मत्स्य आदि दश अवतारों की मूर्तियों का स्वरूप बतला रहा हूँ । मत्स्य भगवान् की मूर्ति मत्स्य के आकार की तथा कूर्म भगवान् की मूर्ति कूर्म के आकार की होनी चाहिए ।। १ ।। दाहिने हाथ में गदा तथा चक्र धारण करने वाले पृथ्वी सहित वराह भगवान् की मूर्ति मनुष्य के अङ्गों वाली बनानी चाहिए । उनके बाएँ हाथ में शंख, अथवा लक्ष्मी अथवा केवल पद्म होना चाहिए ।। २ ।। अथवा उनके बाएँ हाथ में लक्ष्मी और पैरों में पृथ्वी तथा अनन्त (शेषनाग) को होना चाहिए । वराह भगवान् की स्थापना करने से राज्य की प्राप्ति तथा संसार सागर से संतरण होता है ।। ३ ।। नृसिंह भगवान् का मुख खुला हुआ रहता है तथा वे अपनी वायीं जंघे पर दानव (हिरण्यकशिपु) को रखे रहते हैं । चक्र तथा गदा धारण करने वाले वे (श्री नृसिंह भगवान्) उसके वक्षस्थल को फाड़कर माला धारण करते हैं ।। ४ ।। भगवान् वामन को छत्र तथा दण्ड धारण करने वाला होना चाहिए अथवा उन्हें चार भुजाओं वाला होना चाहिए । श्री परशुराम भगवान् को धनुष्, बाण, खड्ग तथा फरसा धारण किए हुए होना चाहिए ।। ५ ।। या तो भगवान् श्री राम को धनुष्, बाण, खड्ग तथा शंख धारण किए हुए होना चाहिए अथवा उनको दो भुजाओं वाला बनाना चाहिए। श्री बलरामजी को गदा तथा हल धारण किए होना चाहिए अथवा उनकी मूर्ति चतुर्भुज होनी चाहिए ।। ६ ।। उनकी चतुर्भुज मूर्ति के बाएँ के ऊपर वाले हाथ में चक्र देना चाहिए तथा नीचे वाला हाथ में सुन्दर शंख, दाहिने ऊपर के हाथ में मूसल तथा नीचे के हाथ में मनोहर शंख समर्पित करना चाहिए ।। ७ ।। बरद तथा अभय मुद्रा में कमल पर बैठी हुयी शान्त स्वरूप, लम्बे कानों वाली, गौराङ्ग तथा वस्त्र से ढंकी हुयी बुद्ध भगवान् की प्रतिमा होनी चाहिए ।। ८ ।। कल्की भगवान् को धनुष तथा तुणीर धारण किए हुए, म्लेच्छों का विनाश्चा करने वाले, ब्राह्मण वंशावतंस, घोड़े पर बैठे हुए तथा खड्ग, शंख, चक्र एवं गदा धारण किए हुए होना चाहिए ।। ९ ।। अब मैं आपको वासुदेव आदि नव व्यूह मूर्तियों का स्वरूप बतलाता हूँ । वासुदेव की मूर्ति पहले के ही समान होनी चाहिए । उनके ऊपर के दाहिने हाथ में गदा तथा ऊपर के बाएँ हाथ में उत्तम चक्र होना चाहिए । उनके दोनों बगल में ब्रह्मा तथा शंकर जी की मूर्ति होनी चाहिए । वेरद मुद्रा के साथ शंख धारण किए हुए हों । उनकी मूर्ति दो भुजाओं वाली अथवा चार भुजाओं वाली होनी चाहिए ।। १०-११ ।। बलराम जी की मूर्ति चतुर्भुज मूर्ति हल, मुसल गदा तथा पद्म धारण किए हुए होनी चाहिए । प्रद्युम्न जी दाहिने हाथ में चक्र तथा चक्र धारण किए हुए एवं बाएँ हाथ में धनुष् बाण धारण करते हैं । अथवा द्विभुज प्रद्युम्न एक हाथ में गदा और दूसरे हाथ में धनुष् धारण करते हैं ।

जटायुक्तो ब्रह्मा हंसाग्रवाहनः ॥ १४ ॥ दक्षिणे चाक्षसूत्रं च स्रुवो वामे तु कुण्डिका । आज्यस्थाली सरस्वती सावित्री वामदक्षिणे ॥ १५ ॥ विष्णुरष्टभुजस्तार्क्ष्ये करे खड्गस्तु दक्षिणे । गदाधरश्च वरदो वामे कार्मुकखेटके ॥ १६॥ चक्रशङ्खौ चतुर्वाहुर्नरसिंहश्चतुर्भुजः । शङ्खचक्रधरो वापि विदारितमहासुरः ॥ १७ ॥ चतुर्बाहुर्वराहस्तु शेषः पाणितले धृतः । धारयन् बाहुना पृथ्वीं वामनः कमलाधरः ॥ १८ ॥ पादलग्ना धरा कार्या पदा लक्ष्मीर्व्यवस्थिता । त्रैलोक्यमोहनस्तार्क्ष्ये अष्टबाहुस्तु दक्षिणे ॥ १९ ॥ चक्रं शङ्खं च मुसलमङ्कुशं वामके करे। शङ्खशार्ङ्गगदापाशान् पद्मीवीणासमन्विते॥२०॥ लक्ष्मीः सरस्वती कार्ये विश्वरूपोऽथ दक्षिणे । मुद्गरं च तथा पाशं शक्तिशूलं शरं करे ॥ २१॥ वामे शङ्खं च शार्ङ्गं च गदां पाशं च तोमरम् । लाङ्गलं परशुं दण्डं छुरिकां चर्म चोत्तमम् ॥ २२॥ विंशद्बाहुश्चतुर्वक्त्रो दक्षिणस्थोऽथ वामके । त्रिनेत्रो वामपार्श्वेऽपि शयितो जलशाय्यपि ॥ २३॥ श्रिया धृतैकचरणो विमलाद्याभिरीडितः । नाभिपद्मे चतुर्वक्त्रो हरिशङ्करकौ हरिः ॥ २४॥ शूलाष्टिधारी दक्षे च गदाचक्रधरोऽपरे। रुद्रकेशवलक्ष्माङ्गो गौरीलक्ष्मीसमन्वितः ॥ २५॥ शङ्खचक्रगदावेदपाणिश्चाश्वशिरा हरिः। वामपादो धृतः शेषे दक्षिणः कूर्मपृष्ठगः॥ २६॥ दत्तात्रेयो द्विबाहुः स्याद्वामोत्सङ्गे श्रिया सह । विष्वक्सेनश्चक्रगदी हली शङ्खी हरेर्गणः॥ २७॥

इत्यादि महापुराण आग्नेये मत्स्यादिदशावतारप्रतिमालक्षणवर्णनं नामैकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

---

अथवा वे प्रेमपूर्वक अपने दोनों हाथों में धनुष् तथा बाण धारण करते हैं । अनिरुद्ध भगवान् तथा व्यापक नारायण भगवान् चतुर्भुज हैं ।। १२-१३ ।। ब्रह्माजी की चार भुजाएँ तथा उनका पेट बड़ा है । उनकी लम्बी दाढ़ी लम्बी जटा तथा हंस वाहन हैं ।। १४ ।। दाहिने हाथ में अक्षसूत्र ओर स्रुवा तथा बाएँ हाथ में कमण्डलु और आज्यस्थाली रहती है । उनके बाएँ सरस्वती देवी तथा दाएँ सावित्री देवी रहती हैं ।। १५ ।। विष्णु की मूर्ति आठ भुजाओं वाली गरुड़ पर चढ़ी हुई, दाहिने हाथ में खड्ग, गदा तथा वरद मुद्रा, बाएँ हाथ में धनुष्, खेटक, चक्र तथा शंख धारण किए हुयी होती है । अथवा विष्णु भगवान् की मूर्ति चार भुजाओं वाली होती है । नरसिंह भगवान् की मूर्ति चार भुजाओं वाली शंख एवं चक्र धारण किए हुए महासुर (हिरण्यकशिपु) का विदारण करने वाली होती है ।। १७ ।। शेष को अपने हाथ में धारण किए हुए, चार भुजाओं वाले वराह भगवान् अपने हाथ में पृथिवी को धारण किए हुए हैं । वामन भगवान् लक्ष्मी को धारण करने वाले हैं । यदि श्री लक्ष्मी जी उनके साथ हों तो पृथिवी को उनके पैरों से संलग्न बनाना चाहिए । त्रैलोक्य मोहन श्रीहरि गरुड़ पर सवार हैं । उनकी आठ भुजाएँ हैं । दाहिनी भुजाओं में चक्र, शंख, मुसल तथा अंकुश है और बायीं भुजाएँ शंख, शार्ङ्ग, गदा, पाश, पद्म तथा बगल में सरस्वती की मूर्ति होनी चाहिए । बीस भुजाओं वाले विश्वरूप भगवान् की दाहिनी भुजाओं में- चक्र, शंख, मुसल, अंकुश, पट्टिश, मुद्गर, पाश, शक्ति शूल तथा बाण होना चाहिए और बायीं भुजाओं में शंख, शार्ङ्ग, धनुष्, गदा, पाश, तोमर, हल, परशु, दण्ड, छुरिका तथा उत्तम चर्म होना चाहिए । बायीं ओर जलशायी भगवान् सोए रहते हैं । श्रीदेवी उनके एक चरण को पकड़े रहती हैं, विमला आदि देवियाँ उनकी पूजा करती हैं ।। २१-२४ ।। श्री भगवान् के नाभिकमल पर चतुर्मुख ब्रह्मा जी विराजमान रहते हैं । हरिहर भगवान् की दाहिनी भुजा में शूल तथा शक्ति तथा बायीं भुजा में गदा तथा चक्र बनाना चाहिए । इनके अङ्ग रुद्र तथा केशव के चिह्नों से युक्त, एवं गौरी तथा लक्ष्मी से समन्वित हैं । श्री ह्यग्रीव भगवान् के चार हाथों में शंख, चक्र, गदा तथा वेद विद्यमान रहते हैं ।। २५-२६ ।। वे बायाँ पैर शेष पर रखते हैं और दाहिना पैर कूर्म के पृष्ठ पर । दत्तात्रेय की दो भुजाएँ होनी चाहिए उनके वाम भाग में श्रीलक्ष्मी जी रहती हैं । श्रीभगवान् के पार्षद विष्वक्सेन, अपनी भुजाओं में चक्र, गदा, हल तथा शंख धारण करते हैं ।। २७ ।।

**इस तरह आदि महापुराण अग्निपुराण का मत्स्य आदि दस अवतारों की प्रतिमाओं का स्वरूप वर्णन नामक ऊनचासवाँ अध्याय सम्पूर्ण हुआ ॥ ४९ ॥**

अथ पञ्चाशत्तमोऽध्यायः

## चण्ड्यादिदेवताप्रतिमालक्षणानि

श्रीभगवानुवाच– **चण्डी विंशतिबाहुः स्याद् बिभ्रती दक्षिणैः करैः। शूलासिशक्तिचक्राणि पाशखेटायुधाभयम् ॥१ ॥ डमरुं शक्तिकां वामैर्नागपाशं च खेटकम् । कुठाराङ्कुशपाशांश्च घण्टायुधगदास्तथा ॥ २ ॥ आदर्शमुद्गरान्हस्तैश्चण्डी वा दशबाहुका । तदधो महिषश्छिन्नमूर्धा पातितमस्तकः ॥३॥ शस्त्रोद्यतकरः क्रुद्धस्तद्ग्रीवासम्भवः पुमान् । शूलहस्तो वमद्रक्तो रक्तस्रङ्मूर्धजेक्षणः ॥ ४ ॥ सिंहेनास्वाद्यमानस्तु पाशबद्धो गले भृशम् । याम्याङ्घ्र्याक्रान्तसिंहा च सव्याङ्घ्रिर्नीचगासुरे ॥ ५ ॥ चण्डिकेयं त्रिनेत्रा च सशस्त्रा रिपुमर्दिनी । नवपद्मात्मके स्थाने पूज्या दुर्गा स्वमूर्तितः ॥६॥ आदौ मध्ये तथेन्द्राद्या नवतत्त्वात्मभिः क्रमात् । अष्टादशभुजैका तु दक्षे मुण्डं च खेटकम् ॥ ७ ॥ आदर्शं तर्जनीं चापं ध्वजं डमरुकं तथा। पाशं वामे बिभ्रती च शक्तिमुद्गरशूलकम् ॥ ८॥ वज्रखड्गाङ्कुशशरांश्चक्रं देवी शलाकया । एतैरेवायुधैर्युक्ताः शेषाः षोडशबाहुकाः॥ ९ ॥ डमरुं तर्जनीं त्यक्त्वा रुद्रचण्डादयो नव । रुद्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ॥ १० ॥ चण्डा चण्डवती चैव चण्डरूपातिचण्डिका । उग्रचण्डा च मध्यस्था रोचनाभारुणा सिता ॥ ११ ॥ नीला शुक्ला धूम्रिका च पीता श्वेता च सिंहगा । महिषोत्थः पुमाञ्शस्त्री तत्कचग्रहमुष्टिका॥१२॥ आलीढा नव दुर्गाः स्युः स्थाप्याः पुत्रादिवृद्धये । तथा गौरी चण्डिकाद्या कुण्ड्यक्षररदाग्निधृक् ॥ १३ ॥ सैव रम्भा वने सिद्धाऽग्निहीना ललिता तथा । स्कन्धमूर्धकरा वामे द्वितीये धृतदर्पणा ॥ १४ ॥ याम्ये फलाङ्गुलिहस्ता सौभाग्या तत्र चोर्ध्विका । लक्ष्मीर्याम्यकराम्भोजा वामे श्रीफलसंयुता॥१५॥**

---

**श्रीभगवान् ने कहा–** चण्डीदेवी के बीस भुजाएँ होनी चाहिए । वे अपने दाहिने हाथों में शूल, कृपाण, शक्ति, चक्र, पाश एवं खेट आयुध, अभय मुद्रा, डमरु तथा शक्ति धारण करती हैं तथा बाएँ हाथों में नागपाश, खेटक, कुठार, अंकुश, पाश, घण्टा, आयुध तथा आदर्श (दर्पण) तथा मुद्‌गर धारण करती हैं । अथवा चण्डी की मूर्ति दस भुजाओं वाली होनी चाहिए । उनके नीचे कटे हुए सिर वाला महिष रहता है जिसका मस्तक गिरा हुआ रहता है ।। १-३ ।। वह अपने हाथ में शास्त्र उठाए रहता है, तथा उसके ग्रीवा से एक पुरुष निकला रहता है । उसके हाथ में त्रिशूल रहता है, खून वमन करते रहता है, उसकी माला, बाल तथा नेत्र लाल रहते हैं ।। ४ ।। देवी का वाहन सिंह उसे खाता रहता है उसका गला जोर से बँधा रहता है । देवी का दाहिना पैर सिंह पर तथा बायाँ पैर नीचे असुर पर रहता है ।। ५ ।। ये चण्डी देवी तीन नेत्रों वाली, शस्त्रों से युक्त तथा शत्रुओं का विनाश करने वाली हैं । नव कमलों से युक्त स्थान पर दुर्गा देवी की मूर्ति तथा इन्द्र आदि की पूजा आदि में तथा मध्य में नव तत्त्वात्मिका शक्तियों के साथ करनी चाहिए ।। ६ ।। चण्डी की एक मूर्ति अठारह भुजाओं वाली होती है । उनकी दाहिनी भुजाओं में- मुण्ड, खेटक, दर्पण, तर्जनी, चाप, ध्वजा, डमरू तथा पाश रहते हैं। वायीं भुजाओं में वे, शक्ति, मुद्गर, शूल, वज्र, खड्ग, अंकुश, बाण, चक्र तथा शलाका धारण किए रहती हैं । सोलह भुजाओं वाली चण्डी देवी भी इन्हीं आयुधों से युक्त रहती हैं ।। ७-९ ।। इनके आयुधों में डमरू तथा तर्जनी ये दो आयुध छूट जाते हैं । रुद्रचण्डा आदि नव शक्तियाँ ये हैं- (१) रुद्रचण्डा, (२) प्रचण्डा, (३) चण्डोग्रा, (४) चण्डनायिका, (५) चण्डा, (६) चण्डवती, (७) चण्डरूपा, (८) अतिचण्डिका तथा (९) उग्रचण्डा । इनमें से आठ-आठ दिशाओं में तथा उग्रचण्डा की पूजा बीच में होती है । इनकी कान्तियाँ गोरोचन, के सदृश पीली, अरुण, काली, नीली, उजली, धूम्रवर्ण की, पीली तथा श्वेत है । ये सब सिंहवाहिनी हैं । महिष से निकले हुए शस्त्र धारण करने वाले पुरुष के बाल को अपनी मुट्ठी में पकड़े रहती हैं ।।१०-१२।। पुत्र आदि की वृद्धि के लिए नव दुर्गा की स्थापना करनी चाहिए । तथा गौरी ही चण्डिका आदि के रूप में कमण्डलु, अक्षमाल, रद (दाँत) तथा अग्नि आदि धारण करने वाली होकर रम्भा कहलाती हैं । वे वन में अग्नि से रहित होकर सिद्ध कहलाती हैं । ललितारूप में वे अपने बाएँ हाथ में स्कन्ध (गर्दन) से युक्त सिर धारण करती हैं, दूसरे हाथ में दर्पण धारण करती हैं ।। १३-१४ ।। वे अपने दाहिने हाथ में फलाङ्गुल धारण करती हैं, तथा उससे ऊपर वाले हाथ में सौभाग्य गदा धारण करती हैं । लक्ष्मी देवी अपने दाहिने हाथ में कमल, धारण करती हैं और

पुस्ताक्षमालिका हस्ता वीणाहस्ता सरस्वती । कुम्भाब्जहस्ता श्वेताभा मकरे वापि जाह्नवी ॥ १६ ॥ कूर्मगा यमुना कुम्भकरा श्यामा च पूज्यते । सवीणस्तुम्बुरुः शुक्लः शूली मात्रग्रतो वृषे ॥ १७ ॥ गौरी चतुर्मुखी ब्राह्मी अक्षमालास्त्रुगन्विता। कुण्डाक्षपात्रिणी वामे हंसगा शाङ्करी सिता॥१८॥ शरचापौ दक्षिणेऽस्या वामे चक्रं धनुर्वृषौ । कौमारी शिखिगा रक्ता शक्तिहस्ता द्विबाहुका ॥ १९ ॥ शङ्खचक्रधरा सव्ये वामे लक्ष्मीर्गदाब्जधृक् । दण्डशङ्खारिगदया वाराही महिषस्थिता ॥ २० ॥ ऐन्द्री गजे वज्रहस्ता सहस्राक्षी तु सिद्धये । चामुण्डा कोटराक्षी स्यान्निर्मांसा तु त्रिलोचना ॥ २१ ॥ निर्मांसा अस्थिसारा वा ऊर्ध्वकेशी कृशोदरी । द्वीपिचर्मधरा वामे कपालं पट्टिशं करे ॥ २२ ॥ शूलं कर्त्री दक्षिणे स्याच्छवारुढास्थिभूषणा । विनायको नराकारो बृहत्कुक्षिर्गजाननः ॥ २३ ॥ बृहच्छुण्डो ह्युपवीती मुखं सप्तकलं भवेत् । विस्ताराद् दैर्घ्यतश्चैव शुण्डं षट्त्रिंशदङ्गुलम् ॥ २४ ॥ कला द्वादश नाडी तु ग्रीवा सार्धकलोच्छ्रिता । षट्त्रिंशदङ्गुलः कण्ठो गुह्यमध्यर्धमङ्गुलम् ॥ २५ ॥ नाभिरूरू द्वादशं च जङ्घे पादे तु दक्षिणे । स्वदन्तं परशुं वामे लड्डुकं चोत्पलं शये ॥ २६ ॥ सुमुखी च बिडालाक्षी पार्श्वे स्कन्दो मयूरगः । स्वामी शाखो विशाखश्च द्विभुजो बालरूपधृक् ॥ २७ ॥ दक्षे शक्ति कुक्कुटेऽथ एकवक्त्रोऽथ षण्मुखः । षड्भुजो वा द्वादशभिर्ग्रामेऽरण्ये द्विबाहुकः॥२८॥ शक्तीषुपाशनिस्त्रिंश गदासत्तर्जनीयुतः। शक्त्या दक्षिणहस्तेषु षट्सु वामे करे तथा॥२९॥ शिखिपिच्छं धनुः खेटं पताकाभयकुक्कुटे। कपालकर्तरीशूलपाशभृद्याम्यसौम्ययोः॥३०॥

---

बाएँ में श्रीफल ।। १५ ।। सरस्वती देवी अपने हाथों में पुस्तक, अक्षमाला तथा वीणा धारण करती हैं । जाह्नवी (गङ्गा) देवी घड़ियाल पर सवार श्वेतवर्ण की तथा हाथ में घड़ा एवं कमल धारण करती हैं ।। १६ ।। श्याम वर्ण की यमुना देवी हाथ में कुम्भ लिए हुए कच्छप पर सवार रूप से पूजी जाती हैं । श्वेत वर्ण के तुम्बुरु हाथ में वीणा लिए हुए हैं । वृष (बैल) पर सवार शङ्कर जी मातृकाओं के आगे रहते हैं ।। १७ ।। ब्राह्मी देवी गौरवर्ण की, चार मुखों वाली अक्षमाला तथा स्रुक् से समन्वित हैं । हंस पर सवार वे बाएँ हाथ में कुण्ड तथा अक्षपात्र लिए रहती हैं । श्वेतवर्ण वाली शांकरी (पार्वती देवी) दाहिने हाथ में धनुष् बाण तथा बाएँ हाथ में चक्र एवं धनुष् धारण करती हैं । वे वृष पर सवार रहती हैं । कौमारी देवी मयूर वाहना हैं । उनका वर्ण रक्त (लाल) है हाथ में शक्ति धारण किए हुए हैं । उनकी दो भुजाएँ हैं ।। १८-१९ ।। लक्ष्मी देवी अपने दाएँ हाथ में शंख चक्र धारण करती हैं और बाएँ हाथ में गदा एवं कमल धारण करती हैं । महिष पर सवार रहने वाली वाराही देवी दण्ड,शंख, चक्र तथा गदा धारण करने वाली हैं ।। २० ।। ऐन्द्री देवी हाथी पर सवार रहती हैं । वे वज्र हाथ में लिए रहती हैं। उनके एक हजार नेत्र हैं । उनकी सिद्धि प्राप्ति के लिए उपासना करनी चाहिए । चामुण्डा देवी की आँखें कोटर के समान हैं। । उनका शरीर माँस रहित है । उनके तीन नेत्र हैं । अथवा उनके शरीर निर्मांस तथा कंकाल स्वरूप हैं । उनके बाल ऊपर की ओर खड़े तथा कटि पतली है । वे हाथी का चर्म (चाम) पहनती हैं । उनके बाएँ हाथ में कपाल तथा पट्टिश है ।। २०-२२ ।। अपने दाहिने हाथ में शूल तथा कटार लिए रहती हैं । मुर्दे पर सवार वे हड्डियों का आभूषण धारण करती हैं ।। २२ ।। गणेश जी की मूर्ति नराकार होती है, उनका पेट बड़ा तथा मुँह हाथी का होता है । उनका शुण्ड बड़ा यज्ञोपवीत धारण किए हुए, तथा मुँह सात कला का विस्तृत होता है । छत्तीस अंगुल लम्बा उनका शुण्ड होता है ।। २३-२४ ।। उनकी नाड़ी बारह कला की होती है और उनकी ग्रीवा डेढ़ कला ऊँची होती है । उनका कण्ठ छत्तीस अंगुल का तथा गुह्य भाग डेढ़ अंगुल का होना चाहिए ।। २५ ।। उनकी नाभि तथा ऊरु बारह अंगुल के होने चाहिए । वे अपने दाहिने पैर तथा जंघे पर फरसा रखे हुए रहते हैं तथा बाएँ पैर पर लड्डू। उनकी शय्या कमल की होती है ।। २६ ।। स्कन्द मयूर वाहन हैं । उनके दोनों बगल में सुमुखी और विडालाक्षि देवियाँ होती हैं । उनके स्वामी शाख एवं विशाख रहते हैं । उनकी दो भुजाएँ हैं, और वे बालरूपधारी हैं ।। २७ ।। उनकी दाहिनी ओर कुक्कुट पर सवार शक्ति होती है । उनकी मूर्ति या तो एक मुख वाली अथवा छह मुखों वाली होती है । ग्राम में स्कन्द की छह भुजाओं वाली अथवा बारह भुजाओं वाली मूर्ति बनानी चाहिए । अरण्य में उनकी मूर्ति दो भुजाओं वाली होती है । उनकी छह दाहिनी भुजाओं में शक्ति, बाण, पाश, खड्ग, गदा तथा तर्जनी

गजचर्मभृदूर्ध्वास्यपादा स्याद्रुद्रचर्चिका । सैव चाष्टभुजा देवी शिरोडमरुकान्विता ॥ ३१ ॥ तेन सा रुद्रचामुण्डा नाटेश्वर्यथ नृत्यती । इयमेव महालक्ष्मीरुपविष्टा चतुर्मुखी ॥ ३२ ॥ नृवाजिमहिषेभांश्च खादन्ती च करे स्थितान् । दशबाहुस्त्रिनेत्रा च शस्त्रासिडमरुत्रिकम् ॥ ३३ ॥ बिभ्रती दक्षिणे हस्ते वामे घण्टां च खेटकम् । खट्वाङ्गं च त्रिशूलं च सिद्धचामुण्डिकाह्वया ॥ ३४ ॥ सिद्धयोगेश्वरी देवी सर्वसिद्धिप्रदायिका । एतद्रूपा भवेदन्या पाशाङ्कुशयुतारुणा ॥ ३५ ॥ भैरवी रूपविद्या तु भुजैर्द्वादशभिर्युता । एताः श्मशानजा रौद्रा अम्बाष्टकमिदं स्मृतम् ॥ ३६ ॥ क्षमा शिवावृता वृद्धा द्विभुजा विवृतानना। दन्तुरा क्षेमकारी स्याद् भूमौ जानुकरा स्थिता ॥ ३७ ॥ यक्षिण्यः स्तब्धदीर्घाक्ष्यः शाकिन्यो वक्रदृष्टयः । पिङ्गाक्ष्यः स्युर्महारम्या रूपिण्योऽप्सरसः सदा ॥ ३८ ॥ साक्षमालस्त्रिशूली च नन्दीशो द्वारपालकः । महाकालोऽसिमुण्डी स्याच्छूलखेटकरस्तथा ॥ ३९ ॥ कृशो भृङ्गी च नृत्यन्वै कूष्माण्डस्थूलखर्ववान् । गजगोकर्णवक्त्राद्या वीरभद्रादयो गणाः॥४०॥ घण्टाकर्णोऽष्टादशदोः पापरोगं विदारयन् । वज्रासिदण्डचक्रेषु मुसलाङ्कुशमुद्गरान् ॥ ४१ ॥ दक्षिणे तर्जनीं खेटं शक्तिं मुण्डं च पाशकम् । चापं घण्टां कुठारं च द्वाभ्यां चैव त्रिशूलकम् ॥ ४२ ॥ घण्टामालाकुलो देवो विस्फोटकविमर्दनः ॥ ४३ ॥

इत्यादिमहापुराण आग्नेये चण्ड्यादिदेवताप्रतिमालक्षणनिरूपणं नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

मुद्रा होनी चाहिए। उनके छह बायीं भुजाओं में मोरपंख, धनुष्, खेट, पताका, अभयमुद्रा तथा कुकुट होनी चाहिए । रुद्रचर्चिका देवी के पैर और मुख ऊपर की ओर होते हैं । उनके दाएँ तथा बाएँ हाथों में कपाल, कर्तरी, शूल तथा पाश रहते हैं । यदि वे ही (रुद्रचर्चिका ही) शिर तथा डमरू धारण करती हैं तो वे आठ भुजाओं वाली देवी होती हैं ।। २८-३१ ।। सिर तथा डमरू से युक्त होने के कारण वे रुद्रचामुण्डा कही जाती हैं । नृत्य करती हुई वे नाटेश्वरी कहलाती हैं । इनकी बैठी हुई चतुर्मुखी मूर्ति महालक्ष्मी कहलाती है ।। ३२ ।। सिद्धचामुण्डिका नामक देवी अपने हाथ में विद्यमान मनुष्य, घोड़ा, महिष तथा हाथी को खाती रहती हैं, उनके दस हाथ और तीन नेत्र होते हैं । वे अपने दाहिने ओर के हाथों में शस्त्र, कृपाण तथा तीन डमरू धारण करती हैं । बायें ओर के हाथों में वे घण्टा, खेट, खट्वांग तथा त्रिशूल धारण करती हैं ।। ३३-३४ ।। सिद्धयोगेश्वरी देवी सभी प्रकार की सिद्धियों को प्रदान करने वाली हैं । इन्हीं देवी के समान रक्तवर्ण के पाश तथा अंकुश को धारण करने वाली भैरवी नाम की देवी हैं । रूपविद्या नाम की देवी द्वादश भुजाओं से युक्त हैं । ये श्मशान में उत्पन्न होने वाली भयंकर देवियाँ हैं । इनको अम्बाष्टक कहा जाता है ।। ३५-३६।। क्षमा देवी श्रृगालियों से घिरी हुयी, वृद्धावस्था वलाी दो भुजाओं वाली खुले मुख वाली, निकले हुए दाँतों वाली, पृथिवी पर घुटने तथा हाथ को रखकर बैठी हुयी एवं कल्याण करने वाली हैं ।। ३७।। यक्षिणियाँ बड़े-बड़े नेत्रों वाली तथा एक टक से देखने वाली होती हैं, शाकिनियों की दृष्टि टेढ़ी होती है । अप्सराएँ पीले नेत्रों वाली तथा सर्वदा अत्यन्त मनोहर रूप वाली होती हैं ।। ३८ ।। भगवान् शंकर के द्वारपाल नन्दीश्वर एक हाथ में अक्षमाला और दूसरे हाथ में त्रिशूल लिए रहते हैं । महाकाल के हाथों में तलवार, कटा हुआ सिर, शूल तथा खेटक होना चाहिए।।३९।। भृङ्गी का शरीर दुबला पतला होता है, वे नृत्य करते हैं कुष्माण्ड (कोहणा) के समान स्थूल तथा वामनाकृति हैं । वीरभद्र आदि गणों के कान हाथ तथा गौ के कान के समान होते हैं ।। ४० ।। घण्टाकर्ण की अठारह भुजाएँ होती हैं । वे पाप तथा रोग को दूर करने वाले हैं । वे अपनी दाहिनी आठ भुजाओं में वज्र, तलवार, दण्ड, चक्र, बाण, मुसल, अंकुश तथा मुद्गर धारण करते हैं और वायीं ओर की आठ भुजाओं में तर्जनी मुद्रा, खेट, शक्ति, कटा हुआ सिर, पाश, चाप (धनुष्) घण्टा तथा कुठार धारण करते हैं । शेष दो हाथों में वे त्रिशूल धारण करते हैं । घण्टा की माला से अलंकृत घण्टाकर्ण फोड़े-फुन्सी आदि को विनष्ट करते हैं ।। ४०-४३ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का चण्डी आदि देवताओं की मूर्तियों के स्वरूप निरूपण नामक पचासवाँ अध्याय सम्पूर्ण हुआ ॥ ५० ॥**

## अथैकपञ्चाशत्तमोऽध्यायः

## सूर्यादिग्रहदेवताप्रतिमालक्षणानि

श्रीभगवानुवाच— **ससप्ताश्वे सैकचक्रे रथे सूर्यो द्विपद्मधृक् । मषीभाजनलेखन्यौ बिभ्रद्दण्डी तु दक्षिणे ॥ १ ॥ वामे तु पिङ्गलो द्वारि दण्डभृत्स रवेर्गणः । बालव्यजनधारिण्यौ पार्श्वे राज्ञी च निष्प्रभा ॥ २ ॥ अथवाश्वसमारुढः कार्य एकस्तु भास्करः । वरदा द्व्यब्जिनः सर्वे दिक्पाः शस्त्रकराः क्रमात् ॥ ३ ॥ मुद्गरशूलचक्राब्जभृतोऽग्न्यादिविदिक्स्थिताः । सूर्यार्यमादिरक्षोऽन्ताश्चतुर्हस्ता द्विषड्दले ॥ ४ ॥ वरुणः सूर्यनामा च सहस्रांशुस्तथापरः। धाता तपनसंज्ञश्च सविताऽथ गभस्तिकः ॥ ५ ॥ रविश्चैवाथ पर्जन्यस्त्वष्टा मित्रोऽथ विष्णुकः । मेषादिराशिसंस्थाश्च मार्गादिकार्तिकान्तकाः ॥ ६॥ कृष्णो रक्तो मनाग्रक्तः पीतः पाण्डरकः सितः । कपिलः पीतवर्णश्च शुकाभो धवलस्तथा ॥ ७ ॥ धूम्रो नीलः क्रमाद्वर्णाः शक्तयः केसराग्रगाः । इडा सुषुम्णा विश्वार्चिरिन्दुसञ्ज्ञा प्रमर्दिनी ॥ ८ ॥ प्रहर्षिणी महाकाली कपिला च प्रबोधिनी । नीलाम्बरा वनान्तस्था अमृताख्या च शक्तयः ॥ ९॥ वरुणादेश्च तद्वर्णा केसराग्रेषु विन्यसेत् । तेजश्चण्डो महावक्त्रो द्विभुजः पद्मखड्गभृत् ॥ १० ॥ कुण्डिकाजप्यमालीन्दुः कुजः शक्ताक्षमालिकः । बुधश्चापाक्षपाणिः स्याज्जीवः कुण्ड्यक्षमालिकः ॥ ११॥ शुक्रः कुण्ड्यक्षमाली स्यात्किङ्किणीसूत्रवाञ्शनिः ॥ अर्धचन्द्रधरो राहुः केतुः खड्गी च दीपभृत् ॥ १२ ॥ अनन्तस्तक्षकः कर्कः पद्मो महाब्जः शङ्खकः । कुलिकः सूत्रिणः सर्वे फणवक्त्रा महाप्रभाः ॥ १३ ॥ इन्द्रो वज्री गजारुढच्छागगोऽग्निश्च शक्तिमान् । यमो दण्डी च महिषे नैर्ऋतः खड्गवान् करे ॥१४ ॥ मकरे वरुणः पाशी वायुर्वज्रधरो मृगे । गदी कुबेरो मेषस्थ**

---

**श्रीभगवान् ने कहा—** सात अश्वों से जुते हुए एक चक्के वाले रथ पर सूर्य कमल को धारण किए हुए हैं । उनकी दाहिनी ओर कलम और दवात धारण किए हुए दण्डी रहते हैं ।।१।। वायीं ओर द्वार पर दण्ड धारी रवि के गण पिङ्गल रहते हैं । सूर्य देव के दोनों बगल में चमर लिए हुए राज्ञी तथा निष्प्रभा नाम की दो चमर धारिणियाँ खड़ी रहती हैं । अथवा घोड़े पर सवार अकेले सूर्य की प्रतिमा बनानी चाहिए । सभी दिक्पालों को क्रमशः वरदमुद्रा वाले दो-दो कमल लिए हुए तथा शस्त्र धारण किए हुए बनाना चाहिए ।। २-३ ।। बारह दल वाले कमल के बारहों दल में (सूर्य तथा अर्यमासे लेकर रक्षः पर्यन्त) द्वादश आदित्यों की स्थापना करनी चाहिए । ये सभी चतुर्भुज हैं तथा मुद्गर, शूल, चक्र तथा कमल धारण करने वाले हैं । ये अग्नि आदि कोणों में स्थित हैं।।४।। वरुण, सूर्य सहस्रांशु, धाता, तपन, सविता, गभस्तिक, रवि, पर्जन्य, त्वष्टा, मित्र और विष्णु ये द्वादशादित्य मेष आदि राशियों में स्थित तथा मार्गशीर्ष से लेकर कार्तिक पर्यन्त के मासों के क्रमशः स्वामी हैं ।। ५-६ ।। इन सभी आदित्यों के क्रमशः काला, लाल, कमल, पीला, पाण्डुरवर्ण, उजला, कपिलवर्ण, पीला, शुक पक्षी के समान कान्ति, धवल, धूम्रवर्ण और नीला वर्ण है । कमलदल के केसर में शक्तियों की स्थापना करनी चाहिए ।। ७ ।। इन्द्रा, सुषुम्णा, विश्वार्चि, इडा, प्रमर्दिनी, प्रहर्षिणी, महाकाली, कपिला, प्रबोधिनी, नीलाम्बरा, वनान्तस्था तथा अमृता ये द्वादश शकितयाँ हैं ।। ८-९ ।। वरुणा आदि द्वादश आदित्यों के वर्ण के समान ही उनकी द्वादश शक्तियों के वर्ण हैं । इनकी स्थापना केसर के अग्रभाग में करनी चाहिए । सूर्य का तेज प्रचण्ड है, विशाल मुख तथा दो भुजाएँ हैं । वे पद्म तथा खड्ग धारण करते हैं ।। १० ।। चन्द्रमा कुण्डिका (कमण्डलु) तथा जपमाली धारण करते हैं । भौम शक्ति तथा अक्षमाला धारण करते हैं । बुध चाप तथा अक्षमाला धारण करते हैं । गुरु कुण्डी (कमण्डलु) तथा अक्षमाला धारण करते हैं ।। ११ ।। शुक्र कुण्डी तथा अक्षमाला, शनि किङ्किणी तथा सूत्र धारण करते हैं । राहु अर्धचन्द्र धारण करते हैं और केतु खड्ग तथा दीपक धारण करते हैं ।। १२ ।। अनन्त, तक्षक, कर्कोटक, पद्म, महापद्म, शङ्ख तथा कुलिक ये सभी नागगण सूत्रधारी, मुख पर फणा वाले तथा महाकान्तिमान हैं ।। १३।। इन्द्र हाथी पर सवार तथा वज्रधारण करते हैं । अग्नि मेष पर सवार तथा शक्तिधारी हैं । महिष वाहन यम दण्ड धारण करते हैं । नरवाहन निर्ऋति खड्ग धारण करते हैं ।। १४ ।। मकरवाहन वरुण

ईशानश्च जटी वृषे ॥ १५ ॥ द्विबाहवो लोकपाला विश्वकर्माक्षसूत्रभृत् । हनुमान् वज्रहस्तः स्यात् पद्भ्यां सम्पीडितासुरः ॥ १६ ॥ वीणाहस्ताः किन्नराः स्युर्मालाविद्याधराश्च खे । दुर्बलाङ्गाः पिशाचाः स्युर्वेताला विकृताननाः ॥ १७ ॥ क्षेत्रपालाः शूलवन्तः प्रेता महोदराः कृशाः ॥ १८ ॥

इत्यादिमहापुराण आग्नेये सूर्यादिग्रहदेवताप्रतिमालक्षणवर्णनं नामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

## अथ द्विपञ्चाशत्तमोऽध्यायः

### चतुःषष्टियोगिनीप्रतिमालक्षणानि

श्रीभगवानुवाच– **योगिन्यष्टाष्टकं वक्ष्ये इन्द्रादीशान्ततः क्रमात् । अक्षोभ्या रूक्षकर्णी च राक्षसी क्षपणा क्षमा ॥ १ ॥ पिङ्गाक्षी चक्षया क्षेमा इला लीलालया तथा। लोला रक्ता बलाकेशी लालसा विमला पुनः ॥ २ ॥ हुताशा च विशालाक्षी ह्रींकारा बडवामुखी । महाक्रूरा क्रोधना तु भयङ्करी महानना ॥ ३ ॥ सर्वज्ञा तरला तारा ऋग्वेदा तु हयानना। साराख्या रुद्रसङ्ग्राही शबरा तालजङ्घिका।।४।। रक्ताक्षी सुप्रसिद्धा तु विद्युज्जिह्वा करङ्किणी। मेघनादा प्रचण्डोग्रा कालकर्णी वरप्रदा।।५।। चण्डा चण्डवती चैव प्रपञ्चा प्रलयान्तिका । शिशुवक्त्रा पिशाची च पिशितासवलोलुपा ॥ ६ ॥ धमनी तपनी चैव रागिणी विकृतानना । वायुवेगा बृहत्कुक्षिर्विकृता विश्वरूपिका ॥ ७ ॥ यमजिह्वा जयन्ती च दुर्जया च जयन्तिका । बिडाली रेवती चैव पूतना विजयान्तिका।।८।। अष्टहस्ताश्चतुर्हस्ता इच्छास्त्राः सर्वसिद्धिदाः। भैरवश्चार्कहस्तः स्याद्दन्तुरास्यो जटेन्दुभृत्।।९।। खड्गांकुषकुठारेषुविश्वाभयभृदेकतः।**

---

हाथ में पाश धारण करते हैं । मृगवाहन वायु वज्रधारण करते हैं । मेषवाहन कुबेर गदा धारण करते हैं । वृष वाहन ईशान सिर पर जटा धारण करते हैं ।। १५ ।। सभी लोकपाल दो भुजाओं वाले हैं । विश्वकर्मा अक्षसूत्र धारण करते हैं । हनुमान् हाथ में वज्र धारण करते हैं तथा पैरों से राक्षसों को दबाए रहते हैं ।। १६ ।। किन्नरगण हाथ में वीणा धारण करते हैं, विद्याधर आकाश में माला धारण करते हैं । पिशाच दुर्बल अङ्ग वाले होते हैं तथा वेताल विकृत मुख वाले होते हैं ।। १७ ।। क्षेत्रपाल शूल धारण करते हैं तथा प्रेत दुर्बल तथा बड़े पेट वाले होते हैं ।। १८ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का सूर्यादिग्रह देवताओं की प्रतिमा का स्वरूप वर्णन नामक एकावनवाँ अध्याय समपूर्ण हुआ ॥ ५१ ॥**

**श्रीभगवान् ने कहा–** अब मैं चौंसठ योगिनियों को बतलाता हूँ– (योगिनी पीठ पर) पूर्व दिशा से लेकर ईशानकोण पर्यन्त क्रमशः स्थान होता है– (१) अक्षोभ्या (२) रुक्षकर्णी, (३) राक्षसी, (४) क्षपणा (५) क्षमा (६) पिङ्गाक्षी (७) क्षया (८) क्षेमा (९) इला (१०) नीलालया (११) लोला (१२) रक्ता (१३) बलाकेशी (१४) लालसा (१५) विमला (१६) हुताशा (१७) विशालाक्षी (१८) ह्रींकारा (१९) वडवामुखी (२०) महाक्रूरा (२१) क्रोधना (२२) भयङ्करी (२१३) महानना (२४) सर्वज्ञा (२५) तरला (२६) तारा (२७) ऋग्वेदा (२८) ह्यानना (२९) सारा (३०) रुद्रसंग्राही (३१) शम्बरा (३२) तालजंघिका (३३) रक्ताक्षी (३४) सुप्रसिद्धा (३५) विद्युज्जिह्वा (३६) करङ्किणी (३७) मेघनादा (३८) प्रचण्डा (३९) उग्रा (४०) कालकर्णी (४१) वरप्रदा (४२) चन्डा (४३) चण्डवती (४४) प्रपञ्चा (४५) प्रलयान्तिका (४६) शिशुवक्त्रा (४७) पिशाची (४८) पिशिताशा (४९) लोलुपा (५०) धमनी (५१) तापनी (५२) रागिणी (५३) विकृतानना (५४) वायुवेगा (५५) वृहत्कुक्षिः (५६) विकृता (५७) विश्वरूपिका (५८) यमजिह्वा (५९) जयन्ती (६०) दुर्जया (६१) जयन्तिका (६२) विडाली (६३) रेवती (६४) विजयान्तिका ।। १-८ ।। ये योगिनियाँ आठ हाथों वाली तथा चार हाथों वाली, इच्छा के अनुसार अस्त्रों को धारण करने वाली एवं सभी प्रकार की सिद्धियों को प्रदान करने वाली हैं । बारह भुजाओं वाले भैरव हैं । उनका दाँत निकला हुआ मुख एवं चन्द्रमा तथा जटा वे धारण करते हैं ।। ९ ।। वे अपने एक तरफ के पाँच हाथों में खड्ग, अंकुश, कुठार, बाण तथा विश्व को अभय प्रदान करने वाली मुद्रा धारण करते हैं । और

चापत्रिशूलखट्वाङ्गपाशकार्धवरोद्यतः ॥ १० ॥ गजचर्मधरो द्वाभ्यां कृत्तिवासोऽहिभूषितः । प्रेताशनो मातृमध्ये पूज्यः पञ्चाननोऽथवा ॥ ११ ॥ अविलोमाग्निपर्यन्तं दीर्घाष्टकैकभेदितम् । तत्षडङ्गानि जात्यन्तैरन्वितं च क्रमाद्यजेत् ॥ १२ ॥ मन्दिराग्निदलारूढं सुवर्णरसनान्वितम् । नादबिन्द्विन्दुसंयुक्तं मातृनाथाङ्गदीपितम् ॥ १३ ॥ वीरभद्रो वृषारुढो मात्रग्रे स चतुर्भुजः । गौरी तु द्विभुजा त्र्यक्षा शूलिनी दर्पणान्विता ॥ १४ ॥ त्रिशूलकुण्डिकाकुण्डिवरहस्ता चतुर्भुजा । अब्जस्था ललिता स्कन्दगणादर्शशिलाकया ॥ १५ ॥ चण्डिकादशहस्ता स्यात्खड्गशूलारिशक्तिधृक् । दक्षे वामे नागपाशं चर्माङ्कुशकुठारकः॥१६॥ धनुः सिंहे च महिषः शूलेन प्रहतोग्रतः ॥ १७ ॥

इत्यादिमहापुराण आग्नेये चतुःषष्ठियोगिनीप्रतिमालक्षणवर्णनं नाम द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

अथ त्रिपञ्चाशत्तमोऽध्यायः

## लिङ्गादिलक्षणवर्णनम्

श्रीभगवानुवाच– **लिङ्गादिलक्षणं वक्ष्ये कमलोद्भव तच्छृणु । दैर्घ्यार्ध्यं वसुभिर्भक्त्वा त्यक्त्वा भागत्रयं ततः ॥ १ ॥ विष्कम्भं भूतभागैस्तु चतुरस्रं तु कारयेत् । आयाममृतुभिर्भक्त्वा एकद्वित्रिक्रमात्न्यसेत् ॥ २ ॥ ब्रह्मविष्णुशिवांशेषु वर्धमानोऽयमुच्यते । चतुरस्रेऽस्य कर्णार्धं गुह्यकोणेषु लाञ्छयेत् ॥ ३ ॥ अष्टाग्रं वैष्णवं भागं सिद्ध्यत्येव न संशयः । षोडशास्रं ततः कुर्याद्द्वात्रिंशास्रं ततः पुनः ॥ ४ ॥ चतुःषष्ट्यस्रकं कृत्वा वर्तुलं**

दूसरे तरफ के पाँच हाथों में चाप, त्रिशूल, खट्वाङ्ग, पाश तथा वरदमुद्रा धारण करते हैं ।। १० ।। शेष दो हाथों में गजचर्म धारण करते हैं । चर्म पहनते हैं । सर्प ही उनके भूषण हैं । प्रेत (मुर्दा) का भक्षण करते हैं मातृकाओं के बीच में पूजे जाते हैं । अथवा उनके पाँच मुँह हैं । अनुलोम क्रम से अग्निकोण पर्यन्त दीर्घाष्टक एक-एक मन्त्र से जाति जिनके अन्त में लगी हो इस तरह से उनके षड्ङ्गों की पूजा क्रमशः करें । (जैसे ओम् हृदयाय नमः,ओम् शिरसे स्वाहा, ओम् शिखायै वषट्, ओम् कवचाय हुम्, ओम् नेत्राभ्यां वषट् ओम् अस्त्राय फट् ) ।। ११-१२ ।। वे मन्दिर के अग्नि दल पर आरूढ़ रहते हैं और सुवर्ण की करधनी पहनते हैं । नादविन्दु तथा चन्द्रमा से संयुक्त वे मातृनाथ के अंगों की शोभा से सुशोभित हैं ।। १३ ।। वृष (बैल) पर सवार वीरभद्र माताओं के समक्ष रहते हैं । उनकी चार भुजाएँ हैं । गौरी देवी की दो भुजाएँ और तीन नेत्र हैं । वे शूल और दर्पण धारण करती हैं ।। १४ ।। कमलासन पर विराजमान चतुर्भुजी ललिता देवी त्रिशूल, गगरी, कमण्डलु और वरदमुद्रा धारण करती हैं । वे स्कन्दगण, आदर्श (दर्पण) तथा शलाका से सुशोभित रहती हैं ।। १५ ।। चण्डिका देवी को दस हाथों वाली होना चाहिए । वे दाहिने तरफ के हाथों में खड्ग, शूल, चक्र तथा शक्ति धारण करती हैं । और बाएँ तरफ के हाथों में नागपाश, चर्म, अंकुश, कुठार तथा धनुष धारण करती हैं । सिंह पर सवार होकर महिष को मारती हैं ।। १६-१७।।

**इस तरह से आदिमहापुराण अग्निपुराण का चतुष्षष्ठियोगिनी आदि के स्वरूप का वर्णन नामक बावनवाँ अध्याय सम्पूर्ण हुआ ॥ ५२ ॥**

**श्रीभगवान् ने कहा–** हे कमलोद्भव ! (ब्रह्मन् ! ) अब मैं लिङ्ग आदि का स्वरूप बतलाता हूँ उसे आप सुनें । चौकोर प्रस्तर की लम्बाई को दो भागों में विभक्त करे । पुनः आधे भाग को आठ भागों में विभक्त करके उसके तीन भाग को छोड़कर पाँच भागों में चौकोर विष्कम्भ को बनाए । उसकी चौड़ाई को छह भागों में विभक्त करके एक भाग, दो भाग तथा तीन भाग के क्रम से विभक्त करें ।। १-२ ।। इसमें पहला भाग ब्रह्मा का, दूसरा भाग विष्णु का तथा तीसरा भाग शिव का होता है । इसे ही वर्द्धमान कहते हैं । इसके चतुरस्र चौकोर भाग पर गुह्यकोणों में कर्ण के अर्द्धभाग के समान चिह्नित करना चाहिए ।। ३ ।। निःसन्देह इसका वैष्णव भाग आठ भागों में सिद्ध हो जाता है । पुनः उसको षोडश अस्रों वाला फिर बत्तीस अस्रों वाला एवं चौसठ अस्रों वाला बनाकर

साधयेत्ततः । कर्तयेदथ लिङ्गस्य शिरो वै देशिकोत्तमः ॥ ५ ॥ विस्तारमथलिङ्गस्य अष्टधा संविभाजयेत् । भागार्धार्धं तु संत्यज्य च्छत्राकारं शिरो भवेत् ॥ ६ ॥ त्रिषु भागेषु सदृश आयामो यस्य विस्तरः। तद्विभागसमं लिङ्गं सर्वकामफलप्रदम् ॥ ७ ॥ दैर्घ्यस्य तु चतुर्थेन विष्कम्भं देवपूजिते । सर्वेषामेव लिङ्गानां लक्षणं शृणु साम्प्रतम्॥ ८ ॥ मध्यसूत्रं समासाद्य ब्रह्मरुद्रान्तिकं बुधः । षोडशाङ्गुललिङ्गस्य षड्भागैर्भाजितो यथा ॥ ९ ॥ तद्वैयमनसूत्राभ्यां मानमन्तरमुच्यते । यवाष्टमुत्तरे कार्यं शेषाणां यवहानितः ॥ १०॥ अर्चाभागं त्रिधा कृत्वा उर्ध्वमेकं परित्यजेत् । अष्टधा तद्द्वयं कृत्वा ऊर्ध्वं भागत्रयं त्यजेत् ॥ ११ ॥ ऊर्ध्वं तु पञ्चमाद्भागाद्भ्राम्यलेखां प्रलम्बयेत् । भागमेकं परित्यज्य संगमं कारयेत्तयोः ॥ १२ ॥ एतत्साधारणं प्रोक्तं लिङ्गानां लक्षणं मया । सर्वसाधारणं वक्ष्ये पिण्डिकां तां निबोध मे ॥ १३ ॥ ब्रह्मभागप्रवेशं च ज्ञात्वा लिङ्गस्य चोच्छ्रयम् । न्यसेद्ब्रह्मशिलां विद्वान् सम्यक्कर्म शिलोपरि ॥ १४ ॥ तथा समुच्छ्रयं ज्ञात्वा पिण्डिकां प्रविभाजयेत् । द्विभागमुच्छ्रितं पीठं विस्तारे लिंगसम्मितम् ॥ १५ ॥ त्रिभागं मध्यतः खातं कृत्वा पीठं विभाजयेत् । स्वमानार्धं त्रिभागेण बाहुल्यं परिकल्पयेत् ॥ १६ ॥ बाहुल्यस्य त्रिभागेण मेखलामथ कल्पयेत् । खातं स्यान्मेखलातुल्यं क्रमान्निम्नं तु कारयेत् ॥ १७ ॥ मेखलाषोडशांशेन खातं वा तत्प्रमाणतः । उच्छ्रायं तस्य पीठस्य विकाराङ्गं तु कारयेत् ॥ १८॥ भूमौ प्रविष्टमेकं तु भागेनैकेन पिण्डिका । कण्ठं भागैस्त्रिभिः कार्यं भागेनैकेन पट्टिका ॥ १९ ॥ द्व्यंशेन चोर्ध्वपट्टं तु एकांशाः शेषपट्टिकाः । भागं भागं प्रविष्टं तु यावत्कण्ठं ततः पुनः ॥ २० ॥ निर्गमं भागमेकं तु यावद्वैशेषपट्टिका । प्रणालस्य त्रिभागेण निर्गमस्तु त्रिभागतः ॥ २१ ॥

---

उसे गोला कर लेना चाहिए । फिर आचार्य उस लिङ्ग के शिरोभाग को काटें ।। ४-५ ।। पुनः लिङ्ग के विस्तार लम्बाई को आठ भागों में विभक्त करके उसके एक भाग के चौथाई भाग को छोड़कर शिर को छत्राकार बनाना चाहिए ।। ६ ।। जिस लिङ्ग की लम्बाई और चौड़ाई एक समान तीन भागों में विभक्त हो, उसे विभागसम लिङ्ग कहते हैं । वह उपासकों के सम्पूर्ण कामनाओं को पूर्ण करने वाला होता है ।। ७ ।। देवताओं द्वारा पूजित लिङ्ग में लम्बाई के चौथाई भाग में विष्कम्भक होता है । अब आप समस्त लिङ्गों का स्वरूप सुनें ।। ८ ।। विद्वान् पुरुष को चाहिए कि वह सोलह अंगुल के लिङ्ग को छह भागों में इस तरह से विभक्त करे कि उसका मध्य सूत्र, ब्रह्म भाग एवं रुद्र भाग के बीच से जाय ।। ९ ।। यमन सूत्रों के द्वारा बने हुए उसी मान को अन्तर मान कहते हैं । ऊपर वाले भाग को आठ यव का बनाना चाहिए और उसके नीचे वाले प्रत्येक भाग एक-एक यव छोटे होते जाते हैं ।। १० ।। अर्चाभाग को तीन भागों में विभक्त करके उसके एक भाग के आधे भाग को छोड़ देना चाहिए । उसके दो भागों को आठ भागों में विभक्त करके उसके ऊपर के तीन भागों को छोड़ देना चाहिए ।। ११ ।। पाँचवें भाग के ऊपर घुमाकर एक रेखा नीचे की ओर ले जाय। उसके एक भाग को छोड़कर उन दो रेखाओं को मिला देना चाहिए ।। १२ ।। यह मैंने लिङ्गों का सामान्य लक्षण बतलाया है । अब मैं सर्वसाधारण पिण्डिका बतला रहा हूँ उसे आप समझें ।।१३।। विद्वान् पुरुष को चाहिए कि वह ब्रह्मभाग में प्रवेश तथा लिंग की ऊँचाई को जानकर कर्मशिला के ऊपर ब्रह्मशिला को अच्छी तरह रखे ।। १४ ।। लिङ्ग की ऊँचाई जानकर पिण्डिका का इस प्रकार से विभाजन करना चाहिए कि पीठ के दो भागों की ऊँचाई लिङ्ग की लम्बाई के समान होए ।। १५ ।। अपने प्रमाण के आधे के तीन भाग में बाहुल्य की कल्पना करनी चाहिए ।। १६ ।। बाहुल्य के तीन भाग में मेखला की कल्पना करनी चाहिए । खात को मेखला के समान और क्रमशः नीचे की ओर उसे (मेखला को) झुका हुआ होना चाहिए ।। १७ ।। मेखला के षोडशांश के बराबर खात का निर्माण करना चाहिए और उसी के प्रमाणानुसार पीठ की ऊँचाई बनानी चाहिए तथा उसके विकार अङ्ग का निर्माण करना चाहिए ।। १८ ।। उसका एक भाग भूमि में प्रविष्ट होना चाहिए और एक भाग से पिण्ड का निर्माण करना चाहिए । उसके तीन भाग से कण्ठ का निर्माण करना चाहिए और एक भाग में पट्टिका का निर्माण करना चाहिए ।। १९ ।। उसके दो भाग में ऊपर का पट्ट तथा एक-एक अंश में शेष पट्टिकाओं का निर्माण करना चाहिए । प्रत्येक भाग को कण्ठ पर्यन्त प्रविष्ट होना चाहिए ।। २० ।। उनके एक भाग में निर्गम जल निकलने का मार्ग बनाना चाहिए

मूलेऽङ्गुल्यग्रविस्तारमग्रे त्र्यंशेन चार्धतः । ईषन्निम्नं तु कुर्वीत खातं तच्चोत्तरेण वै ॥ २२ ॥ पिण्डिकासहितं लिङ्गमेतत्साधारणं स्मृतम् ॥ २३ ॥

इत्यादिमहापुराण आग्नेये लिङ्गादिलक्षणवर्णनं नाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

## अथ चतुष्पञ्चाशत्तमोऽध्यायः

## लिङ्गमानव्यक्ताव्यक्तलक्षणादिकथनम्

श्रीभगवानुवाच– **वक्ष्याम्यन्यप्रकारेण लिङ्गमानादिकं शृणु । वक्ष्ये लवणजं लिङ्गं घृतजं बुद्धिवर्धनम् ॥ १ ॥ भूतये वस्त्रलिङ्गं तु लिङ्गं तात्कालिकं विदुः । पक्वापक्वं मृण्मयं स्यादपक्वात्पक्वजं परम् ॥ २ ॥ ततो दारुमयं पुण्यं दारुजाच्छैलजं वरम् । शैलाद्वरं तु मुक्ताजं ततो लौहं सुवर्णजम् ॥ ३ ॥ राजतं कीर्तितं ताम्रं पैत्तलं भुक्तिमुक्तिदम् । रङ्गजं रसलिङ्गं च भुक्तिमुक्तिप्रदं वरम् ॥ ४ ॥ रसजं रसलोहादिरत्नगर्भं तु बन्धयेत्। मानादि नेष्टं सिद्धादिस्थापितेऽथ स्वयंभुवि ॥ ५ ॥ बाणे च स्वेच्छया तेषां पीठप्रासादकल्पना । पूजयेत्सूर्यबिम्बस्थं दर्पणे प्रतिबिम्बितम् ॥ ६ ॥ पूज्यो हरस्तु सर्वत्र लिङ्गे पूर्णार्चनं भवेत् । हस्तोत्तरोच्छ्रितं शैलं दारुजं तद्वदेव हि ॥ ७ ॥ चलमङ्गुलमानेन द्वारगर्भकरैः स्थिरम् । अङ्गुलादग्रहलिङ्गं स्याद्यावत्पञ्चदशाङ्गुलम् ॥ ८ ॥ द्वारमानात्त्रिसंख्याकं नवधागर्भमानतः । नवधागर्भमानेन लिङ्गं धाम्नि च पूजयेत् ॥ ९ ॥ एवं लिङ्गानि षट्त्रिंशज्ज्ञेयानि**

---

जो शेष पट्टिका पर्यन्त हो । प्रणालिका (नाली) के तीन भाग से तीन भागों से जाने वाले निर्गम को बनाना चाहिए ।। २१ ।। निर्गम के मूल में चौड़ाई अंगुलि के अग्रभाग के समान होना चाहिए उसे आगे अंगुलि के तीन भाग के समान फिर आधी अंगुल के बराबर होना चाहिए ।।२२ ।। निर्गम से उत्तर थोड़ा नीचे खात बनाना चाहिए । पिण्डिका के साथ इसे साधारण लिङ्ग कहा जाता है।।२३।।

**इस तरह से आदिमहापुराण अग्निपुराण का ( शिवलिङ्ग ) आदि के स्वरूप वर्णन नामक तिरपनवाँ अध्याय सम्पूर्ण हुआ ॥ ५३ ॥**

**श्रीभगवान् ने कहा–** अब मैं दूसरे प्रकार से शिवलिंग के प्रमाण आदि का वर्णन कर रहा हूँ, उसे सुनो । अब मैं बुद्धि को बढ़ाने वाले लवणजन्य तथा घृतजन्य लिङ्ग का वर्णन करूँगा।।१।। तत्काल वस्त्र से बनाया गया (शिव) लिङ्ग समृद्धिकारक होता है । मिट्टी का बनाया हुआ लिङ्ग दो प्रकार का होता है । पक्व तथा अपक्व । अपक्व की अपेक्षा पक्व मिट्टी का लिङ्ग श्रेष्ठ होता है ।।२।। उससे भी लकड़ी का बना लिङ्ग अधिक पुण्यप्रद होता है और उससे भी श्रेष्ठ पत्थर का बना लिंग श्रेष्ठ होता है । उससे भी श्रेष्ठ मुक्ता (मोती) का (शिव) लिङ्ग होता है ।। ३ ।। चाँदी, ताम्बा तथा पित्तल का बना हुआ शिवलिङ्ग भोग तथा मोक्ष प्रदान करने वाला होता है । रंगा तथा पारद का बना हुआ शिवलिंग भोग तथा मोक्ष प्रदान करने के लिए श्रेष्ठ है ।। ४ ।। पारद के बने लिंग के भीतर पारद लोहा आदि (ताम्बा, रजत एवं सुवर्ण आदि) करके बनवाना चाहिए । सिद्ध पुरुषों के द्वारा स्थापित अथवा स्वयम् उत्पन्न शिवलिंग के विषय में प्रमाण आदि का कोई भी बन्धन नहीं है।।५।। बाण शिवलिंग (नर्मदेश्वर) के विषय में भी यही बात है ।उनके पीठ तथा प्रासाद की कल्पना अपनी इच्छा के अनुसार कर लेनी चाहिए । सूर्य बिम्ब में स्थित शिवलिङ्ग की पूजा दर्पण में प्रतिबिम्बित रूप से करनी चाहिए ।। ६ ।। शिव जी सर्वत्र पूज्य हैं, किन्तु शिवलिङ्ग में उनकी पूजा पूर्ण होती है । पत्थर तथा लकड़ी के बने शिवलिङ्ग को एक हाथ ऊँचा होना चाहिए ।। ७ ।। चल शिवलिङ्ग को अङ्गुल के मान से निर्माण करना चाहिए तथा स्थिर शिवलिङ्ग के द्वार तथा गर्भगृह को हाथ के मान से बनाना चाहिए । गृह में स्थापित शिवलिङ्ग की ऊँचाई एक अंगुल से लेकर पन्द्रह अंगुल पर्यन्त होनी चाहिए । ८ ।। श्रेष्ठ प्रमाण के अनुसार द्वारमान के अनुसार लिङ्ग तीन प्रकार के होते हैं और गर्भमान के अनुसार उन प्रत्येक के नव-नव भेद होते हैं । इस तरह लिङ्गों के सत्ताइस (२७) भेद हुए और गर्भमान के शुद्ध नव भेदों को मिलाकर लिंग भेदों की संख्या छत्तीस हो जाती है । इन्हीं लिंगों की गृह में पूजा करनी चाहिए ।। ९ ।। मध्यमान के अनुसार भी लिङ्गों के (३६) छत्तीस

ज्येष्ठमानतः । मध्यममानेन षट्त्रिंशत्षट्त्रिंशदधमेन च ॥ १० ॥ इत्थमैक्येन लिङ्गानां शतमष्टोत्तरं भवेत् । एकाङ्गुलादि पञ्चान्तं कनिष्ठं चलमुच्यते॥ ११ ॥ षडादिदशपर्यन्तं चललिङ्गं च मध्यमम् । एकादशाङ्गुलादि स्याज्ज्येष्ठं पञ्चदशान्तिकम् ॥ १२ ॥ षडङ्गुलं महारत्नै रत्नैरन्यैर्नवाङ्गुलम्। रविभिर्हेमतारोत्थं लिङ्गं शेषैस्त्रिपञ्चभिः ॥ १३ ॥ षोडशांशे च वेदांशे युगं लुप्तोर्ध्वदेशतः । द्वात्रिंशत्षोडशांशाश्च कोणयोस्तु विलोपयेत् ॥ १४॥ चतुर्निवेशनात्कण्ठो विंशतिस्त्रियुगैस्तथा । पार्श्वाभ्यां विलुप्ताभ्यां घनलिङ्गं भवेद्वरम् ॥ १५॥ धाम्नो युगर्तुनागांशैर्द्वारमानोनितं क्रमात् । लिङ्गे द्वारोच्छ्रयादर्वाग्भवेत्पादोनितं क्रमात् ॥ १६ ॥ गर्भार्धेनाधमं लिङ्गं भूतांशैः स्यात्त्रिभिर्वरम् । तयोर्मध्ये च सूत्राणि सप्त सम्पातयेत्समम्॥ १७ ॥ एवं स्युर्नवसूत्राणि भूतसूत्रैश्च मध्यमम्। द्व्यन्तरो वामभागश्च लिङ्गानां दीर्घतानव ॥ १८ ॥ हस्ताद्विवर्धते हस्तो यावत्स्युर्नव पाणयः । हीनमध्योत्तमं लिङ्गं त्रिविधं त्रिविधात्मकम् ॥ १९ ॥ एकैकलिङ्गमध्येषु त्रीणि त्रीणि च पादशः । लिङ्गानि घटयेद्धीमान्षट्सु चाष्टोत्तरेषु च ॥ २०॥ स्थिरदीर्घप्रमाणैस्तु द्वारगर्भकरात्मिका । भागेशं चाऽऽप्यमीशं च देवेशं तुल्यसंज्ञितम् ॥ २१ ॥ चत्वारि लिङ्गरूपाणि विष्कम्भेण तु लक्षयेत् । दीर्घमायान्वितं कृत्वा लिङ्गं कुर्यात्त्रिरूपकम् ॥ २२ ॥ चतुरष्टाष्टवृत्तं च तत्त्वत्रयगुणात्मकम् । लिङ्गानामीप्सितं दैर्घ्यं तेन कृत्वाऽङ्गुलानि वै ॥ २३॥ ध्वजाद्या यैः सुरैर्भूतैः शिखिभिर्वा हरेत्कृती । तान्यङ्गुलानि यच्छेषं लक्षयेच्च शुभाशुभम् ॥ २४ ॥ ध्वजाद्या ध्वजसिंहेभवृषाः श्रेष्ठाः परेऽशुभाः। स्वरेषु षड्जगान्धारपञ्चमाः

भेद होते हैं और अधममान के अनुसार भी लिङ्गों के छत्तीस (३६) भेद होते हैं ।। १० ।। इस तरह से सबों को जोड़ देने से लिङ्ग के भेदों की संख्या (१०८) एक सौ आठ हो जाती है । एक अंगुल से लेकर पाञ्च अंगुल पर्यन्त लम्बे चल शिवलिंग अधम कोटि के होते हैं ।। ११ ।। छह अंगुल से लेकर (१०) दस अंगुल पर्यन्त लम्बे चल शिवलिंग मध्यम कोटि के होते हैं । ग्यारह (११) अंगुल से लेकर पन्द्रह (१५) अंगुल पर्यन्त के लम्बे चल शिवलिंग उत्तम कोटि के होते हैं । १२ ।। महारत्नों से बने शिवलिंगों को छह अंगुल का, अन्य रत्नों से बने शिवलिंगों को नव अंगुल का, हेमसार (सुवर्णभार) से बने शिवलिंग को बारह अंगुल का तथा उससे भिन्न वस्तुओं से बने शिवलिंग को पन्द्रह अंगुल का होना चाहिए ।। १३ ।। लिङ्गशिला के सोलहवें तथा चतुर्थ भाग में ऊपर से दो भाग को मिटाकर दोनों कोनों के बत्तीसवें तथा सोलहवें भाग को मिटा देना चाहिए ।। १४ ।। उसमें चार अंश मिला देने से कण्ठ बनता है । दोनों बगल के बारह-बारह अंशों को मिटा देने से बना हुआ लिङ्ग श्रेष्ठ चल लिङ्ग होता है । मन्दिर की ऊँचाई को सोलह अंशों में विभक्त करके उसमें चार अंश कम ऊँचा करने से उत्तम द्वार, छह अंश कम करने से मध्यम द्वार तथा आठ अंश कम करने से अधम द्वार होता है । इसी तरह द्वार की ऊँचाई को एक चौथाई कम ऊँचाई उत्तम लिङ्ग, दो चौथाई कम ऊँचाई मध्यम लिङ्ग तथा तीन चौथाई कम ऊँचा अधम कोटि का लिंग होता है।।१५-१६।। गर्भशिला के आधे भाग की ऊँचाई वाला अधम लिंग होता है तथा तीन भाग की ऊँचाई वाला उत्तम लिंग होता है । दोनों के बीच में बराबर-बराबर दूरी पर सात सूत्र बनाए । इस तरह से कुल मिलाकर नव सूत्र हो जाते हैं । इनमें से पाँच सूत्रों की लम्बाई के बराबर ऊँचाई वाला शिवलिङ्ग मध्यम कोटि का होता है । लिङ्गों की लम्बाई में दो-दो अंशों का अन्तर होने से लिङ्गों की संख्या नव हो जाती है ।। १८ ।। यदि हाथ से नापकर शिवलिङ्ग बनाया जाय तो एक-एक हाथ शिवलिङ्गों की लम्बाई बढ़ने से शिवलिङ्ग एक हाथ से लेकर नव हाथ तक लम्बे होंगे । ये शिवलिङ्ग तीन प्रकार के होते हैं, अधम लिङ्ग, मध्यमलिङ्ग तथा उत्तमलिङ्ग ।। १९ ।। एक-एक प्रकार के लिङ्ग में तीन-तीन लिङ्गों को लेना चाहिए । एक हाथ से तीन हाथ तक के लिङ्ग, अधम लिङ्ग, चार हाथ से छह हाथ तक के मध्यम लिङ्ग और सात हाथ से नव हाथ तक के उत्तम लिङ्ग होते हैं । बुद्धिमान पुरुष को चाहिए कि वह लिङ्गों को छह तथा अष्टोत्तरशत भागों में विभक्त करे । स्थिर तथा दीर्घ प्रमाणों के द्वारा तीन मान होते हैं, द्वारमान । इन्हीं मानों के आधार पर इन लिंगों के तीन नाम हैं- भागेश, जलेश तथा देवेश ।। २०-२१ ।। विस्तार के अनुसार लिंगों के चार रूप होते हैं- लम्बाई तथा चौड़ाई से युक्त करके तीन प्रकार का लिंग बनाना चाहिए।।२२।। ये तीनों प्रकार के शिवलिंग चार अथवा आठ हाथ के होते हैं तथा तत्त्वत्रय के गुण से युक्त होते ह। लिङ्ग की अभिप्रेत लम्बाई का अंगुल बनाकर उसमें आठ, सात, पाँच तथा तीन का भाग देने से जितने अंगुल शेष बचें उनके अनुसार उनका शुभ तथा अशुभ फल जानना चाहिए।।२३-२४।।

शुभदायकाः ॥ २५ ॥ भूतेषु च शुभा भूः स्यादग्निश्चाऽऽहवनीयकः । उक्तायामस्य चार्धांशे नागांशैर्भाजिते क्रमात्॥२६॥ रसभूतांशषष्ठांशत्र्यंशाधिकशरैर्भवेत्। आढ्यानाढ्यसुरेज्यार्क तुल्यानां चतुरस्रता ॥ २७ ॥ पञ्चमं वर्धमानाख्यं व्यासान्नाहप्रवृद्धितः। द्विधा भेदा बहून्यत्र वक्ष्यन्ते विश्वकर्मतः ॥ २८ ॥ आढ्यादीनां त्रिधा स्थौल्यादवधूतं तथाऽष्टधा । त्रिधा हस्ताज्जिनाख्यं च युक्तं सर्वसमेन च ॥२९॥ पञ्चविंशतिलिङ्गानि नाढ्ये देवार्चिते तथा । पञ्चसप्तभिरेकत्वाज्जिनैर्भक्तैर्भवन्ति हि ॥ ३० ॥ चतुर्दशसहस्राणि चतुर्दशशतानि च । एवमष्टाङ्गुलविस्तारो नवैककरगर्भतः ॥ ३१ ॥ तेषां कोणार्धकोणस्थैश्छिन्द्यात्कोणानि सूत्रकैः । विस्तारं मध्यतः कृत्वा स्थाप्यं वा मध्यतस्त्रयम् ॥ ३२ ॥ विभागादूर्ध्वमष्टास्रो द्व्यष्टास्रः स्याच्छिवांशकः । पादाज्जावन्तको ब्रह्मा नाभ्यन्तो विष्णुरित्यतः ॥३३॥ मूर्धान्तो भूतभागेशो व्यक्ताऽव्यक्ते च तद्वति । पञ्चलिङ्गव्यवस्थायां शिरो वर्तुलमुच्यते ॥ ३४ ॥ छत्राभं कुक्कुटाभं वा बालेन्दुपुरुषाकृति । एकैकस्य चतुर्भेदैः कामभेदात्फलं वदे ॥ ३५ ॥ लिङ्गमस्तकविस्तारं वसुभक्तं तु कारयेत् । आद्यभागं चतुर्धा तु विस्तारोच्छ्रायतो भजेत् ॥ ३६ ॥ चत्वारि तत्र सूत्राणि भागभागानुपातनात् । पुण्डरीकं तु भागेन विशालाख्यं विलोपनात्॥३७॥ त्रिशातनात्तु श्रीवत्सं शत्रुकृद्वेदलोपनात्। शिरः सर्वसमे श्रेष्ठं कुक्कुटाभं सुराह्वये ॥३८ ॥ चतुर्भागात्मके लिङ्गे त्रपुषं द्वयलोपनात्।

ध्वजादि में ध्वज (आठ) सिंह (सात) हाथी (पाँच) तथा वृषभ (तीन) शुभ आय (शेष) हैं और उससे भिन्न अशुभ । स्वरों में षड्ज, गान्धार और पञ्चम स्वर शुभ है ।।२५।। भूतों में पृथिवी शुभ है और अग्नियों में आह्वनीय अग्नि शुभ है । उपर्युक्त विस्तार के आधे भाग में आठ से भाग देने पर रस (सात) भूत (पाँच) छह तथा तीन अंश रहने पर शिवलिङ्ग क्रमशः, आढ्य, अनाढ्य, देवपूज्य तथा अर्क (सूर्य) तुल्य हो जाते हैं । ये सभी शिलिङ्ग चतुरस्र होते हैं ।। २६-२७ ।। व्यास की अपेक्षा नाह की अधिकता होने पर वर्द्धमान नामक पाँचवाँ शिवलिंग होता है । इस तरह शिवलिंग के दो भेद होते हैं– (१) जिसमें ब्यास की अपेक्षा नाह बड़ा होता है और (२) जिसमें नाह की अपेक्षा ब्यास बड़ा होता है । विश्वकर्मा के अनुसार शिवलिङ्ग के बहुत से भेद बताए जाते हैं ।। २८।। आढ्य आदि तीनों लिङ्ग के भेद स्थौल्य के कारण प्रत्येक के तीन भेद हो जाते हैं । उन सबों के एक-एक यव न्यूनता के कारण आठ-आठ भेद हो जाते हैं । इस तरह प्रत्येक के चौबीस-चौबीस भेद हो जाते हैं । हस्तमान से बने इन संज्ञक भेद को भी आढ्य अनाढ्य तथा सुरेज्य भेद के साथ मिला देने से प्रत्येक के पच्चीस पच्चीस भेद होते हैं । इस तरह तीनों के समस्त भेदों को मिलाकर शिवलिङ्गों के पच्चहत्तर भेद हो जाते हैं । उन प्रत्येक के साथ एक-एक जिन तथा मध्य के साथ सांकर्य करने से शिवलिङ्गों की संख्या चौदह हजार चौदह सौ अर्थात् पन्द्रह हजार चार सौ (१५४००) हो जाती है । इसी तरह आठ अंगुल प्रमाण का शिवलिंग एकाङ्गुल मान, हस्तमान तथा गर्भमान के भेद से नव प्रकार का होता है ।। ३१ ।। उन सबों के कोणार्ध तथा कोण में विद्यमान सूत्रों के द्वारा कोणों को काटना चाहिए । मध्यभाग के विस्तार को ही प्रमाण मानकर उनके मध्यभाग तथा ऊर्ध्वभाग की कल्पना करनी चाहिए ।। ३२ ।। मध्यभाग से ऊपर आठ कोणों वाला अथवा सोलह कोणों वाला भाग शिवांश होता है । पाद से लेकर जानुपर्यन्त का लिङ्ग का भाग ब्रह्मा का अंश होता है, उससे ऊपर नाभिपर्यन्त का अंश विष्णु का और उससे ऊपर मूर्धापर्यन्त का भाग शिव का होता है । यह सिद्धान्त व्यक्त तथा अव्यक्त सभी प्रकार के लिङ्गों से सम्बन्धित है । पञ्चलिङ्ग व्यवस्था में शिवलिङ्ग का सिर गोल होता है ।। ३३-३४ ।। वह गोला सिर छत्र के समान अथवा कुक्कुटाण्ड के समान होना चाहिए। उसकी आकृति बाल चन्द्रमा से युक्त पुरुष की आकृति वाली होनी चाहिए । इन प्रत्येक शिवलिङ्गों के कामना भेद के कारण चार-चार भेद होते हैं, जिसे मैं बतला रहा हूँ ।।३५।। लिङ्ग के मस्तक के विस्तार को आठ भागों में विभक्त करना चाहिए, उसके प्रथम भाग को विस्तार से चार गुना ऊँचा होना चाहिए ।। ३६ ।। उसके भागों में विभक्त करने के कारण चार भाग हो जाते हैं । उसके एक भाग को मिटा देने से पुण्डरीक नामक शिवलिङ्ग बनता है, दो भागों का लोप करने से विशाल नामक शिवलिङ्ग बनता है, तीन अंशों को मिटा देने से श्रीवत्स नामक शिवलिङ्ग बनता है और चार भागों का लोप करने से शत्रुकृत् (शत्रुओं के विनाशक) नामक शिवलिङ्ग बनता है । चारों ओर से एक समान सिर होने पर वह शिवलिङ्ग श्रेष्ठ होता है तथा सुरेज्य नामक शिवलिङ्ग का सिर कुक्कुटाण्ड के समान होता है ।। ३७-३८ ।। चार भागों वाले शिवलिङ्ग के दो भागों का लोप करने पर त्रपुष् नामक शिवलिङ्ग होता है । अनाढ्य अथवा नामक शिवलिङ्ग का

अनाढ्यस्य शिरः प्रोक्तमर्धचन्द्रं शिरः शृणु ॥ ३९ ॥ अंशात्प्रान्ते युगांशैश्च द्वैकहान्याऽमृताक्षकम् । पूर्णबालेन्दुकुमुदं द्वित्रिवेदक्षयात्क्रमात्॥४०॥ चतुस्त्रिरेखं वदनं मुखलिङ्गमतः शृणु । पूजाभागः प्रकर्तव्यो मूर्त्यग्निपदकल्पितः ॥ ४१ ॥ अर्कांशं पूर्ववत्त्यक्त्वा षट्स्थानानि च वर्तयेत् । शिरोन्नतिः प्रकर्तव्या ललाटं नासिका ततः॥ ४२ ॥ वदनं चिबुकं ग्रीवा युगभागैर्भुजाक्षिभिः । कराभ्यां मुकुलीकृत्य प्रतिमायाः प्रमाणतः ॥ ४३॥ मुखं प्रति समः कार्यो विस्तारादष्टमांशतः । चतुर्मुखं मया प्रोक्तं त्रिमुखं चोच्यते शृणु ॥ ४४ ॥ कर्णपादाधिकास्तस्य ललाटादीनि निर्दिशेत् । भुजौ चतुर्भिर्भागैस्तु कर्तव्यौ पश्चिमोर्जितौ ॥ ४५ ॥ विस्तरादष्टमांशेन मुखानां प्रतिनिर्गमः। एकवक्त्रं तथा कार्यं पूर्वस्यां सौम्यालोचनम्॥ ४६॥ ललाटनासिकावक्त्रग्रीवायां च विवर्तयेत् । भुजाच्च पञ्चमांशेन भुजहीनं विवर्तयेत् ॥ ४७ ॥ विस्तारस्य षडंशेन मुखैर्निर्गमनं हितम् । सर्वेषां मुखलिङ्गानां त्रपुषं वाऽथ कुक्कुटम् ॥ ४८ ॥

इत्यादिमहापुराण आग्नेये लिङ्गमानव्यक्ताव्यक्तलक्षणादिकथनं नाम चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

## अथ पञ्चपञ्चाशत्तमोऽध्यायः

## पिण्डिकालक्षणम्

श्रीभगवानुवाच— **अतः परं प्रवक्ष्यामि प्रतिमानां तु पिण्डिकाम् । दैर्घ्येण प्रतिमा तुल्या तदर्धेन तु विस्तृता ॥ १ ॥ उच्छ्रिताऽऽयामतोऽर्धेन सुविस्ताराऽर्धभागतः। तृतीयेन तु वा तुल्यां तत्त्रिभागेन मेखलाम् ॥ २ ॥ खातं च तत्प्रमाणं तु किञ्चिदुत्तरतो नतम् । विस्तारस्य चतुर्थेन तोयमार्गं**

सिर अर्द्धचन्द्राकार होता है । अब उसके विषय में सुनो ।। ३९ ।। शिवलिङ्ग के प्रान्त भाग के चार भागों में एक अंश को हटा देने से अमृताक्ष नामक, दो अंशों को हटाने से पूर्णेन्दु नामक, तीन भागों को हटा देने से बालेन्दु नामक तथा चार अंशों को हटा देने से कुमुद नामक शिवलिङ्ग बनता है ।। ४० ।। इनमें से द्वितीय, तृतीय एवं चतुर्थ क्रमशः चतुर्मुख,त्रिमुख और द्विमुख होते हैं । अब मुख लिङ्ग के विषय में सुनो । पूजा भाग की कल्पना तीन प्रकार से करनी चाहिए, मूर्तिपूजा, अग्निपूजा और पदपूजा ।।४१।। पहले के ही समान बारह अंश को छोड़कर निम्नांकित छह स्थानों को बनाना चाहिए। सर्वप्रथम सिर की ऊँचाई बनानी चाहिए, उसके पश्चात् ललाट बनाना चाहिए और उसके पश्चात् नासिका ।।४२।। तदनन्तर मुख, चिबुक् तथा ग्रीवा को बनाना चाहिए। चार भागों में दोनों भुजाओं तथा नेत्रों को बनाना चाहिए । पुनः प्रतिमा के प्रमाण (आकार) के अनुसार मुकुल के समान हाथों को बनाकर विस्तार के अष्टमांश (आठवें भाग) में प्रत्येक मुख को एक समान बनाना चाहिए । इस तरह से चतुर्मुख प्रतिमा के संबन्ध में मैंने कहा । अब मैं तीन मुख वाली मूर्ति के विषय में बतला रहा हूँ सुनो ।।४४।। तीन मुख वाली मूर्ति के चतुर्मुख मूर्ति की अपेक्षा कान तथा पैर बड़े होते हैं । उसके ललाट आदि पहले के ही समान होते हैं । चार भागों में पश्चिम की ओर उठे हुए दोनों भुजाओं को बनाना चाहिए ।।४५।। विस्तार के अष्टमांश के द्वारा मुखों का निर्गम बनाना चाहिए। इसी तरह एक मुख वाले लिङ्ग को बनाए उसका मुख पूर्व की ओर नेत्र सौम्य होने चाहिए ।।४६।। इस लिङ्ग के ललाट, नासिका, तथा टेढ़ी ग्रीवा में उभाड़ होनी चाहिए। इसे भुजा के पाँचवें अंश से किन्तु भुजाओं से रहित रूप में ही बनाना चाहिए । विस्तार के छठें अंश से मुखों का निर्गम बनाना ठीक रहता है । सभी मुख लिङ्ग त्रपुष् अथवा कुक्कुटाण्ड के समान होते हैं ।।४७।।

**इस तरह आदिमहापुराण अग्निपुराण का ( शिव ) लिङ्ग के प्रमाण आदि तथा उनके व्यक्त एवं अव्यक्त आदि स्वरूप का वर्णन नामक चौवनवाँ अध्याय सम्पूर्ण हुआ ॥ ५४॥**



**श्रीभगवान् ने कहा—** इसके बाद मैं प्रतिमाओं की पिण्डिका (पीठिका) का वर्णन करूँगा । पिण्डिका की लम्बाई प्रतिमा के समान तथा चौड़ाई प्रतिमा के आधी होनी चाहिए ।। १ ।। पीठिका

तु कारयेत् ॥ ३ ॥ तन्मूलस्य विस्तारमग्रे कुर्यात् तदर्धतः । विस्तारस्य तृतीयेन तोयमार्गं तु कारयेत् ॥ ४ ॥ पिण्डिकार्धेन वा तुल्यं दैर्घ्यमीशस्य कीर्तितम् । ऐशं वा तुल्यदीर्घं च ज्ञात्वा सूत्रं प्रकल्पयेत् ॥ ५ ॥ उच्छ्रायं पूर्ववत्कुर्याद्भागषोडशसंख्यया। अधः षट्कं द्विभागं तु कण्ठे कुर्यात्त्रिभागकम् ॥ ६ ॥ शेषास्त्वेकैकशः कार्याः प्रतिष्ठा निर्गमस्तथा । पट्टिका पिण्डिका चेयं सामान्यप्रतिमासु च ॥ ७ ॥ प्रासादद्वारमानेन प्रतिमाद्वारमुच्यते । गजव्यालकसंयुक्ता प्रभास्यात्प्रतिमासु च ॥ ८ ॥ पिण्डिकाऽपि यथाशोभं कर्तव्या सततं हरेः । सर्वेषामेव देवानां विष्णूक्तं मानमुच्यते ॥ ९ ॥ देवीनामपि सर्वासां लक्ष्म्युक्तं मानमुच्यते ॥ १० ॥

इत्यादिमहापुराण आग्नेये पिण्डिकालक्षणवर्णनं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

## अथ षट्पञ्चाशत्तमोऽध्यायः

## दशदिक्पालयागकथनम्

श्रीभगवानुवाच– **प्रतिष्ठापञ्चकं वक्ष्ये प्रतिमात्मा तु पूरुषः । प्रकृतिः पिण्डिका लक्ष्मीः प्रतिष्ठा योगकस्तयोः ॥ १ ॥ इच्छाफलार्थिभिस्तस्मात्प्रतिष्ठा क्रियते नरैः । गर्भसूत्रं तु निःसार्य प्रासादस्याग्रतो गुरुः ॥ २ ॥ अष्टषोडशविंशान्तं मण्डपं चाधमादिकम् । स्नानार्थं कलशार्थं च यागद्रव्यार्थमर्धतः॥३॥ त्रिभागेणार्धभागेन वेदिं कुर्यात्तु शोभनाम् । कलशैर्घटिकाभिश्च वितानाद्यैर्विभूषयेत् ॥ ४ ॥ पञ्चगव्येन संप्रोक्ष्य सर्वद्रव्याणि धारयेत् । अलङ्कृतो**

---

की ऊँचाई तथा लम्बाई मूर्ति की ऊँचाई के आधा तथा चौड़ाई के आधा अथवा तृतीय भाग के तुल्य होना चाहिए और पीठिका के तिहाई भाग के बराबर मेखला होनी चाहिए ।। २ ।। उसके (मेखला के) कुछ उत्तर भाग में एक गढ़ा बनाना चाहिए जो उत्तर की ओर कुछ झुका हुआ हो । गढ़े के विस्तार के चौथाई भाग में जल निकलने का मार्ग बनाना चाहिए ।। ३ ।। उसके मूल का विस्तार आगे की ओर आधा करना चाहिए । विस्तार के तिहाई भाग में जल निकलने का मार्ग बनाना चाहिए ।। ४ ।। पिण्डिका के आधे भाग के तुल्य प्रतिमा की लम्बाई होनी चाहिए । अथवा उसी के बराबर प्रतिमा का परिमाण जानकर सूत्र बनाना चाहिए ।। ५ ।। सोलह भाग के बराबर प्रतिमा की ऊँचाई का अधोभाग बारह अंश के बराबर और तीन भाग की संख्या के बराबर कण्ठ बनाना चाहिए।।६।। अवशिष्ट प्रतिष्ठा, निर्गम तथा पट्टिका को एक-एक भाग में बनाना चाहिए । यही सामान्य प्रतिमाओं की पिण्डिका का लक्षण है ।। ७ ।। प्रासाद द्वार के मान के बराबर प्रतिमा द्वार बतलाया गया है । प्रतिमाओं के चारों ओर गज (हाथी) तथा सर्प से युक्त प्रभा होनी चाहिए ।। ८ ।। श्रीभगवान् की पिण्डिका भी सुशोभित बनाना चाहिए । सभी देवताओं के लिए भगवान् विष्णु की प्रतिमा का मान तथा सभी देवियों की प्रतिमा के लिए लक्ष्मी की प्रतिमा का मान बतलाया गया है ।। ९ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का पिण्डिका आदि के स्वरूप का वर्णन नामक पचपनवाँ अध्याय सम्पूर्ण हुआ ॥ ५५ ॥**

**श्रीभगवान् ने कहा–** अब मैं प्रतिष्ठापञ्चक का वर्णन कर रहा हूँ । पुरुष (परमात्मा) प्रतिमास्वरूप हैं और प्रकृति लक्ष्मी पिण्डिका स्वरूप हैं । प्रतिष्ठा प्रकृति (लक्ष्मी) तथा पुरुष (परमात्मा) का संयग कराती हैं ।। १ ।। अतएव मनोभिलषित फल की प्राप्ति चाहने वाले मनुष्य प्रतिष्ठा करते हैं । आचार्य को चाहिए कि गर्भसूत्र को प्रासाद मण्डप के आगे निकालें । आठ हाथ, सोलह हाथ और बीस हाथ के मण्डप क्रमशः अधम, मध्यम तथा उत्तम कोटि के होते हैं । याग मण्डप का आधा भाग स्नान कराने के लिए, कलश रखने के लिए एवं याग सामग्री रखने के लिए होना चाहिए।।२-३।। आधे भाग के तीन हिस्से में मनोहर वेदी बनानी चाहिए और उसे कलश, घटिका तथा चंदोवा आदि से सजाना चाहिए ।। ४ ।। पञ्चगव्य से प्रोक्षण करके सभी द्रव्यों को रखना चाहिए । आचार्य

गुरुर्विष्णुं ध्यात्वा तं च प्रपूजयेत् ॥ ५ ॥ अङ्गुलीयप्रभृतिभिर्मूर्तिपान्प्रार्थनादिभिः । कुण्डे कुण्डे स्थापयेच्च मूर्तिपांस्तत्र पारगान् ॥ ६ ॥ चतुष्कोणे चार्धकोणे वर्तुले पद्मसंन्निभे । पूर्वादौ तोरणार्थं तु पिप्पलोदुम्बरौ वटः ॥ ७ ॥ प्लक्षः सुशोभनं पूर्वं सुभद्रं दक्षतोरणम् । सुकर्माणं सुहोत्रं च आप्ये सौम्ये समुच्छ्रयम् ॥ ८ ॥ पञ्चहस्तं तु संस्थाप्य स्योना पृथिवीति पूजयेत् । तोरणस्तम्भमूले तु कलशान्मङ्गलाङ्कुरान् ॥ ९ ॥ प्रदद्यादुपरिष्टाच्च कुर्याच्चक्रं सुदर्शनम् । पञ्चहस्तप्रमाणस्तु ध्वजः कार्यो विचक्षणैः ॥ १० ॥ वैपुल्यं चास्य कुर्वीत षोडशाङ्गुलसंमितम् । सप्तहस्तोच्छ्रितं चास्य कुर्याद्दण्डं सुरोत्तम ॥ ११ ॥ अरुणोऽग्निनिभश्चैव कृष्णः शुक्लोऽथ पीतकः । रक्तवर्णस्तथा श्वेतश्चैते वर्णाः क्रमाद्ध्वजे ॥ १२ ॥ कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः । शङ्कुकर्णः सर्पनेत्रः सुमुखः सुप्रतिष्ठितः ॥ १३ ॥ पूज्या कोटिगणैर्युक्ताः पूर्वाद्या ध्वजदेवताः । जलाढकसुपूरास्तु पक्वबिम्बोपमाघटाः ॥ १४ ॥ अष्टाविंशाधिकशतं कालमण्डन वर्जिताः । सहिरण्या वस्त्रकण्ठाः सोदकास्तोरणाद्बहिः ॥ १५॥ घटाः स्थाप्याश्च पूर्वादौ वेदिकायाश्च कोणगाः । चतुरः स्थापयेत्कुम्भानाजिघ्रेति समन्ततः ॥ १६ ॥ कुम्भेष्वावाह्य शक्रादीन्पूर्वादौ पूजयेत्क्रमात् । इन्द्राऽऽगच्छ देवराज वज्रहस्त गजस्थित ॥ १७ ॥ पूर्वद्वारं च मे रक्ष देवैः सह नमोऽस्तुते । त्रातारमिन्द्रमन्त्रेण अर्चयित्वा यजेद्बुधः ॥ १८ ॥ आगच्छाग्ने शक्तिहस्त छागस्थ बलसंयुत । रक्षाऽऽग्नेयी दिशः देवैः पूजां गृह्णन्नमोऽस्तुते ॥ १९ ॥ अग्निमूर्धेति मन्त्रेण यजेद्वा अग्नये नमः । महिषस्थ यमाऽऽगच्छ दण्डहस्त महाबल ॥ २० ॥ रक्षस्व दक्षिणं द्वारं वैवस्वत नमोऽस्तु । वैस्वतं संयमनमित्यनेन यजेद्यमम् ॥ २१ ॥ नैर्ऋताऽऽगच्छ खड्गाढ्य बलवाहनसंयुत । इदमर्घ्यमिदं पाद्यं रक्षत्वं नैर्ऋतीं दिशम् ॥ २२ ॥ एष ते नैर्ऋतेत्यादि यजेदर्घ्यादिभिर्नरः । मकरारूढ वरुण पाशहस्त

को चाहिए कि वे स्वयम् अलंकृत होकर भगवान् विष्णु का ध्यान करके उनकी पूजा करें ।। ५ ।। प्रत्येक चतुष्कोण, अर्धकोण, वर्तुल (वृत्त) तथा पद्मकुण्डों के सन्निकट अंगूठी आदि (नवीन वस्त्र आदि) से समलंकृत पारङ्गत मूर्तिपालक विद्वानों को प्रार्थनापूर्वक बैठाना चाहिए ।। ६ ।। पूर्व आदि (दक्षिण, पश्चिम तथा उत्तर) दिशाओं में तोरण के लिए पिप्पल, गूलर, बट एवं पाकड़ के पत्तों का प्रयोग उत्तम माना गया है ।। ७ ।। पूर्व दिशा के द्वार का नाम सुशोभन, दक्षिण दिशा के द्वार का नाम सुभद्र, पश्चिम द्वार का नाम सुकर्मा तथा उत्तर द्वार का नाम सुहोत्र होता है । द्वारों को ऊँचा बनाना चाहिए ।। ८ ।। पाञ्च हाथ के तोरण स्तम्भ की स्थापना करके उसकी 'स्योना पृथिवी नो भवा' इत्यादि मन्त्र से पूजा करनी चाहिए । स्तम्भ के मूल में मङ्गलमय कलश तथा अंकुरों को रखना चाहिए । मण्डप द्वार के उत्तर सुदर्शन चक्र बनाना चाहिए । विद्वान् पुरुष को पाञ्च हाथ लम्बा ध्वजा बनाना चाहिए ।। ९-१० ।। उसकी चौड़ाई सोलह अंगुल होनी चाहिए । हे सुरोत्तम! ध्वज का दण्डा सात हाथ ऊँचा करना चाहिए ।। ११ ।। पूर्वादि दिशाओं के ध्वजा का वर्ण क्रमशः अरुण, अग्नि के समान, काला, उजला, पीला, लाल तथा श्वेत होना चाहिए ।। १२ ।। कोटि गुणों से युक्त पूर्वादि ध्वजों के अधिष्ठातृ रूप से (१) कुमुद, (२) कुमुदाक्ष, (३) पुण्डरीक, (४) वामन, (५) शङ्कुकर्ण, (६) सर्पनेत्र, (७) सुमुख तथा (८) सुप्रतिष्ठित की पूजा करनी चाहिए । जल से अच्छी तरह से परिपूर्ण तथा पके हुए विम्ब के समान कलशों को होना चाहिए ।। १४ ।। इन कलशों की स्त्रंख्या एक सौ अट्ठाइस (१२८) होनी चाहिए, ये कालिमा से रहित सुवर्ण से युक्त हों, इनके गले में वस्त्र लपेटा गया होना चाहिए । तथा इन्हें जल से भरा होना चाहिए । इनकी स्थापना तोरण से बाहर करनी चाहिए तथा वेदी के चारों कोनों में चार कलशों की स्थापना (आजिध्रकलशम्)' इत्यादि मन्त्र से करना चाहिए । पूर्वादि दिशाओं के कलशों में इन्द्र आदि देवताओं का आवाहन करके उनकी क्रमशः पूजा करनी चाहिए ।। १५-१६ ।। इन्द्र का आवाहन इस मन्त्र से करना चाहिए- **'इन्द्रागच्छ देवराज वज्रहस्त गजस्थित । पूर्वद्वारं च मे रक्ष देवैः सह नमोस्तु ते ॥'** अर्थात् गज पर सवार तथा वज्रधारण किए हुए हे इन्द्र ! आप देवताओं के साथआइये और मेरे पूर्व द्वार की रक्षा कीजिए, आपको नमस्कार है । पुनः विद्वान् को चाहिए कि 'त्रातारमिन्द्र' इत्यादि मन्त्र से इन्द्र का पूजन करे ।। १७-१८ ।। अग्नि का आवाहन निम्नांकित मन्त्र से करना चाहिए– आगच्छाग्ने शक्तिहस्त छागस्थ बलसंयुत ।। रक्षाग्नेयीं दिशं देवैः पूजां गृह्ण नमोस्तुते ।। अर्थात् छाग पर सवार बलवान् तथा शक्ति हाथ में लिए हुए अग्निदेव ! आप देवताओं के साथ आकर अग्नि दिशा की रक्षा करें और मेरी पूजा स्वीकार करें ।। १९ । तथा 'अग्निमूर्धादिवः' इत्यादि मन्त्र से 'अग्नये नमः' मन्त्र के अन्त में लगाकर पूजन करना चाहिए ।। १९ ।। दक्षिण दिशा में यम का आवाहन

महाबल ॥ २३ ॥ आगच्छ पश्चिमद्वारं रक्ष रक्ष नमोऽस्तु ते । उरुं हि राजा वरुण यजेदर्घ्यादिभिर्गुरुः ॥ २४ ॥ आगच्छ वायो सबल ध्वजहस्तसवाहन । वायव्यं रक्ष देवैस्त्वं समरुद्भिर्नमोऽस्तु ते ॥ २५॥ वात इत्यादिभिश्चार्चेदों नमो वायवेऽपि वा । आगच्छ सोम सबल गदाहस्त सवाहन ॥ २६ ॥ रक्षत्वमुत्तरं द्वारं सकुबेर नमोऽस्तु ते । सोमं राजानमिति वा यजेत्सोमाय वै नमः ॥ २७ ॥ आगच्छेशान सबल शूलहस्त वृषस्थित । यज्ञमण्डपस्यैशानीं दिशं रक्ष नमोऽस्तु ते ॥ २८ ॥ ईशानमस्येति यजेदीशानाय नमोऽपि वा । ब्रह्मन्नागच्छ हंसस्थ स्रुक्स्रुवव्यग्रहस्तक॥२९॥ सलोकोर्ध्वां दिशं रक्ष यज्ञस्याज नमोऽस्तु ते । हिरण्यगर्भेतियजेन्नमस्ते ब्रह्मणेऽपि वा ॥ ३०॥ अनन्तागच्छ चक्राढ्य कूर्मस्थाहि गणेश्वर । अधोदिशं रक्ष रक्ष अनन्तेश नमोऽस्तु ते ॥ ३१ ॥ नमोऽस्तु सर्पेति यजेदनन्ताय नमोऽपि वा ॥ ३२ ॥

इत्यादिमहापुराण आग्नेये दशदिक्पालयागकथनं नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

---

इस मंत्र से करना चाहिए- 'महिषस्थ यमागच्छ दण्डहस्त महाबल ।। रक्षत्वं दक्षिणं द्वारं वैवस्वत नमोऽस्तुते ।।' अर्थात् महिष पर सवार महाबलवान् तथा हाथ में दण्ड लिए हुए यमराज आप आएँ। हे वैवस्वत ! दक्षिण द्वार की रक्षा करें,आपको नमस्कार है । यमराज की पूजा- 'वैस्वतं संयमनम्' इत्यादि मन्त्र से करनी चाहिए ।। २०-२१ ।। यज्ञमण्डप के नैऋत्यकोण में नैऋति का आवाहन इस मन्त्र से करना चाहिए- 'नैऋतजागच्छ खड्गाढ्य बलवाहन संयुत ।। इदमर्घ्यमिदं पाद्यं रक्षत्वं नैऋतीं दिशम् ।।' हे बलवाहन ! खड्गधारण किए हुए निऋति देव ! आप आएँ, यह अर्घ्य पाद्य आपके लिए है, आप नैऋत्य दिशा की रक्षा करें । 'एष ते नैऋते, इत्यादि मन्त्र से निऋति देवता को अर्घ्य आदि से पूजन करना चाहिए ।। २२ ।। यज्ञमण्डप की पश्चिम दिशा में वरुण का आवाहन इस मन्त्र से करना चाहिए 'मकरारूढ वरुण ! पाशहस्तमहाबल । आगच्छ पश्चिम द्वारं रक्ष रक्ष नमोऽस्तुते ।। अर्थात् मकर (घड़ियाल) पर सवार महाबलशाली तथा हाथ में पाश लिए हुए वरुण आप आइये और पश्चिम द्वार की रक्षा कीजिए । आपको नमस्कार है । 'उरुं हि राजा वरुणं' इत्यादि मन्त्र से अर्घ्य देकर आचार्य को वरुण की पूजा करनी चाहिए ।। २३-२४ ।। वायव्य दिशा में वायु का इस मन्त्र से आवाहन करना चाहिए- 'आगच्छ वायो सबल ध्वजहस्त सवाहन । वायव्यं रक्ष देवैस्त्वं समरुद्भिर्नमोऽस्तुते।।' अर्थात् हे बाहन सहित बलवान् ध्वजा हाथ में लिए हुए वायो ! आप आइये और देवताओं तथा मरुतों के साथ वायव्य दिशा की रक्षा कीजिए, आपको नमस्कार है । 'वात' इत्यादि मन्त्र से अथवा 'ओम् नमो वायवे' इत्यादि मन्त्र से वायु की अर्चना करनी चाहिए ।।२५।। यज्ञमण्डप की उत्तर दिशा में सोम का आवाहन इस मन्त्र से करें- 'आगच्छ सोम सबल गदाहस्त सबाहन । रक्षत्वमुत्तरं द्वारं सकुबेर नमोस्तुते ।। अर्थात् हे बाहन सहित, बलशाली,गदाधारण करने वाले सोम आप कुबेर के साथ आइये तथा उत्तर द्वार की रक्षा कीजिए आपको नमस्कार है । सोम की पूजा 'सोमाय नमः' इस नाम के मन्त्र से अथवा 'सोमं राजानम्' इत्यादि वैदिक मन्त्र से करनी चाहिए ।। २६-२७ ।। ईशानकोण में ईशान (श्री शंकरजी) का आवाहन इस मन्त्र से करे- 'आगच्छेशान सबल शूलहस्त वृषस्थित । यज्ञमण्डपस्यैशानीं दिशं रक्ष नमोऽस्तुते।।' अर्थात् हे बलशाली ईशान, वृषारूढ़, शूलधारी ईशान आप आएँ और यज्ञमण्डप की ईशान दिशा की रक्षा करें, आपको नमस्कार है । ईशान की पूजा 'ईशानमस्य' इत्यादि वैदिक मन्त्र से अथवा 'ईशानाय नमः' इस मन्त्र से करे- 'ब्रह्मन्नागच्छ हंसस्थ स्रुक्स्रुवा व्यग्रहस्तक। सलोकोर्ध्वां दिशं रक्ष यज्ञस्याज नमोऽस्तुते ।।' अर्थात् हे हंसारूढ़,अपने हाथ में स्रुक् तथा स्रुवा धारण करने वाले ब्रह्मन् आप आइये सम्पूर्ण लोकों के साथ यज्ञ की ऊपर की दिशा की रक्षा कीजिए। हे अज ! आपको नमस्कार है । ब्रह्मा की पूजा 'हिरण्यगर्भ' इत्यादि मन्त्र से अथवा 'नमस्ते ब्रह्मणे' इस मन्त्र से करनी चाहिए।।२९-३०।। अनन्त का आवाहन इस मन्त्र से करना चाहिए- अनन्तागच्छ चक्राढ्य कूर्मस्थाहिगणेश्वर । अधो दिशं रक्ष-रक्ष अनन्तेश नमोऽस्तुते ।' अर्थात् हे कूर्म पर विद्यमान सर्पों के स्वामिन् ! चक्र से सुशोभित, अनन्त ! आप आइये, नीचे की दिशा की रक्षा कीजिए। हे अनन्तेश ! आपको नमस्कार है । अनन्त की पूजा 'अनन्ताय नमः' इस नाम के मन्त्र से अथवा 'नमोऽस्तु सर्पेभ्यः' इत्यादि वैदिक मन्त्र से करनी चाहिए ।। ३१-३२ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का दिक्पालों के याग वर्णन नामक छप्पनवाँ अध्याय सम्पूर्ण हुआ ॥ ५६ ॥**

## अथ सप्तपञ्चाशत्तमोऽध्यायः

### कलशाधिवासविधिकथनम्

श्रीभगवानुवाच– **भूमेः परिग्रहं कुर्यात्क्षिपेद्व्रीहींश्च सर्षपान् । नारसिंहेन रक्षोघ्नान्प्रोक्षयेत्पञ्चगव्यतः ॥ १ ॥ भूमिं घटे तु सम्पूज्य सरत्ने साङ्गकं हरिम् । अस्त्रमन्त्रेण करकं तत्र चाष्टशतं यजेत् ॥ २ ॥ अच्छिन्नधारया सिञ्चन्व्रीहीन्संस्कृत्य धारयेत् । प्रदक्षिणं परिभ्राम्य कलशं विकिरोपरि ॥ ३॥ सवस्त्रे कलशे भूयः पूजयेदच्युतं श्रियम् । योगे योगेति मन्त्रेण न्यसेच्छय्यां तु मण्डले ॥ ४ ॥ कुशोपरि तूलिकां च शय्यायां दिग्विदिक्षु च । विद्याधिपान्यजेद्विष्णुं मधुघातं त्रिविक्रमम् ॥ ५ ॥ वामनं दिक्षु वह्न्यादौ श्रीधरं च हृषीकपम् । पद्मनाभं दामोदरमैशान्यां स्नानमण्डपे ॥ ६ ॥ अभ्यर्च्य पश्चादैशान्यां चतुष्कुम्भे सवेदिके । स्नानमण्डपे सर्वद्रव्याण्यानीय निक्षिपेत् ॥ ७ ॥ स्नानकुम्भेषु कुम्भांस्तांश्चतुर्दिक्ष्वधिवासयेत् । कलशाः स्थापनीयास्तु अभिषेकार्थमादरात् ॥ ८ ॥ वटोदुम्बरकाश्वत्थांश्चम्पकाशोकश्रीद्रुमान् । पलाशार्जुनप्लक्षांस्तु कदम्बबकुलाम्रजान् ॥ ९ ॥ पल्लवांस्तु समानीय पूर्वकुम्भे विनिक्षिपेत् ॥ ९ ॥ पद्मकं रोचनां दूर्वां दर्भपिञ्जूलमेव च ॥ १० ॥ जातीपुष्पं कुन्दपुष्पं चन्दनं रक्तचन्दनम् । सिद्धार्थं तगरं चैव तण्डुलं दक्षिणे न्यसेत् ॥ ११ ॥ सुवर्णं रजतं चैव कूलद्वयमृदं तथा । नद्याः समुद्रगामिन्या विशेषाज्जाह्नवीमृदम् ॥ १२ ॥ गोमयं च यवान्शालींस्तिलांश्चैव परे न्यसेत् । विष्णुपर्णीं शालपर्णीं भृङ्गराजं शतावरीम् ॥ १३॥ सहदेवीं वचां सिंहीं बलां व्याघ्रीं सलक्ष्मणाम् । ऐशान्यामपरे कुम्भे मङ्गलानि निवेशयेत् ॥ १४ ॥ वल्मीकमृत्तिकां सप्तस्थानोत्थामपरे न्यसेत् । जाह्नवीबालुकां तोयं विन्यसेदपरे घटे ॥ १५ ॥ वराहवृषनागेन्द्रविषाणोद्धृतमृत्तिकाम् । मृत्तिकां पद्ममूलस्य कुशस्य त्वपरे न्यसेत् ॥ १६ ॥ तीर्थपवित्रमृद्भिश्च युक्तमप्यपरे न्यसेत् । नागकेशरपुष्पं**

---

**श्रीभगवान् ने कहा**– भूमि का संस्कार करके नारसिंह मन्त्र पढ़कर रक्षोघ्न मन्त्र तथा नारसिंह मन्त्र से धान तथा पीली सरसों को छींटकर तथा पञ्चगव्य से भूमि का प्रोक्षण करना चाहिए ।।१।। रत्न से युक्त घट पर श्रीहरि तथा भूमि की साङ्ग पूजा करे तथा अष्टोत्तरशत करकों की पूजा करें ।। २ ।। निरवच्छिन्न जल धारा से ब्रीहि (धान) को संस्कारयुक्त करके प्रदक्षिणा करके धान के ऊपर कलश की स्थापना करनी चाहिए ।। ३ ।। पुनः वस्त्र से वेष्टित कलश में भगवान् अच्युत तथा श्रीदेवी की स्थापना करनी चाहिए । फिर- 'योगे योगे' इस मन्त्र से छाया का मण्डल में न्यास करना चाहिए ।। ४ ।। कुश के ऊपर रूई रखकर शय्या स्नान मण्डप को चारों दिशाओं तथा चारों विदिशाओं (कोणों) में विद्याधीशों की पूजा करें, भगवान् विष्णु, मधुसूदन, त्रिविक्रम, तथा वामन की चारों दिशाओं में तथा अग्निकोण से लेकर ईशानकोण पर्यन्त चारों विदिशाओं में श्रीधर, हृषीकेश, पद्मनाभ तथा दामोदर की पूजा करनी चाहिए ।। ४-६ ।। इन सबों की पूजा करके उसके पश्चात् ईशानकोण में चार कलशों तथा वेदी से युक्त स्नानमण्डप में समस्त द्रव्यों को लाकर स्नान कलशों में डालें । उन कलशों को चारों दिशाओं में स्थापित करें । उन कलशों को आदरपूर्वक अभिषेक के लिए स्थापना करनी चाहिए ।। ७-८ ।। फिर वट, उदूम्बर (गूलर) पिप्पल, चम्पक, अशोक,बिल्व (श्रीद्रुम) पलाश, अर्जुन,प्लक्ष (पाकड़) कदम्ब,बकुल (मौल श्री) तथा आम के पल्लवों को लाकर पूर्वदिशा के कुम्भ में डालें ।। ९।। पद्म (कमल) रोचना,दूर्वा, कुश,हरिद्रा (पिञ्जूल) मालती के पुष्प, कुन्द के पुष्प, चन्दन, लाल चन्दन, सिद्धार्थ (पिल्ली सरसों) तगर तथा चावल दक्षिण दिशा के कलश में डालें ।। १०-११ ।। सुवर्ण, चाँदी, विशेष रूप से समुद्र गामिनी नदी गंगा के दोनों तटों की मिट्टी, गोमय (गोबर) यव, साठी धान तथा तिल पश्चिम दिशा के कलश में डालें।।१२।। विष्णुपर्णी, श्यामलता (शालपर्णी) भृङ्गराज, शतावर, सहदेवी, वच, सैंही, बला, लक्षणसहि व्याघ्री, इन माङ्गलिक औषधियों को ईशानकोण में स्थापित कुम्भ में डालें ।।१३-१४ ।। दूसरे कलश में बाल्मीक की मिट्टी तथा सप्तमृत्तिका को डालना चाहिए । एक दूसरे घड़े में गंगा नदी का जल तथा जंगा नदी का बालू डालना चाहिए ।। १५ ।। एक दूसरे कलश में बराह, बैल, तथा हाथी

च काश्मीरमपरे न्यसेत् ॥ १७ ॥ चन्दनागुरुकर्पूरैः पुष्पं चैवापरे न्यसेत् । वैदूर्यं विद्रुमं मुक्तां स्फटिकं वज्रमेव च ॥ 18॥ एतान्येकत्र निक्षिप्य स्थापयेद्देवसत्तमम् । नदीनदतडागानां सलिलैरपरे न्यसेत् ॥ १९॥ एकाशीतिपदे चान्यान्मण्डले कलशान्न्यसेत् । गन्धोदकाद्यैः सम्पूर्णाञ्श्रीसूक्तेनाभिमन्त्रयेत्॥२०॥ यवान्सिद्धार्थकं गन्धं कुशाग्रं चाक्षतांस्तथा । तिलान्फलं तथा पुष्पमर्घ्यार्थं पूर्वतो न्यसेत् ॥ २१ ॥ पद्मं श्यामलतां दूर्वां विष्णुपर्णीं कुशांस्तथा । पाद्यार्थं दक्षिणे भागे मधुपर्कं तु पश्चिमे ॥ २२ ॥ कक्कोलकं लवङ्गं च तथा जातीफलं शुभम् । उत्तरे ह्याचमनीयमग्नौ दूर्वाक्षतान्वितम् ॥ २३ ॥ पात्रं नीराजनार्थं च तथोद्वर्तनमानिले । गन्धपिष्टान्वितं पात्रमैशान्यां कलशे न्यसेत् ॥ २४ ॥ मुरामांसी चाऽऽमलकं सहदेवीं निशादिकम् । पुष्टिदीपान्न्यसेदष्टौ न्यसेन्नीराजनाय च ॥ २५ ॥ शङ्खं चक्रं च श्रीवत्सं कुलिशं पङ्कजादिकम् । हेमादिपात्रे कृत्वा तु नानावर्णादिपुष्पकम् ॥ २६ ॥

इत्यादिमहापुराण आग्नेये कलशाधिवासविधिकथनं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

## अथाष्टपञ्चाशत्तमोऽध्यायः

## स्नपनविध्यादिकथनम्

श्रीभगवानुवाच– **ऐशान्यां जनयेत्कुण्डं गुरुर्वह्निं च वैष्णवम् । गायत्र्याऽष्टशतं हुत्वा संपातविधिना घटान् ॥ १ ॥ प्रोक्षयेत्कारुशालायां शिल्पिभिर्मूर्तिपैर्व्रजेत् । तूर्यशब्दैः कौतुकं च बन्धयेद्दक्षिणे करे ॥ २ ॥ विष्णवे शिपिविष्टेति ऊर्णासूत्रेण सर्षपैः। पट्टवस्त्रेण कर्तव्यं देशिकस्यापि**

के शृङ्ग से खोदी गयी मिट्टी को तथा कमल एवं कुश के जड़ की मिट्टी को डालना चाहिए ।। १६ ।। एक कलश में तीर्थ तथा पर्वत की मिट्टी को डालें तथा दूसरे कलश में नागकेशर के पुष्प तथा केशर डालना चाहिए ।। १७ ।। एक दूसरे घड़े में चन्दन, अगरु तथा कर्पूर से युक्त पुष्प डालें, हे देवश्रेष्ठ ब्रह्मन् ! एक दूसरे घट में वैदूर्य, मूँगा, मोती, स्फटिक, तथा हीरा इन सबों को डालकर रखे ।। १८-१९।। दूसरे घट में नदी, नद तथा सरोवर के जल डालना चाहिए । १९ ।। अन्य कलशों की स्थापना इक्यासी खाने वाले मण्डप में करनी चाहिए । सभी कलशों को चन्दन के जल आदि से तथा श्रीसूक्त से अभिमन्त्रित करना चाहिए ।। २० ।। पूर्वदिशा में अर्घ्य के लिए यव, पीली सरसो, चन्दन, कुश का अग्रभाग, अक्षत, तिल,फल तथा पुष्प को रखना चाहिए ।।२१।। दक्षिण दिशा में पाद्य के लिए कमल, श्यामपर्णी, दूर्बा, विष्णुपर्णी तथा कुश को रखना चाहिए । पश्चिम दिशा में मधुपर्क रखना चाहिए ।। २२ ।। उत्तर दिशा में कंकोल, लवङ्ग तथा जातीफल से युक्त जल आचमन के लिए रखना चाहिए। अग्निकोण में नीराजन के लिए दूर्वा तथा अक्षत से युक्त पात्र रखें । इसी तरह वायव्य कोण में उबटन और ईशानकोण में चन्दन तथा पिष्टक (चूर्ण) युक्त एक पात्र को कलश पर रखें ।। २३-२४ ।। ईशानकोण में ही मुरा, मांसी, आँवला, सहदेई तथा हल्दी आदि रखे । नीराजन के लिए सुवर्ण आदि के पात्र में आठ पुष्टि दीपों को तथा शंख, चक्र, श्रीवत्स, कुलिश तथा कमल आदि को तथा अनेक रंग के पुष्पों को रखना चाहिए ।। २५-२६ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का कुम्भाधिवास नामक सत्तावनवाँ अध्याय सम्पूर्ण हुआ ॥ ५७ ॥**

**श्रीभगवान् ने कहा–** आचार्य को चाहिए कि वे ईशानकोण में कुण्ड बनाकर उसमें वैष्णवाग्नि की स्थापना करें । अष्टोत्तर शत गायत्री से हवन करके घटों का प्रोक्षण करें । मूर्ति की रक्षा करने वाले शिल्पियों के साथ कार्यशाला में जायँ । तूरी के शब्दों के साथ 'विष्णवे शिपिविष्ट' इत्यादि मन्त्र से मूर्ति के दाहिने हाथ में पीली सरसों से बने कंकण को ऊनी सूते से बाँधें । आचार्य का

कौतुकम् ॥ ३ ॥ मण्डले प्रतिमां स्थाप्य सवस्त्रां पूजितां स्तुवन् । नमस्तेऽर्च्ये सुरेशानि प्रणीते विश्वकर्मणा ॥ ४ ॥ प्रभाविताशेषजगद्धात्रि तुभ्यं नमो नमः । त्वयि सम्पूजयामीशे नारायणमनामयम् ॥ ५ ॥ रहिता शिल्पिदोषैस्त्वमृद्धियुक्ता सदा भव । एवं विज्ञाप्य प्रतिमां नयेत्तां स्नानमण्डपम्॥ ६॥ शिल्पिनं तोषयेद्द्रव्यैर्गुरवे गां प्रदापयेत् । चित्रं देवेति मन्त्रेण नेत्रे चोन्मीलयेत्ततः ॥ ७ ॥ अग्निर्ज्योतीति दृष्टिं च दद्याद्वै भद्रपीठके । ततः शुक्लानि पुष्पाणि घृतं सिद्धार्थकं तथा ॥ ८ ॥ दूर्वां कुशाग्रं देवस्य दद्याच्छिरसि देशिकः । मधुवातेतिमन्त्रेण नेत्रे चाभ्यञ्जयेद्गुरुः ॥ ९ ॥ हिरण्यगर्भमन्त्रेण इमं मेति च कीर्तयेत् । घृतेनाभ्यञ्जयेत्पश्चात्पठन्घृतवतीं पुनः ॥ १०॥ मसूरपिष्टेनोद्वर्त्य अतो देवेति कीर्तयेत् । क्षालयेदुष्णतोयेन सप्त तेऽग्नेति देशिकः ॥ ११ ॥ द्रुपदादिवेत्यनुलिम्पेदापो हिष्ठेति सिञ्चयेत्। नदीजैस्तीर्थजैः स्नानं पावमानीति रत्नजैः ॥ १२ ॥ समुद्रं गच्छ गच्छेति तीर्थमृत्कलशेन च ॥ १२ ॥ शं नो देवीः स्नापयेच्च गायत्र्याऽप्युष्णवारिणा ॥ १३ ॥ पञ्चमृद्भिर्हिरण्येति स्नापयेत्परमेश्वरम् । सिकताद्भिरिमं मेति वल्मीकोद्घटेन च ॥ १४ ॥ तद्विष्णोरिति ओषध्यद्भिर्या ओषधि मन्त्रतः । यज्ञा यज्ञेति काषायैः पञ्चभिर्गव्यकैस्ततः ॥ १५॥ पयः पृथिव्यां मन्त्रेण याः फलीति फलाम्बुभिः । विश्वतश्चक्षुः सौम्येन पूर्वेण कलशेन च ॥ १६ ॥ सोमं राजानमित्येवं विष्णोरराटं दक्षतः । हंसः शुचि पश्चिमेन कुर्यादुद्वर्तनं हरेः॥१७॥ मूर्धानमितिमन्त्रेण धात्रीमांस्युदकेन च। मानस्तोकेति मन्त्रेण गन्धद्वारेति गन्धकैः ॥ १८ ॥ इदमापेति च घटैरेकाशीतिपदस्थितैः । एह्येहि भगवन्विष्णो लोकानुग्रहकारक ॥ १९ ॥ यज्ञभागं गृहाणेमं वासुदेव नमोऽस्तु ते । अनेनाऽऽवाह्य देवेशं कुर्यात्कौतुकमोचनम् ॥ २० ॥ मुञ्चामि

भी कंकण बंधन वस्त्र से करना चाहिए ।। १-३ ।। वस्त्र से युक्त प्रतिमा की स्थापना करके यह प्रार्थना करे- हे सुरेशानि ! आपको नमस्कार है, आप विश्वकर्मा के द्वारा निर्मित हैं ।। ४ ।। प्रभाव से पूर्ण सम्पूर्ण जगत् की रक्षा करने वाली आपको नमस्कार है। हे स्वामिनि ! आपमें ही सम्पूर्ण दोषों से रहित भगवान् नारायण की मैं पूजा कर रहा हूँ ।। ५ ।। शिल्पी के दोषों से रहित तुम सदा समृद्धि से सम्पन्न होओ । इस प्रकार से प्रार्थना करके प्रतिमा को स्नान मण्डप में लाना चाहिए ।। ६ ।। द्रव्य प्रदान करके शिल्पी को सन्तुष्ट करे और आचार्य को गोदान करना चाहिए । उसके पश्चात् **'चित्रं देवाना'** इत्यादि मन्त्र से दोनों नेत्रों को खोलना चाहिए ।। ७ ।। **'अग्निर्ज्योति'** इत्यादि मन्त्र से भद्रपीठ पर देखना चाहिए ।। ७।। उसके पश्चात् आचार्य देवता के सिर पर उजले पुष्प, घी, पीली सरसो, दूर्वा तथा कुशाग्र रखें । **'मधुवाता'** इत्यादि मन्त्र से मूर्ति के नेत्रों में आञ्जन लगाएँ ।। ८-९ ।। पुनः **'हिरण्यगर्भः'** इत्यादि मन्त्र को तथा **'इमं मे'** इस मन्त्र को पढ़ना चाहिए। फिर **'घृतवती'** इत्यादि ऋचा को पढ़ते हुए मूर्ति के शरीर में घी लगाना चाहिए ।। १० ।। मसूर के चूर्ण से उबटन लगाकर **'अतो देवा'** इत्यादि मन्त्र को पढ़ना चाहिए । पुनः आचार्य 'सप्त तेऽग्ने' इत्यादि मन्त्र पढ़कर गर्मजल से मूर्ति को स्नान करायें ।। ११ ।। 'द्रुपदादिव' इत्यादि मन्त्र से अनुलेपन करके **'आपोहिष्ठा'** इत्यादि मन्त्र से अभिषेक करना चाहिए । रत्न से स्पर्श कराए गए नदी तथा तीर्थ के जल से **'पवमानी'** ऋचा पढ़कर स्नान कराए ।। १२ ।। पुनः **'समुद्रं गच्छ'** इत्यादि मन्त्र से मिट्टी के कलश से तीर्थोदक का स्नान कराए । **'शन्नो देवीः'** तथा **'गायत्री'** मन्त्र से गर्म जल का स्नान कराना चाहिए ।। १३ ।। **'हिरण्यः'** इत्यादि मन्त्र से श्रीभगवान् को पञ्चमृत्तिका से स्नान कराना चाहिए । **'इमं मे'** इत्यादि मन्त्र से वल्मीक की मिट्टीसे बने घट के द्वारा सिकताजल से स्नान कराना चाहिए ।। १४ ।। **'या औषधिः'** इत्यादि मन्त्र से अथवा **'यज्ञायज्ञ'** इत्यादि मन्त्र से काषाय जल से तथा **'पयः पृथिव्याम्'** इत्यादि मन्त्र से पञ्चगव्य से स्नान कराना चाहिए । **'याः फलिनी'** इत्यादि मन्त्र से फल के जल से स्नान कराना चाहिए । **'विश्वतः चक्षुः'** इत्यादि मन्त्र से पूर्व तथा उत्तर के घट से स्नान कराना चाहिए ।। १५-१६।। 'सोमं राजानम्' इस मन्त्र से अथवा 'विष्णोरराटमसि' इत्यादि मन्त्र से दक्षिण के घट से स्नान कराना चाहिए । **'हंसः शुचिषत्'** इस मन्त्र से पश्चिम के घट से स्नान कराकर श्रीभगवान् को उबटन लगाए ।। १७ ।। 'मानस्तोके' इस मन्त्र से जटामाँसी के जल से एवं **'गन्धद्वाराम्'** इत्यादि मन्त्र से चन्दन के जल से स्नान कराना चाहिए ।। १८ ।। **'इदमाप'** इस मन्त्र से इक्यासी कोष्ठों में स्थित घटों से श्रीभगवान् को स्नान कराना चाहिए । पुनः श्रीभगवान् का इस मन्त्र से आवाहन करना चाहिए- **'एह्येहि भगवन् विष्णो ! लोकानुग्रहकारक । यज्ञभागं गृहाणेमं वासुदेव नमोऽस्तुते।'** अर्थात् हे सम्पूर्ण जीवों पर कृपा करने वाले भगवन् विष्णो, आप आइये; इस यज्ञभाग को स्वीकार कीजिए। हे वासुदेव ! आपको नमस्कार है । इस वाक्य से श्रीभगवान् का आवाहन करके उनका

त्वेति सूक्तेन देशिकस्यापि मोचयेत् । हिरण्मयेन पाद्यं दद्यादतो देवेति चार्घ्यकम् ॥ २१ ॥ मधुवाता मधुपर्कं मयि गृह्णामि चाऽऽचमेत्। अक्षन्नमीमदन्तेति किरेद्दूर्वाक्षतं बुधः ॥ २२॥ काण्डान्निर्मन्थनं कुर्याद्गन्धं गन्धवतीति च । उन्नयामीति माल्यं च इदं विष्णोः पवित्रकम् ॥ २३ ॥ वृहस्पतेवस्त्रयुग्मं वेदाहमुत्तरीयकम् । महाव्रतेन सकलान्पुष्पं चौषधयः क्षिपेत् ॥ २४ ॥ धूपं दद्याद्धूरसीति विभ्राट्सूक्तेन चाञ्जनम् । युञ्जन्तीति च तिलकं दीर्घायुष्ट्वेति माल्यकम् ॥ २५ ॥ इन्द्रच्छत्रेति च्छत्रं तु आदर्शं तु विराजतः । चामरं तु विकर्णेन भूषां रथन्तरेण च ॥ २६ ॥ व्यजनं वायुदैवत्यैःर्मुञ्चामि त्वेति पुष्पकम् । वेदाद्यैः संस्तुतिं कुर्याद्धरेः पुरुषसूक्ततः ॥ २७ ॥ सर्वमेतत्समं कुर्यात् पिण्डिकादौ हरादिके । देवस्योत्थानसमये सौपर्णं सूक्तमुच्चरेत् ॥ २८ ॥ उत्तिष्ठेति समुत्थाप्य शय्याया मण्डपे नयेत् । शाकुनेनैव सूक्तेन देवं ब्रह्मरथादिना ॥ २९ ॥ अतो देवेति सूक्तेन प्रतिमां पिण्डिकां तथा । श्रीसूक्तेन च शय्यायां विष्णो तु सकलीकृतिः ॥ ३० ॥ मृगराजं वृषं नागं व्यजनं कलशं तथा । वैजयन्तीं तथा भेरीं दीपमित्यष्टमङ्गलम्॥३१॥ दर्शयेदश्वसूक्तेन पाददेशे त्रिपादिति। उखां पिधानकं पात्रमम्बिकां दीर्धिकां ददेत्॥३२॥ मुसलोलूखलं दद्याच्छिलां समार्जनीं तथा। तथा भोजनभाण्डानि गृहोपकरणानि च॥३३॥ शिरोदेशे च निद्राख्यं वस्त्ररत्नयुतं घटम्। खण्डखाद्यैः पूरयित्वा शयनस्य विधिः स्मृतः॥३४॥

इत्यादिमहापुराण आग्नेये स्नपनविध्यादिकथनं नामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

कंकणमोचन करना चाहिए ।।१९-२०।। '**मुञ्चामि त्वा**' इत्यादि सूक्त से आचार्य का भी कंकणमोचन करना चाहिए । '**हिरण्मयेन**' इत्यादि मन्त्र से पाद्य तथा '**अतोदेवा**' इत्यादि मन्त्र से अर्घ्य देना चाहिए ।। २१ ।। 'मधुवाता ऋतायते' इत्यादि मन्त्र से मधुपर्क देना चाहिए तथा '**मयि गृह्णामि**' इत्यादि मन्त्र से आचमन करना चाहिए । '**अक्षन्नमीमदन्त**' इत्यादि मन्त्र से विद्वान् को दुर्वा तथा अक्षत छिड़कना चाहिए ।। २२ ।। '**काण्डात् काण्डात्**' इत्यादि मन्त्र से निमन्थन करना चाहिए तथा '**गन्धवती**' इत्यादि मन्त्र से गन्ध समर्पित करना चाहिए । '**उन्नयाभि**' इस मन्त्र से माला एवं 'इदं विष्णु' इत्यादि मन्त्र से पवित्रक समर्पित करना चाहिए।।२३।। '**वृहस्पते**' इत्यादि मन्त्र से श्रीभगवान् को दो वस्त्र समर्पित करना चाहिए 'वेदाहम्' इत्यादि मन्त्र से सभी पुष्पों तथा औषधियों को चढ़ाना चाहिए ।। २४ ।। 'धूरसि' इत्यादि मन्त्र से धूप देना चाहिए तथा '**विभ्राट्**' सूक्त से आञ्जन समर्पित करना चाहिए । '**युञ्जन्ति**' इस मन्त्र से तिलक करना चाहिए । '**दीर्घायुष्ट्वा**' इस मन्त्र से माला चढ़ाना चाहिए ।। २५ ।। '**इन्द्रच्छत्र**' इस मन्त्र से छत्र समर्पित करना चाहिए तथा 'विराज' इत्यादि मन्त्र से आदर्श (दर्पण) समर्पित करना चाहिए,'**विकर्ण**' इत्यादि मन्त्र से चामर तथा '**रथन्तर**' इत्यादि मन्त्र से भूषण समर्पित करना चाहिए ।। २६ ।। जिन मन्त्रों के देवता वायु हैं, उनसे व्यजन तथा '**मुञ्चामित्वा**' इस मन्त्र से पुष्प समर्पित करना चाहिए ।चारों वेदों के आद्य चार मन्त्रों से तथा पुरुष सूक्त से श्रीहरि की स्तुति करनी चाहिए ।। २७ ।। ये सारी बातें समान रूप से पिण्डिका आदि तथा शंकर आदि की मूर्तियों पर करनी चाहिए । श्रीभगवान् के जगने के समय सुपर्ण सूक्त का पाठ करना चाहिए ।। २८ ।। '**उत्तिष्ठ**' इत्यादि मन्त्र से शय्या से उठाकर शकुन सूक्त का पाठ करते हुए ब्रह्मरथ से श्रीभगवान् को मण्डप में ले आना चाहिए ।। २९ ।। '**अतो देवाः**' इत्यादि सूक्त तथा श्रीसूक्त का पाठ करते हुए प्रतिमा तथा पिण्डिका तथा भगवान् विष्णु की सम्पूर्ण कृति को शय्या पर ले जाना चाहिए ।। ३० ।। सिंह, वृष,नाग, व्यजन, कलश,वैजयन्ती (पताका) भेरी तथा दीपक ये आठ मङ्गल वस्तुएँ हैं ।। ३१।। इन सबों को अश्व सूक्त से श्रीभगवान् को दिखाना चाहिए । 'त्रिपाद्' इत्यादि मन्त्र से श्रीभगवान् के चरणों में ऊखा, हांडी तकिया, पात्र, अम्बिका तथा दर्विका समर्पित करना चाहिए ।। ३२ ।। मुसल, उखल, शिला, सम्मार्जनी (झाड़ू) भोजन पात्र तथा गृह के उपकरण समर्पण करना चाहिए ।। ३३ ।। सिर की ओर वस्त्र, रत्न, मिष्ठान्न आदि से भरकर एकनिद्रा नामक घट रखना चाहिए । यही श्रीभगवान् की शयन की विधि बतलायी गयी है ।। ३४ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का स्नपनविधि आदि का वर्णन नामक अट्ठावनवाँ अध्याय सम्पूर्ण हुआ ।। ५८ ।।**

अथ चतुःषष्ठितमोऽध्यायः

## कूपवापीतडागप्रतिष्ठाविधिः

श्रीभगवानुवाच- **कूपवापीतडागानां प्रतिष्ठां वच्मि तां शृणु । जलरूपेण हि हरिः सोमो वरुण उत्तमः ॥ १ ॥ अग्नीषोममयं विश्वं विष्णुरापस्तु कारणम् । हैमं रौप्यं रत्नजं वा वरुणं कारयेन्नरः ॥ २ ॥ द्विभुजं हंसपृष्ठस्थं दक्षिणेनाभयप्रदम् । वामेन नागपाशं तु नदीनागादिसंयुतम् ॥ ३ ॥ यागमण्डपमध्ये स्याद्वेदिका कुण्डमण्डिता । तोरणं वारुणं कुम्भं न्यसेच्च करकान्वितम् । ४ ॥ भद्रके चार्धचन्द्रे वा स्वस्तिके द्वारि कुम्भकान् । अग्न्याधानं चापि कुण्डे कृत्वा पूर्णां प्रदापयेत् ॥ ५ ॥ वरुणं स्नानपीठे तु ये ते शतेति संस्पृशेत् । घृतेनाभ्यञ्जयेत्पश्चान्मूलमन्त्रेण देशिकः ॥ ६ ॥ शं नो देवीति प्रक्षाल्य शुद्धवत्या शिवोदकैः । अधिवासयेदष्टकुम्भान्सामुद्रं पूर्वकुम्भके ॥ ७ ॥ गाङ्गमग्नौ वर्षतोयं दक्षे रक्षस्तु नैर्झरम् । नदीतोयं पश्चिमे तु वायव्ये तु नोदकम् ॥ ८ ॥ औद्भिज्जं चोत्तरे स्थाप्यमैशान्यां तीर्थसम्भवम् । अलाभे तु नदीतोयं यासां राजेति मन्त्रयेत् ॥ ९ ॥ देवं निर्माज्यं निर्मथ्य दुर्मित्रियेति विचक्षणः । नेत्रे चोन्मीलयेच्चित्रं तच्चक्षुर्मधुरत्रयैः ॥ १० ॥ ज्योतिः सम्पूजयेद् हैम्यां गुरवे गामथार्पयेत् । समुद्रज्येष्ठेत्यभिषिञ्चेद्वरुणं पूर्वकुम्भतः ॥ ११ ॥ समुद्रं गच्छ गाङ्गेयात्सोमो धेन्विति वर्षकात् । देवीरापो निर्झराद्भिर्नदद्भिः पञ्चनद्यतः ॥ १२ ॥ उद्भिज्जाद्भिश्चोद्भिदेन पावमान्याऽथ तीर्थकैः । आपो हि ष्ठा पञ्चगव्याद्धिरण्यवर्णेति स्वर्णजात् ॥१३॥ आपो अस्मेति वर्षोत्थैर्व्याहृत्या कूपसम्भवैः।**

---

**श्रीभगवान् ने कहा–** अब मैं कुआँ, बावली तथा तडाग की प्रतिष्ठा विधि का वर्णन कर रहा हूँ । उसे आप सुनें । श्रीहरि जल रूप में विद्यमान हैं तथा वरुण उसके उत्तम देवता हैं ।। १।। सम्पूर्ण विश्व अग्नि तथा सोममय है और जलस्वरूप विष्णु जगत् के कारण हैं । मनुष्य को चाहिए कि वह, सुवर्ण, चाँदी, अथवा रत्न की वरुण की मूर्ति बनाए ।। २ ।। वरुण की मूर्ति दो भुजाओं वाली, हंस पर सवार, दाहिने हाथ में अभयमुद्रा, बायें हाथ में नागपाश लिए हुए तथा नदी एवं नागों से अलंकृत होनी चाहिए ।। ३ ।। कुण्ड से सुशोभित, वेदी को यज्ञशाला के बीच में होना चाहिए। करके से युक्त तोरण,वरुण तथा कलश की स्थापना करनी चाहिए ।। ४ ।। यज्ञशाला के द्वार पर भद्रपीठ, अथवा अर्धचन्द्रमण्डल अथवा स्वस्तिक मण्डल के ऊपर कलशों की स्थापना करनी चाहिए। कुण्ड में भी अग्नि की स्थापना करके पूर्णाहुति देनी चाहिए ।। ५ ।। स्नान पीठ पर वरुण की स्थापना करके **'ये ते शतम्'** इत्यादि मन्त्र से उनका स्पर्श करना चाहिए । उसके पश्चात् आचार्य को चाहिए कि वे मूलमन्त्र से वरुण के शरीर में घी लगाएँ ।। ६ ।। **'शन्नो देवी'** इत्यादि मन्त्र से प्रक्षालन करके शुद्धवती ऋचा से शुद्धोदक से स्नान कराना चाहिए । पुनः आठ कलशों का अधिवास कराना चाहिए । पूर्व के कलश में समुद्र का जल, अग्निकोण के कलश में गङ्गाजल, दक्षिण दिशा के कलश में वर्षा का जल,नैर्ऋत्यकोण के कलश में झरने का जल, पश्चिमी दिशा के कलश में नदी का जल, वायव्यकोण के कलश में नद का जल, उत्तर दिशा के कलश में वनस्पति मिश्रित जल, और ईशानकोण के कलश में तीर्थ का जल रखना चाहिए । इन सभी प्रकार के जलों के नहीं उपलब्ध होने पर सभी कलशों में नदी का जल रखकर उसको 'यासां राजा' इत्यादि मन्त्र से अभिमन्त्रित करना चाहिए ।। ७-९ ।। देवता को अच्छी तरह से नहलाकर **'दुर्मित्रिया'** इत्यादि मन्त्र [illegible]न करके 'चित्रं देवानाम्' इत्यादि मन्त्र से देवता का नेत्रोन्मीलन करे और 'तच्चक्षुर्देवहितम्' इत्यादि मन्त्र से देवता को मधुरत्रय (चीनी, घी, और मधु । अर्पित करे ।। १० ।। पुनः पूर्वदिशा [illegible]लश के जल से वरुण का **'समुद्र ज्येष्ठा '** इत्यादि मन्त्र से अभिषेक करना चाहिए ।। ११ ।। **'समुद्रं गच्छ'** इत्यादि मन्त्र से गंगा जल से **'समो धेनु'** इत्यादि मन्त्र से वर्षा के जल से, **'देवीरापः'** इत्यादि मन्त्र से 'निझर के जल से, **'पञ्चनद्यः'** इत्यादि मन्त्र से नद के जल से, **'उद्भिद्भ्यः'** इत्यादि मन्त्र से औषधि के जल से **'पावमानी'** सूक्त की ऋचा से तीर्थ जल से तथा **'आपोहिष्ठा'** इत्यादि मन्त्र से सुवर्ण के जल से स्नान कराना चाहिए ।। १२-१३ ।। **'आपो अस्मात्'** इत्यादि मन्त्र से वर्षा के जल से **'व्याहृतियों ( ओं भूः, ओं भुवः, ओं स्वः, ओं महः, ओं जनः,**

वरुणं च तडागोत्थैर्वरुणाद्भिस्तु वाग्यतः ॥ १४ ॥ आपो देवीति गिरिजैरेकाशीतिघटैस्ततः । स्नापयेद्वरुणस्येति त्वं नो वरुण चार्धकम् ॥ १५॥ व्याहृत्या मधुपर्कं तु बृहस्पतेति वस्त्रकम् । वरुणेति पवित्रं तु प्रणवेनोत्तरीयकम् ॥ १६ ॥ यद्वारुण्येन पुष्पादि प्रदद्याद्वरुणाय तु । चामरं दर्पणं छत्रं व्यजनं वैजयन्तिकम् ॥ १७ ॥ मूलेनोत्तिष्ठेत्युत्थाप्य तां रात्रिमधिवासयेत् । वरुणं वेति सान्निध्यं यद्वारुण्येन पूजयेत् ॥ १८॥ सजीवीकरणं मूलात्पुनर्गन्धादिना यजेत् । मण्डले पूर्ववत्प्राच्र्य कुण्डेषु समिदादिकम् ॥ १९ ॥ वेदादिमन्त्रैर्गङ्गाद्याश्चतस्रो धेनवो दुहेत्। दिक्ष्वथो वै यवचरुं ततः संस्थाप्य होमयेत् ॥ २० ॥ व्याहृत्या वाऽथ गायत्र्या मूलेनाऽऽमन्त्रयेत्तथा । सूर्याय प्रजापतये द्यौः स्वाहा चान्तरिक्षकः॥ २१ ॥ तस्यै पृथिव्यै देहधृत्यै इह स्वधृतये ततः । इह रत्यै चेह रमत्या उग्रो भीमश्च रौद्रकः ॥ २२ ॥ विष्णुश्च वरुणो धाता रायस्पोषो महेन्द्रकः । अग्निर्यमो नैर्ऋतोऽथ वरुणो वायुरेव च ॥ २३ ॥ कुवेर ईशोऽनन्तोऽथ ब्रह्मा राजा जलेश्वरः । तस्मै स्वाहेदं विष्णुश्च तद्विप्रासेति होमयेत् ॥ २४ ॥ सोमो धेन्विति षड्हुत्वा इमं मेति च होमयेत् । आपो हि ष्ठेति तिसृभिरिमा रुद्रेति होमयेत् ॥ २५ ॥ दशदिक्षु बलिं दद्याद् गन्धपुष्पादिनाऽर्चयेत् । प्रतिमां तु समुत्थाप्य मण्डले विन्यसेद्बुधः ॥ २६ ॥ पूजयेद्गन्धपुष्पाद्यैर्हेमपुष्पादिभिः क्रमात् । जलाशयांस्तु दिग्भागे वितस्तिद्वयसंमितान् ॥ २७ ॥ कृत्वाऽष्टौ स्थण्डिलान्रम्यान्सैकताद्वेदिकोत्तमः । वरुणस्येति मन्त्रेण आज्यमष्टशतं ततः ॥ २८ ॥ चरुं यवमयं हुत्वा शान्तितोयं समाहरेत् । सेचयेन्मूर्ध्नि देवं तु सजीवकरणं चरेत्॥२९॥ ध्यायेत्तु वरुणं युक्तं गौर्यानदनदीगणैः । ॐ वरुणाय ततोऽभ्यर्च्य ततः सांनिध्यमाचरेत् ॥ ३०॥ उत्थाय नागपृष्ठाद्यैर्भ्रामयेत्तैः

---

**ओं तपः, ओं सत्यम्,** ये सात व्याहृतियाँ हैं ।) से कुएँ के जल से, वरुणं च इत्यादि मन्त्र से तालाब के जल से, और मौन रहकर वरुण को जल से स्नान कराना चाहिए ।। १४ ।। '**आपो देवी**' इत्यादि मन्त्र से पर्वत के जल से और उसके पश्चात् इक्यासी कलशों से वरुण को स्नान कराना चाहिए । फिर वरुण को '**त्वं नो वरुण**' इत्यादि मन्त्र से अर्घ्य देना चाहिए ।। १५ ।। व्याहृतियों मधुपर्क और '**वृहस्पते**' इत्यादि मन्त्र से वस्त्र प्रदान करना चाहिए । '**वरुण**' इत्यादि मन्त्रसे पवित्र तथा प्रणव के द्वारा उत्तरीय (चादर) प्रदान करना चाहिए ।। १६ ।। '**यद् वारुणेन**' इत्यादि मन्त्र से वरुण को पुष्पादि प्रदान करना चाहिए । इसी प्रकार से वरुण को चामर, दर्पण, छत्र, व्यजन तथा पताका मूलमन्त्र से अर्पित करना चाहिए । '**उत्तिष्ठ**' इत्यादि मन्त्र से उठाकर उस रात्रि में अधिवास कराना चाहिए। 'वरुणं वा' इत्यादि मन्त्र से सन्निधिकरण करके -'**यद्वारुण्येन**' इत्यादि मन्त्र से पूजन करना चाहिए ।। १७-१८ ।। मूल मन्त्र से 'सजीवीकरण करके फिर चन्दन आदि से पूजन करना चाहिए । पहले के ही समान मण्डल में पूजन करके कुण्ड में वेदादि मन्त्रों से समिधा आदि का होम करना चाहिए । पुनः गङ्गा आदि चार धेनुओं को दुहकर चारों दिशाओं में स्थापना करके यव तथा चरु का होम करना चाहिए ।। १९ ।। २० ।। पुनः व्याहृति, अथवा गायत्री अथवा मूलमन्त्र से यव और चरु को अभिमन्त्रित करना चाहिए । पुनः इन मन्त्रों से हवन करना चाहिए— **( १ ) ओं सूर्याय स्वाहा, ( २ ) ओं प्रजापतये स्वाह, ( ३ ) ओं द्यौः स्वाहा, ( ४ ) ओं आन्तकाय स्वाहा, ( ५ ) ओं निग्रहाय स्वाहा, ( ६ ) ओं पृथिव्यै स्वाहा, ( ७ ) देहधृत्यै स्वाहा, ( ८ ) ओं स्वधृतये स्वाहा, ( ९ ) ओं रत्यै स्वाहा, ( १० ) ओं रमत्यै स्वाहा, ( ११ ) ओं उग्राय स्वाहा, ( १२ ) ओं भीमाय स्वाहा, ( १३ ) ओं रौद्राय स्वाहा, ( १४ ) ओं विष्णावे स्वाहा, ( १५ ) ओं वरुणाय स्वाहा, ( १६ ) ओं वायवे स्वाहा, ( १७ ) ओं कुबेराय स्वाहा, ( १८ ) ईशानाय स्वाहा, ( १९ ) ओं अनन्ताय स्वाहा, ( २० ) ओं ब्रह्मणे स्वाहा, ( २१ ) ओं राज्ञो स्वाहा, ( २१ ) ओं जलेश्वराय स्वाहा** । उसके पश्चात् '**इदं विष्णुर्विचक्रमे**' इत्यादि मन्त्र से तथा '**तद्विष्णोः परमं पदम्**' इत्यादि मन्त्र से होम करना चाहिए।।२१-२४।। पुनः '**सोमो धेनु**' इत्यादि मन्त्र से छह आहुति देकर '**इमं मे**' इत्यादि मन्त्र से होम करना चाहिए । **( १ ) 'आपो हिष्ठाः' ( २ ) यो वः शिवतमो० ( ३ ) तस्मा अरङ्गमा०** इत्यादि तीन ऋचाओं से तथा '**इमा रुद्र**' इत्यादि मन्त्र से होम करना चाहिए ।। २५ ।। पुनः दस दिशाओं में दिक्पाल बलि देनी चाहिए और गन्ध पुष्प आदि से अर्चना करनी चाहिए । पुनः विद्वान् को चाहिए कि वह प्रतिमा को उठाकर उसको मण्डल में स्थापित करे ।। २६ ।। पुनः गन्ध, पुष्प तथा होम आदि से क्रमशः वरुण मूर्ति की पूजा करनी चाहिए । पुनः प्रत्येक दिशा में दो वित्ते के जलाशयों को बनाकर, आचार्य बालू की आठ मनोहर वेदियों को बनाएँ । फिर '**वरुणस्य**' इत्यादि मन्त्र से चरु तथा यव से युक्त घी की एक सौ आठ आहुति देकर फिर शान्तिजल लाएँ और वरुण

समङ्गलैः । आपो हि ष्ठेति च क्षिपेत्त्रिमध्वाक्ते घटे जले ॥ ३१ ॥ जलाशये मध्यगतं सुगुप्तं विनिवेशयेत् । स्नात्वा ध्यायेच्च वरुणं सृष्टिं ब्रह्माण्डसंज्ञिकाम् ॥ ३२ ॥ अग्निबीजेन संदग्ध्वा (ह्य) तद्भस्म प्लावयेन्नरः । सर्वमापोमयं लोकं ध्यायेत्तत्र जलेश्वरम्॥३३॥ तोयमध्यस्थितं देवं ततो यूपं निवेशयेत् । चतुरस्त्रमथाष्टास्त्रं वर्तुलं वा सुकीर्तितम् ॥ ३४ ॥ आराध्य देवतालिङ्गं दशहस्तं तु कूपके । यूपं यज्ञी (ज्ञि) यवृक्षोत्थं मूले हैमं फलं न्यसेत् ॥ ३५ ॥ वाप्यां पञ्चदशकरं पुष्करिण्यां तु विंशकम् । तडागे पञ्चविंशाख्यं जलमध्ये निवेशयेत् ॥३६॥ यागमण्डपाङ्गणे वा यूप ब्रह्मेतिमन्त्रतः । स्थाप्य तद्वेष्टयेद्वस्त्रैर्यूपोपरि पताकिकाम् ॥ ३७ ॥ तदभ्यर्च्य च गन्धाद्यैर्जगच्छान्तिं समाचरेत् ॥ दक्षिणां गुरवे दद्याद्भूगोहेमाम्बुपात्रकम्॥३८॥ द्विजेभ्यो दक्षिणा देया आगतान्भोजयेत्तथा । आब्रह्मस्तम्बपर्यन्तं ये केचित्सलिलार्थिनः ॥ ३९ ॥ ते तृप्तिमुपगच्छन्तु तडागस्थेन वारिणा । तोयमुत्सर्जयेदेवं पञ्चगव्यं विनिक्षिपेत् ॥ ४० ॥ आपो हि ष्ठेति तिसृभिः शान्तितोयं द्विजैः कृतम् । तीर्थतोयं क्षिपेत्पुण्यं गोकुलं चार्पयेद्विजान्॥४१॥ अनिवारितमन्नाद्यं सर्वजन्यं च कारयेत् । अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ॥ ४२॥ एकाहं स्थापयेत्तोयं तत्पुण्यमयुतायुतम् । विमाने मोदते स्वर्गे नरकं न स गच्छति ॥ ४३ ॥ गवादि पिबते यस्मात् तस्मात् कर्तुर्न पातकम् । तोयदानात् सर्वदानफलं प्राप्यदिवं ब्रजेत् ॥ ४४॥

इत्यादिमहापुराण आग्नेये कूपवापीतडागादिप्रतिष्ठाकथनं नाम चतुःषष्ठितमोऽध्यायः ॥ ६४ ॥



देवता के सिर पर उसका अभिषेक करके वरुण देवता का सजीवीकरण करें ।। २७-२९ ।। तदनन्तर गौरी, नद, तथा नदी समूह के साथ वरुण का ध्यान करना चाहिए । **'ओम् वरुणाय नमः'** इस मन्त्र से वरुण का पूजन करके उनका सन्निधिकरण करना चाहिए ।। ३० ।। पुनः प्रतिमा को उठाकर हाथी के पीठ आदि (रथ पर चढ़ाकर अथवा मनुष्य के सिर पर रखकर) पर रखकर मङ्गल गान करते हुए नगर भ्रमण कराना चाहिए । पुनः त्रिमधु मिश्रित जल वाले घट में वरुण मूर्ति को छोड़ दे ।। ३१ ।। जलाशय के बीच में अत्यन्त गोपनीय ढंग से उस मूर्ति को छिपाकर स्नान करके वरुण तथा ब्रह्माण्ड संज्ञक सृष्टि का ध्यान करना चाहिए ।। ३१ ।। अग्नि बीज के द्वारा उस सृष्टि को जलाकर उसके भस्म को भावना के द्वारा बहा देना चाहिए । पुनः सम्पूर्ण लोक का जलरूप से ध्यान करके उसमें जलेश्वर (वरुण) का ध्यान करना चाहिए ।। ३३ ।। उसके पश्चात् जल स्थित देवता वरुण के लिए स्तम्भ को गाड़ना चाहिए । स्तम्भ को चार धारों वाला अथवा आठ धारों वाला अथवा गोल होना चाहिए ।। ३४ ।। देवमूर्ति की आराधना करके कुएँ में गाड़ने के लिए स्तम्भ दश हाथ का होना चाहिए । यूप (स्तम्भ) यज्ञीय वृक्ष का होना चाहिए तथा उसके मूल में यज्ञीय फल को होना चाहिए ।। ३५ ।। बापी में पन्द्रह हाथ का तथा पुष्करिणी में बीस हाथ का यूप स्थापित करके उसको वस्त्र से वेष्टित करना चाहिए तथा उसके ऊपर पताका लगाना चाहिए ।। ३७।। आचार्य को भूमि, गौ तथा सुवर्ण निर्मित जलपात्र का दान देना चाहिए ।। ३८ ।। ब्राह्मणों को दक्षिणा देनी चाहिए और आगन्तुकों को भोजन कराना चाहिए । पुनः **'आब्रह्म स्तम्बपर्यन्तं ये केचित् सलिलार्थिनः । ते तृप्तिमुपगच्छन्तु तडागस्थेन वारिणा'** अर्थात् ब्रह्मा से लेकर तृण पर्यन्त जो कोई भी जीव जल चाहते हों वे इस तडाग के जल से तृप्त होएँ । इस मन्त्र को पढ़ते हुए तड़ाग में जल डालें तथा पञ्चगव्य डालें ।। ४०।। ब्राह्मणों के द्वारा निर्मित शान्तिजल को तथा पवित्र तीर्थ के जलों को 'आपो हिष्ठा' इत्यादि तीन ऋचाओं के द्वारा जल डालकर ब्राह्मण को गोदान देना चाहिए।।४१।। अवारित द्वार (विना किसी रुकावट के) सभी लोगों को भोजन कराना चाहिए । दस लाख अश्वमेघ यज्ञ करने का जो फल होता है, उससे असंख्य गुना अधिक एक दिन के जल प्रतिष्ठा से होती है । वह मनुष्य विमान पर चढ़कर स्वर्गलोक में विहार करता है और नरक में कभी नहीं जाता ।। ४२-४३ ।। चूँकि उस तडाग के जल को जीव आदि पीते हैं। अतएव तडाग प्रतिष्ठा करने वाले को पाप नहीं लगता है । जल दान के द्वारा सभी दानों का फल प्राप्त करके वह स्वर्गलोक का अधिकारी बन जाता है ।। ४४ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का कूप, वापी तथा तडाग आदि की प्रतिष्ठा वर्णन नामक चौसठवाँ अध्याय सम्पूर्ण हुआ ॥ ६४ ॥**



## अथ पञ्चषष्ठितमोऽध्यायः

### सभादिस्थापनविधिः

सभादिस्थापनं वक्ष्ये तथैतेषां प्रवर्तनम् । भूमौ परीक्षितायां च वास्तुयागं समाचरेत् ॥ १ ॥ स्वेच्छया तु सभां कृत्वा स्वेच्छया स्थापयेत्सुरान्। चतुष्पथे च ग्रामादौ न शून्ये कारयेत्सभाम् ॥ २ ॥ निर्मलः कुलमुद्धृत्य कर्ता स्वर्गे विमोदते । अनेन विधिना कुर्यात्सप्तभौमं हरेर्गृहम् ॥ ३ ॥ यथा राज्ञां तथाऽन्येषां पूर्वाद्याश्च ध्वजादयः । कोणभुजान्वर्जयित्वा चतुःशालं तु वर्जयेत् ॥ ४ ॥ त्रिशालं वा द्विशालं वा एकशालमथापि वा । व्ययाधिकं न कुर्वीत व्ययदोषकरं हि तत् ॥ ५ ॥ आयाधिके भवेत्पीडा तस्मात्कुर्यात्समं द्वयम् । करराशिं समस्तं तु कुर्याद्वसुगुणं गुरुः ॥ ६ ॥ सप्तार्चिषा कृते भागे गर्गविद्याविचक्षणः । अष्टधा भाजिते तस्मिन्यच्छेषं स व्ययो मतः ॥ ७ ॥ अथवा करराशिं तु हन्यात्सप्तार्चिषा बुधः । वसुभिः संहृते भागे ध्वजादि परिकल्पयेत् ॥ ८ ॥ ध्वजो धूम्रस्तथा सिंहः श्वा सृपस्तु खरो गज; । ध्वाङ्क्षश्चेति क्रमेणैव मायाष्टकमुदाहृतम् ॥ ९ ॥ त्रिशालकत्रयं शस्तं सर्वभेदविवर्जितम् । याम्यां परगृहोपेतं द्विशालं शस्यते सदा ॥ १० ॥ याम्ये शालैकशालं तु प्रत्यक्शालमथापि वा । एकशालद्वयं शस्तं शेषास्त्वन्ये भयावहाः ॥ ११ ॥ चतुःशालं सदा शस्तं सर्वदोषविवर्जितम् । एकं भौमादि कुर्वीत भवनं सप्तभौमकम् ॥ १२ ॥ द्वारवेधादिरहितं पुराणेन विवर्जितम् । देवगृहं देवतायाः प्रतिष्ठाविधिना सदा ॥ १३ ॥ संस्थाप्य मनुजानां च समुदायोक्तकर्मणा। प्रातः सर्वौषधीस्नानं कृत्वा शुचिरतन्द्रितः॥ १४॥ मधुरैस्तु द्विजान्भोज्य पूर्णकुम्भादिशोभितम् । सतोरणं स्वस्तिवाच्य द्विजान्गोपृष्ठहस्तकः ॥ १५ ॥ गृही गृहं प्रविशेच्च दैवज्ञान्प्राच्र्य संविशेत् । गृहे

---

**श्रीभगवान् ने कहा—** अब मैं सभा आदि की स्थापना तथा उनके प्रवर्तन की विधि का वर्णन करूँगा । परीक्षित भूमि पर वास्तुयाग करना चाहिए ।। १ ।। अपनी इच्छा के अनुसार सभा का निर्माण करके उसमें अपनी इच्छा के अनुसार ही देवताओं की स्थापना करनी चाहिए । सभा का निर्माण चौराहे पर अथवा ग्राम में कराना चाहिए, शून्य स्थान में नहीं ।। २ ।। सभा का निर्माण कराने वाला निष्पाप पुरुष अपने कुल का उद्धार करके स्वर्गलोक में आनन्दानुभव करता है । इसी विधि से श्रीहरि का सात मंजिल भवन बनवाना चाहिए । राजाओं के ही समान दूसरों के भवन की भी पूर्व आदि दिशाओं में ध्वज आदि संज्ञाएँ होती हैं । कोने की भुजा को छोड़कर चतुःशाल बनवाना चाहिए ।। ४ ।। अथवा एक ही शाला वाला सभा भवन बनाना चाहिए । अधिक व्यय नहीं करना चाहिए क्योंकि ऐसे सभा व भवन में व्यय नामक दोष होता है ।। ५ ।। आय के अधिक होने पर अधिक पीड़ा होती है । इसलिए आय और व्यय दोनों को समान रखना चाहिए । कितने हाथ हों उसको आठ से गुणा करना चाहिए ।। ६ ।। पुनः गर्ग विद्या में बिपुण आचार्य को उसमें सात से भाग देना चाहिए जो भागफल हो उसमें आठ का भाग दें । जो शेष बचे उसे ही व्यय माना जाता है ।। ७ ।। अथवा सभामण्डप की लम्बाई चौड़ाई का गुणा करके जितने हाथ हों उसमें सात का भाग दे । जो भागफल हो उसमें पुनः आठ का भाग देकर ध्वज आदि संज्ञाओं को शेष के आधार पर निर्धारण करना चाहिए । (१) ध्वज, (२) धूम्र, (३) सिंह, (४) श्वान, (५) वृष, (६) खर, (७) हाथी, और (८) कौआ ये क्रमशः ध्वजादि संज्ञाएँ हैं । इन्हें क्रमशः मायाष्टक कहा गया है।। ९ ।। सभी भेदों से रहित तीन त्रिशालक श्रेष्ठ हैं, उत्तर दिशा में तथा दूसरे गृह से युक्त द्विशाल अच्छा होता है ।। १० ।। दक्षिण दिशा में शाल (एक कमरे वाला) शाला को होना चाहिए अथवा सभा की शाला (कमरा) पश्चिम दिशा में होना चाहिए । पश्चिम दिशा में दो एक शाला वाले सभा मण्डप श्रेष्ठ होते हैं, किन्तु अन्य भयावह होते हैं । सभी दोषों से रहित चतुःशाला सभी मण्डप सदा श्रेष्ठ होते हैं । सभामण्डप को एक मंजिला से लेकर सात मंजिला पर्यन्त बनाना चाहिए । उसमें पुरानी सामग्री नहीं होनी चाहिए तथा उसे द्वारबेध आदि से रहित होना चाहिए । देव गृह की प्रतिष्ठा सर्वदा देवता की प्रतिष्ठा विधि से करनी चाहिए । उसकी स्थापना मनुष्य समुदाय के लिए बतलायी गयी विधि से करनी चाहिए । पुनः प्रातःकाल निरालस होकर सर्वोषधि से स्नान

पुष्टिकरं मन्त्रं पठेच्चेमं समाहितः ॥ १६ ॥ ॐ नन्दे नन्दय वासिष्ठे वसुभिः प्रजया सह । जये भार्गवदायादे प्रजानां विजयावहे ॥ १७ ॥ पूर्णेऽङ्गिरसदायादे पूर्णकामंकुरुष्व माम् । भद्रे कश्यपदायादे कुरु भद्रां मतिं मम ॥ १८ ॥ सर्वबीजौषधीयुक्ते सर्वरत्नौषधीवृते । रुचिरे नन्दने नन्दे वासिष्ठे रम्यतामिह ॥ १९ ॥ प्रजापतिसुते देवि चतुरस्रे महीयसि । सुभगे सुव्रते देवि गृहे काश्यपि रम्यताम् ॥ २० ॥ पूजिते परमाचार्यैर्गन्धमाल्यैरलंकृते। भवभूतिकरि देवि गृहे भार्गवि रम्यताम् ॥ २१ ॥ अव्यक्तेऽव्याकृते पूर्णे मुनेरङ्गिरसः सुते । इष्टके त्वं प्रयच्छेष्टं प्रतिष्ठां कारयाम्यहम् ॥ २२ ॥ देशस्वामिपुरस्वामिगृहस्वामि परिग्रहे । मनुष्यधनहस्त्यश्वपशुवृद्धिकरी भव ॥ २३ ॥

इत्यादिमहापुराण आग्नेये सभादिस्थापनविधिकथनं नाम पञ्चषष्ठितमोऽध्यायः ॥ ६५ ॥

## अथ षट्षष्ठितमोऽध्यायः

## देवतासामान्यप्रतिष्ठा

श्रीभगवानुवाच— **समुदायप्रतिष्ठां च वक्ष्ये सा वासुदेववत् । आदित्या वसवो रुद्राः साध्या विश्वेऽश्विनौ तथा ॥ १ ॥ ऋषयश्च तथा सर्वे वक्ष्ये तेषां विशेषकम्। यस्य देवस्य यन्नाम तस्याऽऽद्यं गृह्य चाक्षरम् ॥ २ ॥ मात्राभिर्भेदयित्वा तु दीर्घाण्यङ्गानि भेदयेत् । प्रथमं कल्पयेद् बीजं सबिन्दुं (न्दु) प्रणवान्वितम् ॥३॥ सर्वेषां मूलमन्त्रेण पूजनं स्थापनं तथा । नियमव्रतकृच्छ्राणां मठसंक्रमवेश्मनाम् ॥ ४ ॥ मासोपवासं द्वादश्या इत्यादिस्थापनं**

करके पवित्र होना चाहिए।।१३-१४ ।। ब्राह्मणों को मधुर भोजन कराकर तथा स्वस्तिवाचन कराकर पूर्णकुम्भों से सुशोभित तथा तोरण युक्त गृह में गौ के पृष्ठ पर हाथ रखकर गृहस्थ को प्रवेश करना चाहिए और दैवज्ञों (ज्योतिषियों) की पूजा करके उसमें रहे ।। पुनः सावधान होकर गृह में पुष्टि बढ़ाने वाले श्लोक १७ से २३ श्लोक पर्यन्त पठित मन्त्र को पढें । मन्त्र का अर्थ है- वसिष्ठ जी की पुत्रि ! नन्दे ! धन और सन्तान के साथ मुझे आनन्दित करें । हे भार्गव ऋषि की पुत्रि ! तथा प्रजाओं को विजय प्रदान करने वाली जये ! मुझे धन एवं सन्तान देकर आनन्द प्रदान करो ।। १७।। हे अङ्गिरा महर्षि की पुत्रि ! पूर्ण ! मुझे पूर्णकाम बनाओ । हे कश्यप ऋषि की पुत्रि ! भद्रे ! मेरी कल्याणमयी बुद्धि बनाओ ।। १८ ।। हे वसिष्ठ ऋषि की पुत्रि ! सभी बीजों की औषधि से युक्त, तथा सम्पूर्ण औषधि से समलंकृत नन्दे ! तुम इस आनन्दप्रद तथा मनोहर गृह में निवास करो ।। १८-१९ ।। हे कश्यप प्रजापति की पुत्रि ! देवि ! सुभगे तथा सुव्रत वाली देवि भद्रे ! तुम इस चतुष्कोण तथा विशाल भवन में रमण करो ।। २० ।। हे सांसारिक ऐश्वर्य प्रदान करने वाली भार्गवि ! देवि तुम बड़े-बड़े आचार्यों के द्वारा गन्ध एवं माला से पूजित इस गृह में रमण करो ।।२१।। आप अभिलषित अर्थ को प्रदान करें मैं आपकी प्रतिष्ठा करवा रहा हूँ ।। २२ ।। देश के स्वामी, नगर के स्वामी तथा गृह के स्वामी के द्वारा अपनायी गयी आप मनुष्य, धन, हाथी, घोड़ा तथा पशु की वृद्धि करें ।। २३ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का सभा आदि की स्थापना आदि की विधि का वर्णन नामक पैंसठवाँ अध्याय सम्पूर्ण हुआ ॥ ६५ ॥**

**श्रीभगवान् ने कहा—** अब मैं देव समुदाय की प्रतिष्ठा का वर्णन कर रहा हूँ । वह प्रतिष्ठा भी भगवान् वासुदेव की प्रतिष्ठा के ही समान होनी चाहिए । द्वादश आदित्यों, अष्ट वसुओं, एकादश, रुद्रों, साध्य देवों, विश्वेदेवों, दोनों अश्विनकुमारों तथा ऋषियों की प्रतिष्ठा में जो विशेष बातें होती हैं, मैं उन बातों को बतला रहा हूँ। जिस देवता का जो नाम हो उस नाम का पहला अक्षर ले ले।।१-२।। उसका भेद दीर्घ स्वरों को मिलाकर करना चाहिए और उन्हीं अक्षरों से अंगन्यास करना चाहिए । नाम के प्रथम अक्षर को प्रणव तथा अनुस्वार से युक्त करके उसे ही बीज मन्त्र बनाना चाहिए।।३।।

वदे । शिलां पूर्णघटं कांस्यं संभारं स्थापयेत्ततः ॥ ५ ॥ ब्रह्मकूर्चं समाहृत्य श्रपेद्यवमयं चरुम् । क्षीरेण कपिलायास्तु तद्विष्णोरिति साधकः ॥ ६॥ प्रणवेनाभिधायैव दर्व्या संघटयेत्ततः । साधयित्वाऽवतार्याथ विष्णुमभ्यर्च्य होमयेत् ॥ ७ ॥ व्याहृत्या चैव गायत्र्या तद्विप्रासेति होमयेत् । विश्वतश्चक्षुर्वेदाद्यैर्भूरग्नये तथैव च ॥ ८ ॥ सूर्याय प्रजापतये अन्तरिक्षाय होमयेत् । द्यौः स्वाहा ब्रह्मणे स्वाहा पृथ्वी महाराजकः ॥ ९ ॥ तस्मै सोमं च राजानमिन्द्राद्यैर्होममाचरेत् । एवं हुत्वा चरोर्भागान्दद्याद्दिग्बलिमादरात् ॥ १० ॥ समिधोऽष्टशतं हुत्वा पालाशा ( शी ) श्चाऽऽज्यहोमकम्। कुर्यात्पुरुषसूक्तेन इरावतीतिलाष्टकम् ॥ ११ ॥ हुत्वा तु ब्रह्मविष्णवीशदेवानामनुयायिनाम्। ग्रहाणामाहुतीर्हुत्वा लोकेशानामथो पुनः ॥ १२ ॥ पर्वतानां नदीनां च समुद्राणां तथाऽऽहुतीः । हुत्वा च व्याहृतीर्दद्यात्स्रुवपूर्णाहुतित्रयम् ॥ १३ ॥ वौषडन्तेन मन्त्रेण वैष्णवेन पितामह । पञ्चगव्यं चरुं प्राश्य दत्त्वाऽऽचार्याय दक्षिणाम् ॥१४ ॥ तिलपात्रं हेमयुक्तं सवस्त्रं गामलंकृताम् । प्रीयतां भगवान्विष्णुरित्युत्सृजेद् व्रतं बुधः ॥ १५ ॥ मासोपवासादेरन्यां प्रतिष्ठां वच्मि पूर्वतः । यज्ञेन ( ना ऽ ऽ ) तोष्य देवेशं श्रपयेद्वैष्णवं चरुम् ॥ १६ ॥ तिलतण्डुलनीवारैः श्यामाकैरथवा यवैः। आज्येनाऽऽघार्य चोत्तार्य होमयेन्मूर्तिमन्त्रकैः ॥ १७ ॥ विष्णवादीनां मासपानां तदन्ते होमयेत्पुनः ॥ १८ ॥ ॐ श्रीं विष्णवे स्वाहा । ॐ विष्णवे विभूषणाय स्वाहा। ॐ विष्णवे शिपिविष्टाय स्वाहा । ॐ नरसिंहाय स्वाहा । ॐ पुरुषोत्तमाय स्वाहा ॥ १९ ॥ द्वादशाश्वत्थसमिधो होमयेद् घृतसंप्लुताः । विष्णोरराट मन्त्रेण ततो द्वादश चाऽऽहुतीः ॥ २० ॥ इदं विष्णुरिरावती चरोर्द्वादश चाऽऽहुतीः । हुत्वा चाऽऽज्याहुतीस्तद्वत्तद्विप्रासेति होमयेत् ॥ २१ ॥ शेषहोमं ततः कृत्वा दद्यात्पूर्णाहुतित्रयम् । युञ्जतेत्यनुवाकं तु जप्त्वा प्राश्यी ( श्नी ) त वै चरुम् ॥ २२ ॥ प्रणवेन स्वशब्दान्ते

---

सभी देवताओं का पूजन, तथा स्थापना मूलमन्त्र से करना चाहिए । इसके अतिरिक्त, नियमव्रत, कृच्छ्र, मठ, सेतुगृह, मासोपवास, द्वादशी व्रत आदि की मैं स्थापना बतलाऊँगा । शिला, पूर्णघट तथा सामग्री से युक्त कांस्य पात्र लाकर रखना चाहिए ।। ४ -५ ।। ब्रह्मकूर्च को लेकर यव से युक्त चरु को अग्नि पर चढ़ाना चाहिए । **'तद्विष्णोः परमं पदम्'** इत्यादि मन्त्र पढ़ते हुए उसे कपिला गौ के दुग्ध में पकाना चाहिए ।। ६ ।। प्रणव का उच्चारण करते हुए उसे कलछुल से चलाना चाहिए । चरु के पक जाने पर उसे उतार लें तथा भगवान् विष्णु की पूजा करके होम करे ।।७।। व्याहृति से, गायत्री से तथा तद्विप्रासो' मन्त्र से होम करना चाहिए । 'विश्वतश्चक्षुः इत्यादि मन्त्र से, भूमि, अग्नि, सूर्य, प्रजापति, तथा अन्तरिक्ष के लिए आहुति देनी चाहिए । द्युलोक, ब्रह्मा, पृथिवी, महाराज, सोम तथा देवराज इन्द्र आदि के लिए आहुति देनी चाहिए ।। ८-९ ।। इस प्रकार से होम करके चरु के अवशिष्ट अंश की आदरपूर्वक दिग्वलि देनी चाहिए ।। १० ।। समिधा का अष्टोत्तरशत हवन करके, पुरुषसूक्त से पलाश की लकड़ी तथा घी का हवन करना चाहिए । तथा 'इरावती' इत्यादि मन्त्र से तिल की आठ आहुतियाँ देनी चाहिए ।। ११ ।। इस तरह से हवन करके ब्रह्मा, विष्णु, शंकर तथा अन्य देवताओं के अनुचरों को आहुति प्रदान करना चाहिए । ग्रहों की आहुति देने के पश्चात् लोकेशों की आहुति देनी चाहिए । फिर पर्वतों, नदियों तथा समुद्रों के लिए आहुति देनी चाहि।।१२-१३।। हे पितामह, जिसके अन्त में वौषट् हो उस वैष्णव मन्त्र से पञ्चगव्य तथा चरु का प्राशन करके तथा आचार्य को दक्षिणा देकर, भगवान् विष्णु की प्रसन्नता के लिए सुवर्ण निर्मित तथा वस्त्र से आच्छादित तिल के पात्र तथा गौ का दान करना चाहिए ।। १४-१५ ।। अब मैं दूसरी, मासोपवास आदि की प्रतिष्ठा को बतला रहा हूँ । जो पहले के ही समान है । यज्ञ के द्वारा भगवान् विष्णु को संतुष्ट करके वैष्णव चरु को पकाना चाहिए ।। १६ ।। तिल, चावल, नीवार, साँवा अथवा यव को घी में भूनकर उतार ले यही चरु है । पुनः मूर्तियों के मन्त्रों से हवन करना चाहिए ।। १७।। उसके पश्चात् मासों के स्वामी विष्णु आदि के लिए होम करना चाहिए ।। १८ ।। वे होम मन्त्र ये हैं– (१) ओं श्री विष्णवे स्वाहा, (२) ओं विष्णवे विभूषणाय स्वाहा, (३) ओं विष्णवे शिपिविष्टाय स्वाहा, (४) ओं नरसिंहाय स्वाहा, (५) ओं पुरुषोत्तमाय स्वाहा ।। १९ ।। इसके पश्चात् घी में भिंगोकर पिप्पल की लकड़ी की बारह आहुति 'विष्णोरराटमसि' इत्यादि मन्त्र से देनी चाहिए ।। २०।।

कृत्वा पत्रे तु पैप्पले। ततो मासाधिपानां तु विप्रान्द्वादश भोजयेत् ॥ २३ ॥ त्रयोदशो गुरुस्तत्र तेभ्यो दद्यात् त्रयोदश। कुम्भान्स्वाद्वम्बुसंयुक्तान्सच्छत्रोपानहान्वितान् ॥ २४॥ सुवस्त्रहेममाल्याढ्यान्व्रतपूर्त्यै त्रयोदश। गावः प्रीतिं समायान्तु प्रचरन्तु प्रहर्षिताः ॥ २५ ॥ इति गोपथमुत्सृज्य यूपं तत्र निवेशयेत्। दशहस्तं प्रपाराममठसंक्रमणादिषु ॥ २६ ॥ गृहे च होममेवं च कृत्वा सर्वं यथाविधि। पूर्वोक्तेन विधानेन प्रविशेच्च गृहं गृही ॥ २७ ॥ अनिवारितमन्नाद्यं सर्वेष्वेतेषु कारयेत्। द्विजेभ्यो दक्षिणा देया यथाशक्ति विचक्षणैः ॥ २८ ॥ आरामं कारयेद्यस्तु नन्दने सुचिरं वसेत्। मठप्रदानात्स्वर्लोके शक्रलोके वसेत्ततः॥२९॥ प्रपादानाद्वारुणेन संक्रमेण वसेद्दिवि। इष्टकासेतुकारी च गोलोके मार्गकृद्भवाम्॥३०॥ नियमव्रतकृद्विष्णुः कृच्छकृत्सर्वपापहा (?) गृहं दत्त्वा वसेत्स्वर्गे यावदाभूतसंप्लवम् ॥ ३१ ॥ समुदायप्रतिष्ठेष्टा शिवादीनां गृहात्मनाम् ॥ ३२ ॥

इत्यादिमहापुराण आग्नेये देवतासामान्यप्रतिष्ठाकथनं नाम षट्षष्ठितमोऽध्यायः ॥ ६६ ॥

## अथ सप्तषष्ठितमोऽध्यायः

## जीर्णोद्धारविधि

श्रीभगवानुवाच– **जीर्णोद्धारविधिं वक्ष्ये भूषितां स्नपयेद्गुरुः। अचलां विन्यसेद्गेहे अतिजीर्णां परित्यजेत् ॥ १ ॥ व्यङ्गां भग्नां च शीलाढ्यां न्यसेदन्यां च पूर्वत्। संहारविधिना तत्र तत्त्वान्संहृत्य देशिकः ॥ २ ॥ सहस्रं नारसिंहेन हुत्वा तामुद्धरेद्गुरुः। दारवीं दाहयेद्वह्नौ शैलजां प्रक्षिपेज्जले॥३॥**

फिर इदं विष्णुः' इत्यादि मन्त्र से तथा 'इरावती' इत्यादि मन्त्र से चरु की बारह आहुति देनी चाहिए। उतनी ही घी की आहुति देकर, 'तद्विप्रासो' मन्त्र से होम करना चाहिए ।। २१ ।। फिर शेष होम करके तीन पूर्णाहुति देनी चाहिए। 'युञ्जते' इत्यादि अनुवाक का पाठ करके चरु का प्रणव के अन्त में अपना नाम जोड़कर पिप्पल के पत्ते में रखकर चरु का प्राशन करना चाहिए। उसके पश्चात् मासस्वामियों के निमित्त बारह ब्राह्मणों को भोजन कराना चाहिए ।। २३ ।। उनके अतिरिक्त तेरहवें स्थान पर गुरु को भोजन कराकर स्वादिष्ट जल से युक्त तेरह घड़े, छाता तथा उपानह के साथ दान करना चाहिए ।। २४ ।। व्रत की पूर्ति के लिए तेरहों कलशों को सुन्दर वस्त्र से युक्त तेरह सोने की माला से समलंकृत करके देना चाहिए। गौ प्रसन्न रहें खुशी-खुशी विचरण करें एतदर्थ गोमार्ग को छोड़कर गौओं के जल पीने के स्थान, उपवन, मठ अथवा सेतु पर दस हाथ का स्तम्भ गाड़ देना चाहिए ।। २५-२६ ।। फिर अपने घर पर हवन करके पूर्वोक्त सारी विधि का सम्पादन करके अपने गृह में प्रवेश करना चाहिए ।। २७ ।। अनिवारित द्वार भोजन कराकर ब्राह्मणों को दक्षिणा अपनी शक्ति के अनुसार देनी चाहिए ।। २८ ।। बगीचा लगाने वाला दीर्घकाल तक नन्दन वन में निवास करता है ।। २९ ।। पौ शाला दान करने वाला वरुण के लोक में तथा पुल बनाने वाला स्वर्गलोक में निवास करता है। ईंटे का पुल बनवाने वाला भी स्वर्गलोक में जाता है। गायों के लिए मार्ग बनवाने वाला गोलोक में जाता है ।। ३० ।। नियमों और व्रतों का पालन करने वाला भगवान् विष्णु के लोक में जाता है। तथा कुछ व्रतों का पालन करने वाला सभी पापों से मुक्त हो जाता है। गृह का दान करने वाला प्रलयकाल पर्यन्त स्वर्गलोक में निवास करता है ।। ३१ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का देवता सामान्य की प्रतिष्ठा वर्णन नामक छियासठवाँ अध्याय सम्पूर्ण हुआ ॥ ६६ ॥**

**श्रीभगवान् ने कहा–** अब मैं जीर्णोद्धार विधि को बतलाता हूँ। आचार्य समलंकृत मूर्ति को स्नान कराएँ। अचल मूर्ति को अपने घर में प्रतिष्ठित कर दें तथा अत्यन्त पूरानी मूर्ति का परित्याग कर दें ।। १ ।। विकृत, टूटी हुयी, अथवा शिला मात्र मूर्ति का भी परित्याग करके आचार्य उसके स्थान पर उसी के समान दूसरी मूर्ति की स्थापना करें। आचार्य संहार विधि से तत्त्वों को उपसंहृत

धातुजां रत्नजां वाऽपि अगाधे वा जलेऽम्बुधौ । यानमारोप्य जीर्णाङ्गं छाद्य वस्त्रादिना नयेत् ॥ ४ ॥ वादित्रैः प्रक्षिपेत्तोये गुरवे दक्षिणां ददेत् । यत्प्रमाणा च यद्द्रव्या तन्मानां स्थापयेद्दिने ॥ ५ ॥ कूपवापीतडागादेर्जीर्णोद्धारे महाफलम् ॥ ६ ॥

इत्यादिमहापुराणे आग्नेये जीर्णोद्धारविधिकथनं नाम सप्तषष्ठितमोऽध्यायः ॥ ६७ ॥

## अथाष्टषष्ठितमोऽध्यायः

## उत्सवविधिकथनम्

श्रीभगवानुवाच– **वक्ष्ये विधिं चोत्सवस्य स्थापिते तु सुरे चरेत् । तस्मिन्नब्दे चैकरात्रं त्रिरात्रं चाष्टरात्रकम् ॥ १ ॥ उत्सवेन विना यस्मात्स्थापनं निष्फलं भवेत्। अयने विषुवे चापि शयनोपवने गृहे ॥ २ ॥ कारकस्यानुकूलो वा यात्रां देवस्य कारयेत् । मङ्गलाङ्कुररोपैस्तु गीतनृत्यादि वाद्यकैः॥३॥ शरावघटिकापाली स्वाङ्कुरारोपणे हिता । यवाञ्शालींस्तिलान्मुद्गान्गोधूमान्सितसर्षपान् ॥ ४ ॥ कुलत्थमाषनिष्पावान् क्षालयित्वा तु वापयेत् । पूर्वादो तु बलिं दद्याद् भ्रमन्दीपैः पुरं निशि ॥ ५ ॥ इन्द्रादेः कुमुदादेश्च सर्वभूतेभ्य एव च । अनुगच्छन्ति ते तत्र प्रतिरूपधरा पुनः ॥ ६॥ पदे पदेऽश्वमेधस्य फलं तेषां न संशयः । आगत्य देवतागारं देवं विज्ञापयेद्गुरुः ॥ ७ ॥ तीर्थयात्रा त्वया देव श्वः कर्तव्या सुरोत्तम । तस्या ( दा) रम्भमनुज्ञातुमर्हः सर्वज्ञ सर्वथा ॥ ८ ॥ देवमेवं तु विज्ञाप्य ततः कर्म समारभेत् । प्ररोहघटिकाढ्यां तु वेदिकां भूषितां व्रजेत् ॥ ९ ॥ चतुःस्तम्भां तु**

करके नारसिंह मन्त्र से एक हजार हवन करके उस पुरानी मूर्ति को उखाड़ें । यदि मूर्ति लकड़ी की हो तो उसे आग में जला दें,यदि पत्थर की हो तो उसे जल में फेंक दें ।। २-३ ।। धातु अथवा रत्न की मूर्ति बनी हो तो उसको समुद्र के अगाध जल में फेंक देना चाहिए । सवारी पर चढ़ाकर तथा जीर्ण अङ्ग को वस्त्र से ढँककर जाना चाहिए ।। ४ ।। बाजा बजाते हुए उसे जल में फेंककर आचार्य को दक्षिणा देनी चाहिए । पुरानी मूर्ति का जो प्रमाण, मूल्य तथा मान हो, उतने ही प्रमाण, मूल्य की मूर्ति का निर्माण करके उसकी दिन में स्थापना करनी चाहिए ।। ५ ।। कुएँ, बावली तथा तड़ाग आदि के भी जीर्णोद्धार का बहुत बड़ा फल होता है ।। ६ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का जीर्णोद्धार विधि वर्णन नामक सड़सठवाँ अध्याय सम्पूर्ण हुआ ॥ ६८ ॥**

**श्रीभगवान् ने कहा–** अब मैं देवता की प्रतिष्ठा हो जाने के पश्चात् किए जाने वालीं उत्सव की विधि को बतला रहा हूँ । प्रतिष्ठा के वर्ष ही एक रात्रि का अथवा तीन रात्रि का अथवा आठ रात्रियों का उत्सव करना चाहिए ।। १ ।। उत्सव के विना प्रतिष्ठा व्यर्थ हो जाती है । यह उत्सव अयनकाल में अथवा विषुवकाल में,अपने शयनकक्ष में, गृह में अथवा उपवन में करना चाहिए ।।२।। अथवा मन्दिर की सुविधा के अनुसार देवयात्रा करनी चाहिए । मङ्गलगान, अङ्कुरारोपण, गीत, नृत्य तथा वाद्य के साथ देवयात्रा करनी चाहिए ।। ३ ।। अङ्कुरारोपण शराव, घटिका तथा (गमला) में करना अच्छा होता है । यव, धान, तिल, मूँग, गेहूँ, पीली सरसों, कुलथी, उड़द तथा निष्पाव को धोकर उपर्युक्त पात्रों में बोना चाहिए । पूर्व आदि दिशाओं में इन्द्रादि दिक्पालों, कुमुदादि (दिग्गजों) तथा समस्त भूतों के लिए बलि देनी चाहिए । रात्रि में दीपक हाथ में लेकर भ्रमण करना चाहिए । ऐसा करने वाले के पीछे-पीछे वे देवता आदि भी विभिन्न रूप धारण करके चलते रहते हैं । ऐसा करने वाले मनुष्य को एक-एक पग में अश्वमेध यज्ञ करने का फल होता है ।। ४-६ ।। आचार्य देवागार में आकर यह विज्ञापन करे कि हे देवोत्तम ! देव ! कल आप तीर्थयात्रा करें । हे सर्वज्ञ! आप इसको आरम्भ करने की आज्ञा दें ।। ८ ।। इस प्रकार से देवता के सन्निकट में प्रार्थना करके कार्य प्रारम्भ करना चाहिए । अंकुर तथा कलश से समलंकृत चार स्तम्भों वाली वेदी के पास आचार्य

तन्मध्ये स्वस्तिके प्रतिमां न्यसेत् । काम्यार्थं लेख्यचित्रेषु स्थाप्य तत्राधिवासयेत् ॥ १० ॥ वैष्णवैः सह कुर्वीत घृताभ्यङ्गं तु मूलतः । घृतधाराभिषेकं वा सकलां शर्वरीं बुधः ॥ ११ ॥ दर्पणं दर्श्य नीराजगीतवाद्यैश्च मङ्गलम् । व्यजनं पूजनं दीपगन्धपुष्पादिभिर्यजेत् ॥ १२ ॥ हरिद्रामुक्तकाश्मीरशुक्लचूर्णादि मूर्धनि । प्रतिमायाश्च भक्तानां सर्वतीर्थफलं धृते ॥१३॥ स्थापयित्वा समभ्यर्च्य यात्राबिम्बं रथे स्थितम् । नयेद्गुरुर्नदीं नादैश्छत्राद्यै राष्ट्रपालिकाम्॥१४॥ निम्नगां योजनादर्वाक्तत्र वेदीं तु कारयेत् । वाहनादवतार्यैनां तस्यां वेद्यां निवेशयेत् ॥ १५ ॥ चरुं च श्रपयेत्तत्र पायसं होमयेत्ततः । अब्लिङ्गैर्वैदिकै र्मन्त्रैस्तीर्थान्यावाहयेत्ततः ॥ १६ ॥ आपो हि ष्ठोपनिषदैः पूजयेदर्घ्यं मुख्यकैः । पुनर्देवं समादाय तोये कृत्वाऽघमर्षणम् ॥ १७ ॥ स्नायान्महाजनैर्विप्रैर्वेद्यामुत्तार्य तं न्यसेत् । पूजयत्विा तदह्वा च प्रासादं तु नयेत्ततः ॥ १८ ॥ पूजयेत्पावकस्थं तु गुरुः स्याद्भुक्तिमुक्तिकृत् ॥१९॥

इत्यादिमहापुराण आग्नेये उत्सवविधिकथनं नामाष्टषष्ठितमोऽध्यायः ॥ ६८ ॥

## अथ नवषष्ठितमोऽध्यायः

## स्नपनोत्सवविस्तारकथनम्

अग्निरुवाच– **ब्रह्मन् शृणु प्रवक्ष्यामि स्नपनोत्सवविस्तरम् । प्रासादस्याग्रतः कुम्भान्मण्डपे मण्डले न्यसेत् ॥ १ ॥ कुर्याद् ध्यानार्चनं होमं हरेरादौ च कर्मणि । सहस्रं वा शतं वाऽपि होमयेत्पूर्णया सह ॥ २ ॥ स्नानद्रव्याण्यथाऽऽहृत्य कलशांश्चापि विन्यसेत् । अधिवास्य सूत्रकण्ठान्धारयेन्मण्डले घटान् ॥ ३ ॥ चतुरस्रं पुरं कृत्वा रुद्रैस्तं प्रविभाजयेत् । मध्येन तुचरु स्थाप्य पार्श्वपंक्तिं प्रमार्जयेत् ॥ ४॥ शालिचूर्णादिनाऽऽपूर्य पूर्वादिनवकेषु च।**

---

जायँ । उस वेदी के बीच में स्वस्तिक मण्डल के ऊपर प्रतिमा को रखें ।। ९ ।। अपने अभिलषित अर्थ को बनाये गए चित्रों में रखकर उसी पर देवता का अधिवास कराना चाहिए ।। १० ।। पुनः वैष्णवों के साथ मूलमन्त्र से देवता के शरीर में घी लगाना चाहिए । अथवा विद्वान् पुरुष को रात्रि भर घी की धारा से अभिषेक करना चाहिए ।। १ ।। देवता को दर्पण दिखाकर नीराजन (आरती) करनी चाहिए तथा गीत एवं वाद्य के द्वारा मङ्गल करना चाहिए । व्यजन तथा पूजन करते हुए, दीप चन्दन तथा पुष्प आदि से यजन करना चाहिए । हल्दी, मोती, केसर उजले चूर्ण, प्रतिमा तथा भक्तों के मस्तक पर लगाने वाला पुरुष सभी तीर्थों का फल प्राप्त करता है ।। १२-१३ ।। यात्रा मूर्ति को नमस्कार करके तथा उसकी पूजा करके रथ पर बैठकर आचार्य को वेद घोष करते हुए तथा छत्र आदि लगाकर राष्ट्र की प्रधान नदी के तट पर लाना चाहिए ।। १४ ।। नदी के एक योजन दूर रहने पर वहीं पर वेदी बनवाना चाहिए और मूर्ति को वाहन से उतारकर उसे वेदी पर रखें ।। १५ ।। वहीं पर चरु पकाना चाहिए तथा खीर का होम करना चाहिए । उसके पश्चात् मन्त्रों से तीर्थों का आवाहन करना चाहिए ।। १६ ।। अर्घ्य देकर 'आपोहिष्ठाः'इत्यादि मन्त्रों से पूजन करना चाहिए।।१७।। महाजनों तथा विप्रों के साथ स्नान करके मूर्ति को जल से निकालकर वेदी पर स्थापित करना चाहिए । उस दिन मूर्ति की वहीं पूजा करके फिर प्रतिमा को मन्दिर में लाना चाहिए । जो आचार्य अग्नि में स्थित देवता की पूजा करते हैं वे लौकिक भोगों तथा मोक्ष को प्राप्त करते हैं ।। १९ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का उत्सव विधि वर्णन नामक अड़सठवाँ अध्याय सम्पूर्ण हुआ ॥ ६८ ॥**

**अग्निदेव ने कहा–** हे ब्रह्मन् ! आप सुनें । अब मैं स्नपन (स्नान) तथा उत्सव विधि का विस्तारपूर्वक वर्णन करता हूँ । मन्दिर के आगे मण्डप में मण्डल के ऊपर कलशों को स्थापित करना चाहिए ।। १ ।। कर्म के प्रारम्भ में सर्वप्रथम श्रीहरि का ध्यान, अर्चना तथा होम करना चाहिए । पूर्णाहुति के साथ एक हजार अथवा एक सौ होम करना चाहिए ।। २ ।। उसके पश्चात् स्नानीय

कुम्भमुद्रां ततो बद्ध्वा घटं तत्राऽऽनयेद्बुधः ॥ ५ ॥ पुण्डरीकाक्षमन्त्रेण दर्भांस्तांस्तु विसर्जयेत् । अद्भिः पूर्णं सर्वरत्नयुतं मध्ये न्यसेद् घटम् ॥ ६॥ यवव्रीहितिलांश्चैव नीवाराञ्श्यामकान्क्रमात् । कुलित्थमुद्गसिद्धार्थान्मुक्त्वाऽन्यानष्टदिक्षु च ॥ ७ ॥ ऐन्द्रे तु नवके मध्ये घृतपूर्णं घटं न्यसेत् । पलाशाश्वत्थन्यग्रोधबिल्वोदुम्बरक्षीरिणाम् ॥ ८ ॥ जम्बूशमीकपित्थानां त्वक्कषायैर्घटाष्टकम् । आग्नेयनवके मध्ये मधुपूर्णं घटं न्यसेत् ॥ ९ ॥ गोशृङ्गनगगङ्गाम्बुगजेन्द्रदर्शनेषु च । तीर्थक्षेत्रखलेष्वष्टौ मृत्तिकाः स्युर्घटाष्टके ॥ १०॥ याम्ये तु नवके मध्ये तिलतैलघटं न्यसेत् । नारङ्गमथ जम्बीरं खर्जूरं मृद्बिकां क्रमात् ॥ ११ ॥ नारिकेलं न्यसेत्पूगं दाडिमं पनसं फलम् । नैर्ऋते नवके मध्ये क्षीरपूर्णं घटं न्यसेत् ॥ १२ ॥ कुङ्कुमं नागपुष्पं च चम्पकं मालतीक्रमात् । मल्लिकामथ पुंनागं करवीरं महोत्पलम् ॥ १३ ॥ पुष्पाणि चान्ये नवके मध्ये वै नारिकेलकम् । नादेयमथ सामुद्रं सारसं कौप्यमेव च ॥ १४ ॥ वर्षजं हिमतोयं च नैर्झरं गाङ्गमेव च । उदकान्यथ वायव्ये नवके कदलीजलम् ॥ १५ ॥ सहदेवीं कुमारीं च सिंहीं व्याघ्रीं तथाऽमृताम् । विष्णुपर्णीं शतशिवां वचां दिव्यौषधीर्न्यसेत् ॥ १६ ॥ पूर्वादौ सौम्यनवके मध्ये दधिघटं न्यसेत् । पत्रमेलां त्वचं कुष्ठं बालकं चन्दनद्वयम् ॥ १७ ॥ लतां कस्तूरिकां चैव कृष्णागरुमनुक्रमात् । सिद्धद्रव्याणि पूर्वादौ शान्तितोयमथैकतः ॥ १८ ॥ चन्द्रतारं क्रमाच्छुक्लं गिरिसारं त्रपुं न्यसेत्। घनसारं तथा सीसं पूर्वादौ रत्नमेव च॥१९॥ घृतेनाभ्यज्य चोद्वर्त्य स्नपयेन्मूलमन्त्रतः । गन्धाद्यैः पूजयेद्वह्नौ हुत्वा पूर्णाहुतिं चरेत्॥२०॥ बलिं च सर्वभूतेभ्यो भोजयेद्दत्तदक्षिणः । देवैश्च मुनिभिर्भूपैर्देवं संस्नाप्य चेश्वराः ॥ २१ ॥ बभूवुः स्नापयित्वेत्थं स्नपनोत्सवकं चरेत्। अष्टोत्तरसहस्रेण

---

द्रव्य को लाकर कलशों की स्थापना करनी चाहिए । उन घटों का अधिवास कराकर जिनके गले में सूत्र बाँधा गया हो ऐसे कलशों को मण्डल पर रखना चाहिए ।। ३ ।। चतुरस्र मण्डप बनाकर उसे ग्यारह भागों में विभक्त करना चाहिए । बीच में नव कलशों की स्थापना करके बगल के भागों को सादा करना चाहिए ।। ४ ।। पूर्व आदि नव कलशों में चावल आदि के चूर्ण से भर करके, कुम्भ मुद्रा बाँधकर वहाँ पर कलश लाना चाहिए ।। ५ ।। पुण्डरीकाक्ष मन्त्र के द्वारा वहाँ पर कुशों को रखकर उन पर जल से भरे कलश में सर्वरत्न डालकर कलश रखना चाहिए ।। ६ ।। आठों दिशाओं के कलशों में क्रमशः यव, धान, तिल, नीवार, साँवाँ, कुलथी, मूँग तथा सरसों को डाल देना चाहिए ।। ७ ।। पूर्व दिशा के नव कलशों में से बीच में घी भरे घड़े को रखना चाहिए । शेष आठ घड़ों में पलाश, पिप्पल, बट, बिल्व, गूलर तथा दूध वाले पेड़, नीम्बू, शमी तथा कैंथ के छाल के रस से बने हुए होना चाहिए । अग्निकोण के नव कलशों में मधु से पूर्णघट को स्थापित करना चाहिए ।। ८-९ ।। शेष आठ घड़ों में गौ के शृङ्ग की, पर्वत की, गङ्गा नदी की, हाथी शाला की, तीर्थ क्षेत्र की तथा खलिहान की मिट्टी डालनी चाहिए ।। १० ।। दक्षिण दिशा में नव घड़ों के बीच में तिल के तेल से भरे घड़े की स्थापना करनी चाहिए । शेष आठ घड़ों में क्रमशः नारङ्गी, जम्बीर, खर्जूर, मुन्नका, नारियल,पूगीफल, अनार तथा कटहल डालना चाहिए । नैर्ऋत्य कोण के नव घड़ों में बीच के घड़े में क्षीर (दुग्ध) भरना चाहिए ।। ११-१२ ।। शेष आठ घड़ों में कुंकुम, नागपुष्प (नागकेसर) चम्पक, मालती, मल्लिका, पुन्नाग, करवीर तथा महोत्पल के पुष्प को डालना चाहिए । पश्चिम दिशा के नव कुम्भों के बीच के कुम्भ में नारियल का जल रखना चाहिए तथा शेष आठ घड़ों में क्रमशः नदी, समुद्र, सरोवर, कुआँ, वर्षा हिम (वर्फ) निर्झर तथा गङ्गा का जल रखना चाहिए । उसके पश्चात् वायव्य कोण के नव कलशों में बीच के कलश में केले का जल रखना चाहिए ।। १३-१५ ।। शेष आठ कलशों में सहदेई, कुमारी, सिंही, अमृता (गुडूची) विष्णुपर्णी, शतशिवा तथा वचा इन दिव्य औषधियों को डालना चाहिए ।। १६ ।। उत्तर दिशा के नव घड़ों के बीच में दही का घड़ा स्थापित करना चाहिए तथा शेष आठ पूर्वादि दिशा के घड़ों में क्रमशः इलायची, वच, कूट, बालछड़,दोनों (लाल तथा उजला) चन्दन, लता, कस्तूरी तथा काला अगरु इन सिद्ध द्रव्यों को डालना चाहिए । ईशानकोण के नव कलशों में बीच के कलश में शान्तिजल रखना चाहिए । शेष आठ कलशों में क्रमशः चन्द्रतार, शुक्ल, गिरिसार (शिलाजीत) रङ्गा, घनसार, कसीस तथा रत्न डालना चाहिए ।। १६-१९ ।। इसके पश्चात् मूर्ति के शरीर में घी लगाकर तथा उबटन लगाकर मूलमन्त्र से स्नान कराना चाहिए । चन्दन आदि से पूजा करके अग्नि में होम करके पूर्णाहुति करना चाहिए ।। २० ।। दक्षिणा देकर समस्त भूतों के लिए बलि प्रदान करनी

घटानां सर्वभाग्भवेत् ॥ २२ ॥ यज्ञावभृथस्नाने च पूर्णसंस्नापनं कृतम् । गौरीलक्ष्मीविवाहादि चोत्सवं स्नानपूर्वकम् ॥ २३ ॥

इत्यादिमहापुराण आग्नेये स्नपनोत्सवविधिकथनं नाम नवषष्ठितमोऽध्यायः ॥ ६९ ॥

## अथ सप्ततितमोऽध्यायः

## पादपप्रतिष्ठाविधिः

श्रीभगवानुवाच– **प्रतिष्ठां पादपानां च वक्ष्येऽहं भुक्तिमुक्तिदाम् । सर्वौषध्योदकैर्लिप्तान्पिष्टातकविभूषितान् ॥ १ ॥ वृक्षान्माल्यैरलङ्कृत्य वासोभिरभिवेष्टयेत्। सूच्या सौवर्णया कार्यं सर्वेषां कर्णवेधनम् ॥ २ ॥ हेमशलाकयाऽञ्जनं वेद्यां तु फलसप्तकम् । अधिवासयेच्च प्रत्येकं घटान्बलिं निवेदयेत् ॥ ३ ॥ इन्द्रादेरधिवासेऽथ होमः कार्यो वनस्पतेः । वृक्षमध्यादुत्सृजेद् गां ततोऽभिषेकमन्त्रतः॥ ४॥ ऋग्यजुः साममन्त्रैश्च वारुणैर्मंत्तभैरवैः। वृक्षवेदिककुम्भैश्च स्नपनं द्विजपुंगवाः॥ ५॥ तरूणां यजमानस्य कुर्युश्च यजमानकः । भूषितो दक्षिणां दद्याद् गोगोभूषणवस्त्रकम् ॥ ६॥ क्षीरेण भोजनं दद्याद्यावद्दिनचतुष्टयम् । होमस्तिलाज्यैः कार्यस्तु पलाशसमिधैस्तथा ॥ ७॥ आचार्ये द्विगुणं दद्यात्पूर्ववन्मण्डपादिकम् । पापनाशः परा सिद्धिर्वृक्षारामप्रतिष्ठया ॥ ८॥ स्कन्दायेशो यथा प्राह प्रतिष्ठाद्यं तथा शृणु । सूर्येशगणशक्त्यादेः परिवारस्य वै हरेः ॥ ९ ॥**

इत्यादिमहापुराण आग्नेये पादपप्रतिष्ठाविधिकथनं नाम सप्ततिमोऽध्यायः ॥ ७० ॥

---

चाहिए और ब्राह्मणों को भोजन कराना चाहिए । बड़े-बड़े राजा देवताओं मुनियों तथा राजाओं के साथ श्री भगवान् को स्नान कराकर प्रशासक हो गए ।। २१।। इस पुराण में उक्त प्रकार से ही देवताओं की स्थापना करके स्नपन उत्सव करनी चाहिए । एक हजार आठ घड़ों से स्नपन क्रिया करके मनुष्य सभी फलों को प्राप्त कर लेता है ।। २२ ।। यज्ञ के अवभृथ स्नान काल में पूर्णरूप से स्नपनोत्सव करना चाहिए । लक्ष्मी तथा गौरी आदि का विवाह उत्सव आदि स्नपन पूर्वक ही करना चाहिए ।। २३ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का स्नपनोत्सव विधि वर्णन नामक उनहत्तरवाँ अध्याय सम्पूर्ण हुआ ॥ ६९ ॥**

**श्रीभगवान् ने कहा–** अब मैं भोग तथा मोक्ष प्रदान करने वाली वृक्षों की प्रतिष्ठा का वर्णन कर रहा हूँ । सर्वौषधि के जल से युक्त तथा सुगन्धित चूर्णों से समलंकृत वृक्षों को माला से अलंकृत करके, वस्त्रों से लपेटना चाहिए । सोने की सुई से उनका कर्णवेध करना चाहिए ।। १-२ ।। सोने की शलाका से अञ्जन लगाना चाहिए और वेदी पर सात फलों को रखकर उनका अधिवास करना चाहिए। प्रत्येक वृक्ष को घड़े से बलि प्रदान करना चाहिए ।। ३ ।। इन्द्र आदि देवताओं के अधिवास में वनस्पति का ऋग्वेद, यजुर्वेद तथा सामवेद के मन्त्रों से तथा वरुण के मन्त्रों से एवं मत्तभैरव के मन्त्रों से होम करना चाहिए ।। ४ ।। श्रेष्ठ ब्राह्मणों को वृक्षों के सन्निकट बनी हुई वेदियों के कुम्भों के द्वारा वृक्षों तथा यजमान को स्नपन कराना चाहिए । समलंकृत होकर यजमान ब्राह्मणों को दक्षिणा में गौ, भूमि, सुवर्ण तथा वस्त्र दान दे । चार दिन तक दुग्ध प्रधान भोजन कराए ।। ६ ।। होम तो तिल तथा घी से तथा पलाश की समिधा से करना चाहिए । आचार्य को दूसरे ब्राह्मणों की अपेक्षा दुगनी दक्षिणा देनी चाहिए । तथा पहले के ही समान उन्हें मण्डप आदि दान कर देना चाहिए ।। ७ ।। वृक्षों तथा बगीचों की प्रतिष्ठा कराने से पापों का नाश होता है, तथा परमसिद्धि मिलती है । भगवान् शंकर ने जिस प्रकार से सूर्य, ईश, गणेश, शक्ति तथा श्रीहरि के परिवार की प्रतिष्ठा आदि की विधि को बतलाया उसे आप सुनें ।। ८-९ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का पादप प्रतिष्ठा विधि का वर्णन नामक सत्तरवाँ अध्याय सम्पूर्ण हुआ ॥ ७० ॥**

## अथैकसप्ततितमोऽध्यायः

### गणपतिपूजाविधिः

ईश्वर उवाच– **गणपूजां प्रवक्ष्यामि निर्विघ्नायाखिलार्थदाम्। गणाय स्वाहा हृदयमेकदंष्ट्रय वै शिरः ॥ १ ॥ गजकर्णिने च शिखा गजवक्त्राय वर्म च । महोदराय सुदण्डहस्तायाक्षि तथाऽस्त्रकम् ॥ २ ॥ गणो गुरुः पार्श्वका च शक्त्यनन्तौ च धर्मकः। मुख्यास्थिमण्डलं चाधश्चोर्ध्व (र्ध्वं) छदनमर्चयेत् ॥ ३ ॥ पद्मकर्णिकबीजं च ज्वलिनीं नन्दयार्चयेत् । सूर्येशा कामरूपा च उदया कामवर्तिनी ॥ ४ ॥ सत्या च विघ्ननाशा च आसनं गन्ध मृत्तिका । यं शोषो, रं च दह्नो, प्लवो लं वं तथाऽमृतम् ॥ ५॥ लम्बोदराय विद्महे महोदराय धीमहि । तन्नो दन्तिः प्रचोदयात् ॥ ६ ॥ गणपतिर्गणाधिपो गणेशो गणनायकः । गणक्रीडो वक्रतुण्ड एकदंष्ट्रो महोदरः ॥ ७ ॥ गणवक्त्रो लम्बकुक्षिर्विकटो विघ्ननाशकः । धूम्रवर्णो महेन्द्राद्याः पूज्या गणपतेः स्मृताः ॥ ८ ॥**

**इत्यादिमहापुराण आग्नेये गणपतिपूजाविधिकथनं नामैकसप्रतितमोऽध्यायः ॥ ७१ ॥**

## अथद्विसप्ततितमोऽध्यायः

### स्नानविशेषादिविधिः

ईश्वर उवाच– **वक्ष्यामि स्कन्द नित्यादि स्नानं पूजां प्रतिष्ठया । खात्वाऽसिना समुद्धृत्य मृदमष्टाङ्गुलां ततः ॥१॥ सर्वात्मना समुद्धत्य पुनस्तेनैव**

---

**श्रीशंकरजी ने कहा**– सम्पूर्ण अर्थों को प्रदान करने वाली गणपति पूजा का वर्णन मैं निर्विघ्नता प्राप्ति के लिए कर रहा हूँ । 'गणाय स्वाहा, हृदयाय नमः इस मन्त्र से हृदय का स्पर्श, 'एकदंष्ट्राय स्वाहा' 'शिर से स्वाहा' इस मन्त्र से शिखा का स्पर्श, गजवक्त्राय स्वाहा, कवचाय हुम्, इस मन्त्र से दोनों भुजमूल का, महोदराय स्वाहा नेत्राभ्यां वौषट्, इस मन्त्र से दोनों नेत्रों का तथा 'सुदण्डहस्ताय स्वाहा अस्त्राय फट्' इस मन्त्र से अस्त्रन्यास करना चाहिए ।। १-२ ।। इस तरह षडङ्गन्यास करके गणपति, गुरु, पार्षद, शक्ति, अनन्त तथा धर्म की पूजा करनी चाहिए । पुनः गणेश जी के मुख्य अस्थि समूह तथा नीचे एवं ऊपर के ओठों की पूजा करनी चाहिए ।। ३ ।। कमल की कर्णिका के बीज की, ज्वलिनी देवी की तथा नन्दा देवी की पूजा करनी चाहिए । सूर्येश, कामरूपा, उदया, कामवर्तिनी, सत्या, विघ्ननाशा, आसन तथा गन्धमृत्तिका का पूजन करना चाहिए ।। ४।। 'यं' शोषण करने वाला वायु तत्त्व है, 'रं' अग्नितत्त्व जलाने वाला' है, 'लं' जलतत्त्व है तथा 'वं' अमृततत्त्व है ।। ५ ।। लम्बोदराय विद्महे महोदराय धीमहि, तन्नोदन्तिः प्रचोदयात् । यही गणेश गायत्री है । इसका अर्थ है कि- लम्बोदर को ही हम सर्वश्रेष्ठ तत्त्वरूप से जानते हैं, हम महोदर का ध्यान करते हैं । वे ही दन्ती श्रीगणेशजी हमारी बुद्धि को सन्मार्ग में प्रेरित करें ।। ६ ।। गणपति, गणाधिप, गणेश, गणनायक, गणक्रीड, वक्रतुण्ड, एकदंष्ट्र, महोदर, गजवक्त्र, लम्बकुक्षि तथा महेन्द्र आदि नामों से भी गणेश जी की पूजा करनी चाहिए ।। ७-८ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का गणपतिपूजा विधि वर्णन नामक एकहत्तरवाँ अध्याय सम्पूर्ण हुआ ॥ ७१ ॥**

**श्रीशंकरजी ने कहा-** हे स्कन्द ! अब मैं नित्य-नैमित्तिक तथा प्रायश्चित्त आदि स्नान की विधि तथा प्रतिष्ठा का वर्णन कर रहा हूँ । तलवार से खोदकर आठ अंगुल की मिट्टी का ढेला निकालना

पूजयेत् । शिरसा पयसस्तीरे निधायास्त्रेण शोधयेत् ॥ २॥ तृणादि शिखयोद्धृत्य वर्मणा विभजेत्त्रिधा । एकया नाभिपादान्तं प्रक्षाल्य पुनरन्यया॥३॥ अस्त्राभिलब्धया लक्ष्मीदीप्तया सर्वविग्रहम् । निरुध्याक्षाणि पाणिभ्यां प्राणान्संयम्य वारिणि ॥ ४ ॥ निमज्याऽऽसीत हृद्यस्त्रं स्मरन्कालानलप्रभम्। मलस्नानं विधायेत्थं समुत्थाय जलान्तरात् ॥ ५ ॥ अस्त्रसंध्यामुपास्याथ विधिस्नानं समाचरेत् । सारस्वतादितीर्थानामेकमङ्कुशमुद्रया ॥ ६ ॥ हृदाऽऽकृष्य तथाऽऽस्थाप्य पुनः संहारमुद्रया । शेषं मृद्भागमादाय प्रविश्याऽऽनाभि वारिणि ॥ ७ ॥ वामपाणितले कुर्याद्भागत्रयमुदङ्मुखः। अङ्गैर्दक्षिणमेकाद्यं पूर्वमस्त्रेण सप्तधा ॥ ८ ॥ शिवेन दशधा सौम्यं यजेद्भागत्रयं क्रमात् । सर्वदिक्षु क्षिपेत्पूर्वं हुंफडन्तशरात्मना ॥ ९ ॥ कुर्याच्छिवेन सौम्येन शिवतीर्थं भुजक्रमात्। सर्वाङ्गमङ्गजप्तेन मूर्धादि चरणावधि॥१०॥ दक्षिणेन समालभ्य पठन्नङ्गचतुष्टयम् । पिधाय खानि सर्वाणि सम्मुखीकरणेन च ॥ ११ ॥ शिवं स्मरन्निमज्जेत हरिं गङ्गेति वा स्मरन् । वौषडन्तषडङ्गेन के कुर्यादभिषेचनम् ॥ १२ ॥ कुम्भपात्रेण रक्षार्थं पूर्वादौ विक्षिपेज्जलम्। स्नात्वा राजोपचारेण सुगन्धामलकादिभिः ॥ १३ ॥ स्नात्वा चोत्तीर्य तत्तीर्थं संहारिण्योपसंहरेत् । अथातो विधिशुद्धेन संहितामन्त्रितेन च ॥ १४॥ निवृत्त्यादिविशुद्धेन भस्मना स्नानमाचरेत् । शिरतः पादपर्यन्तं हुंफडन्त शरात्मना ॥ १५ ॥ तेन कृत्वा मलस्नानं विधिस्नानं समाचरेत् । ते तत् पुरुषान् घोरगुह्यकाजातसंचरैः॥ १६ ॥ क्रमेणोद्धूनयेन्मूर्ध्नि वक्त्र हृद्गुह्यविग्रहान् । संध्यात्रये निशीथे च वर्षापूर्वावसानयोः ॥ १७ ॥ सुप्त्वा भुक्त्वा पयः पीत्वा कृत्वा चाऽऽवश्यकादिकम्। स्त्रियं नपुंसकं शूद्रं बिडालशवमूषिकम्॥१८॥ स्नानमाग्नेयकं स्पृष्ट्वा शुच्यम्बुचुलकं चरेत्। सूर्यांशुवर्षसंपर्के

---

चाहिए ।। १ ।। उसे अच्छी तरह से निकालकर वहाँ की मिट्टी से गड्ढा को भर देना चाहिए । शिर पर रखकर उसे जलाशय के तट पर लाकर अस्त्र मन्त्र (अस्त्राय फट्) से शोधित करना चाहिए।।२।। शिखा मन्त्र शिखायै वौषट् से तृणों को निकालकर कवच मन्त्र (कवचाय हुम्) से उस मिट्टी को तीन भाग में विभक्त करना चाहिए । उसके एक भाग को अपनी नाभि से लेकर पैर तक लगाए फिर उसे धोकर अस्त्र मन्त्र से अभिमन्त्रित करके तथा देदीप्यमान दूसरे भाग की मृत्तिका को अपने सम्पूर्ण शरीर में लगाना चाहिए । दोनों इन्द्रियों के द्वार को रोककर, श्वास को रोककर जल के भीतर डुबकी लगाकर बैठ जाय, और हृदय में कालाग्नि के समान कान्ति वाले अस्त्र का ध्यान करना चाहिए । इस तरह से मलस्नान करके जल के भीतर से निकलना चाहिए ।। ३-५ ।। अस्त्र सन्ध्या करके विधि स्नान करना चाहिए । सर्वप्रथम अंकुश मुद्रा से सारस्वत आदि तीर्थों में से एक को हृदय में आकृष्ट करके उसे हृदय में ही स्थापित करना चाहिए । पुनः संहार मुद्रा के द्वारा बची हुए मिट्टी के भाग को लेकर नाभिपर्यन्त गहरे पानी में प्रवेश करना चाहिए ।। ६-७ ।। उत्तराभिमुख खड़ा होकर उस मिट्टी को बाएँ हाथ पर रखकर उसके तीन भाग करना चाहिए । उसके एक भाग को अस्त्रमन्त्र से सात भागों में विभक्त करके दाहिने भाग के अंगों में लगाना चाहिए ।। ८ ।। दूसरे भाग को शिव मन्त्र (ओं नमः शिवाय) को पढ़कर दश भागों में विभक्त करके उत्तरादि दश दिशाओं में 'हुं फट्' इस मन्त्र से छिड़क देना चाहिए ।। ९ ।। फिर बचे हुए अंश को मङ्गलमय शिव मन्त्र को जपते हुए भुजा से क्रमशः सिर से पैर तक सर्वाङ्ग में लगाना चाहिए ।। १० ।। फिर शिवमन्त्र पढ़ते हुए चार अंगों का स्पर्श करके सम्पूर्ण इन्द्रियों को ढंककर सम्मुखीकरण करना चाहिए ।। ११ ।। फिर शिव का अथवा हरि एवं गङ्गा का स्मरण करते हुए स्नान करना चाहिए। वौषट् पर्यन्त षडङ्ग के द्वारा जल में ही अभिषेक करना चाहिए ।। १२ ।। रक्षा के लिए घड़े से पूर्वादि दिशाओं में जल गिराना चाहिए । फिर सुगन्धित द्रव्य तथा आँवला आदि राजोपचार से स्नान करके जल से बाहर निकलकर संहारिणी मुद्रा से उस तीर्थ का उपसंहार करना चाहिए ।। १३।। उसके पश्चात् विधिपूर्वक शुद्ध किए गए संहिता मन्त्र के द्वारा अभिमन्त्रित तथा निवृत्ति आदि से शुद्ध बने हुए भस्म को हुं फट् इस मन्त्र से शिर से लेकर पैर पर्यन्त भस्म लपेटकर स्नान करना चाहिए ।। १४-१५ ।। भस्म स्नान के द्वारा मलस्नान करके विधि स्नान करना चाहिए । तीनों सन्ध्याओं, अर्धरात्रि, वर्षा से पूर्व तथा वर्षा के अन्त में उन घोर गुह्यक तथा अजातसञ्चर मन्त्रों से क्रमशः जो मुख, हृदय तथा गुह्य शरीर वाले नीच जीव हैं, उनको शिर से हटाना चाहिए ।।१६-१७ ।। सोकर, खाकर,

प्राङ्मुखेनोर्ध्वबाहुना ॥ १९ ॥ माहेन्द्रं स्नानमैशेन कार्यं सप्तपदावधि । गोसंघमध्यगः कुर्यात्खुरोत्खातकरेणुभिः ॥ २० ॥ पावनं नवमन्त्रेण स्नानं तद्धर्मणाऽथवा । सद्योजातादिभिर्मन्त्रैरम्भोभिरभिषेचनम् ॥ २१ ॥ मन्त्रस्नानं भवेदेवं वारुणाग्नेययोरपि। मनसा मूलमन्त्रेण प्राणायामपुरःसरम्॥२२॥ कुर्वीत मानसं स्नानं सर्वत्र विहितं च यत् । वैष्णवादौ च तन्मन्त्रैरेवं स्नानानि कारयेत् ॥ २३ ॥ सन्ध्याविधिं प्रवक्ष्यामि मन्त्रैर्भिन्नैः समं गुह । संवीक्ष्य त्रिः पिबेदम्बु ब्रह्मतीर्थेन शंकरैः ॥ २४ ॥ स्वधान्तैरात्मतत्त्वाद्यैस्ततः खानि स्पृशेन्मृदा । सकलीकरणं कृत्वा प्राणायामेन संस्थितः ॥ २५॥ त्रिः समावर्तयेन्मन्त्री मनसा शिवसंहितम् । आचम्य न्यस्य संध्यां च ब्राह्मीं प्रातः स्मरेन्नरः ॥ २६ ॥ हंसपद्मासनां रक्तां चतुर्वक्त्रां चतुर्भुजाम् । अङ्गाक्षमालिनीं दक्षे वामे दण्डकमण्डलुम् ॥ २७ ॥ तार्क्ष्यपद्मासनां ध्यायेन्मध्याह्ने वैष्णवीं सिताम् । शङ्खचक्रधरां वामे दक्षिणे सगदाभयाम् ॥२८॥ रौद्रीं ध्यायेद्वृषाब्जस्थां त्रिनेत्रां शशिभूषिताम् । त्रिशूलाक्षधरां दक्षे वामे साभयशक्तिकाम् ॥ २९ ॥ साक्षिण्यः कर्मणां सन्ध्या आत्मानं तत्प्रभानुगम्। चतुर्थी ज्ञानिनः सन्ध्या निशीथादौ विभाव्यते ॥ ३० ॥ हृद्विन्दुब्रह्मरन्ध्रेषु अरूपा तु परे स्थिता । शिवे चैव परो यस्तु ना सन्ध्या परमोच्यते ॥ ३१॥ पैत्रं मूले प्रदेशिन्याः कनिष्ठायाः प्रजापतेः। ब्राह्ममङ्गुष्ठमूलस्थं तीर्थं दैवं कराग्रतः ॥ ३२ ॥ सव्यपाणितले वह्नेस्तीर्थं सोमस्य वामतः । ऋषीणां तु समग्रेषु अङ्गुलीपर्वसन्धिषु ॥३३ ॥ ततः शिवात्मकैर्मन्त्रैः कृत्वा तीर्थं शिवात्मकम् । मार्जनं संहितामन्त्रैस्तत्तोयेन समाचरेत् ॥ ३४ ॥ वामपाणिपतत्तोययोजनं

---

दुग्ध पीकर, आवश्यक क्रियाओं (मल मूत्र त्याग आदि) करके, स्त्री, नपुंसक, शूद्र, विडाल, शव तथा चूहे का स्पर्श करके पवित्र जल का आचमन करके अग्नि स्नान करना चाहिए। सूर्य की किरणों तथा वर्षा का सम्पर्क हो जाने पर पूर्वाभिमुख होकर ऊपर की ओर हाथ उठाकर ईशानमन्त्र से महेन्द्र स्नान करना चाहिए ।सात डग (पग) जो समुदाय के साथ चलकर गायों के खूर से उठी धूल उससे नव मन्त्रों से पावन स्नान करना चाहिए, अथवा कवच मन्त्र से पावन स्नान करना चाहिए । सद्योजात० इत्यादि नव मन्त्र पावन स्नान के हैं और जल से अभिषेक करना चाहिए ।।१९-२१ ।। इसी तरह से वारुण तथा आग्नेय भी मन्त्र स्नान होता है । इस स्नान को प्राणायाम करके मूलमन्त्र के द्वारा करना चाहिए ।। २२ ।। यह मानस स्नान सर्वत्र सभी कार्यों में विहित है । वैष्णव आदि कार्यों में वैष्णव मन्त्रों से ही स्नान करना चाहिए ।। २३ ।। हे गुह ! अब मैं विभिन्न मन्त्रों से की जाने वाली सन्ध्या की विधि बतला रहा हूँ । सूर्य की ओर देखकर ब्रह्मतीर्थ से शंकर मन्त्रों को पढ़कर तीन बार जल पीना चाहिए ।। २४ ।। उसके पश्चात् आत्मतत्त्व से लेकर स्वधापर्यन्त के मन्त्रों से इन्द्रियों का मिट्टी से स्पर्श करना चाहिए । पुनः सकलीकरण करके प्राणायाम करना चाहिए।।२५।। पुनः मन्त्रज्ञ को शिवसंहिता की तीन आवृत्ति करना चाहिए । आचमन तथा न्यास करके प्रातःकाल में ब्राह्मी सन्ध्या का स्मरण करना चाहिए ।। २६ ।। हंस पर सवार, लाल कमल पर बैठी हुई तथा रक्तवर्ण वाली चार मुखों तथा चार भुजाओं वाली, दाहिने हाथ में अक्षमाला लिए हुए तथा बाएँ हाथ में दण्ड एवं कमण्डलु धारण किए हुए ब्राह्मी संध्या का ध्यान करना चाहिए ।।२७।। मध्याह्नकाल में गरुड़ के ऊपर कमलासन पर बैठी हुई, श्वेतवर्ण की,बाएँ हाथ में शंख तथा चक्र धारण करने वाली तथा दाहिने हाथ में गदा तथा अभयमुद्रा धारण करने वाली वैष्णवी सन्ध्या का ध्यान करना चाहिए ।। २८ ।। सायंकाल में वृष पर सवार तथा कमल पर बैठी हुयी, तीन नेत्रों वाली, चन्द्रमा से अलंकृत, दाहिने हाथ में त्रिशूल तथा अक्षमाला धारण करने वाली तथा बाएँ हाथ में अभयमुद्रा तथा शक्ति धारण करने वाली रौद्री सन्ध्या का ध्यान करना चाहिए ।। २९ ।। ये सन्ध्याएँ कर्मों की साक्षिणी हैं, अपने को उनकी प्रभा का अनुसरण करने वाला समझना चाहिए । ज्ञानियों की इनसे भिन्न चौथी संन्ध्या है, जो आधी रात्रि आदि में की जाती है ।। ३० ।। यह संध्या रूप रहित हृदय विन्दु तथा ब्रह्मरन्ध्र में, परं शिव स्थान में स्थित है । ऐसा ध्यान करके की जाती है । इससे बढ़कर कोई भी सन्ध्या नहीं है ।। ३१ ।। तर्जनी अंगुलि के मूल में पितृ तीर्थ होता है । कनिष्ठा अंगुलि के मूल में प्रजापति तीर्थ होता है । अंगुष्ठ के मूल में ब्राह्मतीर्थ होता है, अंगुलियों के अग्रभाग में दैवतीर्थ होता है ।। ३२ ।। दाहिने हाथ की हथेली में बह्नितीर्थ होता है और बाएँ हाथ की हथेली में सोमतीर्थ होता है । सभी अंगुलियों के पर्व की सन्धियों में ऋषि तीर्थ होता है ।। ३३ ।। उसके पश्चात् शिवात्मक मन्त्रों के द्वारा शिव तीर्थ बनाकर उसी के जल से शिवसंहिता के मन्त्रों को पढ़कर मार्जन करना चाहिए ।। ३४ ।। बाएँ हाथ से गिरते हुए जल को दाहिने हाथ से मन्त्रों से रोककर

सव्यपाणिना । उत्तमाङ्गे क्रमान्मन्त्रैर्मार्जनं समुदाहृतम् ॥ ३५ ॥ नीत्वा तदुपनासाग्रं दक्षपाणिपुटस्थितम्। बोधरूपं शिवं तोयं वाममाकृष्य स्तम्भयेत्॥३६॥ तत्पापं कज्जलाभासं पिङ्गयाऽऽरिच्य मुष्टिना । क्षिपेद्वज्रशिलायां यत्तद्भवेदघमर्षणम् ॥३७॥ स्वाहान्तशिवमन्त्रेण कुशपुष्पाक्षतान्वितम्। शिवायार्घ्याञ्जलिं दत्त्वा गायत्रीं शक्तितो जपेत् ॥ ३८ ॥ तर्पणं संप्रवक्ष्यामि देवतीर्थेन मन्त्रकात् । तर्पयेद् वै शिवायेति स्वाहाऽन्यान्स्वाहया सुरान्॥३९॥ ह्रां हृदयाय ह्रीं शिरसे ह्रूं शिखायै ह्रैं कवचाय । अस्त्रायाष्टौ देवगणान्हृदाऽऽदित्येभ्य एव च ॥ ४० ॥ हां (तु) वसुभ्यो रुद्रेभ्यो विश्वेभ्यश्चैव मरुद्भ्यः । भृगुभ्यो हामङ्गिरोभ्य ऋषीन्कण्ठोपवीत्यथ ॥ ४१ ॥ अत्रयेऽथ वसिष्ठाय नमश्चाथ पुलस्तये । क्रतवे भारद्वाजाय विश्वामित्राय वै नमः ॥ ४२ ॥ प्रचेतसे मनुष्यांश्च सनकाय वषट् तथा । हां सनन्दायाथ वषट् सनातनाय वै वषट्॥ ४३ ॥ सनत्कुमाराय वषट् कपिलाय तथा वषट् । पञ्चशिखाय द्युभवे संलग्नकरमूलतः ॥ ४४ ॥ सर्वेभ्यो भूतेभ्यो वषड् भूतान्देवपितृनथ । दक्षस्कन्धोपवीती च कुशमूलाग्रतस्तिलैः ॥ ४५॥ कव्यवाहानलायाथ सोमाय च यमाय च । अर्यम्णे चाग्निसोमाय बर्हिषद्भ्यः स्वधायुतान् ॥ ४६ ॥ आज्यपाय च सोमाय विशेषसुरवत्पितृन् । ॐ हामोशनाय पित्रे स्वधा दद्यात्पितामहे ॥ ४७ ॥ शान्तप्रपितामहाय तथा प्रेतपितृंस्तथा । पितृभ्यः पितामहेभ्यः स्वधाऽथ प्रपितामहे ॥ ४८ ॥ वृद्धप्रपितामहेभ्यो मातृभ्यश्च स्वधा तथा । ह्रां मातामहेभ्यः स्वधा ह्रां प्रमातामहेभ्यश्च ॥ ४९ ॥ वृद्धमातामहेभ्यः

सिर पर छिड़कने को मार्जन कहा जाता है ।। ३५ ।। दाहिने हाथ की हथेली में जल लेकर नासिका के अग्रभाग के सन्निकट ले जाकर ज्ञानस्वरूप शिवजल को बाएँ नाक से खींचकर स्तम्भन (श्वांस रोकने की क्रिया) करना चाहिए । पुनः पिङ्गलनाड़ी से काले वर्ण के पाप को खींचकर मुट्ठी में पकड़कर जो वज्र शिला पर पटका जाता है, उसे ही अघमर्षण कहते हैं ।। ३६-३७ ।। ओम् नमः शिवाय स्वाहा इस मन्त्र से, कुश, पुष्प तथा अक्षत से युक्त शिव के लिए अर्घ्य की अंजलि देकर अपनी शक्ति के अनुसार गायत्री का जप करना चाहिए ।। ३८ ।। अब मन्त्रों द्वारा देवतीर्थ से किए जाने वाले तर्पण का मैं वर्णन करता हूँ । 'ओं शिवाय नमः स्वाहा' इस मन्त्र से दो अंजलि जल शिव को देना चाहिए । दूसरे देवताओं को भी इसी तरह स्वाहा लगाकर तर्पण करना चाहिए ।। ३९।। ओं ह्रां हृदयाय नमः ओं ह्रीं शिरसे स्वाहा, ओं ह्रूं शिखायै वौषट्, इस तरह से अङ्गन्यास करके आदित्यादि आठ देवताओं के लिए निम्नांकित मन्त्रों से जल तर्पण करना चाहिए– ओं ह्रां हृदयाय नमः, ओं ह्रॉं आदित्येभ्यो नमः, ओं ह्रॉं वसुभ्यो नमः, ओं ह्रां रुद्रेभ्यो नमः, ओं ह्रां विश्वेभ्यो देवेभ्यो नमः, ओं ह्रां मरुद्भयो नमः, ओं ह्रां भृगुभ्यो नमः, ओं ह्रां अङ्गिरोभ्यो नमः इसके पश्चात् यज्ञोपवीत को कण्ठ में माला के तरह करके ऋषियों का तर्पण करना चाहिए ।। ४०-४१ ।। ओं ह्रां अत्रये नमः, ओं ह्रॉं वसिष्ठाय नमः, ओं ह्रॉं पुलस्ताय नमः, ओं ह्रां क्रतवे नमः, ओं ह्रां भारद्वाजाय नमः, ओं ह्रां विश्वामित्राय नमः, ओं ह्रां प्रचेतसे नमः इस तरह से सप्तर्षियों को एक अंजलि तर्पण करना चाहिए । इसके पश्चात् हाथ के जुड़े हुए कर के मूलभाग से सनकादि मनुष्यों को- ओं ह्रां सनकाय वषट्, ओं ह्रां सनन्दाय बषट्, ओं ह्रां सनातनाय वषट्, ओं ह्रां सनत्कुमाराय वषट्, ओं ह्रां कपिलाय वषट्, इन मन्त्रों से दो-दो अञ्जलि जल देना चाहिए ।। ४२-४४।। 'ओं ह्रां सर्वेभ्यो भूतेभ्यो वषट्' इस मन्त्र से वषट् स्वरूप सभी भूतों को तर्पण करना चाहिए । इसके पश्चात् अपसव्य होकर कुश के मूल को आगे करके पितृतीर्थ से तिल और जल से तीन-तीन अञ्जलि इन मन्त्रों से जल देना चाहिए ।। ४५ ।। ओं ह्रां कव्यबाहनाय स्वधा, ओं ह्रां अनलाय स्वधा, ओं ह्रां सोमाय स्वधा, ओं ह्रां यमाय स्वधा, ओं ह्रां अर्यम्णे स्वधा, ओं ह्रां अग्निसोमाय स्वधा, ओं ह्रां वर्हिषद्भ्यः स्वधा ।। ४६ ।। ओं ह्रां आज्यपाय स्वधा, ओं ह्रं सोमपाभ्यः स्वधा । इन मन्त्रों के द्वारा देवताओं के ही समान दिव्य पितरों का तर्पण करना चाहिए । ओं ह्रां ईशानाय स्वधा, ह्रां पित्रे स्वधा इस मन्त्र से पिता का ओं ह्रां पितामहाय स्वधा, इस मन्त्र से पितामह का तथा ओं शान्तप्रपितामहाय स्वधा, इस मन्त्र से प्रपितामह का तर्पण करके इस तरह से अपने समस्त मृत पितरों का,पितामहों का तथा प्रपितामहों का तर्पण करना चाहिए ।। ४७ ।। पुनः बृद्ध प्रपितामहों का तथा माताओं का स्वधा युक्त वाक्य से तर्पण करना चाहिए । ओं ह्रां मातामहेभ्यः स्वधा, ओं ह्रां प्रमातामहेभ्यः स्वधा ।।४९।। ओं ह्रां वृद्धप्रमातामहेभ्यः स्वधा इन मन्त्रों से मातामह, प्रमातामह तथा वृद्धप्रमातामह का तर्पण करना चाहिए । ओं ह्रां सर्वेभ्यः पितृभ्यः स्वधा, ओं ह्रां सर्वेभ्यः मातृभ्यः स्वधा, ओं ह्रां सर्वेभ्य आचार्येभ्यः

सर्वेभ्यः पितृभ्यस्तथा । सर्वेभ्यः स्वधा ज्ञातिभ्यः सर्वाचार्येभ्य एव च ॥ ५० ॥ दिशां दिक्पतिसिद्धानां मातृणां ग्रहरक्षसाम् ॥ ५१ ॥

इत्यादिमहापुराण आग्नेये स्नानादिविधिकथनं नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

## अथ त्रिसप्ततिमोऽध्यायः

### सूर्यपूजाकथनम्

ईश्वरे उवाच– **वक्ष्ये सूर्यार्चनं स्कन्द कराङ्गन्यासपूर्वकम् । अहं तेजोमयः सूर्य इति ध्यात्वाऽर्घ्यमर्चयेत् ॥ १ ॥ पूरयेद्रक्तवर्णेन ललाटाकृष्टबिन्दुना। तं सम्पूज्य रवेरङ्गैः कृत्वा रक्षावगुण्ठनम् ॥ २ ॥ संप्रोक्ष्य तज्जलैर्द्रव्यं पूर्वास्यो भानुमर्चयेत् । ॐ अं हृद्बीजादि सर्वत्र पूजनं दण्डिपिङ्गलौ ॥ ३॥ द्वारिदक्षे वामपार्श्वे ईशाने अं गणाय च । अग्नौ गुरुं पीठमध्ये प्रभूतं चाऽऽसनं यजेत् ॥ ४ ॥ अग्न्यादौ विमलं सारमाराध्यं परमं सुखम् । सितरक्तपीतनीलवर्णान्सिंहनिभान्यजेत् ॥ ५॥ पद्ममध्ये रां च दीप्तां रीं सूक्ष्मां रुं जयां क्रमात् । रूं भद्रां रें विभूतीश्च विमलां रैममोघया ॥ ६ ॥ रों रौं ( च ) विद्युता शक्तिं पूर्वाद्याः सर्वतोमुखाः । रं मध्ये अर्कासनं स्यात्सूर्यमूर्तिं षडक्षरम् ॥ ७ ॥ ॐ हं खं खोलकायेति यजेदावाह्य भास्करम्। ललाटाकृष्टमञ्जल्यां ध्यात्वा रक्तं न्यसेद्रविम् ॥ ८ ॥ ह्रां ह्रीं सः सूर्याय नमो मुद्रयाऽऽवाहनादिकम् । विधाय प्रीतये बिम्बमुद्रां गन्धादिकं ददेत् ॥९॥ पद्ममुद्रां बिम्बमुद्रां प्रदर्श्याग्नौ हृदीरितम् । ॐ आं हृदयाय नमः अर्काय शिरसे तथा ॥ १० ॥ भूर्भुवः स्वः सुरेशाय शिखायै नैर्ऋते यजेत् । हुं**

स्वधा ।। ५० ।। फिर ओं ह्रां सर्वाभ्यो दिग्भ्यः स्वधा, ओं ह्रां सर्वेभ्यो दिक्पतिभ्यः स्वधा, ओं ह्रां सिद्धेभ्यः स्वधा,ओं ह्रां मातृभ्यः स्वधा, ओं ह्रां सर्वेभ्यो ग्रहेभ्यः स्वधा, ओं ह्रां रक्षोभ्यः स्वधा। इन मन्त्रों से तर्पण करना चाहिए ।। ५१ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का स्नानादि विधि वर्णन नामक बहत्तरवाँ अध्याय सम्पूर्ण हुआ ॥ ७२ ॥**

**श्रीशंकरजी ने कहा–** हे स्कन्द ! अब मैं करन्यास तथा अङ्गन्यासपूर्वक सूर्य की पूजा का वर्णन कर रहा हूँ । मैं तेजोमय सूर्य हूँ' इस तरह से भावना करके अर्घ्य पूजन करना चाहिए । ललाट से आकृष्ट विन्दु के लालवर्ण से उसे रक्तवर्ण का बना दें ।। १ ।। उसकी पूजा करके रवि के अंगों से उसकी रक्षा का घेरा बना देनी चाहिए ।। २ ।। उसी के जल से पूजन के द्रव्य का प्रोक्षण करके, ओं अं हृदयाय नमः । इस तरह 'ओं अं' इस हृदय बीज के द्वारा सर्वत्र पूजन करना चाहिए । द्वार के दाहिने और बाएँ क्रमशः दण्डी तथा पिङ्गल की पूजा करनी चाहिए ।। ३ ।। ईशानकोण में 'ओं अं गणाय नमः' इस मन्त्र से गणपति की पूजा करनी चाहिए । अग्निकोण में गुरु की पूजा करें पीठ के बीच में बहुत से देवताओं के आसन की पूजा करे ।। ४ ।। अग्नि आदि में विमल, सार तथा परमसुख की आराधना करनी चाहिए । उजले, लाल, पीले तथा नीलवर्ण के एवं सिंह के समान आकार वाले देवताओं की पूजा करनी चाहिए ।। ५ ।। पद्म के बीच में (पूर्वादि दिशाओं में क्रमशः) रां दीप्तायै नमः, रीं सूक्ष्मायै नमः, रुं जयायै नमः, रूं भद्रायै नमः, रें विभूत्यै नमः, रैं विमलायै नमः, रों अमोघायै नमः, रौं विद्युतायै नमः, इस तरह से शक्तियों की पूजा करनी चाहिए। ये शक्तियाँ सर्वत्र व्याप्त हैं । सबों के बीच में 'रं अर्कासनाय नमः' इस तरह से अर्कासन की पूजा करनी चाहिए । षडक्षर स्वरूप सूर्य मूर्ति होनी चाहिए ।। ६-७ ।। ओं हं खं खोलकाय नमः इस मन्त्र से सूर्य का आवाहन करके उनका पूजन करना चाहिए । ध्यानपूर्वक ललाट से लगी हुई अंजलि में रक्तवर्ण के सूर्य की स्थापना करनी चाहिए।।८।। 'ओं ह्रां ह्रीं सःसूर्याय नमः' इस मन्त्र से मुद्रापूर्वक सूर्य का आवाहन करना चाहिए।।९।। पद्ममुद्रा तथा विम्बमुद्रा दिखाकर अग्नि आदि दिशाओं में हृदयादिन्यास करना चाहिए । अग्निकोण में ओं आं हृदयाय नमः । दक्षिण दिशा

कवचाय वायव्ये हां नेत्रायेति मध्यतः॥ ११ ॥ वः अस्त्रायेति पूर्वादौ ततो मुद्राः प्रदर्शयेत् । धेनुमुद्रा हृदादीनां गोविषाणा च नेत्रयोः ॥ १२ ॥ अस्त्रस्य त्रासनी योज्या ग्रहाणां च नमस्क्रिया । सों सोमं बुं बुधं बृं च जीवं भं भार्गवं यजेत् ॥ १३ ॥ दले पूर्वादिकेऽग्न्यादौ भौमं शं शनैश्चरम्। रं राहुं कें केतवे च गन्धाद्यैश्च ख खोल्कया ॥ १४ ॥ मूलं जप्त्वाऽर्घ्यपात्राम्बुं दत्त्वा सूर्याय संस्तुतिः । नत्वा पराङ्मुखं चार्कं क्षमस्वेति ततो वदेत्॥१५॥ शराणुना फडन्तेन समाहृत्याणु संहृतिम् । हृत्पद्मे शिव सूर्येति संहारिण्योपसंस्कृतिम् ॥ १६ ॥ योजयेत्तेजश्चण्डाय रविनिर्माल्यमर्पयेत्। अभ्यर्च्येशजपाद्ध्यानाद्धोमात्सर्वं रवेर्भवेत् ॥ १७ ॥

इत्यादिमहापुराण आग्नेये सूर्यपूजाविधि-कथनं नाम त्रिसप्ततिमोऽध्यायः ॥ ७३ ॥

## अथ चतुःसप्ततिमोऽध्यायः

## शिवपूजाविधिकथनम्

ईश्वर उवाच– **शिवपूजां प्रवक्ष्यामि आचम्य प्रणवार्घ्यवान् । द्वारमस्त्राम्बुना प्रोक्ष्य होमादिद्वारपान्यजेत् ॥ १ ॥ गणं सरस्वतीं लक्ष्मीमूर्ध्वोदुम्बरके यजेत् । नन्दिगङ्गे दक्षशाखस्थिते वामगते यजेत् ॥ २ ॥ महाकालं च यमुनां दिव्यदृष्टिनिपातितः । उत्सार्य दिव्यान्विघ्नांश्च पुष्पक्षेपान्तरिक्षगान्॥३॥ दक्षपार्ष्णित्रिभिर्घातैर्भूमिष्ठान्यागमन्दिरम् । देहलीं लङ्घयेद्वामशाखामाश्रित्य वै विशेत् ॥ ४ ॥ प्रविश्य दक्षपादेन विन्यस्यास्त्रमुदुम्बरे । ॐ हां**

में ओं अर्काय शिरसे स्वाहा।।१०।। नैऋत्यकोण में ओं भूर्भुवः स्वः शिखायै वषट्' वायव्य कोण में ओं हुं कवचाय हुम्, बीच में 'ओं हां नेत्राभ्यां वषट्' तथा पूर्वादि दिशाओं में 'ओं वः अस्त्राय फट्' इस तरह से हृदयादि न्यास करने के बाद मुद्राओं को दिखाना चाहिए । हृदय आदि में धेनुमुद्रा तथा नेत्रों में गोविषाण मुद्रा दिखानी चाहिए।।१२।। अस्त्र में त्रासनी मुद्रा करनी चाहिए, ग्रहों के लिए नमस्कार मुद्रा करनी चाहिए । सों सोमाय नमः, बुंबुधाय नमः,वृं वृहस्पतये नमः, तया भं भार्गवाय नमः, इन मन्त्रों से पूर्वादि दिशाओं में चन्दन आदि से सोम, बुध, वृहस्पति तथा शुक्र की पूजा करनी चाहिए। अग्निकोण में ओं भं भौमायः नमः, ओं शं शनैश्चराय नमः, ओं रं राहवे नमः तथा कें केतवे नमः इन मन्त्रों से भौम,शनि, राहु तथा केतु की पूजा करनी चाहिए। तथा खोल्काय नमः मन्त्र के द्वारा सूर्य की पूजा करनी चाहिए ।। १४ ।। मूल मन्त्र का जप करके अर्घ्य पात्र के जल को सूर्य को प्रदान करके,उनकी स्तुति करे फिर पीछे की ओर होकर सूर्य को नमस्कार करके, आप क्षमा करें यह उच्चारण करना चाहिए ।। १५ ।। 'अस्त्राय फट्' इस मन्त्र से अणुसंहति को एकत्रित करके, हृदय कमल में संहारिणी मुद्रा से शिव तथा सूर्य का उपसंहार करना चाहिए।।१६।। चण्ड को तेज से संयुक्त करके उन्हें सूर्य का निर्माल्य अर्पित करे ।। इस तरह से सूर्य की पूजा करके ईश के जप, ध्यान तथा होम करने से मनुष्य सूर्य से सब कुछ प्राप्त कर लेता है ।। १७ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का सूर्यपूजा विधि वर्णन नामक तिहत्तरवाँ अध्याय सम्पूर्ण हुआ ॥ ७३ ॥**

**श्रीशंकरजी ने कहा–** अब मैं शिवपूजा का वर्णन कर रहा हूँ । आचमन करके प्रणव के द्वारा अर्घ्य देना चाहिए । फिर शिवजी के द्वार को अस्त्र जल से प्रोक्षण करके, होम आदि के द्वारा शिवजी के द्वारपालों का पूजन करे ।। १ ।। उदुम्बर (गूलर) शाखा के ऊपर गणेश, सरस्वती तथा लक्ष्मी का पूजन करना चाहिए । दाहिनी ओर शाखा पर स्थित नन्दी तथा गंगा की और बायीं ओर शाखा पर स्थित महाकाल तथा यमुना की पूजा करनी चाहिए । दिव्य दृष्टि डालकर ऊपर की ओर पुष्प फेंककर दिव्य विघ्नों को दूर करने की भावना करनी चाहिए ।। २-३ ।। दाहिने पैर की एंड़ी से तीन बार पृथिवी पर प्रहार करके याग मन्दिर की भूमि में स्थित विघ्नों को दूर करने की भावना करना चाहिए । वाम शाखा को पकड़कर चौखट पार करके यागमण्डप में प्रवेश करना

वास्त्वधिपतये ब्रह्मणे मध्यतो यजेत् ॥ ५ ॥ निरीक्षणादिभिः शस्त्रैः शुद्धानादाय गड्डुकान् । लब्धानुज्ञः शिवान्मौनी गङ्गादिकमनुव्रजेत् ॥ ६ ॥ पवित्राङ्गः प्रजप्तेन वस्त्रपूतेन वारिणा । पूरयेदम्बुधौ तांस्तान् गायत्र्या हृदयेन वा ॥ ७ ॥ गन्धकाक्षतपुष्पादि सर्वद्रव्यसमुच्चयम् । सन्निधीकृत्य पूजार्थं भूतशुद्ध्यादि कारयेत् ॥ ८ ॥ देवदक्षे ततो न्यस्य सौम्यास्यश्च शरीरतः। संहारमुद्रयाऽऽदाय मूर्ध्नि मन्त्रेण धारयेत् ॥ ९ ॥ भोग्यकर्मोपभोगार्थं पाणिकच्छपिकाख्यया । हृदम्बुजे निजात्मानं द्वादशान्तपदेऽथ वा ॥ १० ॥ शोधयेत्पञ्चभूतानि संचिन्त्य सुषिरं तनौ । चरणाङ्गुष्ठयोर्युग्मान्सुषिरान्तर्बहिः स्मरेत् ॥ ११ ॥ शक्तिं हृद्व्यापिनीं पश्चाद्धूङ्कारे पावकप्रभे । रन्ध्रमध्ये स्थितं कृत्वा प्राणरोधं हि चिन्तकः ॥ १२ ॥ निवेशयेद्रेचकान्ते फडन्तेनाथ तेन च । हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रे विभिद्य च ॥ १३ ॥ ग्रन्थीन्निर्भिद्य हुंकारं मूर्ध्नि विन्यस्य जीवनम् । संपुटं हृदयेनाथ पूरकाहितचेतनम्॥१४॥ हूं शिखोपरि विन्यस्य शुद्धं बिन्द्वात्मकं स्मरेत्। कृत्वाऽथ कुम्भकं शंभावेकोद्घातेन योजयेत् ॥ १५ ॥ रेचकेन बीजवृत्त्या शिवे लीनोऽथ शोधयेत्। प्रतिलोमं स्वदेहे तु विन्द्वन्तं तत्र विन्दुकम् ॥ १६ ॥ लयं नीत्वा महीवातौ जलवह्नी परस्परम् । द्वौ द्वौ साध्यौ तथाऽऽकाशमविरोधेन तच्छृणु ॥ १७॥ पार्थिवं मण्डलं पीतं कठिनं वज्रलाञ्छितम् । ह्रौंमित्यात्मीयबीजेन तन्निवृत्तिकलामयम् ॥ १८ ॥ पादादारभ्य मूर्धान्तं विचिन्त्य चतुरस्रकम् । उद्घातपञ्चकेनैव वायुभूतं विचिन्तयेत् ॥ १९ ॥ अर्धचन्द्रं द्रवं सौम्यं शुभ्रमम्भोजलाञ्छितम् । ह्रींमित्यनेन बीजेन प्रतिष्ठारूपतां गतम् ॥ २० ॥ संयुक्तं राममन्त्रेण पुरुषान्तमकारणम्। अर्घ्यं चतुर्भिरुद्घातैर्वह्निभूतं विशोधयेत् ॥२१॥ आग्नेयं मण्डलं त्र्यस्रं रक्तं स्वस्तिकलाञ्छितम् । हूंमित्यनेन

---

चाहिए ।। ४।। प्रवेश करते समय पहले दाहिना पैर डालना चाहिए । उदुम्बर की शाखा में पुनः अस्त्रन्यास करना चाहिए । ओं हां वास्त्वधिपतये ब्रह्मणे नमः इस मन्त्र से मध्य में, वास्तु का पूजन करना चाहिए ।। ५ ।। निरीक्षण आदि शस्त्रों के द्वारा शुद्ध गड्डुओं को हाथ में लेकर शिवजी से आज्ञा लेकर मौन होकर गङ्गा आदि नदियों के तट पर जाय ।। ६ ।। पवित्र होकर मन्त्र का जप करके वस्त्र से छाने हुए जल से हृदयबीज (नमः) का पाठ करते हुए गड्डुओं में जल भरे ।। ७ ।। पूजा के लिए चन्दन, अक्षत तथा पुष्प आदि सभी द्रव्यों को एकत्रित करके भूतशुद्धि करनी चाहिए।।८।। देवता की दायीं ओर तथा अपने शरीर की बायीं ओर न्यास करके संहार मुद्रा के द्वारा उसे अपने सिर पर धारण करना चाहिए ।। ९ ।। भोग्य कर्मों का उपभोग करने के लिए पाणिकच्छपी (कूर्म) नामक मुद्रा के द्वारा अपने हृदय कमल में अथवा द्वादश दल कमल के भीतर अपनी आत्मा का चिन्तन करना चाहिए ।। १० ।। पुनः पञ्चभूतों का शोधन करना चाहिए । अपने शरीर के भीतर आकाश का चिन्तन करके, दोनों चरणों के अंगुष्ठों का उस छिद्र के भीतर और बाहर स्मरण करना चाहिए ।। ११ ।। पुनः साधक हृदय में व्याप्त शक्ति को अग्नि के समान प्रभाव वाले ब्रह्मरन्ध्र में स्थित हुंकार से संयुक्त करके । फिर अपने प्राणों को रोककर (प्राणायाम द्वारा कुम्भक करके) रेचक करके अस्त्राय फट् इस मन्त्र से उस हुंकार को, हृदय, कण्ठ, तालु तथा भौहों के बीच में विद्यमान रन्ध्र का भेदन करके ग्रन्थियों का भेदन करके 'हुं' बीज स्वरूप जीव को ब्रह्मरन्ध्र में स्थिर करके फिर हृदयस्थित 'हुं' बीज के द्वारा सम्पुटित उस जीव में पूरक प्राणायाम द्वारा आहित चैतन्य की भावना करके शिखा के ऊपर हुं का विन्यास करे । फिर शुद्ध विन्दु स्वरूप जीव का ध्यान करे । पुनः कुम्भक प्राणायाम करके उसको एक उद्घात शंभु के साथ संलग्न करे ।। १२-१५ ।। तदनन्तर शिव में लीन होकर रेचक रूपी बीजवृत्ति के द्वारा अपने आपका शोधन करना चाहिए । प्रतिलोम (उलटा या अवरोह क्रम) के तरीके से अपने देह में विन्दु पर्यन्त विन्दु को लीन करके पृथिवी तथा वायु एवं जल तथा अग्नि इन दो-दो को परस्पर में लीन करके विना किसी विरोध के उसमें आकाश को लीन करे । उसकी प्रक्रिया को मैं बतलाता हूँ, आप सुनें ।। १६-१७ ।। पार्थिव मण्डल पीला, कठोर, वज्र से चिह्नित हुआ करता है । वह अपने ह्रौं इस बीज से युक्त तथा 'निवृत्ति' कला स्वरूप होता है ।। १८ ।। पैर से लेकर सिर पर्यन्त शरीर की चतुरस्र (चौकोर) रूप से भावना करके उद्घातपञ्चक (पाँच प्राणायाम) के द्वारा उसकी भावना वायुरूप से करनी चाहिए ।। १९ ।। जलीय मण्डल की भावना अर्द्धचन्द्राकार, द्रवस्वरूप, शान्त, धवल, कमल के चिह्न से चिह्नित

बीजेन विद्यारूपं विभावयेत् ॥ २२ ॥ घोराणुत्रिभिरुद्घातैर्जलभूतं विशोधयेत् । षड्स्त्रं मण्डलं वायोर्बिन्दुभिः षड्भिरङ्कितम् ॥ २३ ॥ कृष्णं ह्रेमिति बीजेन जातं शान्तिकलामयम् । संचिन्त्योद्घातयुग्मेन पृथ्वीभूतं विशोधयेत् ॥ २४ ॥ नमो बिन्दुमयं वृत्तं बिन्दुशक्तिविभूषितम् । व्योमाकारं सुवृत्तं च शुद्धस्फटिकनिर्मलम् ॥ २५ ॥ हयौंकारेण फडन्तेन शान्त्यतीत कलामयम् । ध्यात्वैकोद्घातयोगेन सुविशुद्धं विभावयेत् ॥ २६ ॥ आप्याययेत्ततः सर्वं मूलेनामृतवर्षिणा। आधाराख्यमनन्तं च धर्मज्ञानादिपङ्कजम् ॥ २७ ॥ हृदाऽऽसनमिदं ध्यात्वा मूर्तिमावाहयेत्ततः । सृष्ट्वा शिवमयं तस्यामात्मानं द्वादशान्ततः ॥ २८ ॥ अथ तां शक्तिमन्त्रेण वौषडन्तेन सर्वतः । दिव्यामृतेन संप्लाव्य कुर्वीत सकलीकृतम् ॥ २९ ॥ हृदयादिकरान्तेषु कनिष्ठाद्यङ्गलीषु च । हृदादिमन्त्रविन्यासः सकलीकरणं मतम् ॥ ३० ॥ अस्त्रेण रक्ष्य प्राकारं तनुत्रेणाथ तद्बहिः। शक्तिजालमधश्चोर्ध्वं महामुद्रां प्रदर्शयेत् ॥ ३१॥ आपादमस्तकं यावद्भावपुष्पैः शिवं हृदि। पद्मे यजेत्पूरकेण आकृष्टामृतसद्घृतैः॥ ३२॥ शिवमन्त्रैर्नाभिकुण्डे तर्पयेत शिवानलम् । ललाटे विन्दुरूपं च चिन्तयेच्छुभविग्रहम् ॥ ३३॥ एकं स्वर्णादिपात्राणां पात्रमस्त्राम्बुशोधितम् । विन्दुप्रसूतपीयूषरूपतोयाक्षतादिना ॥ ३४ ॥ हृदाऽऽपूर्य षडङ्गेन पूजयित्वाऽभिमन्त्रयेत्। संरक्ष्य हेतिमन्त्रेण कवचेनावगुण्ठयेत् ॥ ३५ ॥ रचयित्वाऽर्घ्यमष्टाङ्गं सेचयेद्धेनुमुद्रया । अभिषिञ्चेदथाऽऽत्मानं मूर्ध्नि तत्तोयबिन्दुना ॥ ३६ ॥ तत्रस्थं यागसंभारं प्रोक्षयेदस्त्रवारिणा । अभिमन्त्र्य हृदा पिण्डैस्तनुत्राणेन वेष्टयेत् ॥ ३७ ॥ दर्शयित्वाऽमृतां मुद्रां पुष्पं दत्त्वा

---

तथा 'ह्रीं' इस बीज के द्वारा प्रतिष्ठारूपता को प्राप्त रूप से करनी चाहिए ।। २० ।। राम मन्त्र से संयुक्त, पुरुषपर्यन्त, निष्कारण, तथा अर्घ्य स्वरूप जल तत्त्व का शोधन वह्नि (अग्नि) रूप से करना चाहिए ।। २१ ।। बह्निमण्डल की भावना त्रिकोण, रक्तवर्ण की, स्वस्तिक के चिह्न से चिह्नित 'हूं' बीज से संयुक्त विद्यारूप से करनी चाहिए ।। २२ ।। उसके घोरावस्था के अणुओं का जलरूप से विशोधन तीन प्राणायामों के द्वारा करनी चाहिए। वायुमण्डल का षडस्र (छह कोणों वाले) छह विन्दुओं से चिह्नित, कृष्ण वर्ण का, ह्रीं बीज से उत्पन्न तथा शान्ति कला रूप से चिन्तन करके दो प्राणायामों के द्वारा पृथिवी के रूप में परिणत रूप से उसका विशोधन करना चाहिए ।। २३-२४ ।। आकाश मण्डल का, विन्दुस्वरूप, गोल,विन्दुशक्ति से समलंकृत, व्योमाकार, सुन्दर, शुद्ध स्फटिक के समान निर्मल, 'ह्रौं फट्' बीज से युक्त, शान्त्यतीत कला स्वरूप से चिन्तन करके, एक प्राणायाम के द्वारा अत्यन्त शुद्ध रूप से उसका चिन्तन करना चाहिए ।। २६ ।। उसके पश्चात् आधार संज्ञक अनन्त तथा धर्म ज्ञानादि कमल, इन सबों को अमृत की वर्षा करने वाले मूल के द्वारा सिंचित करना चाहिए ।। २७ ।। यह हृदयरूपी आसन है, इस प्रकार से भावना करके उसमें मूर्ति का आवाहन करना चाहिए । उस मूर्ति में द्वादशान्त के द्वारा शिवमय आत्मा की सृष्टि करनी चाहिए ।। २८ ।। उसके पश्चात् उसे अन्त में वौषट् जोड़कर शक्तिमन्त्र के द्वारा उस मूर्ति को अमृत से स्नान कराकर उसका सकलीकरण करना चाहिए ।। २९।। हृदय आदि से लेकर हाथ पर्यन्त तथा कनिष्ठिका अंगुलियों में हृदयादि मन्त्र का विन्यास करना ही सकलीकरण कहलाता है ।। ३०।। अस्त्र मन्त्र के द्वारा मूर्ति के प्राकार (घेरा) की, कवच मन्त्र के द्वारा उसके बाहर के भाग की तथा नीचे की शक्तिजाल (समूह) से रक्षा करके ऊपर की ओर महामुद्रा दिखानी चाहिए ।। ३१ ।। हृदयकमल के ऊपर भावपुष्पों के द्वारा शिव का आपादमस्तक पूजन करना चाहिए । पूरक के द्वारा आकृष्ट सद्धृत से शिवमन्त्रों से नाभिकुण्ड में शिवाग्नि का तर्पण (शिवाग्नि में होम) करना चाहिए । अपने ललाट प्रदेश में शिव के मङ्गलमय विग्रह की भावना करनी चाहिए ।। ३२-३३ ।। सोने आदि के पात्रों में अस्त्र जल से शोधित एक पात्र को विन्दु से निकले अमृतरूपी जल तथा अक्षत आदि से हृदय पर्यन्त भरकर पडङ्गन्यास के द्वारा पूजन करके अभिमन्त्रित करना चाहिए । चक्र मन्त्र के द्वारा उसकी रक्षा करके उसे कवच मन्त्र के द्वारा घेर देना चाहिए ।। ३४-३५ ।। पुनः अष्टाङ्ग अर्घ्य की रचना करके उसे धेनु मुद्रा से सींचना चाहिए । उसके पश्चात् उसी जल के विन्दु से अपने सिर पर अभिषेक करना चाहिए ।। ३६।। वहाँ पर विद्यमान याग की सामग्री का अस्त्र जल से प्रोक्षण करना चाहिए । फिर उसे हृदय मन्त्र तथा पिण्ड के द्वारा अभिमन्त्रित करके कवच मन्त्र से वेष्टित करना चाहिए ।। ३७ ।। पुनः अमृतामुद्रा दिखाकर तथा अपने आसन पर पुष्प चढ़ाकर, अपने सिर में तिलक लगाना चाहिए एवं मूलमन्त्र से एक पुष्प चढ़ा देना चाहिए ।। ३८ ।। धीर पुरुष को सदा स्नान, देवार्चन, होम, भोजन, याग, योग तथा आवश्यक जप के समय मौन रहना

निजासने । विधाय तिलकं मूर्ध्नि पुष्पं मूलेन योजयेत्॥ ३८॥ स्नाने देवार्चने होमे भोजने यागयोगयोः । आवश्यके जपे धीरः सदा वाचं यमो भवेत्॥३९॥ नादान्तोच्चारणान्मन्त्रं शोधयित्वा सुसंस्कृताम् । पूजामभ्यर्च्य गायत्र्या सामान्यार्घ्यमुपाहरेत् ॥ ४० ॥ ब्रह्मपञ्चकमावर्त्य माल्यमादाय लिङ्गतः । ऐशान्यां दिशि चण्डाय हृदयेन निवेदयेत् ॥ ४१ ॥ प्रक्षाल्य पिण्डिकालिङ्गे अस्त्रतोये ततो हृदा । अर्घ्यपात्राम्बुना सिञ्चेदिति लिङ्गविशोधनम्॥४२॥ आत्मद्रव्यमन्त्रलिङ्गशुद्धौ सर्वान्सुरान्यजेत् । वायव्ये गणपतये हां गुरुभ्योऽर्चयेच्छिवे ॥ ४३ ॥ आधारशक्तिमङ्कुरनिभां कूर्मशिलास्थिताम्। यजेद्ब्रह्मशिलारूढं शिवस्यानन्तमासनम्॥ ४४ ॥ विचित्रकेसरि प्रख्यानन्योन्यं पृष्ठदर्शिनः । कृतत्रेतादिरूपेण शिवस्याऽऽसनपादुकाम्॥४५॥ धर्मं ज्ञानं च वैराग्यमैश्वर्यं चाग्निदिङ्मुखान् । कर्पूरकुङ्कुमस्वर्णकज्जलाभान्यजेत्क्रमात् ॥ ४६॥ पद्मं च कर्णिकामध्ये पूर्वादौ मध्यतो नव । वरदाभयहस्ताश्च शक्तयो धृतचामराः॥ ४७ ॥ वामा ज्येष्ठा च रौद्री च काली कलविकारणी । बलविकारणी पूज्या बलप्रमथनी क्रमात् ॥ ४८॥ हां सर्वभूतदमनी केशराग्रे मनोन्मनी क्षित्यादिशुद्धविद्यां तु तत्त्वव्यापकमासनम् ॥ ४९ ॥ न्यसेत्सिंहासने देवं शुक्लं पञ्चमुखं विभुम् । दशबाहुं च खण्डेन्दुं दधानं दक्षिणैः करैः ॥ ५०॥ शक्त्यृष्टिशूलखट्वाङ्गवरदं वामकैः करैः । डमरुं बीजपूरं च नीलाब्जं सूत्रमुत्पलम् ॥ ५१ ॥ द्वात्रिंशल्लक्षणोपेतां शैवीं मूर्तिं तु मध्यतः। हां हं हां शिवमूर्तये स्वप्रकाशं शिवं स्मरन् ॥ ५२ ॥ ब्रह्मादिकारणत्यागान्मन्त्रं नीत्वा शिवास्पदम् । ततो ललाटमध्यस्थ स्फुरत्तारापतिप्रभम् ॥ ५३ ॥ षडङ्गेन समाकीर्णं विन्दुरूपं परं शिवम्। पुष्पाञ्जलिगतं ध्यात्वा लक्ष्मी मूर्तौ निवेशयेत्॥५४॥ ॐ हां हौं शिवाय नम आवाहन्या हृदा ततः। आवाह्य स्थाप्य स्थापन्या संनिधायान्तिकं शिवम् ॥ ५५॥ निरोधयेन्निष्ठुरया

---

चाहिए।।३९।। मन्त्र के अन्त में नाद (ओम्) के उच्चारण के द्वारा मन्त्र का शोधन करके अच्छी तरह से संस्कारयुक्त पूजा करके गायत्री के द्वारा सामान्य अर्घ्य प्रदान करना चाहिए।। ४० ।। ब्रह्मपञ्चक की आवृत्ति करके लिङ्ग से माला उतारकर हृदय मन्त्र से उसे ईशानकोण में विद्यमान चण्ड को चढ़ा देना चाहिए ।। ४१ ।। हृदयमन्त्र अस्त्र के जल में पिण्डिका तथा लिङ्ग को धोकर अर्घ्यपात्र के जल से उसे सिंचना चाहिए, इसे ही लिंग का विशोधन कहते हैं ।। ४२ ।। आत्मशुद्धि, द्रव्यशुद्धि, मन्त्रशुद्धि तथा लिङ्गशुद्धि के पश्चात् सभी देवताओं का पूजन करना चाहिए । बायव्य दिशा में ओं हां गणपतये नमः, ओं हां गुरुभ्यो नमः तथा ओं हां शिवाय नमः इन मन्त्रों से, गणपति आचार्य तथा शिवजी की पूजा करनी चाहिए ।। ४३ ।। फिर कूर्मशिला पर विद्यमान अंकुर के समान आकार वाली आधारशक्ति की तथा शिला पर रखे गए शिव के अनन्त आसन की पूजा करनी चाहए ।। ४४ ।। कृतयुग, त्रेतायुग,द्वापरयुग तथा कलियुग रूप से विचित्र सिंह के समान आकार वाले परस्पर में एक दूसरे के पृष्ठ को देखने वाले सिंहों की तथा आसन पादुका की पूजा करनी चाहिए ।। ४५ ।। अग्नि दिशा में मुख वाले कर्पूर की समान कान्ति वाले धर्म की, कुंकुम के समान कान्ति वाले ज्ञान की, कुसुम के समान कान्ति वाले वैराग्य की तथा कञ्जल के समान कान्ति वाले ऐश्वर्य की क्रमशः पूजा करनी चाहिए ।। ४६ ।। कर्णिका के बीच में पद्म की तथा बीच में पूर्वादि दिशाओं में वरदान देने वाली, अभयमुद्रा से युक्त चामर धारण करने वाली नव शक्तियों की पूजा करनी चाहिए।।४७ ।। वामा, ज्येष्ठा, रौद्री, काली, कलविकारिणी, बलविकारिणी, बलप्रमथनी, सर्वभूतदमनी तथा मनोन्मनी ये नव शक्तियाँ हैं, इनकी पूजा केसर के अग्र भाग में हां बीज मन्त्र से करनी चाहिए। उसके पश्चात् पृथिवी आदि शुद्धविद्या की तथा तत्त्वव्यापक आसन की पूजा करनी चाहिए।।४८-४९।। सिंहासन के ऊपर शुक्ल वर्ण वाले तथा पाञ्चमुख वाले व्यापक भगवान् शिव की स्थापना करनी चाहिए । उनकी दस भुजाएँ हैं तथा वे खण्डेन्दु को धारण करते हैं । वे अपनी दाहिनी भुजाओं में शक्ति, ऋष्टि, त्रिशूल, खट्वाङ्ग तथा वरद मुद्रा धारण करते हैं तथा बाऐं हाथों में डमरू, बीजपूर, नीलकमल तथा उत्पलसूत्र धारण करते हैं ।। ५०-५१ ।। बत्तीस लक्षणों से युक्त शिव की मूर्ति की स्थापना बीच में करनी चाहिए । ओं हां हं, हाँ शिव मूर्तये नमः । इस मन्त्र से स्वयम्प्रकाश शिव की पूजा करनी चाहिए ।। ५२ ।। ब्रह्म आदि की कारणता को त्याग करने के कारण मन्त्र को

कालकान्त्या फडन्ततः । विघ्नानुत्सार्य मुष्ट्याऽथ लिङ्गमुद्रां नमस्कृतिम् ॥ ५६ ॥ हृदाऽवगुण्ठयेत्पश्चादावाहः संमुखो ततः । निवेशनं स्थापनं स्यात्संनिधानं तवास्मि भोः ॥ ५७ ॥ आकर्मकाण्डपर्यन्तं संनिधेर्योऽपरिक्षयः । स्वभक्तेश्च प्रकाशो यस्तद्भवेदवगुण्ठनम्॥५८॥ सकलीकरणं कृत्वा मन्त्रैः षड्भिरथैकताम् । अङ्गानामङ्गिना सार्धं विदध्यादमृतीकृतम् ॥ ५९ ॥ चिच्छक्तिहृदयं शंभोः शिर ऐश्वर्यमष्टधा । शिखा वशित्वं चाभेद्यं तेजः कवचमैश्वरम् ॥ ६० ॥ प्रतापो दुःसहश्चास्त्रमन्तरायापहारकम् । नमः स्वधा च स्वाहा च वौषट्चेति यथाक्रमम् ॥ ६१ ॥ हृत्पुरः सरमुच्चार्य पाद्यादीनि निवेदयेत् । पाद्यं पादाम्बुजद्वन्द्वे वक्त्रे स्वाचमनीयकम् ॥ ६२ ॥ अर्घ्यं शिरसि देवस्य दूर्वापुष्पाक्षतानि च । एवं संस्कृत्य संस्कारैर्दशभिः परमेश्वरम् ॥ ६३ ॥ यजेत्पञ्चोपचारेण विधिना कुसुमादिभिः । अभ्युक्ष्योद्वर्त्य निर्मृज्य राजिकालवणादिभिः ॥ ६४ ॥ अर्घ्योदबिन्दुपुष्पाद्यैर्गडूकैः स्नापयेच्छनैः । पयोदधिघृतक्षौद्रशर्कराद्यैरनुक्रमात् ॥ ६५ ॥ ईशादिमन्त्रितैर्भुक्त्यै मुक्त्यै तेषां विपर्ययः । तोयधूपान्तरैः सर्वैर्मूलेन स्नपयेच्छिवम्॥६६॥ विरूक्ष्य यवचूर्णेन यथेष्टं शीतलैर्जलैः । स्वशक्त्या गन्धतोयेन संस्नाप्य शुचिवाससा ॥ ६७ ॥ निर्माज्यार्घ्यं प्रदद्याच्च नोपरि भ्रामयेत्करम् । न शून्यमस्तकं लिङ्गं पुष्पैः कुर्यात्ततो ददेत् ॥ ६८ ॥ चन्दनाद्यैः समालभ्य पुष्पैः प्राच्य शिवाणुना। धूपभाजनमस्त्रेण प्रोक्ष्याभ्यर्च्य शिवाणुना ॥ ६९॥ अस्त्रेण पूजितां घण्टां चाऽऽदाय गुग्गुलं दहेत्। दद्यादाचमनं पश्चात्सुधाभं हृदयाणुना ॥७०॥ आरात्रिकं समुत्तार्य तथैवाऽऽचमयेत्पुनः । प्रणम्याऽऽदाय

---

शिवपरक बनाना चाहिए । फिर ललाट के मध्य में स्थित, चन्द्रमा के समान चमकने वाले, षडङ्ग से युक्त विन्दु स्वरूप परं शिव का पुष्पाञ्जलि में ध्यान करके, उन्हें लक्ष्मी की मूर्ति में स्थापित कर देना चाहिए ।। ५४ ।। उसके पश्चात् ओं हां हौं शिवाय नमः इस मन्त्र से तथा आवहनी मुद्रा से हृदय से आवाहन करके स्थापना के मन्त्र से शिव की स्थापनी मुद्रा से स्थापना करके उनका सन्निधिकरण करना चाहिए ।। ५५ ।। कलाकान्ति नामक निष्ठुर मुद्रा दिखाकर 'ओं फट्' इस मन्त्र से निरोध करना चाहिए । मुष्टि मुद्रा से विघ्नों का उत्सारण करना चाहिए तथा लिङ्ग मुद्रा से नमस्कार करना चाहिए ।। ५६ ।। उसके पश्चात् हृदय से शिव का आवाहन तथा सम्मुखीकरण करना चाहिए । पुनः निवेशन, स्थापन तथा सन्निधान करके, हे देव ! मैं आपका हूँ' इस प्रकार से भावना करनी चाहिए।।५७ ।। कर्मकाण्ड काल पर्यन्त जो सन्निधि बनी रहती है तथा अपनी भक्ति का प्रकाश बना रहता है, उसे ही अवगुण्ठन अथवा (घेरा) कहते हैं ।। ५८ ।। सकलीकरण करके उसके पश्चात् छह मन्त्रों से एकता करनी चाहिए । अंगों का अंगी के साथ अमृतीकरण करना चाहिए ।। ५९ ।। शम्भु का चित्त शक्ति ही हृदय है, उनका आठ प्रकार का ऐश्वर्य ही सिर है, वशित्व ही शिखा है,तेज अभेद्य कवच है । उनका दुःसह प्रताप अस्त्र है तथा क्रमशः नमः, स्वधा, स्वाहा तथा वौषट् ये सभी विघ्न को दूर करने वाले हैं ।। ६१ ।। हृदय मन्त्र के उच्चारणपूर्वक शिव के लिए पाद्य आदि समर्पित करना चाहिए । पाद्य उनके दोनों चरण कमलों में तथा मुखों में आचमनीय समर्पित करे ।। ६२ ।। भगवान् शंकर के सिर पर अर्घ्य, दूर्वा, पुष्प तथा अक्षत छोड़ना चाहिए । इस तरह परमेश्वर भगवान् शंकर को दस संस्कारों से संस्कृत (संस्कारयुक्त) करके उनकी पुष्प आदि से पञ्चोपचार विधि से पूजा करनी चाहिए । जल से राई छिड़ककर तथा नमक आदि सेउबटन लगाकर तथा रगड़कर अर्घ्य ईशादि मन्त्र से अभिमन्त्रित तथा जलविन्दुओं पुष्प, तथा गड्डुओं से शिव जी को दुग्ध, दधि, घी, मधु तथा चीनी आदि से स्नान कराना चाहिए ।। ६३-६५ ।। इन सभी वस्तुओं से स्नान कराने से भोगों तथा मोक्ष की प्राप्ति मनुष्य करता है । इन सभी वस्तुओ से स्नान कराने के पश्चात् शिवजी को जल से स्नान कराना चाहिए तथा धूप दिखाना चाहिए, इस तरह से सभी वस्तुओं से स्नान कराना चाहिए। इन सभी वस्तुओं से मूलमन्त्र पढ़कर स्नान कराना चाहिए । अन्त में यव के चूर्ण से मूर्ति को रगड़कर फिर शीतल जल से यथेष्ट मात्रा में स्नान कराना चाहिए।।६६।। अपनी शक्ति के अनुसार चन्दन के जल से शिवजी को स्नान कराकर उन्हें पवित्र वस्त्र से पोंछना चाहिए । किन्तु शिवजी के सिर पर न तो हाथ घुमाए और न तो उनके सिर को पुष्प से खाली रखें। उसके पश्चात् शिवजी को अर्घ्य देना चाहिए ।। ६७-६८ ।। शिवमन्त्र से उनको चन्दन आदि लगाकर तथा पुष्पों से पूजा करके अस्त्र मन्त्र से धूप के पात्र का प्रोक्षण करना चाहिए और उसकी पूजा

देवाङ्गां भोगाङ्गानि प्रपूजयेत् ॥ ७१ ॥ हृदग्नौ चन्द्रभं चैशे शिवं चामीकरप्रभम् । शिखां रक्तां च नैर्ऋत्ये कृष्णं वर्म च वायवे ॥ ७२ ॥ चतुर्वक्त्रं चतुर्बाहुं दलस्थान्पूजयेदिमान् । दंष्ट्राकरालमप्यस्त्रं पूर्वादौ वज्रसंनिभम् ॥ ७३ ॥ मूले हौं शिवाय नमः ॐ हां हूं हीं हों शिरश्च । हूं शिखा हैं वर्म चास्त्रं परिवारयुताय च ॥ ७४॥ शिवाय दद्यात्पाद्यं च आचामं चार्घ्यमेव च । गन्धं पुष्पं धूपदीपं नैवेद्याचमनीयकम् ॥ ७५ ॥ करोद्वर्तनताम्बूलं मुखवासं च दर्पणम् । शिरस्यारोप्य देवस्य दूर्वाक्षतपवित्रकम् ॥ ७६ ॥ मूलमष्टशतं जप्त्वा हृदयेनाभिमन्त्रितम् । चर्मणा वेष्टितं खड्गरक्षितं कुशपुष्पकैः ॥ ७७ ॥ अक्षतैर्मुद्रया युक्तं शिवमुद्भवसंज्ञया । गुह्यातिगुह्यगुप्त्यर्थं गृहाणास्मत्कृतं जपम् ॥ ७८ ॥ सिद्धिर्भवति मे येन त्वत्प्रसादात्त्वयि स्थिते । भोगी श्लोकं पठित्वा तु दक्षहस्तेन शंभवे ॥ ७९ ॥ मूलाणुनाऽर्घ्यतोयेन वरहस्ते निवेदयेत् । यत्किंचित्कुर्महे देव सदा सुकृतदुष्कृतम्॥८०॥ तन्मे शिवपदस्थस्य हूं क्षः क्षेपय शंकर । शिवो दाता शिवो भोक्ता शिवः सर्वमिदं जगत् ॥ ८१ ॥ शिवो जयति सर्वत्र शिवः सर्वमिदं जगत् । श्लोकद्वयमधीत्यैवं जपं देवाय चार्पयेत् ॥ ८२ ॥ शिवाङ्गानां दशांशं च दत्त्वाऽर्घ्यं स्तुतिमाचरेत् । प्रदक्षिणीकृत्य नमेच्चाष्टाङ्गं चाष्टमूर्तये ॥ ८३॥ नत्वा ध्यानादिभिश्चैव यजेच्चित्रेऽनलादिषु ॥ ८४ ॥

इत्यादिमहापुराण आग्नेये शिवपूजाविधिकथनं नाम चतुसप्ततितमोऽध्यायः ॥ ७४ ॥

---

शिवमन्त्र से करना चाहिए ।। ६९ ।। अस्त्र मन्त्र से पूजित घण्टा को लेकर उन्हें गुग्गुल की धूप देनी चाहिए । फिर हृदयमन्त्र के अन्त में स्वधा लगाकर शिवजी को आचमन करना चाहिए ।।७०।। शिवजी की आरती उतारकर आचमन कराना चाहिए । फिर प्रणाम करके उनसे आज्ञा लेकर भोगाङ्गों की पूजा करनी चाहिए ।। ७१ ।। अग्निकोण में चन्द्रमा की कान्ति के समान कान्ति वाले उनके हृदय की, ईशानकोण में मङ्गलमय सुवर्ण की कान्ति वाले सिर की, नैऋत्य कोण में रक्तवर्ण वाली शिखा की तथा वायव्य कोण में कृष्ण वर्ण वाले कवच की पूजा करनी चाहिए।।७२।। उनके चारों मुखों तथा चारों भुजाओं की कमल में विद्यमानरूप से पूजा करनी चाहिए । पूर्व आदि दिशाओं में वज्र के समान कठोर तथा भयंकर उनके दाँतों की पूजा करनी चाहिए ।। ७३ ।। मूल में- ओं हौं शिवाय हृदयाय नमः, ओं हाँ हूं, हीं हों शिरसे स्वाहा, ओं हूं शिखायै वषट्, ओं हैं कवचाय हुम्, ओं हः अस्त्राय फट् इस तरह से न्यास करके सपरिवार शिवजी को पाद्य, आचमन, अर्घ्य, गन्ध, पुष्प, धूप, दीप,नैवेद्य,आचमन, करोद्वर्तन (हाथ में चन्दन लगाना) ताम्बूल, मुखवास तथा दर्पण समर्पित करना चाहिए ।। ७४-७७ ।। उद्भवमुद्रा से अक्षत से युक्त शिवजी की प्रार्थना करनी चाहिए कि भगवन् ! अत्यन्त गोपनीय रक्षा के लिए आप मेरे द्वारा किए गए जप को स्वीकार करें जिससे कि आप पर ही निर्भर मेरी सिद्धि हो ।। ७८ ।। पहले भोगी (सर्प) मन्त्र पढ़कर, दाहिने हाथ से मूलमन्त्र से तथा अर्घ्य के जल से उसे (उस मन्त्र को) शिवजी के श्रेष्ठ हाथ में समर्पित करना चाहिए । पुनः प्रार्थना करना चाहिए कि- भगवन् ! मैं जो कुछ भी पुण्य अथवा पाप कर रहा हूँ,उन सबों को हे शंकर आप विनष्ट कर दें । इसके पश्चात् 'ओं हूं क्षः' का उच्चारण करना चाहिए ।। ७९-८० ।। शिव ही दाता हैं, वे ही भोक्ता हैं, वे ही सम्पूर्ण जगत् स्वरूप हैं । शिवजी की सर्वत्र जय हो, जो शिवजी हैं,वही मैं भी हूँ, इस तरह से दो श्लोक पढ़कर उसे शिव जी को समर्पित करना चाहिए ।। ८१-८२ ।। शिवजी के अंगों के दशांश अर्घ्य प्रदान करना चाहिए फिर अर्घ्य देकर स्तुति करनी चाहिए । प्रदक्षिणा करके अष्टमूर्ति भगवान् शंकर को साष्टाङ्ग प्रणाम करना चाहिए ।। ८३ ।। नमस्कार करके ध्यान आदि के द्वारा उनकी पूजा अग्नि आदि में करनी चाहिए ।। ८४।।

**इस तरह से आदिमहापुराण अग्निपुराण का शिवपूजा वर्णन विधि नामक चौहत्तरवाँ अध्याय सम्पूर्ण हुआ ॥ ७४ ॥**

अथ पञ्चसप्ततितमोऽध्यायः

## शिवपूजाङ्गहोमविधिः

ईश्वर उवाच– **अर्घपात्रकरो यायादग्न्यागारं सुसंवृतः । यागोपकरणं सर्वं दिव्यं दृष्ट्या च कल्पयेत् ॥ १ ॥ उदङ्मुखः कुण्डमीक्षेत्प्रोक्षणं ताडनं कुशैः । विदध्यादस्त्रमन्त्रेण वर्मणाऽभ्युक्षणं मतम् ॥ २ ॥ खड्गेन खातमुद्धारं पूरणं समतामपि । कुर्वीत वर्मणा सेकं कुट्टनं तु शराणुना ॥ ३ ॥ संमार्जनं समालेपं कलारूपप्रकल्पनम् । त्रिसूत्रीपरिधानं च वर्मणाऽभ्यर्चनं सदा ॥ ४ ॥ रेखात्रयमुदक्कुर्यादेकां पूर्वाननामधः । कुशेन च शिवास्त्रेण यद्वा तांसां विपर्ययः ॥ ५ ॥ वज्रीकरणमंत्रेण हृदा दर्भैश्चतुष्पथम् । अक्षपात्रं तनुत्रेण विन्यसेद्विष्टरं हृदा ॥ ६ ॥ हृदा वागीश्वरीं तत्र ईशमावाह्य पूजयेत्। वह्निं सदाश्रयानीतं शुद्धपात्रोपरि स्थितम् ॥ ७ ॥ क्रव्यादांशं परित्यज्य वीक्षणादिविशोधितम् । औदर्यं चैन्दवं मौनमेकीकृत्यानलत्रयम्॥८॥ ॐ हूं वह्निचैतन्याय वह्निबीजेन विन्यसेत् । संहितामन्त्रितं वह्निं धेनुमुद्रामृतीकृतम् ॥ ९ ॥ रक्षितं हेतिमन्त्रेण कवचेनावगुण्ठितम् । पूजितं त्रिः परिभ्राम्य कुण्डस्योर्ध्वं प्रदक्षिणम् ॥ १० ॥ शिवबीजमिति ध्यात्वा वागीशागर्भगोचरे । वागीश्वरेण देवेन क्षिप्यमाणं विभावयेत् ॥ ११ ॥ भूमिष्ठजानुको मन्त्री हृदाऽऽत्मसंमुखं क्षिपेत् । ततोऽन्तःस्थितबीजस्य नाभिदेशे समूहनम् ॥ १२ ॥ संभृतिं परिधानस्य शौचमाचमनं हृदा । गर्भाग्नेः पूजनं कृत्वा तद्रक्षार्थं शराणुना ॥ १३ ॥ बध्नीयाद्गर्भजं देव्याः कङ्कणं पाणिपल्लवे । गर्भाधानाय संपूज्य सद्योजातेन पावकम्॥१४॥ ततो हृदयमन्त्रेण जुहुयादाहुतित्रयम् । पुंसवनाय वामेन तृतीये मासि पूजयेत् ॥ १५ ॥ आहुतित्रितयं दद्याच्छिरसाऽम्बुकणान्वितम् । सीमन्तोन्नयनं षष्ठे**

---

**श्रीशिवजी ने कहा–** मौन होकर अर्घपात्र हाथ में लेकर अग्निशाला में प्रवेश करना चाहिए तथा दिव्यदृष्टि के द्वारा सम्पूर्ण याग सामग्री को एकत्रित करना चाहिए ।। १ ।। उत्तराभिमुख होकर कुण्ड को देखे और कुश से उसका प्रोक्षण एवं ताडन अस्त्र-मन्त्र से करे । कवच मन्त्र से कुण्ड के ऊपर जल छिड़कना चाहिए ।। २ ।। खड्ग से गड्ढा खोदकर उसको पूरा करके बराबर करना चाहिए। कवच मन्त्र से उसको सिंचकर अस्त्र-मन्त्र से उसको कूट दें ।। ३ ।। कुण्ड का संमार्जन, लेप उसकी कलात्मक चित्रकारी त्रिसूत्री वेष्टन तथा पूजन सदा कवच मन्त्र से करना चाहिए ।।४।। कुश अथवा त्रिशूल से दक्षिण से उत्तर की ओर तीन रेखाएँ तथा पश्चिम से पूर्व की ओर उन तीनों रेखाओं के नीचे एक रेखा खींचनी चाहिए । अथवा उन सबों के विपरीत अर्थात् पश्चिम पूर्व की तीन रेखाएँ और उत्तर दक्षिण की एक रेखा खींचनी चाहिए ।। ५ ।। मन में वज्रीकरण मन्त्र पढ़कर कुशों द्वारा चतुष्पथ बनाना चाहिए कवच मन्त्र से अक्षपात्र रखें तथा हृदय मन्त्र से विष्टर रखें ।।६।। मन से उस चतुष्पथ पर वागीश्वरी तथा ईश (शङ्करजी) का आवाहन करके पूजन करना चाहिए । सद्ब्राह्मण के द्वारा लायी गयी अग्नि को शुद्ध पात्र पर रखकर पूजन करें ।। ७ ।। उस अग्नि से क्रव्यादांश अग्नि को नैऋत्य कोण में निकालकर अवलोकन आदि के द्वारा अग्नि का शेधन करना चाहिए । फिर 'ओं हूं बह्नि चैतन्याय नमः' इस मन्त्र को पढ़कर मौन होकर औदर्यअग्नि, ऐंदव (वाडवाग्नि) तथा सामान्य अग्नि तीनों की भावना द्वारा एक साथ स्थापना करनी चाहिए।। ८ ।। संहिता के द्वारा अभिमन्त्रित, धेनु मुद्रा दिखाकर अमृतीकरण की गयी, चक्र मन्त्रसे रक्षित तथा कवचमन्त्र से अवगुण्ठित एवं पूजित अग्नि को कुण्ड के ऊपर प्रदक्षिण क्रम से घुमाना चाहिए ।। ९-१० ।। वागीश्वरी के गर्भ में वागीश्वर के द्वारा शिव बीज रूप से अग्नि डाले गए हैं, इस प्रकार कुण्ड में अग्नि डालते समय भावना करनी चाहिए ।। ११ ।। मन्त्रज्ञ को चाहिए कि वह पृथिवी पर घुटना टेककर अपने हृदय के सामने करके अग्नि को कुण्ड में डाले । उसके पश्चात् कुण्ड के भीतर नाभि प्रदेश में विद्यमान बीज का समूहन करे ।। १२ ।। वस्त्र धारण करके पवित्र होकर हृदयपर्यन्त आचमन करना चाहिए । गर्भाग्नि का पूजन करके उसकी रक्षा के लिए अस्त्र मन्त्र से वागीश्वरी देवी के पाणिपल्लव में गर्भजन्य कङ्कणबन्धन करना चाहिए । सद्योजात मन्त्र से गर्भाधान संस्कार के लिए अग्नि की पूजा करके हृदय मन्त्र से तीन आहुति देनी चाहिए । भावना द्वारा पुंसवन संस्कार के

मासि संपूज्य रूपिणा ॥ १६ ॥ जुहुयादाहुतीस्तिस्त्रः शिखया शिखयैव तु । वक्त्राङ्गकल्पनां कुर्याद्वक्त्रोद्धटननिष्कृती ॥ १७ ॥ जातकर्मनृकर्मभ्यां दशमे मासि पूर्ववत् । वह्निं संधुक्ष्य दर्भाद्यैः स्नानं गर्भमलापहम् ॥ १८ ॥ सुवर्णबन्धनं देव्या कृतं ध्यात्वा हृदाऽर्चयेत् । सद्यः सूतकनाशाय प्रोक्षयेदस्त्रवारिणा ॥ १९ ॥ कुण्डं तु बहिरस्त्रेण ताडयेद्वर्मणोत्क्षिपेत् । अस्त्रेणोत्तरपूर्वाग्रान्मेखलासु बहिः कुशान् ॥ २० ॥ आस्थाप्य स्थापयेत्तेषु हृदा परिधिविस्तरम् । वक्त्राणामस्त्रमन्त्रेण ततो नालापनुत्तये ॥ २१ ॥ समिधः पञ्च होतव्याः प्रान्ते मूले घृतप्लुताः । ब्रह्माणं शंकरं विष्णुमनन्तं च हृदार्चयेत् ॥ २२ ॥ दूर्वाक्षतैश्च पर्यन्तं परिधिस्थाननुक्रमात् । इन्द्रादीशानपर्यन्तान्विष्टरस्थाननुक्रमात् ॥ २३ ॥ अग्नेरभिमुखीभूतान् निजदिक्षु हृदार्चयेत् । निवार्य विघ्नसंघातबालकं पालयिष्यथ ॥ २४ ॥ शैवीमाज्ञामिमां तेषां श्रावयेत्तदनन्तरम् । गृहीत्वा स्रुक्स्रुवावूर्ध्ववदनाधोमुखो क्रमात्॥२५॥ प्रताप्यग्नौ त्रिधा दर्भमूलमध्याग्रकैः स्पृशेत् । कुशस्पृष्टप्रदेशेषु आत्मविद्याशिवात्मकम् ॥ २६ ॥ क्रमात्तत्त्वत्रयं न्यस्य हां हीं हूं संरवैः क्रमात्। स्रुचि शक्तिं स्रुवे शंभुं विन्यस्य हृदयाणुना॥२७॥ त्रिसूत्रीवेष्टितग्रीवौ पूजितौ कुसुमादिभिः । कुशानामुपरिष्टात्तौ स्थापयित्वा स्वदक्षिणे॥२८॥ गव्यमाज्यं समादाय वीक्षणादिविशोधितम् । स्वकं ब्रह्ममयीं मूर्तिं संचिन्त्याऽऽदाय तद्घृतम् ॥ २९ ॥ कुण्डस्योर्ध्वं हृदावर्त्य भ्रामयित्वाऽग्निगोचरे। पुनर्विष्णुमयीं ध्यात्वा घृतमीशानगोचरे ॥ ३० ॥ धृत्वाऽऽदाय कुशाग्रेण स्वाहान्तं शिरसाऽणुना । जुहुयाद्विष्णवे बिन्दुं रुद्ररूपमनन्तरम् ॥ ३१ ॥ भावयन्निजमात्मानं नाभौ धृत्वा प्लवेत्ततः। प्रादेशमात्रदर्भाभ्यामङ्गुष्ठानामिकाग्रकैः ॥३२॥ घृताभ्यां सम्मुखं वह्नेरस्त्रेणाऽऽप्लवमाचरेत् । हृदाऽऽत्मसंमुखं

---

लिए तीसरे मास में वाममन्त्र से पूजन करना चाहिए ।। १३-१५ ।। शिरोमन्त्र से जलकण से युक्त तीन आहुति देनी चाहिए । रूपी मन्त्र से छठें मास में सीमन्तोन्नयन संस्कार का पूजन करना चाहिए।।१६।। शिखामन्त्र से तीन आहुति देनी चाहिए । निष्कृती पुरुष को चाहिए कि वह उसी मन्त्र से अग्नि के मुख तथा अंगों के निकलने की कल्पना करें । पहले के ही समान जातकर्म तथा नृकर्म संस्कार दसवें मास में करके, गर्भजन्यदोष को दूर करने वाले स्नान अग्नि को जलाकर कुश आदि से कराना चाहिए ।। १८ ।। फिर हृदय में सुवर्णबन्धन की गयी वागीश्वरी देवी का ध्यान करना चाहिए । सद्यः सूतकजन्य दोष का नाश करने के लिए अस्त्रजल से अग्नि का प्रोक्षण करना चाहिए ।। १९ ।। कुण्ड के बाहर अस्त्र मन्त्र से कुश द्वारा ताड़न करना चाहिए कवच मन्त्र से उसे ऊपर उठाना चाहिए। अस्त्र मन्त्र से मेखला के बाहर उत्तर पूर्वाग्र (ईशानकोण) में रख देना चाहिए । उन सबों के ऊपर हृदय मन्त्र से परिधि के विस्तार करनी चाहिए । उसके पश्चात् नालच्छेदनार्थ मूल प्रान्त में पाँच समिधाओं को घी में डुबोकर हवन करना चाहिए तथा हृदय में ब्रह्मा, शङ्कर, विष्णु तथा अनन्त की पूजा करनी चाहिए ।। २०-२२ ।। पुनः दूब तथा अक्षत से परिधि पर स्थित तथा पूर्व दिशा से ईशानकोण पर्यन्त विष्टर पर स्थित अपनी-अपनी दिशाओं में अग्नि के अभिमुख रहने वाले देवताओं की पूजा हृदयमन्त्र से करनी चाहिए । पुनः विघ्न समूह को दूर करके अग्निरूपी बालक की आप सब पालन करें, इस तरह की भगवान् शिव की आज्ञा उन सभी देवताओं को सुनाना चाहिए । स्रुक को ऊर्ध्वमुख तथ स्रुव को अधोमुख लेकर, अग्नि में प्रतप्त करके कुश के मूल, मध्य तथा अग्रभाग से तीन बार स्पर्श कराना चाहिए ।। २३-२५।। कुश के द्वारा स्पर्श किए गए तीनों प्रदेशों में हाँ, ओं हीं ओं ओं हूं इन तीन शब्दों के उच्चारण पूर्वक आत्मतत्त्व, विद्यातत्त्व तथा शिवतत्त्व का न्यास करना चाहिए और हृदयमन्त्र के द्वारा स्रुक् में शक्ति का तथा स्रुव में शम्भु का न्यास करना चाहिए ।। २७ ।। गले में त्रिसूत्री से वेष्टित तथा पुष्प आदि से पूजित उन दोनों (स्रुक तथा स्रुव) को अपनी दाहिनी ओर कुशों के ऊपर स्थापित करना चाहिए ।। २८ ।। वीक्षण आदि से विशोधित गौ का घृत लेकर अपनी ब्रह्ममयी मूर्ति का ध्यान करके उस घी को अपने हाथ में ले लेना चाहिए ।। २९ ।। पुनः उसे हृदयमन्त्र को पढ़ते हुए कुण्ड के ऊपर अग्नि के चारों ओर घुमाकर, पुनः विष्णुमयी अपनी मूर्ति का ध्यान करके घी को ईशानकोण में रख देना चाहिए। फिर कुश के अग्रभाग से शिरोमन्त्र द्वारा स्वाहान्त विष्णु के लिए आहुति देनी चाहिए । उसके पश्चात् रुद्ररूपी विन्दु की भावना करते हुए उसे अपनी नाभि पर रखकर प्लवन करना चाहिए।।३०।।

तद्वत्कुर्यात्संप्लवनं ततः ॥ ३३ ॥ हृदालब्धदग्धदर्भं शस्त्रक्षेपात्पवित्रयेत् । दीप्तेनापरदर्भेण नीराज्यान्येन दीपयेत् ॥ ३४॥ अस्त्रमन्त्रेण निर्दग्धं वह्नौ दर्भं पुनः क्षिपेत् । क्षिप्त्वा घृते कृतग्रन्थिकुशं प्रादेशसंमितम् ॥ ३५ ॥ पक्षद्वयमिडादीनां त्रयं बाह्ये विभावयेत्। क्रमाद्भागत्रयादाज्यं स्रुवेणाऽऽदाय होमयेत् ॥ ३६ ॥ स्वेत्यग्नौ हां घृते भागं शेषमाज्यं क्षिपेत्क्रमात् । ॐ हामग्नये स्वाहा । ॐ हां सोमाय स्वाहा । ॐ हामग्नीषोमाभ्यां स्वाहा ॥ ३७॥ उद्घाटनाय नेत्राणां अग्नेर्नेत्रत्रये मुखे। स्रुवेण घृतपूर्णेन चतुर्थी माहुतिं यजेत् ॥ ३८॥ ओं हामग्नयेस्विष्टकृते स्वाहा। अभिमन्त्र्य षडङ्गेन बोधयेद्धेनुमुद्रया ॥ ३९॥ अवगुण्ठ्य तनुत्रेण रक्षेदाज्यं शराणुना । हृदाज्यबिन्दुविक्षेपात्कुर्यादभ्युक्ष्य शोधनम् ॥ ४०॥ वक्त्राभिधारसंधानं वक्त्रैकीकरणं तथा । ॐ हां सद्योजाताय स्वाहा । ॐ हां वामदेवाय स्वाहा । ॐ हामघोराय स्वाहा । ॐ हां तत्पुरुषाय स्वाहा ॥ ॐ हामीशानाय स्वाहा ॥ ४२ ॥ इत्येकैकघृताहुत्या कुर्याद्वक्त्राभिधारकम् ॥ ४३ ॥ ॐ हां सद्योजातवामदेवाभ्यां स्वाहा । ॐ हां वामदेवाघोराभ्यां स्वाहा । ॐ हामघोरतत्पुरुषाभ्यां स्वाहा । ॐ हां तत्पुरुषेशानाभ्यां स्वाहा ॥ ४४ ॥ इतिवक्त्रानुसन्धानं मन्त्रैरेभिः क्रमाच्चरेत् । अग्नितो गतयावायुं निर्ऋतादिशिवान्तया । वक्त्राणामेकतां कुर्यात्स्रुवेण घृतधारया ॥ ४५ ॥ ॐ हां सद्योजातवामदेवाघोरतत्पुरुषेशानेभ्यः स्वाहा ॥ ४६ ॥ इतीष्टवक्त्रे वक्त्राणामन्तर्भावस्तदाकृतिः । ईशेन वह्निमभ्यर्च्य दत्त्वाऽस्त्रेणाऽऽहुतित्रयम् ॥ ४७ ॥ कुर्यात्सर्वात्मना नाम शिवाग्निस्त्वं हुताशन । हृदार्चितौ विसृज्याग्नौ पितरौ विधिपूरणीम् ॥ ४८ ॥ मूलेन वौषडन्तेन दद्यात्पूर्णां यथाविधि । ततो हृदम्बुजे साङ्गं ससेनं भासुरं परम् ॥ ४९ ॥ यजेत्पूर्ववदावाह्य प्रार्थ्याऽऽज्ञां तर्पयेच्छिवम् । यागाग्निशिवयोः कृत्वा नाडीसंधानमात्मना ॥ ५० ॥ शक्त्या मूलाणुना होमं कुर्यादङ्गैर्दशांशतः ।

अंगुष्ठा तथा अनामिका अंगुलियों से पकड़े गए एक-एक वित्ते के दो कुशों के द्वारा अग्नि के सम्मुख अस्त्र मन्त्र से घुमाना चाहिए, उसी तरह से हृदयमन्त्र से अपने सम्मुख उन कुशों को घुमाना चाहिए।।३२-३३।। हृदयमन्त्र से शस्त्रक्षेप के द्वारा जले हुए कुश को पवित्र करना चाहिए, जले हुए दूसरे कुश से उसकी आरती करके उसे दूसरे कुश से जलाना चाहिए ।। ३४ ।। उस जले हुए कुश को अस्त्र मन्त्र से अग्नि में डाल देना चाहिए । घी में एक वित्ते के गांठ लगे हुए कुश को डालकर इडा आदि के दो पक्षों की तथा बाहर की तीन पक्षों की भावना करनी चाहिए ।स्रुव से क्रमशः तीनों भाग में घी लेकर होम करना चाहिए ।। ३५-३६ ।। स्वाहा पूर्व अग्नि में आहुति देकर अवशिष्ट अंश को घी में ही छोड़ देना चाहिए । (१) ओं हां अग्नये स्वाहा, (२) ओं हां सोमाय स्वाहा, (३) ओं हां अग्नीषोमाभ्यां स्वाहा ।। ३७ ।। नेत्रों का उद्घाटन करने (खोलने) के लिए स्रुव के द्वारा अग्नि के तीनों नेत्रों तथा मुख में इस मन्त्र से चौथी आहुति- 'ओं हामग्नये स्विष्टकृते स्वाहा' देनी चाहिए ।। ३८-३९ ।। षडङ्ग से अभिमन्त्रित करके अग्नि को धेनु मुद्रा से जगाना चाहिए । कवचमन्त्र से अवगुण्ठन करके शरमन्त्र से घी की रक्षा करनी चाहिए ।। ४० ।। हृदयमन्त्र से घृतविन्दु के विक्षेप के द्वारा अभ्युक्षण करके, शोधन, वक्त्राभिधार, संधान तथा वक्त्रैकीकरण (मुखों को एक में मिलाने की क्रिया) करनी चाहिए ।। ४१ ।। ओं हां सद्योजाताय स्वाहा' इस मन्त्र से लेकर 'ओं हामीशानाय स्वाहा' पर्यन्त इन पाञ्च मन्त्रों से एक-एक घी की आहुति देकर वक्त्राभिधार करना चाहिए ।। ४२-४३ ।। अग्निकोण से प्रारम्भ करके वायव्यकोण पर्यन्त तथा नैऋत्य कोण से प्रारम्भ करके ईशानकोण पर्यन्त स्रुव से अग्नि में घी की धारा गिराकर क्रमशः इन मन्त्रों से अग्नि की मुखों की एकता का अनुसन्धान करना चाहिए।।४५।। वे मन्त्र हैं- ओं हां सद्योजाताय स्वाहा, ओं हां वामदेवाय स्वाहा, ओं हां अघोराय स्वाहा, ओं हां तत्पुरुषाय स्वाहा, ओं हां ईशानाय स्वाहा ।। ४६ ।। इस तरह से अभिप्रेत मुख में अन्य मुखों का अन्तर्भाव करने पर अग्नि के अन्य मुख भी उसी प्रकार के हो जाते हैं । ईश मन्त्र से अग्नि की पूजा करके तीन आहुतियाँ अस्त्र मन्त्र से देनी चाहिए ।। ४७ ।। यह प्रार्थना करना चाहिए कि 'हे अग्नि तुम पूर्णरूप से शिवाग्नि हो' पुनः हृदय में विधिपूर्वक जगत् के माता पिता शिव पार्वती की पूजा करके उन्हें अग्नि में डालकर मूलमन्त्र के अन्त में वौषट् लगाकर पूर्णाहुति करनी चाहिए। उसके पश्चात् अपने हृदय कमल में अङ्ग तथा आसन से युक्त परम देदीप्यमान शिव का पहले के ही समान आवाहन करके उनका पूजन तथा तर्पण करना चाहिए ।। ४८-४९ ।। फिर मन में वामाग्नि तथा शिव के बीच नाड़ी का संधान

घृतस्य कार्षिको होमः क्षीरस्य मधुनस्तथा ॥ ५१ ॥ शुक्तिमात्राऽऽहुतिर्दध्नः प्रसृतिः पायसस्य तु । यथावत्सर्वंभक्षाणां लाजानां मुष्टिसंमितम्॥५२॥
खण्डत्रयं तु मूलानां फलानां तु प्रमाणतः । ग्रासार्धमात्रमन्नानां सूक्ष्माणि पञ्च होमयेत् ॥ ५३ ॥ इक्षोरापर्विकं मानं लतानामङ्गुलद्वयम्। पुष्पं पत्रं
स्वमानेन समिधा तु दशाङ्गुलम् ॥ ५४ ॥ चन्द्रचन्दनकाश्मीरकस्तूरीयक्षकर्दमान्। कलायसंमितोनेतान्गुग्गुलं बदरास्थिवत् ॥ ५५ ॥ कन्दानामष्टमं
भागं जुहुयाद्विधिवत्परम् । होमं निर्वर्तयेदेवं ब्रह्मबीजपदैस्ततः ॥ ५६ ॥ थृतेन सुचि पूर्णानां निधायाधोमुखं स्त्रुवम् स्त्रुगग्रे पुष्पमारोप्य पश्चाद्वामेन
पाणिना ॥ ५७ ॥ पुनः सव्येन तौ धृत्वा शङ्खसंनिभमुद्रया। समुद्गतोर्ध्वकायश्च समपादः समुत्थितः ॥ ५८ ॥ नाभौ तन्मूलमाधाय स्त्रुगग्रव्यग्रलोचनः।
ब्रह्मादिकारणत्यागाद्विनिःसृत्य सुषुम्णया ॥ ५९ ॥ वामस्तनान्तमानीय तयोर्मूलमतन्द्रितः । मूलमन्त्रमविस्पष्टं वौषडन्तं समुच्चरेत् ॥ ६० ॥ तदग्नौ
जुहुयादाज्यं यवसंमितधारया। आचामं चन्दनं दत्त्वा ताम्बूलप्रभृतीनपि ॥ ६१ ॥ भक्तया तद्भूतिमावन्द्य विदध्यात्प्रणतिं पराम् । ततो वह्निं समभ्यर्च्य
फडन्तास्त्रेण सम्वरान् ॥६२॥ संहारमुद्रयाऽऽहृत्य क्षमस्वेत्यभिधाय च । भासुरान्परिधींस्तांश्च पूरकेण हृदाऽणुना॥ ६३॥ श्रद्धया परमाऽऽत्मीये
स्थापयेद्धृदयाम्बुजे । सर्वपाकाग्रमादाय कृत्वा मण्डलकद्वयम् ॥ ६४ ॥ अन्तर्बहिर्बलिं दद्यादाग्नेय्यां कुण्डसंनिधौ । ॐ हां रुद्रेभ्यः स्वाहा पूर्वे
मातृभ्यो दक्षिणे तथा ॥ ६५॥ वारुणे हां गणेभ्यश्च स्वाहा तेभ्यस्त्वयं बलिः । उत्तरे हां च यक्षेभ्यः ईशाने हां ग्रहेभ्य उ ॥ ६६ ॥ अग्नौ हामसुरेभ्यश्च

करना चाहिए। ५१ ।। अपनी शक्ति के अनुसार अंगों के दशांश तथा मूल मन्त्र के दशांश का हवन करना चाहिए । घी का हवन स्त्रुव के छिद्र के चौथाई भाग के परिमाण से, दुग्ध, दही तथा मधु का होम सीपी परिमाण से तथा सभी भक्ष्य पदार्थों एवं लावा का होम मुट्ठीभर के परिमाण से करना चाहिए ।। ५१-५२ ।। मूलों का हवन उनके तीन टुकड़े करके करना चाहिए, फलों को काटकर आधा ग्रास के परिमाण का बनाकर करना चाहिए तथा अन्नों के सूक्ष्म भागों की पाँच आहुतियाँ देनी चाहिए ।। ५३ ।। इसके एक-एक गांठ पर्यन्त के टुकड़े का तथा लताओं के दो-दो अंगुल के टुकड़े का हवन करना चाहिए, पत्र तथा पुष्प का उनके परिमाण के अनुसार तथा समिधा का हवन दस-दस अंगुल के टुकड़ों से करना चाहिए ।। ५४ ।। कर्पूर, चन्दन, केसर, कस्तूरी तथा इन सबों के मिश्रण का मसूर के बराबर हवन करना चाहिए तथा गुग्गुल की आहुति वैर की गुठली के बराबर परिमाण की देनी चाहिए ।। ५५ ।। कन्दों के आठवें भाग की आहुति देनी चाहिए । इस प्रकार से विधिपूर्वक आहुति देनी चाहिए । इस तरह से विधिपूर्वक होम पूरा करके अन्त में ब्रह्मबीज मन्त्र द्वारा घी से भरे स्रुक् के ऊपर स्त्रुवा को रखे स्त्रुक् के आगे पुष्प रखकर उसे बाएँ हाथ से पकड़कर, पुनः दाहिने हाथ से उन दोनों सुक् तथा सुव को पकड़कर शंख के समान मुद्रा बनाए दोनों पैरों को उठाकर खड़ा हो जाय ।। ५६-५८ ।। स्त्रुक् के अग्रभाग को देखते हुए उसके मूल को नाभि पर लगाए । ब्रह्मा आदि के कारणत्व का त्याग कर देने से सुषुम्णा नाड़ी से वामस्तन पर्यन्त उन दोनों (स्त्रुक् तथा स्त्रुव) को लाकर अस्पष्ट रूप से मूल मन्त्र का अन्त में वौषट् लगाकर उच्चारण करना चाहिए । यव के समान मोटी धारा से उस (स्त्रुक् के) घी की धारा अग्नि में डालनी चाहिए । पुनः अग्नि को आचमन, चन्दन तथा ताम्बूल आदि देनी चाहिए ।। ६१ ।। भक्तिपूर्वक अग्नि की विभूति की बन्दना करके अग्नि को प्रणाम करना चवाहिए । फिर अग्नि की पूजा करके संहारमुद्रा से फट् लगाकर अन्त में संहार मुद्रा के द्वारा जल को लाकर 'क्षमा कीजिए' यह उच्चारण करना चाहिए । पूरक करते हुए हृदयमन्त्र से देदीप्यमान परिधियों और उनके देवताओं को श्रद्धापूर्वक परमात्मक अपने हृदयकमल में धारण करना चाहिए। सभी पाकों के अग्रभाग को लेकर दो मण्डल बनाकर कुण्ड के सन्निकट अग्निकोण में मण्डप के भीतर तथा बाहर बलि देनी चाहिए ।। ६२-६४।। ओं हां रुद्रेभ्यः स्वाहा इस मन्त्र से पूर्व में, ओं हां मातृभ्यः स्वाहा, इस मन्त्र से दक्षिण में, ओं हाँ गणेभ्यः स्वाहा इस मन्त्र से पश्चिम दिशा में, ओं हां यक्षेभ्यः स्वाहा, इस मन्त्र से उत्तर दिशा में, ओं हां ग्रहेभ्यः स्वाहा, इस मन्त्र से ईशानकोण में, ओं हां असुरेभ्यः स्वाहा, इस मन्त्र से अग्निकोण में, ओं हां रक्षोभ्यः स्वाहा, इस मन्त्र से नैर्ऋत्य कोण में, ओं हां नागेभ्यः स्वाहा, इस मन्त्र से वायव्यकोण में, ओं हां नक्षत्रेभ्यः स्वाहा, इस मन्त्र से यागमण्डप के बीच में, हों आं राशिभ्यः स्वाहा, इस मन्त्र से अग्निकोण में, ओं हां विश्वेभ्यो देवेभ्यः स्वाहा, इस मन्त्रसे नैर्ऋत्य कोण में तथा ओं हां क्षेत्रपालाय स्वाहा, इस मन्त्र से पश्चिम दिशा में बलि देना चाहिए ।। ६५-६७ ।। इसे

रक्षोभ्यो नैर्ऋते बलिः । वायव्ये हां च नागेभ्यो नक्षत्रेभ्यश्च मध्यतः ॥ ६७ ॥ हां राशिभ्यः स्वाहा वह्नौ विश्वेभ्यो नैर्ऋते तथा। वारुण्यां क्षेत्रपालाय अन्तर्बलिरुदाहृतः ॥ ६८ ॥ द्वितीय मण्डले बाह्य इन्द्रायाग्नेर्यमाय च । नैर्ऋताय जलेशाय वायवे धनरक्षिणे ॥ ६९॥ ईशानाय च पूर्वादावीशाने ब्रह्मणे नमः । नैर्ऋते विष्णवे स्वाहा वायसादेर्बलिर्बहिः ॥ ७० ॥ बलिद्वयगतान्मन्त्रान्संहरेन्मुद्रयाऽऽत्मनि॥ ७१॥

इत्याग्नेये महापुराणे शिवपूजाङ्गहोमविधिनिरूपणं नाम पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

## अथ षट्सप्ततितमोऽध्यायः

### चण्डपूजा

ईश्वर उवाच— **ततः शिवान्तिकं गत्वा पूजाहोमादिकं मम । गृहाण भगवन्पुण्यफलमित्यभिधाय च ॥ १ ॥ अर्घ्योदकेन देवाय मुद्रयोद्भवसंज्ञया। हृद्बीजपूर्वमूलेन स्थिरचित्तो निवेदयेत् ॥ २ ॥ ततः पूर्ववदभ्यर्च्य स्तुत्वा स्तोत्रैः प्रणम्य च । अर्घ्यं पराङ्मुखं दत्त्वा क्षमस्वेत्यभिधाय च ॥ ३ ॥ नाराचमुद्रयाऽस्त्रेण फडन्तेनाऽऽत्मसंचयम् । संहृत्य दिव्यया लिङ्गं मूर्तिमन्त्रेण योजयेत् ॥ ४॥ स्थण्डिले त्वर्चिते देवे मन्त्रसंहारमात्मनि । नियोज्य विधिनोक्तेन विदध्याच्चण्डपूजनम् ॥ ५ ॥ ॐ चण्डेशानाय नमो मध्यतश्चण्डमूर्तये । ॐ धूलिचण्डेश्वराय हूं फट् स्वाहा तमाह्वयेत् ॥ ६ ॥ चण्डहृदयाय हूं फडों चण्डशिरसे तथा । ॐ चण्डशिखायै हूं फट् चण्डायुष्कवचाय चं ॥ ७ ॥ चण्डास्त्राय तथा हूं फट् चण्डं रुद्राग्निजं स्मरेत्।**

---

ही अन्तर्वलि कहते हैं । यज्ञमण्डप के बाहर वाले मण्डल में इन्द्राय नमः, अग्नये नमः, यमाय नमः, नैर्ऋत्ये नमः, वरुणा यनमः, वायवे नमः, धनदाय नमः, ईशानाय नमः, इन मन्त्रों से पूर्व आदि आठों दिशाओं के दिक्पालों को पुनः ईशानकोण में ब्रह्मणे नमः मन्त्र से ब्रह्मा के लिए तथा नैर्ऋत्य कोण में विष्णवे स्वाहा मन्त्र से विष्णु के लिए बलि देनी चाहिए । फिर कौए आदि की बलि बाहर देनी चाहिए । इन दोनों प्रकार के बलियों के मन्त्रों का संहार मुद्रा से अपनी आत्मा में संहार करना चाहिए ।। ६९-७१ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का शिवपूजाङ्गहोम विधि का निरूपण नामक पचहत्तरवाँ अध्याय सम्पूर्ण हुआ ॥ ७५ ॥**

**श्री शिवजी ने कहा—** इसके पश्चात् शिवजी के सन्निकट जाकर यह प्रार्थना करनी चाहिए कि हे भगवन् ! आप मेरे द्वारा की गयी पूजा तथा होम एवं उनके फल को स्वीकार करें ।। १ ।। तदनन्तर उद्भव मुद्रा के द्वारा हृदयबीजपूर्वक मूल मन्त्र से शान्तचित्त होकर भगवान् शंकर के लिए अर्घ्य का जल प्रदान करें ।। २ ।। उसके पश्चात् पहले के ही समान अर्चना करके, स्तुति करके तथा प्रणाम करके भगवान् शंकर की ओर मुँह करके अर्घ्य देना चाहिए और 'क्षमा करें' यह कहना चाहिए ।। ३ ।। अस्त्राय फट् इस मन्त्र के द्वारा बाण मुद्रा के द्वारा आत्मसंचय करके तथा दिव्य मुद्रा के द्वारा उसका संहार करके लिङ्ग को मूर्तिमन्त्र से संयुक्त करना चाहिए ।। ४ ।। बेदी के ऊपर श्रीशङ्कर जी की पूजा हो जाने पर उपर्युक्त विधि से मंत्र का संहार अपनी आत्मा में करके चण्ड की पूजा ओं चण्डेशानाय नमः इस मन्त्र से करनी चाहिए और मण्डप के मध्य में ओं चण्डमूर्तये नमः इस मन्त्र से पूजा करनी चाहिए । ओं धूलिचण्डेश्वराय नमः इस मन्त्र से चण्ड का आवाहन करना चाहिए ।। ५-६ ।। पुनः 'ओं चन्द्रहृदयाय हूं फट्, ओं चण्डशिरसे स्वाहा, ओं चण्डशिखायै हूं फट्, ओं चण्डाय कवचाय हुम्, ओं चण्डास्त्राय हूं फट्, इस प्रकार से अङ्गन्यास करके रुद्राग्नि से उत्पन्न चण्ड का स्मरण करना चाहिए ।। ७ ।। त्रिशूल तथा टङ्क धारण करने वाले, कृष्ण वर्ण के तथा अक्षसूत्र एवं कमण्डलुधारी टङ्क के आकार पर अथवा अर्धचन्द्र के ऊपर चार मुख वाले

शूलटङ्कधरं कृष्णं साक्षसूत्रकमण्डलुम् ॥ ८॥ टङ्कारेऽर्धचन्द्रे वा चतुर्वक्त्रं प्रपूजयेत् । यथाशक्ति जपं कुर्यादङ्गानां तु दशांशतः॥ ९॥ गोभूहिरण्यवस्त्रादिमणिहेमादिभूषणम् । विहाय शेषनिर्माल्यं चण्डेशाय निवेदयेत् ॥ १० ॥ लेह्यचोष्याद्यन्नवरं ताम्बूलं स्रग्विलेपनम्। निर्माल्यं भोजनं तुभ्यं प्रदत्तं तु शिवाज्ञया ॥ ११ ॥ सर्वमेतत्क्रियाकाण्डं मया चण्ड तवाज्ञया । न्यूनाधिकं कृतं मोहात्परिपूर्णं सदाऽस्तु मे॥१२॥ इति विज्ञाप्य देवेशं दत्त्वाऽर्घ्यं तस्य संस्मरन् । संहारमूर्तिमन्त्रेण शनैः संहारमुद्रया ॥ १३ ॥ पूरकान्वितमूलेन मन्त्रानात्मनि योजयेत् । निर्माल्यापनयस्थानं लिम्पेद्गोमयवारिणा ॥ १४ ॥ प्रोक्ष्यार्घ्यादि विसृज्याथ आचान्तोऽन्यसमाचरेत् ॥ १५ ॥

इत्यादिमहापुराणे आग्नेये चण्डपूजाकथनं नाम षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

## अथ सप्तसप्ततितमोऽध्यायः

### कपिलापूजनम्

ईश्वर उवाच– **कपिलापूजनं वक्ष्य एभिर्मन्त्रैर्यजेच्च गाम् । ॐ कपिले नन्दे नमः कपिले भद्रिके नमः ॥ १ ॥ कपिले सुशीले नमः कपिले सुरभिप्रभे । ॐ कपिले सुमनसे नमः भुक्तिमुक्तिप्रदे नमः ॥२ ॥ सौरभेयि जगन्मातर्देवानाममृतप्रदे । गृहाण वरदे ग्रासमीप्सितार्थं च देहि मे ॥ ३॥ बन्दिताऽसि वसिष्ठेन विश्वामित्रेण धीमता । कपिले हर मे पापं यन्मया दुष्कृतं कृतम् ॥ ४ ॥ गावो ममाग्रतो नित्यं गावः पृष्ठत एव च । गावो मे हृदये चापि गवां मध्ये वसाम्यहम् ॥५ ॥ दत्तं गृहाण मे ग्रासं जप्त्वास्यान्निर्मलः शिवः । प्राच्र्य विद्यापुस्तकानि गुरुपादौ नमेन्नरः ॥ ६ ॥ यजेत्स्नात्वा**

चण्ड की पूजा करनी चाहिए । पुनः अपनी शक्ति के अनुसार अङ्गों का दशांश जप करना चाहिए ।। ८-९ ।। गौ, भूमि, सुवर्ण,वस्त्र आदि मणि तथा सुवर्ण आदि के भूषण को छोड़ शेष निर्माल्य को चण्डेश को निवेदित कर देना चाहिए।।१०।। उसके पश्चात् हे चण्ड ! भगवान् शिव की आज्ञा से लेह्य तथा चोष्य, उत्तम कोटि के अन्न, ताम्बूल, माला, चन्दन तथा निर्माल्य भोजन आपको प्रदान किया है।।११।। हे चण्ड ! मैंने यह सम्पूर्ण कर्मकाण्ड आपकी आज्ञा से किया है,यदि मोहवश किसी प्रकार की न्यूनता अथवा अधिकता हो गयी हो तो वह परिपूर्ण हो जाय।।१२।। इस प्रकार से चण्डेश की प्रार्थना करके तथा अर्घ्य प्रदान करके देवता का स्मरण करते हुए संहारमूर्ति मन्त्र से संहारमुद्रा के द्वारा धीरे-धीरे पूरक प्राणायाम से युक्त मूलमन्त्र से मन्त्रों को अपनी आत्मा में संयुक्त करना चाहिए। निर्माल्य को हटाकर उस स्थान को गोबर तथा वस्त्र से लीप देना चाहिए । पुनः उसका प्रोक्षण करके तथा अर्घ्य आदि देकर उसके बाद में आचमन करे फिर कोई दूसरा काम करे।।१३-१५।।

**इस तरह से आदिमहापुराण अग्निपुराण का चण्डपूजा वर्णन नामक छिहत्तरवाँ अध्याय सम्पूर्ण हुआ ॥ ७६ ॥**

**श्री शिवजी ने कहा–** अब मैं कपिला पूजन का वर्णन कर रहा हूँ । इन्हीं मन्त्रों से गौ की पूजा करनी चाहिए । (१) ओं कपिले नन्दे नमः, (२) ओं कपिले भद्रिके नमः, (३) ओं कपिले सुशीले नमः, (४) ओं कपिले सुमनसे नमः, (५) ओं कपिले भुक्तिमुक्तिप्रदे नमः ।। १-२ ।। हे सुरभिपुत्रि ! हे जगत् की माँ । देवताओं को अमृत प्रदान करने वाली, आप ग्रास ग्रहण करें तथा मुझे अभिलषित अर्थ प्रदान करें ।। ३ ।। आपकी बन्दना बुद्धिमान वसिष्ठ ने तथा विश्वामित्र ने की है । मैंने जो कुछ भी पाप किया है, हे कपिले ! आप उसे विनष्ट कर दें ।। ४ ।। गाय सदा मेरे आगे रहें, तथा मेरे पीछे रहें, मेरे हृदय में गौ निवास करें मैं गौओं के भीतर निवास करता हूँ ।। ५ ।। मेरे द्वारा दिया गया ग्रास आप स्वीकार करें । इस तरह से पढ़कर निर्मल (पाप रहित) तथा कल्याणमय बना हुआ मनुष्य विद्या तथा पुस्तक की पूजा करके आचार्य के चरणों में प्रणाम करे ।। ६ ।। दोपहर में स्नान करके मनुष्य स्वयम् अष्टपुष्पिका से पूजन करे । पीठमूर्ति तथा शिव

तु मध्याह्ने अष्टपुष्पिकया स्वयम् । पीठमूर्तिशिवाङ्गानां पूजा स्यादष्टपुष्पिका ॥ ७ ॥ मध्याह्ने भोजनागारे सुलिप्ते पाकमानयेत् । ततो मृत्युञ्जयेनैव वौषडन्तेन सप्तधा ॥ ८ ॥ जप्तैः सदर्भशङ्खस्थैः सिञ्चेत्तं वारिबिन्दुभिः । सर्वपाकाग्रमुद्धृत्य शिवाय विनिवेदयेत् ॥ ९ ॥ अथार्ध चुल्लिकाहोम विधानायोपकल्पयेत्। विशोध्य विधिना चुल्लीं तद्वह्निं पूरकाहुतिम् ॥ १०॥ हुत्वा नाभ्यग्निना चैकं ततो रेचकवायुना । वह्निबीजं समादाय कादिस्थानगतिक्रमात् ॥११॥ शिवाग्निस्त्वमिति ध्यात्वा चुल्लिकाग्नौ निवेशयेत् । ॐ हामग्नये च नमो वै हां सोमाय वै नमः ॥ १२ ॥ सूर्याय बृहस्पतये प्रजानां पतये नमः । सर्वेभ्यश्चैव देवेभ्यः सर्वविश्वेभ्य एव च ॥ १३ ॥ हामग्ये स्विष्टकृते पूर्वादावर्चयेदिमान् । स्वाहान्तमाहुतिं दत्त्वा क्षमयित्वा विसर्जयेत्॥१४॥ चुल्ल्या दक्षिणबाहौ च यजेद्धर्माय वै नमः । वामबाहावधर्माय काञ्जिकादिकभाण्डके ॥ १५ ॥ रसपरिवर्तमानाय वरुणाय जलाश्रये । विघ्नराजे गृहद्वारे पेषण्यां सुभगे नमः ॥ १६ ॥ ॐरौद्रिके गिरिके च नभश्चोलूखले यजेत्। बलिप्रियायाऽऽयुधाय नमस्ते मुसले यजेत्॥ १७ ॥ सम्मार्जन्यां देवतोक्ते कामाय शयनीयके । मध्यस्तम्बे च स्कन्दाय दत्त्वा बास्तुबलिं ततः ॥ १८ ॥ भुञ्जीत पात्रे सौवर्णे पद्मिन्यादिदलादिके। आचार्यः साधकः पुत्रः समयी मौनमास्थितः ॥ १९ ॥ वटाश्वत्थार्कवातारिसर्जभल्लातकांस्त्यजेत् । आपोशान पुराऽऽदाय प्राणाद्यैः प्रणवान्वितैः॥ २०॥ स्वाहान्ते चाऽऽहुतीः पञ्च दत्त्वाऽऽदीप्योदरानलम् । नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जयः ॥ २१ ॥ एतेभ्य उपवायुभ्यः स्वाहाऽऽपोशनवारिणा। भक्तादिकं निवेद्याथ पिबेच्छेषोदकं नरः ॥२२॥ अमृतोपस्तरणमसि प्राणाहुतीस्ततो ददेत् । प्राणाय स्वाहाऽपानाय

के अंगों की पूजा ही अष्टपुष्पिका कहलाती है ।। ७ ।। दोपहर में अच्छी तरह से लिपे हुए भोजनालय में पाक सामग्री लानी चाहिए। उसके पश्चात् मृत्युञ्जयमन्त्र के अन्त में वौषट् लगाकर सात बार जप करे और शंख में कुश रखे गए जल को उस भोजन सामग्री पर छिड़के । सम्पूर्ण भोजन में से थोड़ा-थोड़ा निकालकर उसे शिवजी को निवेदित करना चाहिए ।। ९ ।। उसका आधा भाग चूल्ही में होम करने के लिएअलग कर लेना चाहिए । विधिपूर्वक चूल्हे तथा अग्नि को शुद्ध करके उसमें पूर्णाहुति देनी चाहिए ।। १० ।। एक बार नाभि की अग्नि से होम करके, उसके पश्चात् रेचक वायु से वह्निबीज को लेकर, कादि स्थान गति के क्रमसे तुम ही शिवाग्नि हो इस प्रकार से ध्यान करके उसके चूल्हे की अग्नि में ध्यान के द्वारा स्थापित करना चाहिए ।। ११ ।। (१) ओं हामग्नये नमः, (२) ओं हाँ सोमाय नमः, (३) ओं हाँ सूर्याय नमः, (४) ओं हाँ बृहस्पतये नमः, (५) ओं हाँ प्रजापतये नमः, (६) ओं हाँ सर्वेभ्योदेवेभ्यो नमः, (७) ओं सर्वेभ्यो विश्वदेभ्यो नमः, (८) ओं हामग्नये स्विष्टकृते नमः । इस प्रकार से पूर्व आदि आठों दिशाओं में इन्द्र आदि देवताओं की पूजा करके, इन सभी देवताओं के लिए उनके मन्त्रों के अन्त में स्वाहा लगाकर आहुति देनी चाहिए, फिर क्षमा प्रार्थना करके उनका विसर्जन करना चाहिए ।। १२-१४ ।। चूल्हे के दक्षिण भुजा पर 'ओं धर्माय नमः' इस मन्त्र से धर्म की, बायीं भुजा पर 'ओं अधर्माय नमः' इस मन्त्र से अधर्म की, काञ्जी आदि के पात्र पर 'ओं रस परिवर्तनाय नमः' इस मन्त्र से, जल पात्र के ऊपर 'ओं ब्राह्मणाय नमः' इस मन्त्र से, गृह के द्वार पर 'ओं विघ्नराजाय नमः' इस मन्त्र से गृह के ऊपर 'ओं सुभगे नमः' ओखल पर, 'रौद्रिके गिरिके च नमः' इस मन्त्र से तथा 'नभसे नमः' इस मन्त्र से पूजन करना चाहिए । मुसल पर 'बलिप्रियायायुधाय नमः' इस मन्त्र से पूजन करना चाहिए।।१५-१७ ।। झाड़ू तथा शय्या पर 'कामाय नमः' इस मन्त्र से काम की पूजा करनी चाहिए । मध्यस्तम्ब पर 'स्कन्दाय नमः' इस मन्त्र से स्कन्द की पूजा करके उसके पश्चात् वास्तुबलि देनी चाहिए।।१८।। उसके पश्चात् सोने के पात्र में अथवा कमल के पत्ते पर आचार्य, साधक, पुत्र तथा समयी को मौन होकर भोजन करना चाहिए ।। १९ ।। वट, पीपल, मदार, सर्ज तथा भाल्लातक के पत्ते पर भोजन नहीं करना चाहिए । भोजन करने से पहले आपोशान (जल का आचमन) करके पाँच ग्रास प्राणों को नाम के पहले 'ओं' तथा अन्त में स्वाहा लगाकर प्राणाहुति देकर प्राणाग्नि को उद्दीप्त करना चाहिए।।२०।। पुनः नाग, कूर्म,कृकर,देवदत्त, धनञ्जय इन वायुओं के अधिष्ठातृ देवता के लिए भी 'ओं नागाय स्वाहा, ओं कूर्माय स्वाहा, ओं कृकराय स्वाहा, ओं देवदत्ताय स्वाहा, ओं धनञ्जयाय स्वाहा, इन मन्त्रों

समानाय ततस्तथा ॥ २३ ॥ उदानाय च व्यानाय भुक्त्वा चुल्लकमाचरेत् । अमृतापिधानमसीति शरीरेऽन्नादनाय च ॥ २४ ॥

इत्यादि महापुराणे आग्नेये कपिलापूजनादिविधिकथनं नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

## अथाष्टसप्ततितमोऽध्यायः

## पवित्राधिवासनविधिकथनम्

ईश्वर उवाच– **पवित्रारोहणं वक्ष्ये क्रियार्चादिषु पूरणम् । नित्यं तन्नित्यमुद्दिष्टं नैमित्तिकमथापरम् ॥ १ ॥ आषाढादिचतुर्दश्यामथ श्रावणभाद्रयोः । सितासितासु कर्तव्यं चतुर्दश्यष्टमीषु तत् ॥ २ ॥ कुर्याद्वा कार्तिकीं यावत्तिथौ प्रतिपदादिके । वह्निब्रह्माम्बिकेभास्यनागस्कन्दार्कशूलिनाम् ॥ ३ ॥ दुर्गायमेन्द्रगोविन्दस्मरशंभुसुधाभुजाम्। सौवर्णं राजतं ताम्रं कृतादिषु यथाक्रमम् ॥ ४ ॥ कलौ कार्पासजं वाऽपि पट्टपद्मादिसूत्रकम् । प्रणवश्चन्द्रमा वह्निर्ब्रह्मा नागो गुहो हरिः॥५॥ सर्वेशः सर्वदेवाः स्युः क्रमेण नवतन्तुषु । अष्टोत्तरशतान्यर्धं तदर्धं चोत्तमादिकम् ॥ ६ ॥ एकाशीत्यऽथवा सूत्रैस्त्रिंशताऽप्यष्टयुक्तया । पञ्चाशता वा कर्तव्यं तुल्यग्रन्थ्यन्तरालकम् ॥ ७ ॥ द्वादशाङ्गुलमानानि व्यासादष्टाङ्गुलानि च । लिङ्गबिस्तारमानानि चतुरङ्गुलिकानि वा॥८॥ तथैव पिण्डिकास्पर्शं चतुर्थं सार्वदैवतम् । गङ्गावतारकं कार्यं प्रजातेन सुधौतकम् ॥ ९ ॥ ग्रन्थिं कुर्याच्च वामेन अघोरेणाथ**

से पाँच ग्रास की आहुति भात इत्यादि से देकर जल से आपोशान करें और अन्त में बचे जल को पी जाय ।। २१-२२ ।। इसके बाद बचे हुए अन्न की 'अमृतोपस्तरणमसि' इस मन्त्र से आहुति देनी चाहिए ।। २२।। पाँचों प्राणों की आहुतियों के मन्त्र ये हैं– (१) ओं प्राणाय स्वाहा, ओं अपानाय स्वाहा, ओं समानाय स्वाहा, ओं उदानाय स्वाहा तथा ओं व्यानाय स्वाहा । इन पाञ्चों आहुतियों के अन्त में एक चुल्लु जल पीना चाहिए । शरीर में अन्न पचाने के लिए 'अमृतापिधानमसि' इस मन्त्र का उच्चारण चुल्लु का जल पीते समय करना चाहिए।।२३-२४ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का कपिलापूजन आदि की विधि का वर्णन नामक सतहत्तरवाँ अध्याय सम्पूर्ण हुआ ।**

**श्रीशिवजी ने कहा**– अब मैं पवित्राधिरोपण का वर्णन करूँगा जिससे क्रियाओं तथा अर्चा आदि की नित्य पूर्ति होती है । वह दो प्रकार का होता है, नित्य तथा नैमित्तिक ।। १ ।। आषाढ़ मास की आदि (शुक्ल) चतुर्दशी तिथि को तथा श्रावण एवं भाद्रपद मास की शुक्ल एवं कृष्ण दोनों पक्षों की चतुर्दशी एवं अष्टमी तिथि को पवित्र होता है ।। २ ।। अथवा कार्तिक महीने पर्यन्त प्रतिपदादि तिथियों में पवित्रक करना चाहिए । अग्नि, ब्रह्मा, अम्बिका, गणेश, नाग, स्कन्द, सूर्य, शिव, दुर्गा, यम, इन्द्र, गोविन्द, काम तथा शंभु इन देवताओं का पवित्रारोहण करना चाहिए । सत्ययुग, त्रेतायुग, एवं द्वापरयुग में क्रमशः सुवर्ण, चाँदी तथा ताम्बे का पवित्रक होता था ।। ३-४ ।। किन्तु कलियुग में उसे कपास, या पट्टसूत्र या पद्मसूत्र का होना चाहिए । पवित्रक के नव तन्तुओं के क्रमशः ये देवता हैं- प्रणव, चन्द्रमा, अग्नि, ब्रह्मा, नाग, गुह, श्रीहरि, सर्वेश एवं सर्वदेव ।। ५ ।। अष्टोत्तरशत, अथवा उसके आधा चौवन, अथवा उसके आधा सत्ताइस पवित्रक क्रमशः उत्तम, मध्यम तथा अधम कोटि के होते हैं ।। ६ ।। पवित्रकों को इक्यासी अथवा अड़तीस अथवा पच्चास अंगुल का बनाना चाहिए । उनकी ग्रन्थियों का अन्तराल (दूरी) एक समान होनी चाहिए।।७ ।। उनको बारह अंगुल प्रमाण का अथवा आठ अंगुल मान का अथवा जितनी लिङ्ग की लम्बाई हो उतने मान का अथवा चार अंगुल के मान का होना चाहिए । चौथे प्रकार का सार्वदैवत पवित्रक होता है जिसका मान लिङ्ग से लेकर पिण्डिका को स्पर्श करने वाला होता है । इसे अङ्गावतार नामक पवित्रक कहते हैं। इसे सुन्दर रुई से बने सुन्दर घौतवस्त्र का बनाना चाहिए ।। ९ ।। पवित्रक की ग्रन्थि बाएँ हाथ से लगानी चाहिए और अघोरमन्त्र से उसका शोधन करना चाहिए । पुरुषसूक्त का पाठ करते हुए उसको रक्तचन्दन, कुङ्कुम, कस्तूरी, गोरोचन, कर्पूर, हल्दी तथा गेरु आदि से रंगना चाहिए ।

शोधयेत् । रञ्जयेत्पुरुषेणैव रक्तचन्दनकुङ्कुमैः ॥ १० ॥ कस्तूरीरोचनाचन्द्रैर्हरिद्रागैरिकादिभिः। ग्रन्थयो दश कर्तव्या अथवा तन्तुसंख्यया॥११॥ अन्तरं वा यथाशोभमेकद्विचतुरङ्गुलम् । प्रकृतिः पौरुषी वीरा चतुर्थी त्वपराजिता ॥ १२ ॥ जयाऽन्या विजया षष्ठी अजिता च सदा शिवा । मनोन्मनी सर्वमुखी ग्रन्थयोऽभ्यधिकाः शुभाः ॥ १३ ॥ कार्या वा चन्द्रवह्न्यर्कपवित्रं शिववद्धृदि । एकैकं निजमूर्तौ वा पुस्तके गुरुके गणे ॥ १४॥ स्यादेकैकं तथा द्वारदिक्पालकलशादिषु । हस्तादिनवहस्तान्तं लिङ्गानां स्यात्पवित्रकम् ॥ १५ ॥ अष्टाविंशतितो वृद्धं दशभिर्दशभिः क्रमात् । द्व्यङ्गुलाभ्यन्तरास्तत्र क्रमादेकाङ्गुलान्तराः ॥ १६ ॥ ग्रन्थयो मानमप्येषां लिङ्गविस्तारसम्मितम् । सप्तम्यां वा त्रयोदश्यां कृतनित्यक्रियः शुचिः॥१७॥ भूषयेत्पुष्पवस्त्राद्यैः सायाह्ने यागमन्दिरम् । कृत्वा नैमित्तिकीं सन्ध्यां विशेषेण च तर्पणम् ॥ १८ ॥ परिगृहीते भूभागे पवित्रे सूर्यमर्चयेत् । आचम्य सकलीकृत्य प्रणवार्घ्यकरो गुरुः ॥ १९ ॥ द्वाराण्यस्त्रेण संप्रोक्ष्य पूर्वादिक्रमतोऽर्चयेत् । हां शान्तिकलाद्वाराय तथा विद्याकलात्मने ॥ २० ॥ निवृत्तिकलाद्वाराय प्रतिष्ठाख्यकलात्मने । तच्छाखयोः प्रतिद्वारं द्वौ द्वौ द्वाराधिपौ यजेत् ॥ २१ ॥ नन्दिने महाकालाय भृङ्गिणेऽथ गणाय च । वृषभाय च स्कन्दाय देव्यै चण्डाय च क्रमात् ॥ २२ ॥ नित्यं च द्वारपालादीन्प्रविश्य द्वारि पश्चिमे । इष्ट्वा वास्तुं भूतशुद्धिं विशेषार्घ्यकरः शिवः॥२३॥ प्रोक्षणाद्यं विधायाथ यज्ञसंस्कारकृन्नरः । मन्त्रयेद्दर्भदूर्वाद्यैः पुष्पाद्यैश्च हृदादिभिः ॥ २४ ॥ शिवहस्तं विधायेत्थं स्वशिरस्यधिरोपयेत्। शिवोऽहमादिः सर्वज्ञो मम यज्ञप्रदानता ॥ २५॥ अत्यर्थं भावयेद्देवं ज्ञानखड्गकरो गुरुः । नैर्ऋतीं दिशमासाद्य प्रक्षिपेदुदगाननः ॥ २६ ॥ अर्घ्याम्बु

पवित्रक में दस ग्रन्थियों को लगाना चाहिए अथवा पवित्रक के तन्तुओं की संख्या के अनुसार ग्रन्थियों को लगाना चाहिए ।। १०-११ ।। जैसे अच्छा लगे उसके अनुसार ग्रन्थियों का अन्तराल एक अंगुल, दो अंगुल अथवा चार अंगुल का होना चाहिए । ग्रन्थियों की ये दस अधिष्ठातृ देवता हैं- (१) प्रकृति, (२) पौरुषी, (३) वीरा, (४) अपराजिता, (५) जया, (६) विजया, (७) अजिता, (८) सदाशिवा, (९) मनोन्मनी और (१०) सर्वमुखी । ग्रन्थियाँ दस से अधिक भी बनायी जा सकती हैं ।। १२-१३ ।। पवित्रक को चन्द्रमण्डल, अग्निमण्डल तथा सूर्यमण्डल के द्वारा पवित्र एवं शिव के समान मानकर हृदय में धारण करना चाहिए । इन पवित्रकों में से एक-एक पवित्रक को अपनी मूर्ति पर, पुस्तक पर तथा अपने गुरुओं को समर्पित करना चाहिए । एक-एक पवित्रक द्वारपालों दिक्पालों तथा यागमण्डप के कलशों पर चढ़ाना चाहिए । लिंगों का पवित्रक एक हाथ से लेकर नव हाथ तक का लम्बा होना चाहिए।।१४-१५।। एक हाथ के पवित्रक में अट्ठाइस ग्रन्थियाँ होती हैं । इसके पश्चात् प्रत्येक हाथ में दस-दस ग्रन्थियाँ बढ़ती जाती हैं । इस प्रकार नव हाथ के पवित्रक में एक सौ आठ ग्रन्थियाँ होती हैं । उन ग्रन्थियों में क्रमशः एक-एक अंगुल अथवा दो-दो अंगुल का अन्तराल होता है ।।१६ ।। सप्तमी अथवा त्रयोदशी के दिन नित्य क्रिया करके पवित्र होकर सायंकाल को याग मन्दिर को पुष्प तथा वस्त्र आदि से सजा देना चाहिए । नैमित्तिक सन्ध्या करके तथा विशेष रूप से तबीज धारण करके निश्चित पवित्र भूभाग पर सूर्य की अर्चना करनी चाहिए उसके बाद आचार्य सकलीकरण करके प्रणव के द्वारा अर्घ्य प्रदान करें।।१७-१९।। प्रत्येक द्वारों पर जल छिड़ककर उनकी पूर्व आदि के क्रम से पूजा करनी चाहिए । ओं हां शान्तिकलाद्वाराय नमः, (२) ओं हा विधाकलात्मने नमः, (३) ओं हाँ निवृत्तिकलाद्वाराय नमः तथा (४) ओं हां प्रतिष्ठाख्य कलात्मने नमः, ये पूजा के मन्त्र हैं । द्वार शाखाओं के ऊपर प्रत्येक द्वार पर दो-दो द्वारपालों की पूजा करनी चाहिए । इन द्वारपालों के क्रमशः पूजा मन्त्र हैं– (१) ओं हां नन्दिने नमः,(२) ओं हाँ महाकालाय नमः, (३) ओं हां भृङ्गिणे नमः,(४) ओं हां गणाय नमः,(५) ओं हां वृषभाय नमः, (६) ओं हां स्कन्दाय नमः, (७) ओं हां देव्यै नमः तथा (९) ओं हां चण्डय नमः।।२०-२२।। नित्य ही द्वारपाल आदि की पूजा करके पश्चिम द्वार से प्रवेश करके वास्तु पूजन करना चाहिए, फिर भूतशुद्धि करके विशेष अर्घ्य का प्रदान करना कल्याणकारी होता है ।। २३ ।। मनुष्य प्रोक्षण आदि करके यज्ञ संस्कार करे, कुश,दूर्वा तथा पुष्प आदि से हृदयमन्त्र आदि से अभिमन्त्रित करना चाहिए ।। २४ ।। इस प्रकार से शिवहस्त बनाकर आचार्य अपने सिर पर हाथ रखे और यह भावना करे कि

पञ्चगव्यं च समन्तान्मखमण्डपे । चतुष्पथान्तसंस्कारैर्वीक्षणाद्यैः सुसंस्कृतैः॥२७॥ विक्षिप्य विकिरांस्तत्र कुशकूर्च्योपसंहरेत् । तानीशदिशि वर्धन्यामासनायोपकल्पयेत् ॥ २८ ॥ नैर्ऋते वास्तुगीर्वाणा द्वारे लक्ष्मीं प्रपूजयेत् । पश्चिमाभिमुखं कुम्भं सर्वधान्योपरि स्थितम् ॥ २९ ॥ प्रणवेन वृषारूढं सिंहस्थां वर्धनीं ततः। कुम्भे साङ्गं शिवं देवं वर्धन्यामस्त्रमर्चयेत् ॥ ३० ॥ दिक्षु शक्रादिदिक्पालान्विष्णुब्रह्मशिवादिकान् । वर्धनीं सम्यगादाय घटपृष्ठानुगामिनीम् ॥ ३१ ॥ शिवाज्ञां श्रावयेन्मन्त्री पूर्वादीशानगोचरम् । अविच्छिन्नपयोधारां मूलमन्त्रमुदीरयेत् ॥ ३२ ॥ समन्ताद्भ्रामयेदेनां रक्षार्थं शस्त्ररूपिणीम् । पूर्वं कलशमारोप्य शस्त्रार्थं तस्थु वामतः ॥ ३३ ॥ समग्रासनके कुम्भे यजेद्देवं स्थिरासने । वर्धन्यां प्रणवस्थायामायुधं तदनु द्वयोः ॥ ३४ ॥ भगलिङ्गसमायोगं विदध्याल्लिङ्गमुद्रया। कुम्भे निवेद्य बोधासिं मूलमन्त्रजपं तथा॥ ३५ ॥ तद्दशांशेन वर्धन्यां रक्षां विज्ञापयेदपि । गणेशं वायवेऽभ्यर्च्य हरं पञ्चामृतादिभिः ॥ ३६ ॥ हरं स्नापयेत्पूर्ववत्प्राच्य कुण्डे च शिवपावकम् । विधिवच्चरुकं कृत्वा संपाताहुतिशोधितम्॥३७॥ देवाग्न्यात्मविभेदेन दर्व्या तं विभजेत् त्रिधा दत्त्वा भागौ शिवाग्निभ्यां संरक्षेद्भागमात्मनि ॥ ३८ ॥ नरेण वर्मणा देयं पूर्वतो दन्तधावनम् । भस्मघोरशिखाभ्यां वा दक्षिणे पश्चिमे मृदम्॥३९॥ सद्योजातेन च हृदा चोत्तरे वाऽऽमलीफलम् । जलं वामेन शिरसा ईशे गन्धान्वितं जलम् ॥४०॥ पञ्चगव्यं पलाशादिपुटकं वै समन्ततः । ऐशान्यां कुसुमं दद्यादाग्नेय्यां दिशि रोचनाम् ॥ ४१ ॥ अगुरुं निर्ऋताशायां वायव्यां च चतुःसमम् । होमद्रव्याणि सर्वाणि सद्योजातैः कुशैः सह ॥ ४२ ॥ दण्डाक्षसूत्रकौपीनभिक्षापात्राणि रूपिणे । कज्जलं कुंकुमं तैलं शलाका केशशोधिनीम्॥४३॥

मैं ही आदि, सर्वज्ञ शिव हूँ । यज्ञ में मेरी ही प्रधानता होती है । इस प्रकार से आचार्य को ज्ञानरूपी कृपाण हाथ में धारण कर बहुत अधिक भावना करना चाहिए । इसके पश्चात् आचार्य नैर्ऋत्यकोण में आकर उत्तराभिमुख खड़े होकर यज्ञमण्डप में अर्घ्य के जल तथा पञ्चगव्य को छिडकें ।। २५-२६ ।। वीक्षण आदि के द्वारा चतुष्पथ संस्कारपर्यन्त संस्कार करके सरसों को छिड़ककर कुश की कुंची के द्वारा उसे विटोर लें । उन सबों को ईशानकोण में बर्धनी के ऊपर रखकर आसन बनाए ।। २७-२८ ।। इसके पश्चात् नैर्ऋत्य कोण में वास्तु की तथा सरस्वती की पूजा करनी चाहिए और द्वार पर लक्ष्मी की पूजा करनी चाहिए । फिर पश्चिमाभिमुख होकर सर्वधान्य के ऊपर रखे हुए कलश की पूजा करनी चाहिए ।। २९ ।। प्रणव के द्वारा वृषारूढ़ की तथा सिंह पर सवार वर्धनी की पूजा करके कुम्भ पर साङ्ग शिव की तथा वर्धनी पर अस्त्र की पूजा करनी चाहिए ।। ३० ।। दिशाओं में इन्द्र आदि दिक्पालों की तथा ब्रह्मा विष्णु एवं शिव आदि की पूजा करनी चाहिए । घट के पृष्ठ भाग का अनुगमन करने वाली वर्धनी को अच्छी तरह से लेकर पूर्व दिशा से लेकर ईशानकोण पर्यन्त मन्त्रज्ञ आचार्य को भगवान् शंकर की आज्ञा सुनानी चाहिए । मूलमन्त्र को पढ़ते हुए शस्त्रस्वरूपा अविच्छिन्न जलधारा को रक्षार्थ घुमाना चाहिए । शस्त्र के लिए पूर्व दिशा में स्थिर कलश को अपने बायीं ओर स्थापित करके समग्र आसन रूपी कुम्भ के ऊपर स्थिर आसन पर भगवन शंकर की पूजा करनी चाहिए ।। ३१-३३ ।। प्रणवस्थ वर्धनी के ऊपर आयुध की स्थापना करे । उसके पश्चात् उन दोनों का कलश पर लिङ्ग मुद्रा के द्वारा भग एवं लिङ्ग का संयोग कराना चाहिए । फिर ज्ञानरूपी खड्ग तथा मूलमन्त्र के जप को समर्पित करें ।। ३४-३५ ।। उसके दशांश वर्धनी के ऊपर रक्षा का विज्ञापन करना चाहिए । वायव्यकोण में गणेश तथा शिव की पूजा करके पञ्चामृत आदि से स्नान कराकर पूजा करनी चाहिए । एवं कुण्ड में शिवाग्नि की पूजा पहले के ही समान करनी चाहिए । विधिपूर्वक चरु को पकाकर देवता के लिए अपने लिए तथा अग्नि के लिए तीन भागों में करछुल से विभक्त करना चाहिए । शिव और अग्नि के भाग को उन्हें प्रदान करके अपने भाग को सुरक्षित रख देना चाहिए ।। ३६-३७ ।। मनुष्य को चाहिए कि वह पूर्वदिशा में कवच मन्त्र से दन्तधावन प्रदान करें, घोर तथा शिखा मन्त्र से दक्षिण दिशा में भस्म प्रदान करे,सद्योजात मन्त्र से पश्चिम दिशा में मिट्टी रखें, हृदयमन्त्र से बाएँ भाग में जल तथा ईशानकोण में चन्दन मिश्रित जल तथा पलाश आदि के दोने में चारों ओर पञ्चगव्य रखना चाहिए ।। ३९-४०।। ईशानकोण में पुष्प तथा अग्निकोण में गोरोचन रखना चाहिए ।। ४१ ।। नैर्ऋत्य कोण में अगुरु तथा वायव्यकोण में चतुःसम- (कस्तूरी, लवङ्ग, कर्पूर एवं कुंकुम) रखना चाहिए । उत्तर दिशा में नवीन कुशों के साथ सम्पूर्ण हवन सामग्री, दण्ड, अक्षसूत्र, कौपीन, भिक्षापात्र, काजल, कुङ्कुम, तेल, शलाका, कंघी,

ताम्बूलं दर्पणं दद्यादुत्तरे रोचनामपि । आसनं पादुके पात्रं योगपट्टातपत्रकम् ॥ ४४॥ ऐशान्यामीशमन्त्रेण दद्यादीशानतुष्टये । पूर्वस्यां चरुकं साज्यं दद्याद्गन्धादिकं नरे ॥ ४५ ॥ पवित्राणि समादाय प्रोक्षितान्यर्घ्यवारिणा । संहितामन्त्रपूतानि नीत्वा पावकसंनिधिम् ॥ ४६ ॥ कृष्णाजिनादिनाऽऽच्छाद्य स्मरन्संवत्सरात्मकम् । साक्षिणं सर्वकृत्यानां गोप्तारं शिवमव्ययम् ॥ ४७ ॥ स्वेति हेति प्रयोगेण मन्त्रसंहितया पुनः । शेधयेच्च पवित्राणि वाराणामेकविंशतिम् ॥ ४८ ॥ गृहादि वेष्टयेत्सूत्रैर्गन्धाद्यं रवये ददेत् । पूजिताय समाचम्य कृतन्यासः कृतार्घ्यकः ॥ ४९ ॥ नन्दादिभ्योऽथ गन्धाख्यं वास्तोश्चाथ प्रविश्य च । शस्त्रेभ्यो लोकपालेभ्यः स्वनाम्ना शिवकुम्भके ॥ ५० ॥ वर्धन्यै विघ्नराजाय गुरवे ह्यात्मने यजेत् । अथ सर्वौषधीलिप्तं धूपितं पुष्पदूर्वया ॥ ५१ ॥ आमन्त्र्य च पवित्रं तद्विधायाञ्जलिमध्यगम् । ॐ समस्तविधिच्छिद्रपूरणे च विधिं प्रति ॥ ५२ ॥ प्रभवान्मन्त्रयामि त्वां त्वदिच्छावाप्तिकारिकाम् । तत्सिद्धिमनुजानीहि यजतश्चिदचित्पते ॥ ५३ ॥ सर्वथा सर्वदा शंभो नमस्तेऽस्तु प्रसीद मे । आमन्त्रितोऽसि देवेश सह देव्या गणेश्वरैः ॥ ५४ ॥ मन्त्रेशैर्लोकपालैश्च सहितः परिचारकैः । निमन्त्रयाम्यहं तुभ्यं प्रभाते तु पवित्रकम्॥ ५५॥ नियमं च करिष्यामि परमेश तवाज्ञया । इत्येवं देवमामन्त्र्य रेचकेनामृतीकतम् ॥ ५६ ॥ शिवान्तं मूलमुच्चार्य तच्छिवाय निवेदयेत् । जपं स्तोत्रं प्रणामं च कृत्वा शभुं क्षमापयेत्॥५७॥ हुत्वा चरोस्तृतीयांशं तद्द दीत शिवाग्नये । दिग्वासिभ्यो दिगीशेभ्यो भूतमात्रगणैः सह ॥ ५८ ॥ रुद्रेभ्यः क्षेत्रपादिभ्यो नमः स्वाहा बलिस्त्वयम् । दिग्गजाद्यैश्च पूर्वादौ क्षेत्राय चाग्नये बलिः ॥ ५९ ॥ समाचम्य विधिच्छिद्रपूरकं होममाचरेत् । पूर्णां व्याहृतिहोमं च कृत्वा रुन्धीत पावकम् ॥ ६० ॥ तत ओमग्नये स्वाहा स्वाहा सोमाय चैव हि। ओमग्नीषोमाभ्यं स्वाहाऽग्नये स्विष्टकृते तथा ॥ ६१॥ इत्याहुतिचतुष्कं तु दत्त्वा

---

ताम्बूल, दर्पण तथा गोरोचन भी रखना चाहिए ।। ४२-४३।। ईशानकोण में भगवान् शंकर की प्रसन्नता के लिए ईशमन्त्र से, आसन, खड़ाऊँ, योगपट्ट तथा छाता रखना चाहिए । पूर्व दिशा में घी से युक्त चरु तथा गन्ध आदि प्रदान करे । अर्घ्य के जल से पोंछे गए तथा संहिता मन्त्र से पवित्र बने पवित्रों को लेकर अग्नि के सन्निकट लाएँ ।।४४-४६।। काले मृगचर्म से ढँककर संवत्सरात्मक, सम्पूर्ण कृत्यों के साक्षी तथा रक्षक नित्य शिव को स्मरण करते हुए मन्त्र संहिता के अन्त में स्वाहा पद जोड़कर इक्कीस बार पढ़कर पवित्रों का शोधन करे।।४७-४८।। गृह आदि को सूत्रों से वेष्टित करे तथा सूर्य को चन्दन आदि प्रदान करना चाहिए । पुनः पूजित सूर्य को आचमन कराकर न्यास करके अर्घ्य प्रदान करना चाहिए ।। ४९ ।। उसके बाद नन्द आदि द्वारपालों को तथा वास्तु को चन्दन चढ़ाकर मण्डप में प्रवेश करके शिवकलश पर शस्त्रों तथा लोकपालों की अर्चना करनी चाहिए तथा वर्धनी पर विघ्नराज गुरु एवं आत्मा की पूजा करनी चाहिए ।।५०-५१।। उसके पश्चात् सर्वौषधि से लिप्त तथा धूप से धूपित पवित्रक को अञ्जलि में रखकर तथा पूर्वादि द्वारा आमन्त्रित करके वर्धनी की यह प्रार्थना करनी चाहिए । हे सारे विधियों के दोषों को दूर करने वाली, सभी कार्यों में सिद्धि प्रदान करने वाली वर्धनी आपको में आमन्त्रित कर रहा हूँ, अपनी इच्छा की पूर्ति करने वाली सिद्धि को आज्ञा दो । फिर शंकर जी की प्रार्थना करनी चाहिए कि- हे जड़चेतन जगत् के स्वामिन्! शम्भो आपको नमस्कार है । आप मेरे ऊपर सर्वदा प्रसन्न रहें ।। ५१-५३।। हे देवेश ! आप देवी पार्वती तथा गणेश्वरों, मन्त्रेश्वरों, लोकपालों तथा परिचारकों के साथ आमन्त्रित हैं । मैं आपको निमन्त्रित कर रहा हूँ । हे परमेश ! मैं आपकी आज्ञा से प्रातःकाल पवित्राधिवासन तथा नियमव्रत करूँगा ।। ५४-५५ ।। इस प्रकार से भगवान् शङ्कर को आमन्त्रित करके रेचक प्राणायाम के द्वारा अमृतीकरण करके 'ओं नमः शिवाय' इस मूलमन्त्र का उच्चारण करके शिव जी को निवेदित कर देना चाहिए । फिर जप, स्तुति तथा प्रणाम करके शङ्कर जी से क्षमा प्रार्थना करनी चाहिए ।। ५६-५७ ।। चरु का हवन करके उसके तृतीय भाग को शिवाग्नि में डाल देना चाहिए । पुनः दिग्वासियों दिगीशों (दिक्पालों तथा समस्त भूतों के रुद्रों के लिए) **ओं दिग्वासिभ्यो दिगीशेभ्यो भूतमात्रगणैः सह । रुद्रेभ्यः क्षेत्रपालादिभ्यो नमः स्वाहा**' इस मन्त्र से बलि देनी चाहिए । पुनः पूर्वादि दिशाओं में दिग्गजों, क्षेत्रपालों तथा अग्नि के लिए बलि देनी चाहिए ।। ५८-५९।। पुनः आचमन कराकर

कुर्यात्तु योजनाम् । वह्निकुण्डार्चितं देवं मण्डलाभ्यर्चिते शिवे ॥ ६२ ॥ नाडीसंधानरूपेण विधिना योजयेत्ततः । वंशादिपात्रे विन्यस्य अस्त्रं च हृदयं ततः ॥ ६३ ॥ अधिरोप्य पवित्राणि कलाभिर्वाऽथ मन्त्रयेत् । षडङ्गं ब्रह्ममूलैर्वा हृद्वर्मास्त्रं च योजयेत् ॥ ६४ ॥ विधाय सूत्रैः संवेष्ट्य पूजयित्वाऽङ्गसंभवैः । रक्षार्थं जगदीशाय भक्तिनम्रः समर्पयेत् ॥ ६५ ॥ पूजिते पुष्पधूपाद्यैर्दत्त्वा सिद्धान्तपुस्तके । गुरोः पादान्तिकं गत्वा भक्त्या दद्यात्पवित्रकम् ॥ ६६ ॥ निर्गत्य बहिराचम्य गोमये मण्डलत्रये । पञ्चगव्यं चरुं दन्तधावनं च क्रमाद्यजेत् ॥ ६७ ॥ स्वाचान्तो मन्त्रसंनद्धः कृतसंगीतजागरः । स्वपेदन्तः स्मरन्नीशं बुभुक्षुर्दर्भसंस्तरे ॥ ६८ ॥ अनेनैव प्रकारेण मुमुक्षुरपि संविशेत् । केवलं भस्मशय्यायां सोपवासः समाहितः ॥ ६९ ॥

इत्यादिमहापुराण आग्नेये पवित्राधिवासनविधिकथनं नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

## अथैकोनाशीतितमोऽध्यायः

## पवित्रारोहणविधिः

ईश्वर उवाच– **अथ प्रातः समुत्थाय कृतस्नानः समाहितः । कृतसंध्यार्चनो मन्त्री प्रविश्य मखमण्डपम् ॥ १ ॥ समादाय पवित्राणि अविसर्जितदैवतः । ऐशान्यां भाजने शुद्धे स्थापयेत्कृतमण्डले ॥ २ ॥ ततो विसर्ज्य देवेशं निर्माल्यमपनीय च । पूर्ववद्भूतले शुद्धे कृत्वाऽऽह्निकमथद्वयम् ॥ ३ ॥ आदित्यद्वारदिक्पालकुम्भेशनौ शिवेऽनले । नैमित्तिकीं सविस्तारां कुर्यात्पूजां विशेषतः ॥ ४ ॥ मन्त्राणां तर्पणं प्रायश्चित्तहोमं शराणुना । अष्टोत्तरशतं**

---

विधि दोष को दूर करने वाले होम को करना चाहिए । पूर्णाहुति तथा व्याहृति होम करके अग्नि को घेर देना चाहिए ।। ६० ।। इसके पश्चात् 'ओमग्नये स्वाहा' 'ओम सोमाय स्वाहा' 'ओम् अग्नीषोमाभ्यां स्वाहा' तथा 'अग्नये स्विष्टकृते स्वाहा' इन चार आहुतियों को देकर योजना करनी चाहिए ।। ६१ ।। अग्निकुण्ड में पूजित शिव का मण्डल में पूजित शिव से नाड़ी संधान रूपी विधि के द्वारा संयोग कराना चाहिए । उसके बाद बाँस आदि के पात्र में अस्त्र न्यास तथा हृदय न्यास करके उसके बाद पवित्रकों को रखकर कलाओं द्वारा अभिमन्त्रित करना चाहिए ।। ६२-६३ ।। अथवा ब्रह्मसूत्रों के साथ षडङ्ग अथवा हृदयमन्त्र, अथवा कवचमन्त्र अथवा अस्त्रमन्त्र संयुक्त करना चाहिए ।। ६४ ।। इस तरह पवित्रन्न बनाकर उसे सूत्रों से अच्छी तरह वेष्टित करके अङ्गमन्त्रों से पूजित करके, उसकी रक्षा के लिए भगवान् शंकर को समर्पित कर देना चाहिए ।। ६५ ।। पुष्प तथा धूप आदि से पूजा करके सिद्धान्त पुस्तक का दान करके आचार्य के चरणों के सन्निकट जाकर भक्तिपूर्वक उन्हें पवित्रक प्रदान करना चाहिए ।। ६६ ।। वहाँ से बाहर निकलकर आचमन करके गोबर के बने तीन मण्डलों में क्रमशः पञ्चगव्य, चरु तथा दन्तधावन की, क्रमशः पूजा करनी चाहिए ।। ६७ ।। आचमन करने के पश्चात् मन्त्र जप में तल्लीन होकर संगीत के द्वारा रात्रि में जागरण करना चाहिए । अन्त में भोग की इच्छा वाले पुरुष को रात्रि में श्रीभगवान् शङ्कर का स्मरण करते हुए कुश की शय्या पर सोना चाहिए ।। ६८ ।। इसी प्रकार से मुमुक्षु पुरुष को भी सोना चाहिए । किन्तु उसे भस्म की शय्या पर उपवास करके सोना चाहिए ।। ६९ ।।

**इस तरह से आदिमहापुराण का अग्निपुराण पवित्राधिवासन विधि वर्णन नामक अठहत्तरवाँ अध्याय सम्पूर्ण हुआ ॥ ७८ ॥**

**श्रीशिवजी ने कहा**– उसके पश्चात् प्रातःकाल उठकर स्नान करके सावधानीपूर्वक मन्त्री को चाहिए कि वह सन्ध्यावंदन करके यागमण्डप में प्रवेश करे ।। १ ।। पवित्रकों को लेकर देवताओं का विसर्जन किए विना ही ईशानकोण में उसे मण्डल बनाकर शुद्ध पात्र में स्थापित करना चाहिए ।। २ ।। उसके बाद देवेश भगवान् शंकर को विसर्जित करके निर्माल्य को हटाकर, उसके पश्चात्

कृत्वा दद्यात्पूर्णाहुतिं शनैः ॥ ५ ॥ पवित्रं भानवे दत्त्वा समाचम्य ददीत च । द्वारपालादिदिक्पालकुम्भवर्धनिकादिषु ॥ ६ ॥ संनिधाने ततः शम्भोरुपविश्य निजासने । पवित्रमात्मने दद्याद्गणाय गुरुवह्नये ॥ ७ ॥ ॐ कालात्मना त्वया देव यद्दिष्टं मामके विधौ । कृतं क्लिष्टं समुत्सृष्टं कृतं गुप्तं च यत्कृतम् ॥ ८ ॥ तदस्तु क्लिष्टमक्लिष्टं कृतं क्लिष्टमसंस्कृतम् । सर्वात्मनाऽमुना शंभो पवित्रेण त्वदिच्छया ॥ ९ ॥ ॐ पूरय मखव्रतं नियमेश्वराय स्वाहा । आत्मतत्त्वे प्रकृत्यन्ते पालिते पद्मयोनिना ॥ १०॥ मूलं लयान्तमुच्चार्य पवित्रेणार्चयेच्छिवम् । विद्यातत्त्वे च विद्यान्ते विष्णुकारणपालिते ॥ ११॥ ईश्वरान्तं समुच्चार्य पवित्रमधिरोपयेत् । शिवान्ते शिवतत्त्वे च रुद्रकारणपालिते ॥ १२॥ शिवान्तं मन्त्रमुच्चार्य तस्मै देयं पवित्रकम् । सर्वकारणपालेषु शिवमुच्चार्य सुव्रत ॥ १३॥ मूलं लयान्तमुच्चार्य दद्याद्गङ्गावतारकम् । आत्मविद्याशिवैः प्रोक्तं मुमुक्षूणां पवित्रकम्॥ १४॥ विनिर्दिष्टं बुभुक्षूणां शिवतत्त्वात्मभिः क्रमात् । स्वाहान्तं वा नमोन्तं वा मन्त्रमेषामुदीरयेत् ॥ १५ ॥ ॐ हामात्मतत्त्वाधिपतये शिवाय स्वाहा । ॐ हां विद्यातत्त्वाधिपतये शिवाय स्वाहा ॥ १६॥ ॐ हौं शिवतत्त्वाधिपतये शिवाय स्वाहा । ॐ हौं सर्वतत्त्वाधिपतये शिवाय स्वाहा ॥ १७ ॥ नत्वा गङ्गावतारं तु प्रार्थयेत्तं कृताञ्जलिः । त्वं गतिः सर्वभूतानां संस्थितस्त्वं चराचरे ॥ १८॥ अन्तश्चारेण भूतानां द्रष्टा त्वं परमेश्वर। कर्मणा मनसा वाचा त्वत्तो नान्या गतिर्मम ॥ १९ ॥ मन्त्रहीनं क्रियाहीनं द्रव्यहीनं च यत्कृतम् । जपहोमार्चनैर्हीनं कृतं नित्यं मया तव ॥ २० ॥ अकृतं वाक्यहीनं च तत्पूरय महेश्वर । सुपूतस्त्वं परेशान पवित्रं पापनाशनम् ॥ २१॥ त्वया पवित्रितं सर्वं जगत्स्थावरजङ्गमम् । खण्डितं यन्मया

---

शुद्ध पृथिवी पर पहले के ही समान दो आह्निक करके आदित्य, द्वारपाल,दिक्पाल, कुम्भ, शंकर, ईशान, शिव तथा अग्नि की विशेष रूप से विस्तारपूर्वक नैमित्तिक पूजा करनी चाहिए ।। ४ ।। मन्त्रों का तर्पण करके शरमन्त्र से एक सौ आठ बार आहुति देकर पूर्णाहुति करनी चाहिए । सूर्य को पवित्रक देकर आचमन करे । पुनः द्वारपाल, आदि को तथा दिक्पाल कुम्भ एवं वर्धनी आदि पर भी पवित्रक चढ़ाना चाहिए ।। ६ ।। उसके पश्चात् शम्भु के सन्किट में अपने आसन पर बैठकर आत्मा गणपति आचार्य एवं अग्नि को पवित्रक समर्पित करना चाहिए ।। ७ ।। इसके बाद प्रार्थना करना चाहिए कि हे कालात्मन् ! देव मेरे पवित्रारोहण विधि में कठिनाई के कारण जो कुछ भी छूट गया हो अथवा मैंने जो कुछ गुप्त रीति से किया हो, हे शम्भो ! आपकी कृपा से वह क्लिष्ट भी अक्लिष्ट हो जाय, वह क्लिष्ट तथा संस्काररहित भी संस्कारयुक्त इस पवित्रक प्रदान के द्वारा हो जाय ।। ९ ।। इसके पश्चात् 'ओं पूरणमखव्रतं नियमेश्वराय स्वाहा।' इस मन्त्र का उच्चारण करना चाहिए।।१०।। ब्रह्मा के द्वारा पालित प्रकृति पर्यन्त आत्मतत्त्व पर लय पर्यन्त मूल मन्त्र का उच्चारण करके पवित्रक के द्वारा शिवजी की अर्चना करनी चाहिए ।। ११ ।। विष्णुरूपी कारण के द्वारा पालित विद्या पर्यन्त विद्यातत्त्व पर ईश्वर पर्यन्त मूलमन्त्र का उच्चारण करके पवित्रक चढ़ाना चाहिए ।। १२ ।। रुद्ररूपी कारणतत्त्व के द्वारा पालित शिव पर्यन्त शिवतत्त्व पर शिवपर्यन्त मूलमन्त्र का उच्चारण करके रुद्र को पवित्रक समर्पित करना चाहिए ।। १३ ।। हे सुव्रत ! सभी कारण पालकों के विषय में शिव का उच्चारण करके लय पर्यन्त मूल मन्त्र का उच्चारण करके गङ्गावतार नामक पवित्रक प्रदान करना चाहिए ।। १४ ।। शिवतत्त्व के वेत्ताओं ने मुमुक्षु पुरुषों के लिए आत्मविद्या एवं शिव के क्रम से पवित्रक का उपदेश किया है और बुभुक्षु पुरुषों के लिए शिवतत्त्व एवं आत्मा के क्रम से पवित्रक विधि का उपदेश किया है ।। १५ ।। इन सबों के मन्त्रों के अन्त में या तो स्वाहा पद लगाना चाहिए अथवा नमः पद उच्चारण करना चाहिए ।। १६ ।। (१) ओं हां आत्मतत्त्वाधिपतये शिवाय स्वाहा, (२) ओं हां विद्यातत्त्वाधिपतये शिवाय स्वाहा, (३) ओं हौं शिवतत्त्वाधिपतये शिवाय स्वाहा तथा (४) ओं हौं सर्वतत्त्वाधिपतये शिवाय स्वाहा । ये पवित्रक समर्पण के चार मन्त्र है।।१७।। फिर गङ्गावतार को नमस्कार करके हाथ जोड़कर उनकी प्रार्थना करनी चाहिए ।। आप ही सम्पूर्ण जीवों के आश्रय हैं तथा आप ही सम्पूर्ण चराचर में स्थित हैं ।। १८ ।। हे परमेश्वर ! आप ही अन्तर्यामी रूपी से सम्पूर्ण भूतों के द्रष्टा हैं । आपसे भिन्न कोई दूसरा मेरा मनसा, वाचा एवं कर्मणा आश्रय नहीं है ।। १९ ।। मैंने जो कुछ भी मन्त्र से हीन, क्रिया से हीन तथा द्रव्य से हीन कर्म किया है

देव व्रतं वैकल्ययोगतः॥ २२ ॥ एकी भवतु तत्सर्वं तवाऽऽज्ञासूत्रगुम्फितम्। जपं निवेद्य देवस्य भक्त्या स्तोत्रं विधाय च ॥ २३ ॥ नत्वा तु गुरुणाऽऽदिष्टं गृहणीयान्नियमं नरः । चतुर्मासं त्रिमासं वा त्र्यहमेकाहमेव च ॥ २४॥ प्रणम्य क्षमयित्वेशं गत्वाकुण्डान्तिकं व्रती । पावकस्थे शिवेऽप्येवं पवित्राणां चतुष्टयम् ॥ २५ ॥ समारोप्य समभ्यर्च्य पुष्पधूपाक्षतादिभिः । अन्तर्बलिं पवित्रं च रुद्रादिभ्यो निवेदयेत् ॥ २६ ॥ प्रविश्यान्तः शिवं स्तुत्वा सप्रणामं क्षमापयेत् । प्रायश्चित्तकृतं होमं कृत्वा हुत्वा च पायसम्॥२७॥ शनैः पूर्णाहुतिं दत्त्वा वह्निस्थं विसृजेच्छिवम् । होमं व्याहृतिभिः कृत्वा रुन्ध्यान्निष्ठुरयाऽनलम् ॥ २८ ॥अग्न्यादिभ्यस्ततो दद्यादाहुतीनां चतुष्टयम् । दिक्पतिभ्यस्ततो दद्यात्सपवित्रं बहिर्बलिम॥२९॥ सिद्धान्तपुस्तके दद्यात्सप्रमाणं पवित्रकम् ॥ ३० ॥ ॐ हां भूः स्वाहा। ॐ हां भुवः स्वाहा । ॐ हां स्वः स्वाहा। ॐ हां भूर्भुवः स्वः स्वाहा ॥ ३१॥ होमं व्याहृतिभिः कृत्वा दत्त्वाऽऽहुतिचतुष्टयम् ॥ ३२ ॥ ॐ हामग्नये स्वाहा । ॐ हां सोमाय नमः स्वाहा। ॐ हां अग्नीषोमाभ्यां स्वाहा । ॐ हामग्नये स्विष्टकृते स्वाहा ॥ ३३ ॥ गुरुं शिवमिवाभ्यर्च्य वस्त्रभूषादिविस्तरैः। समग्रं सफलं तस्य क्रियाकाण्डादि वार्षिकम् ॥ ३४ ॥ यस्य तुष्टो गुरुः सम्यगित्याह परमेश्वरः । इत्थं गुरोः समाराध्य हृदालम्बि पवित्रकम् ॥ ३५॥ द्विजादीन्भोजयित्वा तु भक्त्या वस्त्रादिकं ददेत् । दानेनानेन देवेशः प्रीयतां मे सदाशिवः ॥ ३६ ॥ भक्तया स्नानादिकं प्रातः कृत्वा शंभोः समाहरेत्। पवित्राण्यष्टपुष्पैस्तं पूजयित्वा विसर्जयेत् ॥ ३७ ॥ नित्यं नैमित्तिकं कृत्वा विस्तरेण यथा पुरा । पवित्राणि समारोप्य प्रणम्याग्नौ शिवं यजेत्॥३८॥ प्रायश्चित्तं ततोऽस्त्रेण हुत्त्वा पूर्णाहुतिं यजेत् । भुक्तिकामः शिवायाथ

---

तथा जप, होम तथा अर्चना से हीन तथा वाक्य से हीन जो कुछ भी आपकी पूजा मैंने की है अथवा नहीं की है, हे महेश्वर ! उसे आप पूर्ण करें ।। २० ।। हे वरेशान ! आप अत्यन्त पवित्र हैं,आप पवित्र तथा पापों का नाश करने वाले हैं ।। २१ ।। आपने ही सम्पूर्ण स्थावर जङ्गमात्मक जगत् को पवित्र किया है । हे देव ! विकलता के कारण मैंने जो व्रत खण्डित किया है, वह आपकी आज्ञा से सूत्र में गूंथकर एक हो जाय । इस तरह भगवान् शंकर को जप समर्पित करके भक्तिपूर्वक स्तुति करना चाहिए।। २३ ।। पुनः नमस्कार करके आचार्य का आदेश प्राप्त कर मनुष्य को चार मास का, अथवा तीन मास का, अथवा तीन दिन का, अथवा एक दिन का नियम करना चाहिए ।। २४ ।। फिर शिवजी को प्रणाम करके व्रती को क्षमा प्रार्थना करके कुण्ड के सन्निकट जाकर, अग्नि में विद्यमान शिव पर भी इसी प्रकार से चार पवित्रक रखकर उनकी पुष्प, धूप तथा अक्षत आदि से पूजा करके रुद्र आदि को अन्तर्वासित तथा पवित्रक समर्पित करना चाहिए ।। २५-२६ ।। यागमण्डप के भीतर प्रवेश करके,शिव जी की स्तुति करके, प्रणामपूर्वक शिवजी से क्षमा प्रार्थना करनी चाहिए । तदनंतर प्रायश्चित होम करके तथा पायस का हवन करके, पूर्णाहुति होम करने के पश्चात् अग्नि में स्थित शिव का विसर्जन करना चाहिए। फिर व्याहृतियों से होम करके निष्ठुरा मुद्रा के द्वारा अग्नि को घेर देना चाहिए ।। २७-२८ ।। उसके पश्चात् अग्नि आदि को चार आहुति देना चाहिये । फिर पवित्रक के साथ दिक्पालों को बाहर बलि देना चाहिए ।। २९ ।। इसके पश्चात् सिद्धान्त पुस्तक के ऊपर प्रमाणानुकूल पवित्रक चढ़ाना चाहिए ।। ३० ।। ओं भू स्वाहा, ओं हां भुवः स्वाहा,ओं हां स्वः स्वाहा तथा ओम् हां भूर्भुवः स्वः स्वाहा ।। ३१ ।। इन चार मन्त्रों से व्याहृति होम करके निम्नांकित मन्त्रों से चार आहुति देनी चाहिए ।। ३२ ।। (१) ओं हामग्नये स्वाहा, (२) ओं हां सोमाय स्वाहा, (३) ओं हां अग्निषोमाभ्यां स्वाहा, (४) ओं हामग्नये स्विष्टकृते स्वाहा ।। ३३ ।। शिवजी के ही समान गुरु की पूजा वस्त्र तथा आभूषण आदि से विस्तारपूर्वक करनी चाहिए । परमेश्वर ने कहा है कि जिसके गुरु प्रसन्न रहते हैं, उसके वर्ष भर के किए गए समग्र कर्मकाण्ड सफल होते हैं । इसतरह से गुरु को हृदय तक लटकने वाला पवित्रक पहनाकर ब्राह्मण आदि को भोजन कराकर उन्हें वस्त्र इत्यादि देना चाहिए और कहना चाहिए कि मेरे इस दान से देवेश सदा शिव प्रसन्न होएँ ।। ३४-३६ ।। प्रातःकाल भक्तिपूर्वक स्नान आदि करके शिव जी के पवित्रकों को उठाना चाहिए उसके पश्चात् उनकी अष्टपुष्पिका से पूजा करके शिवजी का विसर्जन करना चाहिए ।। ३७ ।। फिर पहले के ही समान नित्य तथा नैमित्तिक कृत्यों को विस्तार पूर्वक करके, पवित्रकों को स्थापित करके

कुर्यात्कर्मसमर्पणम् ॥ ३९ ॥ त्वत्प्रसादेन कर्मेदं ममास्तु फलसाधकम् । मुक्तिकामस्तुकर्मेदं माऽस्तु मे नाथ बन्धकम् ॥ ४० ॥ बह्निस्थं नाडीयोगेन शिवं संयोजयेच्छिवे । हृदि न्यस्याणुसंघातं पावकं च विसर्जयेत् ॥ ४१॥ समाचम्य प्रविश्यान्तः कुम्भानुगतशम्बरान् । शिवं संयोज्य साक्षेपं क्षमस्वेति विसर्जयेत् ॥ ४२ ॥ विसृज्य लोकपालादीनादायेशात्पवित्रकम् । सति चण्डेश्वरे पूजां कृत्वा दत्त्वा पवित्रकम् ॥ ४३ ॥ तन्निर्माल्यादिकं तस्मै सपवित्रं समर्पयेत् । अथवा स्थण्डिले चण्डं विधिना पूर्ववद्यजेत् ॥ ४४ ॥ यत्किंचिद्वार्षिकं कर्म कृतं न्यूनाधिकं मया । तदस्तु परिपूर्णं मे चण्डनाथ तवाज्ञया ॥ ४५ ॥ इति विज्ञाप्य देवेशं नत्वा स्तुत्वा विसर्जयेत् । त्यक्तनिर्माल्यकः शुद्धः स्नापयित्वा शिवं यजेत् । पञ्चयोजनसंस्थोऽपि पवित्रं गुरुसन्निधौ ॥ ४६ ॥

इत्यादिमहापुराण आग्नेये पवित्रारोहणविधिकथनं नामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥

## अथाशीतितमोऽध्यायः

## दमनकारोहणविधिः

ईश्वर उवाच– **वक्ष्ये दमनकारोहविधिं पूर्ववदाचरेत् । हरकोपात्पुरा जातो भैरवो दमिताः सुराः ॥ १ ॥ तेनाथ शप्तो विटपो भवेति त्रिपुरारिणा।**

तथा प्रणाम करके अग्नि में शिव की पूजा करनी चाहिए ।। ३८ ।। उसके पश्चात् अस्त्र मन्त्र से प्रायश्चित्त होम करके पूर्णाहुति करनी चाहिए । भोग प्राप्ति की कामना वाले पुरुष को अपने कर्मों को शिवजी को समर्पित करना चाहिए और प्रार्थना करना चाहिए कि हे भगवन् ! आपकी कृपा से यह कर्म मेरे लिए फलप्रद होए । और मुक्ति की कामना वाले को यह प्रार्थना करनी चाहिए कि- हे नाथ! मेरा यह कर्म मेरे लिए बन्धन कारक न बने ।। ३९-४० ।। फिर नाड़ीयोग के द्वारा अग्निस्थ को शिव से संयुक्त करना चाहिए । अणु समूह का हृदय में न्यास करके अग्नि को विसर्जित करना चाहिए ।। ४१ ।। अच्छी तरह से आचमन करके यज्ञमण्डप में प्रवेश करके कलश के जल से शिवजी को स्नान कराकर अपने लिए आक्षेपयुक्त बातें कहकर क्षमा प्रार्थना करके विसर्जन करना चाहिए ।। ४२ ।। लोकपाल आदि का विसर्जन करके शंकर जी पर से पवित्रक उठा लें । चण्डेश्वर के रहने पर उनकी पूजा करके तथा उन्हे पवित्रक देकर, उस निर्माल्य आदि को पवित्रक के साथ चण्डेश्वर को समर्पित करना चाहिए ।। ४३।। अथवा स्थण्डिल पर पहले के समान ही विधिपूर्वक यजन करना चाहिए ।। ४४ ।। हे चण्डनाथ ! मैंने जो कुछ भी कम अथवा अधिक वार्षिक कर्म किया है, वह आपकी आज्ञा से परिपूर्ण हो । इस तरह से देवेश की प्रार्थना करके तथा उन्हें नमस्कार करके एवं स्तुति करके विसर्जन करना चाहिए।।४५ ।। निर्माल्य का त्याग करके शुद्ध होकर शिवजी को स्नान कराकर उनका यजन करना चाहिए । पाँच योजन दूर रहने पर भी आचार्य की सन्निधि में जाकर उन्हें पवित्रक समर्पित करना चाहिए।। ४६ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का पवित्रारोहण विधि वर्णन नामक उन्नासिवाँ अध्याय सम्पूर्ण हुआ ॥ ७९ ॥**

**श्रीशिवजी ने कहा–** अब मैं दमनकारोहण विधि का वर्णन कर रहा हूँ । पूर्व अध्यायों में वर्णित रीति से पहले दमनक की पूजा करनी चाहिए । प्राचीनकाल में श्रीशङ्कर जी के क्रोध से भैरव उत्पन्न हुए, और उन्होंने देवताओं का दमन किया ।। १ ।। उससे नाराज होकर भगवान् शङ्कर ने वृक्ष होने का उन्हें शाप दिया । पुनः प्रसन्न होकर उन्होंने यह वरदान दिया कि जो लोग तुम्हारी

प्रसन्नेनेरितं चेदं पूजयिष्यन्ति ये नराः ॥ २ ॥ परिपूर्णं फलं तेषामन्यथा न भविष्यति । सप्तम्यां वा त्रयोदश्यां दमनं सहिताणुभिः ॥३॥ संपूज्य बोधयेद्वृक्षं भववाक्येन मन्त्रवित् । हरप्रसादसंभूत त्वमत्र संनिधौ भव ॥ ४ । शिवकार्यं समुद्दिश्य नेतव्योऽसि शिवाज्ञया । गृहेऽप्यामन्त्रणं कुर्यात्सायाह्ने चाधिवासनम् ॥ ५ ॥ यथाविधि समाभ्यर्च्य सूर्यशंकरपावकान् । देवस्य पश्चिमे मूलं दद्यात्तस्य मृदायुतम् ॥ ६ ॥ वामेन शिरसा वाऽथ नालं धात्रीं तथोत्तरे । दक्षिणे भग्नपत्रं च प्राच्यां पुष्पं च धावनम् ॥ ७ ॥ पुटिकास्थं फलं मूलमथैशान्यां यजेच्छिवम् । पञ्चाङ्गमञ्जलौ कृत्वा आमन्त्र्य शिरसि न्यसेत् ॥ ८ ॥ आमन्त्रितोऽसि देवेश प्रातः काले मया प्रभो । कर्तव्यस्तपसोलाभः पूर्णं सर्वं तवाज्ञया ॥ ९ ॥ मूलेन शेषं पात्रस्थं पिधायाथ पवित्रकम् । प्रातः स्नात्वा जगन्नाथं गन्धपुष्पादिभिर्यजेत्॥ १० ॥ नित्यं नैमित्तिकं कृत्वा दमनैः पूजयेत्ततः । शेषमञ्जलिमादाय आत्मविद्याशिवात्मभिः ॥ ११ ॥ मूलाद्यैरीश्वरान्तैश्च चतुर्थाञ्जलिना ततः ॥ १२ ॥ हौं महेश्वराय मखं पूरय पूरय शूलपाणये नमः ॥ १३ ॥ शिवं वह्निं च सम्पूज्य गुरुं प्राचर्याथ बोधयेत् । भगवन्नतिरिक्तं वा हीनं वा यन्मया कृतम् ॥ १४ ॥ सर्वं तदस्तु सम्पूर्णं यच्च दामनकं मम । सकलं चैत्रमासोत्थं फलं प्राप्य दिवं व्रजेत् ॥ १५ ॥

इत्यादिमहापुराण आग्नेये दमनकारोहणविधिकथनं नामाशीतितमोऽध्यायः ॥ ८० ॥



पूजा करेंगे, उनको ही परिपूर्ण फल की प्राप्ति होगी, नहीं तो नहीं ।। २ ।। सप्तमी अथवा त्रयोदशी के दिन संहिता मन्त्रों के द्वारा दमन की अच्छी तरह से पूजा करके मन्त्रज्ञ पुरुष उसे शङ्करजी के वाक्य के अनुसार जगाए । शङ्कर जी की कृपा से उत्पन्न आप इस वृक्ष में निवास करें ।। ३-४ ।। शिवजी के कार्य के लिए आपको शिवजी की आज्ञा से ले जाना है । अपने घर में भैरवजी को आमन्त्रित करके सायंकाल में उनका अधिवास कराना चाहिए ।। ५ ।। विधिपूर्वक सूर्य, शंकर तथा अग्नि की पूजा करके देवता के पश्चिम दिशा में मिट्टी से युक्त मूल रखना चाहिए ।। ६ ।। बाममन्त्र अथवा शिरोमन्त्र से उनके उत्तर ओर नाल अथवा आँवला रखना चाहिए । उनके दक्षिण में भग्नपत्र तथा पूर्व में धावन पुष्प रखना चाहिए ।। ७ ।। ईशानकोण में किसी दोने में फल तथा मूल रखकर शिवजी की पूजा करे तथा अञ्जलि में (पत्र, पुष्प, फल,मूल एवं त्वक्) पञ्चाङ्ग होम करके अभिमन्त्रित करके उसे शिवजी के सिर पर चढ़ा देना चाहिए ।। ८ ।। फिर यह प्रार्थना करनी चाहिए कि– हे देवेश! आपको मैं प्रातःकाल में आमन्त्रित करता हूँ, आपकी आज्ञा से मुझे अपनी तपस्या का सम्पूर्ण फल प्राप्त करना है ।। ९ ।। मूलमन्त्र से अवशिष्ट पवित्रक को पात्र में रखकर ढँक देना चाहिए। प्रातःकाल स्नान करके गन्ध तथा पुष्प आदि से जगन्नाथ की पूजा करनी चाहिए ।। १० ।। पुनः नित्य तथा नैमित्तिक कृत्यों को करके दमनक से पूजा करनी चाहिए । शेष पूजन सामग्री (दमनक) को अञ्जलि में लेकर, आत्मा, विद्या तथा शिवतत्त्व विषयक मन्त्रों के द्वारा 'ओं नमः शिवाय' इस मन्त्र से चौथी अञ्जलि प्रदान करे ।। ११-१२ ।। पुनः यह मन्त्र पढ़ें- 'ओं हौं महेश्वराय मखं पूरय-पूरय शूलपाणये नमः' ।। १३ ।। शिवजी की, अग्नि की तथा आचार्य की पूजा करके यह प्रार्थना करनी चाहिए कि हे भगवन् ! मैंने जो कुछ भी अधिक अथवा कम पूजन किया है, वह सब कुछ पूरा हो जाय । जो दमनक पूजन का फल है वह सम्पूर्ण मुझे प्राप्त होए । इस प्रकार से दामनक पूजन करने वाला मनुष्य चैत्रमास के सारे फलों को प्राप्त करके अन्त में स्वर्गलोक को प्राप्त करता है ।। १५।।

इस तरह से आदिमहापुराण अग्निपुराण का दमनकारोहण विधि वर्णन नामक अस्सीवाँ अध्याय सम्पूर्ण हुआ ॥ ८० ॥



## अथैकाशीतितमोऽध्यायः

### समयदीक्षाविधिः

ईश्वर उवाच– **वक्ष्यामि भोगमोक्षार्थं दीक्षां पापक्षयं करीम् । मलमायादिपाशानां विश्लेषः क्रियते यया ॥ १ ॥ ज्ञानं च जन्यते शिष्ये सा दीक्षा भुक्तिमुक्तिदा। विज्ञातकलनामैको द्वितीयः प्रलयाकलः ॥ २ ॥ तृतीयः सकलः शास्त्रेऽनुग्राह्यस्त्रिविधो मतः । तत्राऽऽद्यो मलमात्रेण मुक्तोऽन्यो मलकर्मभिः ॥ ३ ॥ कलादिभूमिपर्यन्तं स्तम्बैस्तु सकलो मतः । निराधाराऽथ साधारा दीक्षाऽपि द्विविधा मता ॥ ४ ॥ निराधारा द्वयोस्तेषां साधारा सकलस्य तु । आधार निरपेक्षेण क्रियते शंभुचर्यया ॥ ५ ॥ तीव्रशक्तिनिपातेन निराधारेति सा स्मृता । आचार्यमूर्तिमास्थाय मदतीव्रादिभेदया ॥ ६॥ शक्त्या यां कुरुते शंभुः सा साधिकरणोच्यते । इयं चतुर्विधा प्रोक्ता सबीजा बीजवर्जिता ॥ ७ ॥ साधिकाराऽनधिकारा यथा तदभिधीयते । समयाचारसंयुक्ता सबीजा जायते नृणाम् ॥ ८ ॥ निर्बीजा त्वसमर्थानां समयाचारवर्जिता । नित्ये नैमित्तिके काम्ये यतः स्यादधिकारिता ॥ ९ ॥ साधिकारा भवेद्दीक्षा साधकाचार्ययोरतः । निर्बीजा दीक्षितानां तु तथा समयि पुत्रयोः ॥ १० ॥ नित्यमात्राधिकारत्वाद्दीक्षा निरधिकारिका । द्विविधेयं द्विरूपा हि प्रत्येकमुपजायते ॥ ११ ॥ एका क्रियावती तत्र कुण्डमण्डलपूर्विका । मनोव्यापारमात्रेण या सा ज्ञानवती मता॥ १२ ॥ इत्थं लब्धाधिकारेण दीक्षाऽऽचार्येण साध्यते । स्कन्ददीक्षां गुरुः कुर्यात्कृत्वा नित्यक्रियां ततः ॥ १३ ॥ प्रणवार्घ्यं कराम्भोजः कृतद्वाराधिपार्चनः। विघ्नानुत्सार्य देहल्यां न्यस्यास्त्रं स्वासने स्थितः॥१४॥ कुर्वीत भूतसंशुद्धिं मन्त्रयोगं यथोदितम् । तिलतण्डुलसिद्धार्थकुशदूर्वाक्षतोदकम्॥ १५॥**

**श्री शिवजी ने कहा–** भोग तथा मोक्ष को प्राप्त कराने वाली, पापों को विनष्ट करने वाली तथा माया एवं दोषों के बन्धन को खोल देने वाली दीक्षा का वर्णन मैं कर रहा हूँ ।। १ ।। वह दीक्षा शिष्य को ज्ञानी बनाकर उसे लौकिक भोगों तथा मोक्ष को प्रदान करती है । शास्त्र में तीन प्रकार के दीक्षा के अधिकारी बतलाए गए हैं- (१) विज्ञातकल, (२) प्रलयकाल तथा (३) सकल ।।२।। पहले प्रकार का अधिकारी समस्त मलों (दोषों) से मुक्त होता है । दूसरे प्रकार का अधिकारी केवल मल कर्मों से मुक्त होता है तथा तीसरे प्रकार का सकल अधिकारी कला से लेकर भूमि पर्यन्त के बन्धनों से बँधा रहता है । दीक्षा भी दो प्रकार की होती है– (१) निराधारा तथा (२) साधारा ।। ३-४ ।। प्रथम दो प्रकार के अधिकारियों को निराधार दीक्षा दी जाती है । सकल कोटि के अधिकारियों को साधारा दीक्षा दी जाती है । निराधारा दीक्षा आधार निरपेक्ष होकर भगवान् शंकर की पूजा के द्वारा तीव्रशक्ति का निपातन करके दी जाती है, अतएव वह निराधारा कही जाती है ।। ५ ।। आचार्य को अपनी शक्ति शम्भु प्रदान करते हैं उसे साधारा दीक्षा कहते हैं । यह साधारा दीक्षा चार प्रकार की होती है, सबीज दीक्षा, निर्बीज दीक्षा,साधिकारा दीक्षा तथा अनधिकारा दीक्षा। इन चारों के स्वरूप को मैं बतला रहा हूँ । मनुष्यों को समय के अनुसार आचार से युक्त जो दीक्षा दी जाती है, वह सबीज दीक्षा है ।। ६-८ ।। असमर्थ पुरुषों को विना समय तथा विना आचार के जो दीक्षा दी जाती है, वह निर्बीज कहलाती है । नित्य, नैमित्तिक तथा काम्य कर्मों के अवसर पर साधक तथा आचार्य दोनों को जिसके द्वारा अधिकार प्राप्त होता है उस दीक्षा को साधिकारा दीक्षा कहते हैं । जिन शिष्यों को निर्वीज दीक्षा दी जा चुकी है उनके समय तक पुत्रों को सर्वदा अधिकारी होने के करण उन्हें जो दीक्षा दी जाती है, वह निरधिकारा अथवा अधिकारा दीक्षा कही जाती है । इन साधिकारा तथा निरधिकारा दोनों प्रकार के दीक्षाओं के दो-दो रूप होते हैं ।। ९-११ ।। एक तो क्रियावती दीक्षा होती है जो कुण्ड तथा मण्डलपूर्वक दी जाती है तथा दूसरी ज्ञानवती दीक्षा होती है जो मानसिक व्यापार मात्र से दी जाती है ।। १२ ।। हे स्कन्द ! अधिकार प्राप्त आचार्य इस प्रकार से दीक्षा प्रदान करते हैं । आचार्य को नित्य क्रिया करके दीक्षा देनी चाहिए ।। १३ ।। सर्वप्रथम आचार्य अपने कर कमल में अर्घ्य का जल लेकर प्रणव उच्चारणपूर्वक द्वारपालों की अर्चना करें, पुनः विघ्नों को दूर करके देहली पर अस्त्र को रखें और अपने आसन पर बैठें ।। १४ ।। मन्त्रयोग के द्वारा भूतशुद्धि करके

सयवक्षीरनीरं च विशेषार्घ्यमिदं ततः । तदम्बुना द्रव्यशुद्धिं तिलकं स्वासनात्मनोः॥१६॥ पूजनं मन्त्रशुद्धिं च पञ्चगव्यं च पूर्ववत्।
लाजचन्दनसिद्धार्थभस्मदूर्वाक्षतं कुशान् ॥ १७ ॥ विकिराञ्शुद्धलाजां स्तान्सधूपानस्त्रमन्त्रितान् । शस्त्राम्बुप्रोक्षितानेतान्कवचेनावगुण्ठितान्॥१८॥
नानाप्रहरणाकारान्विघ्नौघविनिवारकान् । दर्भाणां तालमानेन कृत्वा षट्त्रिंशतादलैः ॥ १९ ॥ सप्तजप्तं शिवास्त्रेण वेणीं बोधासिमुत्तमम् ।
शिवमात्मनि विन्यस्य सृष्ट्याधारमभीप्सितम् ॥ २० ॥ निष्कलं च शिवं न्यस्य शिवोऽहमिति भावयेत्। उष्णीषं शिरसि न्यस्य अलं कुर्यात्स्वदेहकम्॥२१॥
गन्धमण्डनकं स्वीये विदध्याद्दक्षिणे करे । विधिनाऽत्रार्चयेदीशमित्थं स्याच्छिव हस्तकः॥२२॥ विन्यस्य शिवमन्त्रेण भास्वरं निजमस्तके ।
शिवादभिन्नमात्मानं कर्तारं भावयेद्यथा ॥ २३ ॥ मण्डले कर्मणां साक्षी कलशे यज्ञरक्षकः। होमाधिकरणं वह्नौ शिष्ये पाशविमोचकः ॥ २४ ॥
स्वात्मन्यनुगृहीतेति षडाधारो य ईश्वरः । सोऽहमेवेति कुर्वीत भावं स्थिरतरं पुनः ॥ २५ ॥ ज्ञानखड्गकरः स्थित्वानैर्ऋत्या भिमुखो नरः ।
सार्घ्याम्बुपञ्चगव्याभ्यां प्रोक्षयेद्यागमण्डपम् ॥ २६ ॥ चतुष्पथान्तसंस्कारैः संस्कुर्यादीक्षणादिभिः । विक्षिप्य विकिरांस्तत्र कुशकूर्चोपसंहरेत्॥२७॥
तानीशदिशि वर्धन्यामासनायोपकल्पयेत् । नैर्ऋते वास्तुगीर्वाणान्द्वारे लक्ष्मीं प्रपूजयेत् ॥ २८ ॥ आप्ये रत्नैः पूरयन्तीं हृदा मण्डपरूपिणीम् ।
साम्बुवस्त्रे सरत्ने च धान्यस्थे पश्चिमानने ॥ २९ ॥ ऐशे कुम्भे यजेच्छम्भुं शक्तिं कुम्भस्य दक्षिणे । पश्चिमस्यां तु सिंहस्थां वर्धनीं खड्गरूपिणीम्॥३०॥
दिक्षु शक्रादिदिक्पालान्विष्णवन्तान्प्रणवासनान् । वाहनायुधसंयुक्तान्हृदाऽभ्यर्च्य स्वनामभिः ॥ ३१ ॥ प्रथमं तां समादाय कुम्भस्याग्राभिगामिनीम्।

---

तिल, चावल, सरसों, कुश, दूर्वा, अक्षतोदक, यव, नीर (जल) क्षीर मिलाकर अर्घ्य प्रदान करें । इसे ही विशेषार्घ्य कहते हैं ।। १५ ।। उसके पश्चात् उसी जल से समस्त द्रव्यों की शुद्धि करके, अपने आसन पर बैठकर तिलक लगाना चाहिए ।। १६ ।। तदनन्तर पहले के ही समान पूजन मन्त्र की शुद्धि तथा पञ्चगव्य प्राशन करना चाहिए। तदनन्तर लावा, चन्दन, सरसों, भस्म, दूर्वा, अक्षत तथा कुश इन विकर द्रव्यों को तथा लावा तथा धूप को अस्त्र मन्त्र से अभिमन्त्रित करना चाहिए । शस्त्रमन्त्र से प्रोक्षण किए गए इन वस्तुओं को कवच मन्त्र से अवगुण्ठित करके यह भावना करनी चाहिए कि विघ्नों को दूर करने वाले ये नाना प्रकार के अस्त्र-शस्त्र हैं ।। १७-१८ ।। एक वित्ते के कुशों के छत्तीस दलों द्वारा बेणी के समान उत्तम ज्ञानमय खड्ग बनकर शिव के अस्त्र मन्त्र को सात बार जपकर अभिमन्त्रित करना चाहिए । निष्कल एवं सृष्टि के आधारभूत शिव के अपने मनोऽनुकूल रूप का अपने में विन्यास करके, मैं शिवस्वरूप हूँ इस प्रकार से भावना करनी चाहिए।।१९-२१।। अपने सिर पर पगड़ी रखकर अपने शरीर को अलंकृत करना चाहिए । पुनः आचार्य अपने दाहिने हाथ को चन्दन से अलंकृत करें और वहीं पर (हाथ पर ही) विधिपूर्वक शिव की पूजा करें। इस प्रकार करने वाला पुरुष शिवहस्त हो जाता है ।। २२ ।। उस देदीप्यमान हस्त को अपने सिर पर रखकर यह भावना करनी चाहिए कि 'मैं शिव से अभिन्न तथा जगत् का कर्ता हूँ । ऐसी भावना करने वाला आचार्य यज्ञमण्डप में कर्मों का साक्षी,कलश में यज्ञ की रक्षा करने वाला, अग्नि के भीतर होम का आधार, शिष्य के भीतर उसके अज्ञानरूपी बन्धन को विनष्ट करने वाला तथा अपनी आत्मा (अन्तर्यामी रूप से) अनुग्रह करने वाला जो ईश्वर है, वही मैं हूँ' इस प्रकार से अपने मन में सुदृढ़ भावना कर ले।।२३-२५ ।। इसके पश्चात् आचार्य ज्ञानरूपी कृपाण हाथ में लेकर नैर्ऋत्य कोण की ओर मुख करके, अर्घ्य के जल तथा पञ्चगव्य के द्वारा यागमण्डप का प्रोक्षण करे फिर चतुष्पथान्त संस्कारों से तथा अवलोकन आदि के द्वारा संस्कारयुक्त करना चाहिए । फिर पूर्वोक्त विकिर द्रव्यों को विखेरकर उन्हें कुश की कूँची से विटोर लेना चाहिए और उन्हें ईशानकोण में बर्धनी में आसन के लिए रखें। फिर नैर्ऋत्यकोण में वास्तुमण्डल के देवताओं की तथा पश्चिम द्वार पर लक्ष्मी की पूजा करनी चाहिए।।२६-२८।। फिर यह भावना करनी चाहिए कि मण्डपरूपिणी लक्ष्मी यज्ञमण्डप को रत्नों से परिपूर्ण कर रही हैं। इस प्रकार से ध्यान एवं आवाहन करके हृदयमन्त्र (नमः) से उनकी पूजा करनी चाहिए । पुनः ईशानकोण में सप्तधान्य पर स्थित जल से युक्त तथा पञ्चरत्न से युक्त एवं वस्त्रवेष्टित पश्चिमाभिमुख होकर कलश पर भगवान् शंकर की पूजा करनी चाहिए । कुम्भ के दक्षिण में सिंह पर सवार पश्चिम दिशा में शक्ति की पूजा करनी चाहिए तथा खड्गरूपिणी वर्धिनी की पूजा करनी चाहिए।।२९-३०।। पूर्व आदि दिशाओं में प्रणव पर बैठे हुए तथा वाहन एवं

अविच्छिन्नपयोधारां भ्रामयित्वा प्रदक्षिणम् ॥ ३२ ॥ शिवाज्ञां लोकपालानां श्रावयेन्मूलमुच्चरन् । संरक्षत यथायोगं कुम्भं धृत्वाऽथ तां धरेत्॥३३॥ ततः स्थिरासने कुम्भे साङ्गं सम्पूज्य शङ्करम् । विन्यस्य शोध्यमध्वानं वर्धन्यामस्त्रमर्चयेत् ॥ ३४ ॥ ॐ हः, अस्त्रासनाय हूं फट् । ॐ 'ओमस्त्रमूर्तये नम; । ॐ हूं फट्, पाशुपतास्त्राय नमः । ॐ ॐहृदयाय हूं फट्, नमः । ॐ श्रीं शिरसे हूं फट्, नमः । ॐ यं शिखायै हूं फट्, नमः । ॐ गूं कवचाय हूं फट्, नमः । ॐ फट्, अस्त्राय हूं फट्, नमः ॥ ३५ ॥ चतुर्वक्त्रं सदंष्ट्रं च स्मरेदस्त्रं सशक्तिकम् । समुद्गरत्रिशूलासिं सूर्यकोटिसमप्रभम् ॥ ३६॥ भगलिङ्गसमायोगं विदध्याल्लिङ्गमुद्रया। अंगुष्ठेन स्पृशेत्कुम्भं हृदा मुष्ट्याऽस्त्रवर्धनीम्॥ ३७ ॥ भुक्तये मुक्तये त्वादौ मुष्टिना वर्धनीं स्पृशेत् । कुम्भस्य मुखरक्षार्थं ज्ञानखड्गं समर्पयेत् ॥ ३८ ॥ शस्त्रं च मूलमन्त्रस्य शतं कुम्भे निवेशयेत् । तद्दशांशेन वर्धन्यां रक्षां विज्ञापयेत्ततः ॥ ३९ ॥ यथेदंकृत यत्नेन भगवन्मखमन्दिरम् । रक्षणीयं जगन्नाथ सर्वाध्वरधर त्वया ॥ ४० ॥ प्रणवस्थं चतुर्बाहुं वायव्ये गणमर्चयेत् । स्थण्डिले शिवमभ्यर्च्य साध्यः कुण्डं व्रजेन्नरः ॥ ४१ ॥ निविष्टो मन्त्रतुष्ट्यर्थं अर्घ्यगन्धघृतादिकम् । वामे सव्ये तु विन्यस्य समिद्दर्भतिलादिकम् ॥ ४२ ॥ कुण्डवह्निस्रुगाज्यादि प्राग्वत्संस्कृत्य भावयेत् । मुख्यतामूर्ध्ववक्त्रस्य हृदि वह्नौ शिवं यजेत् ॥ ४३ ॥ स्वमूर्तौ शिवकुम्भे च स्थण्डिले त्वग्निशिष्ययोः । सृष्टिन्यासेन विन्यस्य शोध्याध्वानं यथाविधि ॥ ४४ ॥ कुण्डमानं मुखं ध्यात्वा हृदाहुतिभिरीप्सितम् । बीजानि सप्तजिह्वानामग्नेर्होमाय भण्यते ॥ ४५ ॥

---

आयुध से संयुक्त इन्द्र से लेकर विष्णुपर्यन्त दिक्पालों की पूजा करनी चाहिए । उन देवताओं के नाममन्त्र से पूजा करनी चाहिए ।। ३१ ।। पहले उसे (वर्धनी) को हाथ में लेकर उसे कलश के सामने से प्रदक्षिण क्रम से चारों ओर अविच्छिन्न जल की धारा गिराते हुए घुमाना चाहिए ।। ३२ ।। उन देवताओं को मूल मन्त्र का उच्चारण करते हुए भगवान् शंकर की यह आज्ञा सुनानी चाहिए । 'देवगण आप लोग इस यज्ञकुम्भ की रक्षा करें।' उसके पश्चात् एक कलश रखकर उसके ऊपर उस वर्धनी को रख देना चाहिए । उसके पश्चात् स्थिर आसन वाले कलश पर भगवान् शंकर की साङ्ग पूजा करनी चाहिए ।। ३३ ।। तदनन्तर कला आदि षडध्वा का न्यास करके शोधन करें और वर्धनी में अस्त्र की पूजा करनी चाहिए ।। ३४ ।। पूजा के मन्त्र इस प्रकार हैं- (१) ओं हः अस्त्रासनाय हूँ फट् नमः, (२) ओं ओं अस्त्रमूर्तये हूँ फट् नमः, (३) ओं हूं फट् पाशुपतास्त्राय नमः ।। (४) ओं ओं हृदयाय हूँ फट्, नमः (५) ओं श्रीं शिरसे हूँ फट्, नमः (६) ओं यं शिखायै हूँ फट् नमः, (७) ओं गूं कवचाय हूँ फट् नमः (८) ओं फट्, अस्त्राय हूँ फट् नमः ।। ३५ ।। उसके पश्चात् दाढों तथा बड़े-बड़े दाँतों से युक्त चार मुख वाले, हाथ में शक्ति, मुद्गर, त्रिशूल और तलवार धारण किए हुए एवं करोड़ों सूर्य की कान्ति के समान कान्ति वाले पाशुपतास्त्र के स्वरूप का चिन्तन करना चाहिए।। ३६ ।। तदनन्तर लिङ्गमुद्रा को प्रदर्शित करके भगलिङ्ग का संयोग कराना चाहिए । फिर हृदयमन्त्र (हृदयाय नमः) का उच्चारण करते हुए अंगुष्ठ से कुंभ का तथा मुट्ठी से वर्धनी का स्पर्श करना चाहिए ।।३७।। भोग एवं मोक्ष प्राप्ति की इच्छा से पहले वर्धनी का ही स्पर्श करना चाहिए । कलश के मुख भाग की रक्षा के लिए उस पर ज्ञान खड्ग को विन्यस्त करना चाहिए ।। ३८ ।। फिर एक सौ आठ बार मूलमन्त्र का जप करके उसको कलश पर समर्पित करना चाहिए। फिर उसके दशांश मूलमन्त्र का जप करके उसे वर्धानी के रक्षार्थ प्रार्थना करनी चाहिए ।। ३९ ।। सम्पूर्ण यज्ञों को धारण करने वाले भगवन् ! जगन्नाथ बड़े यत्न से निर्मित इस मन्दिर की रक्षा आप करें ।। ४० ।। इसके पश्चात् वायव्यकोण में प्रणव के आसन पर विद्यमान गणेश जी की पूजा करनी चाहिए । पुनः वेदी पर शिव जी की पूजा करके साधक हाथ में अर्घ्य लेकर कुण्ड के सन्निकट में जाय ।। ४१ ।। वहाँ पर बैठकर वह मन्त्र के अधिष्ठातृ देवता की तृप्ति के लिए बाएँ भाग में अर्घ्य, चन्दन तथा घृत आदि को तथा दाहिने भाग में समिधा, कुश एवं तिल आदि को रखकर, पहले के ही समान, कुण्ड, अग्नि, स्रुक् तथा घृत आदि का संस्कार करके अपने हृदय में ऊपर की ओर मुख वाले अग्नि की मुख्यता का ध्यान करें और अग्नि में शिव जी का पूजन करना चाहिए ।। ४२-४३ ।। इसके पश्चात् आचार्य अपने शरीर में शिव कलश में, मण्डल में, अग्नि में और शिष्य के शरीर में सृष्टिन्यास की विधि से न्यास करके, अध्वा का सविधि शोधन करने के पश्चात्

शिष्यस्य गुरुः शिरसि विन्यसेत् ॥ ६६ ॥ विसृज्य पितरौ दद्याद्वौषडन्तशिवाणुना । पूरणाय विधिः पूर्णा निवृत्तिरिति शोधिता ॥ ६७ ॥

इत्यादिमहापुराण आग्नेये निर्वाणदीक्षायां निवृत्तिकलाशोधनं नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥

## अथ पञ्चाशीतितमोऽध्यायः

### प्रतिष्ठाकलासंशोधनविधिः

ईश्वर उवाच– **तत्त्वयोरथसंधानं कुर्याच्छुद्धविशुद्धयोः । ह्रस्वदीर्घप्रयोगेण नादनादान्तसङ्गिना ॥ १ ॥ ओं हां हूं हूम् अप्तेजो वायुराकाशं तन्मात्रेन्द्रियबुद्धयः। गुणत्रयमहंकारश्चतुर्विंशः पुमानिति ॥ २ ॥ प्रतिष्ठायां निविष्टानि तत्त्वान्येतानि भावयेत् । पञ्चविंशतिसंख्यानि खादियान्ताक्षराणि च ॥ ३ ॥ पञ्चाशदधिका षड्भुवनास्तुल्यसंज्ञिताः। तावन्त एव रूद्राश्च विज्ञेयास्तत्र तद्यथा ॥ ४ ॥ अमरेशः प्रभासश्च नैमिषः पुष्करोऽपि च । तथा षादिश्च दण्डिश्च भावभूतिरथाष्टमः ॥ ५ ॥ नकुलीशो हरिश्चन्द्रः श्रीशैलो दशमः स्मृतः। अन्वीशोऽभ्रातिकेशश्च महाकालोऽथ मध्यमः ॥ ६॥ केदारो भैरवश्चैव द्वितीयाष्टकमीरितम् । ततो गयाकुरुक्षेत्रखलानादिकनादिके ॥ ७ ॥ विमलश्चाट्टहासश्च माहेन्द्रो भीम एव च । वस्वापदं रुद्रकोटिरवियुक्तो महाबलः॥ ८ ॥ गोकर्णो भद्रकर्णश्च स्वर्णाक्षः स्थाणुरेव च । अजेशश्चैव सर्वज्ञो भास्वरस्तदनन्ततः॥ ९॥ सुबाहुमन्द्ररूपी च विशालो जटिलस्तथा । रौद्रोऽथ पिङ्गलाक्षश्च कालदंष्ट्री भवेत्ततः॥ १०॥ विदुरश्चैव घोरश्च प्राजापत्यो हुताशनः । कामरूपी तथा कालः कर्णोऽप्यथ भयानकः ॥ ११॥ मतङ्ग पिङ्गलश्चैव हरो वै धातृसंज्ञकः ।शङ्कुकर्णो विधानश्च श्रीकण्ठश्चन्द्रशूलिना ॥ १२॥ सहैतेन च पर्यन्ताः कथ्यन्तेऽथ**

चाहिए । इस तरह से निवृत्तिकला की शुद्धि हे जाती है । (ओं हूं हां अमुक आत्मने निवृत्तिकला शुद्धिरस्तु स्वाहा फट् वौषट्') यह पूर्णाहुति का मन्त्र होगा ।। ६७ ।।

**इस तरह आदिमहापुराण अग्निपुराण का निर्वाण दीक्षा के अन्तर्गत निवृत्ति कला शोधन नामक चौरासीवाँ अध्याय सम्पूर्ण हुआ ॥ ८४ ॥**

**श्रीशिवजी ने कहा–** उसके पश्चात् नाद तथा घोष प्रयत्नों वाले ह्रस्व तथा दीर्घ वर्णों के प्रयोग से शुद्ध तथा अविशुद्ध दोनों प्रकार के तत्त्वों को 'ओं हां हूं हाम्' इस मन्त्र से जोड़ने की भावना करनी चाहिए ।। १ ।। २ ।। उसके पश्चात् जल, तेज,वायु,आकाश इन चार भूतों दस इन्द्रियाँ चार तन्मात्राएँ, इन्द्रियाँ, बुद्धि, सत्त्व, रज,तम,अहङ्कार तथा चौबीसवाँ पुरुष ये सबके सब तत्त्व प्रतिष्ठा कला में निविष्ट हैं, इस तरह की भावना करनी चाहिए । ख से लेकर य तक पच्चीस अक्षर, छप्पन भुवन और उन्हीं के नाम के समान नाम वाले उतने ही रुद्रों की भी प्रतिष्ठा कला में निविष्ट समझना चाहिए ।। ३-५ ।। अमरेश, प्रभास, नैमिष, पुष्कर, आषाद दण्डी, भवभूति, तथा अठवें कुलीश, हरिश्चन्द्र तथा दसवाँ श्री शैलरुद्र हैं । अन्वीश, आभ्रातिकेश्वर, महाकाल, मध्यम केदार तथा भैरव ये द्वितीय अष्टक के रुद्र हैं । इसके पश्चात् गया, कुरुक्षेत्र, खल, अनादिक, नादिक, विमल, चाटुहास, महेन्द्र, भीम, वस्वापद्र, रुद्रकोटि, अविसयुक्त, महाबल, गोकर्ण, भद्रकर्ण, स्वर्णाक्ष, स्थाणु, अजेश, सर्वज्ञ, भास्वरतदनान्तर, सुबाहु, मन्द्ररूपी, विशाल, जटिल, रौद्र, पिङ्गलाक्ष, कालादंष्ट्री, विदुर, घोर प्राजापत्य हुताशन, कामरूपी,काल, कर्ण, भयानक, मतङ्ग,पिङ्गल, हर, धातृसंज्ञक, शङ्कुकर्ण, विधान, श्रीकण्ठ और चन्द्रशूली यह रुद्रों का नाम है । अब पदों को भी बतलाया जा रहा है ।। ११-१३ ।। ओं व्यापिन्, ओं अरूपिन्, ओं प्रमथ, ओं तेजः, ओं ज्योतिः, ओं अरूप,ओं पुरुष, ओं अग्ने, ओं धूम, ओं भस्मन् ओं अनादि ओं नाना ओं, धू धू, ओं भूः, ओं भुवः, ओं स्वः, ओं अनिधन, निधन,उद्भव,शिव,शर्व,

पदान्यपि ॥ १३ ॥ ॐ व्यापिन् ओं अरूपिन् ॐ प्रमथ, ॐ तेजः, ॐ ज्योतिः, ॐ पुरुष, ओमग्ने, ॐधूम, ओम्भस्म ( न् ), ॐअनादि, ॐ नाना, ॐ धू धू, ॐ भूः, ॐ भुवः, ॐ स्वः, अनिधन निधन, उद्भव शिव शर्व परमात्मन् महेश्वर महादेव सद्भाव ईश्वर महातेजः, भोगाधिपते मुञ्च प्रमथ सर्व सर्व सर्वेति द्वात्रिंशत्पदानि ॥ १४ ॥ वी ( बी ) जभावे त्रयोमन्त्रा वामदेवः शिवः शिखा । गान्धारी च सुषुम्णा च नाड्यो द्वौ मारुतौ तथा ॥ १५ ॥ समानोदाननामानौ रसना पायुरिन्द्रिये । रसस्तु विषयो रूपशब्दस्पर्शरसा गुणाः ॥ १६ ॥ मण्डलं वर्तुलं तच्च पुण्डरीकाङ्कितं सितम् । स्वप्नावस्था प्रतिष्ठायां कारणं गरुडध्वजम् ॥ १७ ॥ प्रतिष्ठान्तर्गतं सर्वं संचिन्त्य भुवनादिकम् । सूत्रं देहेऽथ मन्त्रेण प्रविश्यैनां वियोजयेत॥१८॥ ॐ हां ह्रीं हां प्रतिष्ठाकलापाशाय, ॐ फट् । स्वाहान्तेनानेनैव पूरकेणाङ्कुशमुद्रया समाकर्षेत् । ततः ॐ ह्रां हूं ह्रां प्रतिष्ठाकलापाशाय हूं फडित्यनेन संहारमुद्रया कुम्भकेन हृदयादधो नाभिसूत्रादादाय, ॐ हां हूं हां हां प्रतिष्ठाकलापाशाय नम इत्येनेनोद्भवमुद्रया रेचकेन कुम्भे समारोपयेत् । ॐहां ह्रीं प्रतिष्ठाकलापाशाय नम इत्यनेनार्चयित्वा संपूज्य स्वाहान्तेनाऽऽहुतीनां त्रयेण संनिधाय ततः- ॐ हां विष्णवे नम इति विष्णुमावाह्य संपूज्य संतर्प्य ॥ १९ ॥ विष्णो तवाधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहं । भाव्यं त्वयाऽनुकूलेन विष्णुं विज्ञापयेदिति ॥ २० ॥ ततो वागीश्वरीं देवीं वागीशमपि पूर्ववत् । आवाह्याभ्यर्च्य संतर्प्य शिष्यं वक्षसि ताडयेत् ॥ २१ ॥ ॐ हां हां हं फट् ॥ २२ ॥ प्रविशेदप्यनेनैव चैतन्यं विभजेत्ततः । शस्त्रेण पाशसंयुक्तं ज्येष्ठयाऽङ्कुशमुद्रया ॥ २३ ॥ ॐ हां हां हों हूं फट् ॥ २४ ॥ स्वाहान्तेन हृदाऽऽकृष्य तेनैव पुटितात्मना । गृहीत्वा तं नमोन्तेन निजात्मनि नियोजयेत् ॥ २५ ॥ ॐ हां हां होमात्मने नमः॥२६॥ पूर्ववत्पितृसंयोगं भावयित्वोद्भवाख्यया । वामया तदनेनैव

परमात्मन्, महेश्वर, महादेव,सद्भाव, ईश्वर महातेज, भोगाधिपते, मुञ्च, प्रमथ, सर्वसर्व सर्व ये बत्तीस पद हैं ।। १४ ।। प्रतिष्ठा कला के बीज रूप से तीन मन्त्र हैं- वामदेवमन्त्र, शिरोमन्त्र तथा शिखामन्त्र । उसमें दो नाड़ियाँ हैं- गान्धारी तथा सुषुम्णा तथा दो वायु हैं समान और उदान एवं इन्द्रियाँ भी दो हैं- रसनेन्द्रिय तथा मलेन्द्रिय । उसका विषय रस है तथा उसमें रूप, शब्द, स्पर्श तथा रस ये चार गुण विद्यमान पुण्डरीक के चिह्न से चिह्नित धवल वर्ण के गोल मण्डल, स्वप्नावस्था तथा गरुड़ध्वज भगवान् का कारण रूप से ध्यान करना चाहिए ।। १५-१७।। प्रतिष्ठा कला के अन्तर्गत सम्पूर्ण भुवन आदि का ध्यान करें । मन्त्र के द्वारा भावनापूर्वक शरीर में प्रवेश करके उसे उस कलापाश से मुक्त करना चाहिए ।। १८ ।। ओं हां ह्रीं प्रतिष्ठाकलापाशाय ओं फट् स्वाहा' इस स्वाहान्त मन्त्र के द्वारा ही पूरक प्राणायाम तथा अंकुश मुद्रा के द्वारा उस कलापाश का आकर्षण करना चाहिए। उसके पश्चात् ओं हां हूँ हां हूँ प्रतिष्ठाकलापाशाय हूँ फट् इस मन्त्र के द्वारा संहार मुद्रापूर्वक कुम्भक प्राणायाम से उसे हृदय से नीचे नाभिसूत्र से लेकर ओं हाँ हूँ हां हां प्रतिष्ठाकलापाशाय नमः इस मन्त्र से उद्भव मुद्रापूर्वक रेचक प्रणायाम से उसे कलश में स्थापित करना चाहिए । ओं हां ह्रीं प्रतिष्ठाकलापाशाय नमः इस मन्त्रसे अर्चना तथा अच्छी तरह से पूजन करके इसी मन्त्र के अन्त में स्वाहा पद लगाकर सन्निधान के लिए तीन आहुति देनी चाहिए । उसके पश्चात् 'ओं हां विष्णवे नमः' इस मन्त्र से विष्णु का आवाहन, पूजन और संतर्पण करके इस प्रकार से प्रार्थना करना चाहिए- हे भगवन् ! विष्णो ! मैं आपके अधिकार में मैं मुमुक्षु शिष्य को दीक्षा दे रहा हूँ । आप सदा अनुकूल रहें ।। १९-२० ।। इसके पश्चात् वागीश्वरी देवी तथा वागीश की भी पहले के ही समान, आवाहन, पूजन तथा संतर्पण करके शिष्य के हृदय में ताडन करना चाहिए ।। २१ ।। 'ओं हां हं हं फट् यह ताडन का मन्त्र है । इसी मन्त्र से शिष्य के हृदय में प्रवेश करके उसके पाशबद्ध चैतन्य को अस्त्र मन्त्र ज्येष्ठा अंकुश मुद्रा के द्वारा 'ओं हं हं ह्रों हूं फट् स्वाहा' इस मन्त्र से हृदय से निकालकर उसी मन्त्र के अन्त में 'नमः स्वाहा' जोड़कर उससे सम्पुटित मन्त्र के द्वारा जीव चैतन्य को पकड़कर आत्मा में संयुक्त करना चाहिए । ओं हां हं होमात्मने नमः' यह आत्मा में नियोजन का मन्त्र है ।। २२-२६ ।। पहले के ही समान उस जीव चैतन्य के पिता से संयुक्त होने की भावना करके, वामा उद्भव मुद्रा द्वारा

देवीगर्भे निक्षिपेत् ॥ २७ ॥ ॐ हां हं हं हामात्मने नमः ॥ २८ ॥ देहोत्पतौ हृदा ह्येवं शिरसा जन्मना तथा। शिखया वाऽधिकाराय भोगाय कवचाणुना ॥ २९ ॥ तत्त्वशुद्धौ हृदा ह्येवं गर्भाधानाय पूर्ववत्। शिरसा पाशशैथिल्ये निष्कृत्यैवं शतं जपेत् ॥ ३० ॥ एवं पाशवियोगेऽपि ततः शस्त्रात्मजप्तया। छिन्द्यादस्त्रेण कर्तर्या कला बीजवता यथा ॥ ३१॥ ॐह्रीं प्रतिष्ठाकलापाशाय हः फट्॥ ३२॥ विमृज्य वर्तुलीकृत्य पाशमस्त्रेण पूर्ववत्। घृतपूर्णे स्रुवे दत्त्वा कलास्त्रेणैव होमयेत् ॥ ३३ ॥ अस्त्रेण जुहुयात्पञ्च पाशाङ्कुशनिवृत्तये।प्रायश्चित्तनिषेधार्थं दद्यादष्टाऽऽहुतीस्ततः॥३४॥ ॐ हः, अस्त्राय हूं फट् ॥ ३५ ॥ हृदाऽऽवाह्य हृषीकेशं कृत्वा पूजनतर्पणे। पूर्वोक्तविधिना कुर्यादधिकारसमर्पणम् ॥ ३६ ॥ ॐ हां रसशुल्कं गृहाण स्वाहा ॥ ३७ ॥ निःशेषदग्धपाशस्य पशोरस्य हरे त्वया। न स्थेयं बन्धकत्वेन शिवाज्ञां श्रावयेदिति ॥ ३८ ॥ ततो विसृज्य गोविन्दं विद्यात्मानं नियोज्य च। राहुमुक्तार्धदृश्येन चन्द्रबिम्बेन संनिभम् ॥ ३९ ॥ संहारमुद्रया स्वस्थं विधायोद्भवमुद्रया। सूत्रे संयोज्य विन्यस्य तोयविन्दुं यथा पुरा ॥ ४० ॥ विसृज्य पितरौ वह्नेः पूजितौ कुसुमादिभिः। दद्यात्पूर्णां विधानेन प्रतिष्ठाऽपि विशोधिता ॥ ४१ ॥

इत्यादिमहापुराण आग्नेये निर्वाणदीक्षायां प्रतिष्ठाकलासंशोधनविधिकथनं नाम पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

---

उसे देवी के गर्भ में स्थापित करना चाहिए ।। २७ ।। देवी के गर्भ में स्थापित करने का मन्त्र 'ओं हां हं होमात्मने नमः।' ।। २८ ।। देहोत्पत्ति के लिए हृदयमन्त्र से, जीवात्मा के जन्म के लिए शिरोमन्त्र से, अधिकार प्राप्ति के लिए शिखामन्त्र से तथा भोग प्राप्ति के लिए कवच मन्त्रसे पाँच-पाँच बार हवन करना चाहिए ।। २९ ।। इसी तरह से तत्त्व की शुद्धि के लिए हृदयमन्त्र से, तथा पहले के ही समान गर्भाधान के लिए हृदयमन्त्र से संस्कार करना चाहिए। पाश की शिथिलता तथा प्रायश्चित्त के लिए शिरोमन्त्र का सौ बार जप करना चाहिए ।। ३० ।। इस प्रकार से पाश का वियोग हो जाने पर भी सत बार अस्त्र मन्त्र के जपपूर्वक कला बीज से युक्त अस्त्र मन्त्र रूपी कटार से उस कलापाश को काट डालना चाहिए ।। ३२ ।। ओं ह्रीं प्रतिष्ठाकलापाशाय हः फट् ।।' यह कलापाश के काटने का मन्त्र है। फिर अस्त्र मन्त्र से पाश को गोल करके पहले के ही समान मसल देना चाहिए और घी से भरे स्रुवा में उसे डालकर कला मन्त्र से हवन करना चाहिए ।। ३३ ।। पाश तथा अंकुश की निवृत्ति के लिए अस्त्र मन्त्रसे पाँच आहुति देनी चाहिए। उसके पश्चात् प्रायश्चित्त की निवृत्ति के लिए, आठ आहुतियाँ देनी चाहिए ।। ३४ ।। 'ओं हः अस्त्राय हूँ फट्' यह आहुति का मन्त्र है ।। ३५ ।। हृदयमन्त्र से भगवान् हृषीकेश का आवाहन करके उनका पूजन तथा तर्पण करना चाहिए। पुनः पूर्वोक्त विधि से अधिकार समर्पण का काम करना चाहिए ।। ३६ ।। अधिकार समर्पण का मन्त्र है- 'ओं हां रसशुल्कं गृहाण स्वाहा' है ।। ३७ ।। उसके पश्चात् यह शिवजी की आज्ञा सुनानी चाहिए कि- हे हरे ! इस पशु (जीव) का सारा पाश भस्म हो चुका है अतएव आप इसके बन्धक न बनें ।। ३८ ।। इसके बाद भगवान् गोविन्द का विसर्जन करके राहु से मुक्त आधे चन्द्र विम्ब के समान विद्यात्मा को नियुक्त करें ।। ३९ ।। संहारमुद्रा के द्वारा उसे आत्मस्थ करके उद्भव मुद्रा के द्वारा उसे सूत्रसे संयुक्त करना चाहिए। पहले के ही समान जल के विन्दुओं को शिष्यों के सिर पर विन्यस्त करके पूजित माता-पिता को विसर्जित करके अग्नि की पुष्प आदि से पूजा करके विधिपूर्वक पूर्णाहुति देनी चाहिए। इस तरह से प्रतिष्ठा कला की भी शुद्धि हो गयी ।। ४०-४१ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का प्रतिष्ठाकला संशोधन विधि वर्णन नामक पच्चासीवाँ अध्याय सम्पूर्ण हुआ ॥ ८५ ॥**

## अथ षडशीतितमोऽध्यायः

### विद्यासंशोधनविधिः

ईश्वर उवाच– **संधानमथ विद्यायाः प्राचीनकलया सह । कुर्वीत पूर्ववत्कृत्वा तत्त्वं वर्णय तद्यथा ॥ १ । ॐ हों क्षौमिति संधानम् ॥ २ ॥ रागश्च शुद्धविद्या च नियतिः कलया सह । कालो माया तथाऽविद्या तत्त्वानामिति सप्तकम् ॥ ३ ॥ रलवाः शषसा वर्णाः षड्विद्यायां प्रकीर्तिताः। पदानि प्रणवादीनि एकविंशतिसंख्यया ॥ ४ ॥ ॐ नमः शिवाय सर्वप्रभवे शिवायेशानसूर्याय तत्पुरुषवक्त्रायाघोरहृदयाय वामदेवगुह्याय सद्योजातमूर्तय ॐ वक्त्रायाघोरहृदयाय वामदेवगुह्याय सद्योजातमूर्तय ॐ नमो नमो गुह्यातिगुह्याय गोप्त्रेऽनिधनाय सर्वाधिपाय ज्योतीरूपाय परमेश्वराय भावेन, ॐ व्योमन् ॥ ५ ॥ ॐ रुद्राणां भुवनानां च स्वरूपमथ कथ्यते । प्रमथो वामदेवः स्यात् सर्वदेवोभवोद्भवः ॥ ६ ॥ वज्रदेहः प्रभुर्धाता क्रमविक्रमसुप्रभाः । वटुः प्रशान्तनामा च परमाक्षरसंज्ञकः ॥ ७ ॥ शिवश्च सशिवो बभ्रु रक्षय शंभुरेव च । अदृष्टरूपनामानौ तथाऽन्यो रूपवर्धनः ॥ ८ ॥ मनोन्मनो महावीर्यश्चित्राङ्गस्तदनन्तरम् । कल्याण इति विज्ञेयाः पञ्चविंशतिसंख्यया ॥ ९ ॥ मन्त्रोघोरोमरौ बीजौ नाड्यौ द्वे तत्र ते यथा । पूषा च हस्तिजिह्वा च व्याननागौ प्रभञ्जनौ ॥ १० ॥ विषयो रूपमेवैकमिन्द्रिये पादचक्षुषी । शब्दः स्पर्शश्च रूपं च त्रय एते गुणाः स्मृताः॥११॥ अवस्थाऽत्र सुषुप्तिश्च रुद्रो देवस्तु कारणम् । विद्यामध्यगतं सर्वं भावयेद्भुवनादिकम् ॥ १२ ॥ ताडनं छेदनं तत्र प्रवेशं च वियोजनम् । आकृष्य ग्रहणं कुर्याद्विद्यया हृत्प्रदेशतः ॥ १३ ॥ आत्मन्यारोप्य संगृह्य कलां कुण्डे निवेशयेत् । वामया योजयेद्योनौ गृहीत्वा द्वादशान्ततः ॥ १४ ॥ कुर्वीत देहसंपत्तिं जन्माधिकारमेव च । भोगं लयं तथा स्रोतः शुद्धिस्तत्त्वविशोधनम् ॥ १५ ॥ निःशेषमलकर्मादिपाशबन्धनिवृत्तये। निष्कृत्यैव विधानेन यजेत शतमाहुतीः ॥ १६ ॥ अस्त्रेण पाशशैथिल्यं मलशक्तितिरोहितम् । छेदनं मर्दनं तेषां वर्तुलीकरणं तथा ॥ १७ ॥ दाहं**

---

**श्री शिवजी ने कहा–** पूर्ववर्तिनी प्रतिष्ठा कला के साथ विद्याकला का पूर्ववत् सन्धान तथा तत्त्वों एवं वर्णों का चिन्तन 'ओं हों क्षौम्' इस मन्त्र से करना चाहिए ।। १-२ ।। विद्या कला में राग, शुद्ध, विद्या, नियति, कला, काल, माया तथा अविद्या ये सात तत्त्व तथा र, ल, व, श, ष, स ये छह वर्ण बतलाए गये हैं । साथ ही ओं प्रणव आदि इक्कीस वर्ण भी इसमें बतलाए गए हैं ।। ३-४ ।। ओं नमः शिवाय सर्वप्रभवे शिवाय ईशानसूर्याय तत्पुरुष वक्त्राय अघोर हृदयाय वामदेवगुह्याय सद्योजातमूर्तये । ओं नमो नमो गुह्यातिगुह्याय गोप्त्रे अनिधनाय सर्वाधिपाय ज्योतीरूपाय परमेश्वराय भावेन ओं व्योमन् ।। ५ ।। अब रुद्रों तथा भुवनों का स्वरूप बतलाया जा रहा है । प्रमथ, वामदेव, सर्वदेवोद्भव, भवोद्भव, वज्रदेह, प्रभु, धाता, क्रम, विक्रम, सुप्रभ, वटु, प्रशान्त, परमाक्षर, शिव,सुशिव, बभ्रू, अक्षय, शम्भु, अदृष्ट रूप, अदृष्ट नाम, रूपवर्धन,मनोन्मन, महावीर्य, चित्राङ्ग तथा कल्याण ये पच्चीस रुद्रों तथा भुवनों के नाम हैं ।। ६-९ ।। विद्याकला में अघोर मन्त्र तथा म एवं र दो बीज हैं, पूषा तथा हस्तिजिह्वा ये दो नाड़ियाँ हैं, ब्यान एवं नाग ये दो वायु हैं, रूप नामक एक विषय है तथा पादेन्द्रिय एवं चक्षुरिन्द्रिय दो इन्द्रियाँ हैं । इसमें तीन गुण बतलाए गए हैं, शब्द, स्पर्श एवं रूप ।। १०-११ ।। इसमें सुषुप्ति अवस्था तथा रुद्रदेव कारण हैं । भावना के द्वारा विद्या के भीतर ही भुवन आदि समस्त वस्तुओं का ध्यान करना चाहिए ।। १२ ।। शिष्य के हृदय में ताडन, कलापाश का छेदन, शिष्य के हृदय में प्रवेश, उसके जीव चैतन्य का पाशबन्ध से वियोजन, तथा हृदय प्रदेश से जीव चैतन्य का आकर्षण एवं ग्रहण करना चाहिए ।। १३ ।। इसके पश्चात् सम्पूर्ण मलों तथा कर्म आदि के पाशों से निवृत्ति के लिए, देह सम्पत्ति, जन्म, अधिकार, भोगलय, स्रोतःशुद्धि तथा तत्त्वशुद्धि करना

तदक्षराभावं प्रायश्चित्तमथोदितम् । रुद्रावाहनं पूजा रूपगन्धसमर्पणम् ॥ १८ ॥ ॐ हां रूपगन्धो शुल्कं रुद्र गृहाण स्वाहा ॥ १९ ॥ संश्राव्य शाम्भवीमाज्ञां रुद्रं विसृज्य कारणम् । विधायऽऽत्मनि चैतन्यं पाशसूत्रं निवेशयेत् ॥ २० ॥ विन्दुं शिरसि विन्यस्य विसृजेत्पितरौ ततः । दद्यात्पूर्णां विधानेन समस्तविधिपूरणीम् ॥ २१ ॥ पूर्वोक्तविधिना कार्यं विद्यायां ताडनादिकम् । स्वबीजं तु विशेषः स्यादिति विद्या विशोधिता ॥ २२ ॥

इत्यादिमहापुराण आग्नेये निर्वाणदीक्षायां विद्याशोधनं नाम षडशीतितमोऽध्यायः ॥ ८६ ॥

## अथ सप्ताशीतितमोऽध्यायः

## शान्तिशोधनम्

ईश्वर उवाच— **संदध्यादधुना विद्यां शान्त्या सार्धं यथाविधि । शान्तौ तत्त्वत्रयं लीनं भावेश्वरसदाशिवौ ॥ १ ॥ हकारश्च क्षकारश्च द्वौ वर्णौ परिकीर्तितौ । रुद्राः समाननामानो भुवनैः सह तद्यथा ॥ २ ॥ प्रभवः समयः क्षुद्रो विमलः शिव इत्यपि । घनौ निरञ्जनाकारौ श्वशुरौ दीप्तकारणौ॥३॥ त्रिदशेश्वरनामा च त्रिदशः कालसंज्ञकः । सूक्ष्माम्बुजेश्वरश्चेति रुद्राः शान्तौ प्रतिष्ठिताः ॥ ४ ॥ व्योमव्यापिने व्योमव्याप्यरूपाय सर्वव्यापिने शिवायानन्तायानाथायानाश्रिताय ध्रुवाय शाश्वताय योगपीठसंस्थिताय नित्ययोगिने ध्यानाहारायेति द्वादशपदानि ॥ ५ ॥ पुरुषः कवचोमन्त्रो बीजे विन्दूपकारकौ । अलम्बुषायशानाड्यौ वायूकृकरकूर्मकौ ॥ ६ ॥ इन्द्रिये त्वक्करावस्याः स्पर्शस्तु विषयो मतः । गुणौ स्पर्शनिनादौ द्वावेकः**

---

चाहिए । पुनः प्रायश्चित्त के लिए विधिपूर्वक सौ आहुति देनी चाहिए ।। १५-१६ ।। इसके पश्चात् अस्त्र मन्त्र से पाश की शिथिलता, मलशक्ति का तिरोधान, छेदन,मर्दन,वर्तुलीकरण (गोल बनाना) दाहन अक्षराभाव तथा प्रायश्चित्त करना चाहिए । उसके पश्चात् रुद्रों का आवाहन, पूजन करके उन्हें रूप एवं गन्ध समर्पित करना चाहिए ।। १७-१८ ।। ओं हां रूपगन्धौ शुल्क रुद्र गृहाण; यह रूप एवं गन्ध के समर्पण का मन्त्र है ।। १९ ।। पुनः शिवाज्ञा को सुनाकर कारण रुद्र का विसर्जन करके जीव चैतन्य का आत्मा में स्थापन करना चाहिए और उसे पाशसूत्र में निवेशित करना चाहिए । पुनः जल विन्दु स्वरूप उस चैतन्य का शिष्य के सिर पर विन्यास करके माता-पिता का विसर्जन करना चाहिए । तदनन्तर सम्पूर्ण विधान को पूर्ण करने वाली पूर्णाहुति देनी चाहिए ।। २०-२१ ।। पूर्वोक्त विधि से ही विद्याकला में ताडन आदि करना चाहिए । इसमें विद्याकला के बीज का ही उपयोग करना चाहिए यही इसकी विशेषता है । इस तरह से विद्याकला की शुद्धि हो जाती है ।। २२ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का निर्वाण दीक्षा के अन्तर्गत विद्याशोधन नामक छियासीवाँ अध्याय सम्पूर्ण हुआ ॥ ८६ ॥**

**श्री शिवजी ने कहा—** अब शान्ति कला के साथ विद्याकला का विधिपूर्वक अनुसन्धान करना चाहिए । शान्तिकला में तीन तत्त्व लीन हैं- भाव, ईश्वर तथा सदाशिव ।। १ ।। उसमें दो वर्ण बतलाए गए हैं– हकार तथा क्षकार । इसमें विद्यमान रुद्रों के भी वे ही नाम हैं जो नाम भुवनों के हैं ।। २ ।। प्रभव, समय,क्षुद्र, विमल, शिव, घन, निरञ्जन, अङ्गार, सुशिरा,दीप्त, कारण,त्रिदशेश्वर, कालसूक्ष्म तथा अम्बुजेश्वर । ये चौदह रुद्र शान्तिकला में प्रतिष्ठित हैं ।। ३-४ ।। शान्तिकला में बारह पद विद्यमान हैं- व्योमव्यापिने, व्योमव्याप्यरूपाय, सर्वव्यापिने, शिवाय, अनन्ताय, अनाथाय, अनाश्रिताय, ध्रुवाय, शाश्वताय, योगपीठ संस्थिताय,नित्ययोगिने तथा ध्यानाहाराय ।। ५ ।। पुरुष तथा कवच ये दो मन्त्र हैं, विन्दु तथा पकार ये दो बीज मन्त्र हैं । अलम्बुषा तथा यशा ये दो नाड़ियाँ हैं, कृकर तथा कूर्म ये दो वायु हैं ।। ६ ।। वाणी तथा त्वक् ये दो इन्द्रियाँ हैं । स्पर्श उसका विषय है । स्पर्श तथा शब्द ये दो गुण हैं और ईश्वर ही कारण हैं ।।७।।

कारणमीश्वरः ॥ ७ ॥ तुर्यावस्थितिशान्तिस्थं संभाव्य भुवनादिकम् । विदध्यात्ताडनं भेदं प्रवेशं च वियोजनम् ॥ ८ ॥ आकृष्य ग्रहणं कुर्याच्छान्तेर्वदनसूत्रतः । आत्मन्यारोप्य संगृह्य कलां कुण्डे निवेशयेत् ॥ ९ ॥ ईश तवाधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहम् । भाव्यं त्वयाऽनुकूलेन कुर्याद्विज्ञापनामिति ॥ १० ॥ आवाहनादिकं पित्रोः शिष्यस्य ताडनादिकम् । विधायाऽऽदाय चैतन्यं विधिनाऽऽत्मनि योजयेत् ॥ ११ ॥ पूर्ववत्पितृसंयोगं भावयित्वोद्भवाख्यया । हृत्संपुटात्मबीजेन देवीगर्भे नियोजयेत् ॥ १२ ॥ देहोत्पत्तौ हृदा पञ्च शिरसा जन्महेतवे । शिखया वाऽधिकाराय भोगाय कवचाणुना ॥ १३ ॥ लयाय शस्त्रमन्त्रेण स्रोतः शुद्धौ शिवेन च । तत्त्वशुद्धौ हृदा ह्येवं गर्भाधानादि पूर्ववत् । १४ ॥ वर्मणा पाशशैथिल्यं निष्कृत्यैवं शतं यजेत् । मलशक्तितिरोधाने शस्त्रेणाऽऽहुतिपञ्चकम् ॥ १५ ॥ एवं पाशवियोगेऽपि ततः सप्तास्त्रजप्तया। छिन्द्याच्छस्त्रेण कर्तर्या पाशान्बीजवता यथा ॥ १६ ॥ ॐ हौं शान्तिकलापाशाय हः, हूं फट् ॥ १७ ॥ विमृज्य वर्तुलीकृत्य पाशमस्त्रेण पूर्ववत्। घृतपूर्णे स्रुवे दत्त्वा कलास्त्रेणैव होमयेत् ॥ १८ ॥ अस्त्रेण जुहुयात्पञ्च पाशाङ्कुशनिवृत्तये । प्रायश्चित्तनिषेधाय दद्यादष्टाऽऽहुतीरथ ॥ १९ ॥ ॐ हः, अस्त्राय हूं फट् ॥ २० ॥ हृदेश्वरं समावाह्य कृत्वा पूजनतर्पणे । विदधीत विधानेन तस्मै शुल्कसमर्पणम् ॥ २१ ॥ निःशेषदग्धपाशस्य पशोरस्येश्वर त्वया । न स्थेयं बन्धकत्वेन शिवाज्ञां श्रावयेदिति॥२३॥ विसृजेदीश्वरं देवं रौद्रात्मानं नियोजयेत् । ईशश्चन्द्रमिवाऽऽत्मानं । विधिनात्मनि

शान्तिकला में तुरीयावस्था विद्यमान रहती है । इस तरह से इसमें भुवन आदि की भावना करके शिष्य के हृदय का ताडन, कला पाश का भेदन, शिष्य के हृदय में प्रवेश तथा जीव चैतन्य का पाशबन्ध से विमोचन करना चाहिए ।। ८ ।। पुनः शान्तिकला के मुख्य सूत्र से आकर्षण करके ग्रहण तथा आत्मा में आरोपण करना चाहिए । फिर उसका संग्रह करके कला को कुण्ड में स्थापित करना चाहिए ।। ९ ।। उस समय यह निवेदन करना चाहिए कि हे ईश आपके अधिकार में मैं मुमुक्षु को दीक्षित कर रहा हूँ अतएव आप इसके अनुकूल बनें रहें ।। १० ।। माता-पिता का आवाहन आदि तथा शिष्य का ताडन आदि करके, जीव चैतन्य को विधिपूर्वक ग्रहण करके उसे आत्मा में संयुक्त करना चाहिए ।। ११ ।। उद्भव मुद्रा के प्रदर्शनपूर्वक पहले के ही समान पितृसंयोग की भावना करनी चाहिए । उसके पश्चात् हृदयमन्त्र से संपुटित आत्ममन्त्र के द्वारा उसको वागीश्वरी देवी के गर्भ में भावनापूर्वक डालना चाहिए ।। १२ ।। देहोत्पत्ति के लिए हृदयमन्त्र से पाँच बार, जन्म के लिए शिरोमन्त्र से पाँच बार, अधिकार प्राप्ति के लिए शिखामन्त्र से पाँच बार तथा भोग प्राप्ति के लिए कवचमन्त्र से पाँच बार हवन करना चाहिए । लय के लिए अस्त्र मन्त्र से, तथा स्रोतः शुद्धि लिए शिवमन्त्र से हवन करना चाहिए । इसी तरह से हृदयमन्त्र से तत्त्वशुद्धि और उपर्युक्त रीति से गर्भाधानादि संस्कारों को करना चाहिए ।। १४ ।। कवच मन्त्र से पाश को शिथिल करना चाहिए तथा प्रायश्चित्त के लिए उसे सौ बार जपना चाहिए । मानवशक्ति का तिरोधान करने के लिए अस्त्र-मन्त्र से पाँच आहुति देनी चाहिए ।। १५ ।। इसी प्रकार से जीव चैतन्य से पाश का विमोचन करने में भी करना चाहिए । फिर सात बार बीज से युक्त अस्त्रमन्त्र के जप से अभिमन्त्रित कटार के द्वारा पाश का छेदन करना चाहिए ।। १६ ।। ओं हौं शान्तिकलापाशाय, हूँ फट्' यह पाशच्छेद का मन्त्र है ।। १७ ।। पहले के ही समान अस्त्रमन्त्र से पाश को मसलकर तथा गोल बनाकर उसे घी से भरे स्रुवा में रखकर अस्त्र कला के द्वारा हवन करना चाहिए ।। १८ ।। पाश तथा अंकुश की निवृत्ति के लिए अस्त्र मन्त्र से पाँच बार हवन करना चाहिए । उसके पश्चात् प्रायश्चित्त की निवृत्ति के लिए आठ आहुति देनी चाहिए ।।१९।। 'ओं हः अस्त्राय फट्' यह उसका मन्त्र है ।। २० ।। उसके पश्चात् हृदेश्वर का आवाहन करके उनका पूजन तथा तर्पण करके विधिपूर्वक उनको शुल्क समर्पित करना चाहिए ।। २१ ।। 'ओं हामीश्वर बुद्ध्यंहंकारौ शुल्कं गृहाण स्वाहा ।। २२ ।। पुनः ईश्वर को यह शिव की आज्ञा सुनानी चाहिए कि- हे ईश्वर ! इस पशु (जीव) के सारे पाप भस्म हो चके हैं अतएव आप इसके लिए बन्धन कारक नहीं बनें ।। २३ ।। इसके पश्चात् ईश्वर का विसर्जन करके रुद्रात्मक नियोजन करे । पुनः ईश तथा चन्द्रमा के समान विधिपूर्वक आत्मा में उसका योग कराएँ । पुनः शुद्ध उद्भव

योजयेत् ॥ २४ ॥ सूत्रे संयोजयेदेनं शुद्धयोद्भवमुद्रया । दद्यान्मूलेन शिष्यस्य शिरस्यमृतबिन्दुकम् ॥ २५ ॥ विसृज्य पितरौ वह्नेः पूजितौ कुसुमादिभिः । दद्यात्पूर्णां विधानज्ञो निःशेषविधिपूरणीम् ॥ २६ ॥ अस्यामपि विधातव्यं पूर्ववत्ताडनादिकम् । स्वबीजं तु विशेषः स्याच्छुद्धिः शान्तेरपीडिता ॥ २७ ॥

इत्याग्नेये महापुराणे निर्वाणदीक्षायां शान्तिशोधनं नाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

## अथाष्टाशीतितमोऽध्यायः

## निर्वाणदीक्षाशेषविधिः

ईश्वर उवाच– **संधानं शान्त्यतीतायाः शान्त्या सार्धं विशुद्धया । कुर्वीत पूर्ववत्तत्र तत्त्ववर्णादि तद्यथा ॥ १ ॥ ॐ ह्रीं क्ष्मों हौं हामिंति संधानानि ॥ २ ॥ उभौ शक्तिशिवौ तत्त्वे भुवनाष्टकमिन्धकम् । दीपकं रोचिकं चैव मोचकं चोर्ध्वगामि च ॥ ३ ॥ व्योमरूपमनाथं च स्यादनाश्रितमष्टकम् । ॐकारपदमीशानो मन्त्रो वर्णाश्च षोडश ॥ ४ ॥ अकारादिविसर्गान्ता बीजेनादहकारकौ । कुहूश्च शङ्खिनी नाड्यौ देवदत्तधनंजयौ॥५॥ मारुतौ स्पर्शनं श्रोत्रमिन्द्रिये विषयो नभः । शब्दो गुणोस्यावस्था तु तुर्यातीता तु पञ्चमी ॥ ६ ॥ हेतुः सदाशिवो देव इति तत्त्वादिसंचयम् । संचिन्त्य शान्त्यतीताख्यं विदध्यात्ताडनादिकम् ॥ ७ ॥ कलापाशं समाताड्य फडन्तेन विभिद्य च । प्रविश्यान्तर्नमोन्तेन फडन्तेन वियोजयेत्॥८॥ शिखाहृत्संपुटीभूतं स्वाहान्तं सृणिमुद्रया । पूरकेण समाकृष्य पाशं मस्तकसूत्रतः ॥ ९ ॥ कुम्भकेन समादाय रेचकेनोद्भवाख्यया।**

---

मुद्रा के प्रदर्शनपूर्वक इसको (जीव चैत्न्य को) सूत्र से संयुक्त करना चाहिए । पुनः शिष्य के सिर पर मूलमन्त्र के द्वारा अमृत के तुल्य अर्घ्य जल के विन्दुओं को डालना चाहिए ।। २५ ।। पुनः पूजित माता-पिता का विसर्जन करके विधानज्ञ को चाहिए कि बह्नि की कुसुम आदि से पूजा करके समस्त विधियों को पूर्ण करने वाली पूर्णाहुति दे ।। २६ ।। इस शान्तिकला में भी पहले के ही समान ताडन आदि करना चाहिए । इसकी यह विशेषता होती है कि इसमें इसका अपना बीजमन्त्र होता है । इस तरह से शान्तिकला की शुद्धि भी पूरी होती है ।। २७।।

**इस तरह से आदिमहापुराण अग्निपुराण का शान्तिशोधन नामक सत्तासीवाँ अध्याय सम्पूर्ण हुआ ॥ ८७ ॥**

**श्रीशिवजी ने कहा–** विशुद्ध शान्ति कला के साथ शान्त्यतीत कला का संधान करना चाहिए । उसमें भी पहले के ही समान तत्त्व तथा वर्णों आदि की भावना करनी चाहिए ।। १।। उस समय ओं ह्रीं क्ष्मौं हौं इस मन्त्र का अनुसन्धान करना चाहिए ।। २ ।। शान्त्यतीत कला में शिव तथा शक्ति ये दो तत्त्व हैं तथा आठ भुवन हैं । इनके नाम हैं- इन्धक, दीपक, रोचिक, मोचक, ऊर्ध्वगामी, व्योमरूप, अनाथ तथा अनाश्रित । इसमें ओंकार पद है, ईशान मन्त्र है । उ से लेकर विसर्ग तक के सोलह वर्ण हैं और दो बीज हैं नाद एवं हकार । कुहू तथा शङ्खिनी ये दो नाड़ियाँ हैं । देवदत्त एवं धनञ्जय ये दो वायु हैं । इसमें दो इन्द्रियाँ हैं- त्वगिन्द्रिय और श्रोत्रेन्द्रिय । इसका विषय आकाश है । इसमें शब्द नामक गुण तथा तुरीय अवस्था से भिन्न पाँचवीं तुरीयातीतावस्था है ।। ३-६ ।। इसमें हेतु रूप से भगवान् सदाशिव हैं । इस तरह से संक्षेप में तत्त्व आदि को बतलाया गया ।शान्त्यतीतकला का इस प्रकार से ध्यान करके शिष्य के हृदय में ताडन आदि का कार्य करना चाहिए ।। ७ ।। कलापाश का ताड़न करके उसे अस्त्र मन्त्र से काटकर अन्त में 'नमः' वाले मन्त्र (हृदयमन्त्र) से शिष्य के अन्तःकरण में प्रवेश करके, फट् पद से अन्त होने वाले मन्त्र (अस्त्र मन्त्र) से जीव चैतन्य को पाश से अलग करना चाहिए ।। ८ ।। शिखा मन्त्र तथा हृदयमन्त्र से उसे सम्पुटित करके, स्वाहा, मन्त्र (शिरोमन्त्र) का उच्चारण

हृत्संपुटनमोन्तेन वह्निं कुण्डे निवेशयेत् ॥ १० ॥ अस्याः पूजादिकं सर्वं निवृत्तेरिव साधयेत्। सदाशिवं समावाह्य पूजयित्वा प्रतर्प्य च ॥ ११ ॥ सदाऽऽख्यातेऽधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहम् । भाव्यं त्वयाऽनुकूलेन भक्त्या विज्ञापयेदिति ॥ १२ ॥ पित्रोरावाहनं पूजां कृत्वा तर्पणसंनिधी। हृत्सम्पुटात्मबीजेन शिष्यं वक्षसि ताडयेत् ॥ १३ ॥ ॐ हां हूं हां फट् ॥ १४ ॥ प्रविश्य चाप्यनेनैव चैतन्यं विभजेत्ततः। शस्त्रेण पाशसंयुक्तं ज्येष्ठयाऽङ्कुशमुद्रया ॥ १५ ॥ ॐ हां हः, हूं हं फट् ॥ १६ ॥ स्वाहान्तेन तदाकृष्य तेनैव पुटितात्मना । गृहीत्वा तं नमोन्तेन निजात्मनि नियोजयेत्॥१७॥ ॐ हां हं हामात्मने नमः॥ १८ ॥ पूर्ववत्पितृसंयोगं भावयित्वोद्भवाख्यया । वामया तदनेनैव देव्या गर्भे नियोजयेत् ॥ १९ ॥ गर्भाधानादिकं सर्वं पूर्वोक्तविधिनाऽऽचरेत् । मूलेन पाशशैथिल्ये निष्कृत्यैव शतं जपेत् ॥ २० ॥ मलशक्तितिरोधाने पाशानां च वियोजने । पञ्च पञ्चाऽऽहुतीर्दद्यादायुधेन यथा पुरा ॥ २१ ॥ पाशानायुधमन्त्रेण सप्तवाराभिजप्तया । छिन्द्यादस्त्रेण कर्तर्या कलाबीजयुजा यथा ॥ २२ ॥ ॐ हां शान्त्यतीतकलापाशाय हः, हूं फट् ॥ २३ ॥ विमृज्य वर्तुलीकृत्य पाशानस्त्रेण पूर्ववत् । घृतपूर्णे स्रुवे दत्त्वा कलास्त्रेणैव होमयेत् ॥ २४ ॥ अस्त्रेण जुहुयात्पञ्च पाशाङ्कुशनिवृत्तये । प्रायश्चित्तनिषेधार्थं दद्यादष्टाऽऽहुतीस्ततः ॥ २५ ॥ सदाशिवं हृदाऽऽवाह्य कृत्वा पूजनतर्पणे । पूर्वोक्तविधिना कु र्यादधिकारसमर्पणम् ॥ २६ ॥ ॐ हां सदाशिव मनोबिन्दुं शुल्कं गृहाण स्वाहा ॥ २७ ॥ निःशेषदग्धपाशस्य पशोरस्य सदाशिव । बन्धाय न त्वया स्थेयं शिवाज्ञां श्रावयेदिति॥२८॥ मूलेन जुहुयात्पूर्णां विसृजेत्तु सदाशिवम्। ततो विशुद्धमात्मानं शरच्चन्द्रमिवोदितम् ॥ २९ ॥ संहारमुद्रया

करके अंकुशमुद्रा प्रदर्शनपूर्वक पूरक प्राणायाम के द्वारा उसका (कलापाश का) मस्तक सूत्र से आकर्षण करके ।। ९ ।। कुम्भक प्राणायाम से उसे लेकर, रेचक प्राणायाम एवं उद्भव मुद्रा द्वारा, हृदयमन्त्र से सम्पुटित करके नमस्कारान्त मन्त्र से उसे अग्निकुण्ड में स्थापित करना चाहिए ।। ११ ।। इसका पूजन आदि सारा कार्य निवृत्ति कला के ही समान करना चाहिए । पुनः सदाशिव का आवाहन करके उनका पूजन करके तथा तर्पण करके ।। ११ ।। भक्तिपूर्वक यह प्रार्थना करना चाहिए कि- हे सदाशिव! आपके इस अधिकार में मैं मुमुक्षु शिष्य को दीक्षित कर रहा हूँ आप इसके अनुकूल बने रहें ।। १२ ।। उसके पश्चात् माता-पिता का आवाहन,पूजन, तर्पण और सन्निधिकरण करके, हृदयमन्त्र से सम्पुष्टित आत्ममन्त्र के द्वारा शिष्य के वक्षस्थल पर 'ओं हां हूँ हां हं फट्' इस मन्त्र से ताड़न करना चाहिए ।। १३-१४ ।। इस मन्त्र के द्वारा शिष्य के अन्तःकरण में प्रवेश करके उससे पाश से युक्त जीव चैतन्य को ज्येष्ठ अङ्कुश मुद्रा के प्रदर्शनपूर्वक शस्त्र मन्त्र से अलग करना चाहिए ।। १५ ।। ':ओं हां हः हूँ फट् स्वाहा' इस मन्त्र से उसका आकर्षण करके उसी स्वाहान्त मन्त्र से उसका ग्रहण करके उसको नमः अन्त वाले मन्त्र से अपनी आत्मा से संयुक्त करना चाहिए ।। १७ ।। उसका मन्त्र- 'ओं हां हां हामात्मने नमः' है ।। १८ ।। फिर पहले के ही समान वामा उद्भव मुद्रा के द्वारा माता-पिता के संयोग की भावना करके इसी मन्त्र से वागीश्वरी देवी के गर्भ में उसको स्थापित करना चाहिए ।। १९ ।। उसके पश्चात् पूर्वोक्त विधि के द्वारा ही गर्भाधान आदि सम्पूर्ण विधान को करना चाहिए । तदनन्तर मूलमन्त्र से पाश की शिथिलता के लिए मूलमन्त्र का सौ बार जप करना चाहिए ।। २० ।। मलशक्ति का तिरोधान करने के लिए, तथा पाशों का वियोजन करने के लिए, पहले के ही समान प्रत्येक कार्य के लिए अस्त्र मन्त्र से पाँच-पाँच आहुति देनी चाहिए ।। २१ ।। सात बार आयुधमन्त्रसे अभिमन्त्रित कटार के द्वारा पाशों का छेदन 'ओं हां शान्त्यतीतकलापाशाय हः हूँ फट् इस कलाबीज मन्त्र से कर देना चाहिए।।२२-२३ ।। पुनः पाशों को मसलकर गोला करके पहले के ही समान, अस्त्रमन्त्र से घी से भरे स्रुवा में रखकर कलास्त्र मन्त्र से होम कर देना चाहिए ।। २४ ।। उसके पश्चात् पाश तथा अंकुश की निवृत्ति के लिए अस्त्र मन्त्र से पाँच आहुति देनी चाहिए, तदनन्तर प्राश्यश्चित्त की निवृत्ति के लिए आठ आहुतियाँ देनी चाहिए ।। २५ ।। हृदयमन्त्र से सदाशिव का आवाहन, पूजन तथा तर्पण करके,पूर्वोक्त विधि से अधिकार समर्पण करना चाहिए ।। २६ ।। उसका मन्त्र है- 'ओं हां सदाशिव मनोविन्दुं शुल्कं गृहाण स्वाहा' ।। २७ ।। उसके पश्चात् शिव की आज्ञा को सुनाना चाहिए- ' हे सदाशिव ! इस पशु के सम्पूर्ण पाश दग्ध हो चुके हैं, अतएव आप इसके लिए बन्धनकारक न होएँ ।। २८ ।। पुनः मूलमन्त्र से पूर्णाहुति देकर सदाशिव का विसर्जन

रौद्र्या संयोज्य गुरुरात्मनि । कुर्वीत शिष्यदेहस्थमुद्धत्योद्भवमुद्रया ॥ ३० ॥ दद्यादार्घ्यानायास्य मस्तकेऽर्घ्याम्बुबिन्दुकम् । क्षमयित्वा महाभक्त्या पितरौ विसृजेत्तथा ॥ ३१ ॥ खेदितौ शिष्यदीक्षायै यन्मया पितरौ युवाम् । कारुण्यान्मोक्ष (च) यित्वा तद्व्रज त्वं स्थानमात्मनः ॥ ३२ ॥ शिखामन्त्रितकर्तर्या बोधशक्तिस्वरूपिणीम् । शिखां छिन्द्याच्छिखास्त्रेण शिष्यस्य चतुरङ्गुलाम् ॥ ३३ ॥ ॐ क्लीं शिखायै हूं फट्, ओमस्त्राय हूँ फट् ॥ ३४ ॥ स्रुचितां घृतपूर्णायां गोविङ्गोलकमध्यगाम् । संविधायास्त्रमन्त्रेण हूंफडन्तेन होमयेत् ॥ ३५ ॥ ॐ हौं हः, अस्त्राय हूं फट् ॥ ३६॥ प्रक्षाल्य स्रुक्स्रुवौ शिष्यं संस्नाप्याऽऽचम्य च स्वयम् । योजनिकास्थमात्मानं शस्त्रमन्त्रेण ताडयेत् ॥ ३७ ॥ वियोज्याऽऽकृष्य संपूज्य पूर्ववद् द्वादशान्ततः। आत्मीयहृदयाम्भोजकर्णिकायां निवेशयेत् ॥ ३८ ॥ पूरितं स्रुवमाज्येन विहिताधोमुखस्रुचा । नित्योक्तविधिनाऽऽदाय शङ्खसंनिभमुद्रया॥३९॥ प्रसारितशिरोग्रीवो नादोच्चारानुसारतः । समदृष्टिः स्थिरश्शान्तः परभावसमन्वितः ॥ ४० ॥ गृहीत्वा षड्विधाध्वानं श्रु (स्रु) गग्रे प्राणनाडिकम्। सञ्चिन्त्य विंदुवद्ध्यात्वा क्रमशः सप्तधा यथा ।। ४१।। प्रथमं प्राणसंयोगस्वरूपमपरन्ततः। हृदयादिक्रमोच्चार विसृष्टं मंत्रसंज्ञकम् ।। ४२।। पूरकं कुम्मकं कृत्वा व्यादाय वदनं मनाक्।सुषुम्णानुगतं नादस्वरूपं तु तृतीयकम् ।। ४३।। सप्तमे कारणे त्यागात् प्रशान्त विस्वरंलयः। शक्तिनादोर्ध्वसंचारस्तच्छक्ति विस्वरं मतम् ।। ४४ ॥ प्राणस्य निखिलस्यापि शक्तिप्रमेयवर्जितम् । तत्कालविस्वरं षष्ठं शक्तातीतं च सप्तकम्॥ ४५ ॥ तदेतद्योजनस्थानं विषुवं तत्त्वसंज्ञकम् । पूरकं कुम्भकं कृत्वा व्यादाय वदनं मनाक् ॥ ४६ ॥ शनैरुदीरयन्मूलं कृत्वा शिष्यात्मनो लयम्। हकारे तडिदाकारे षडध्वप्राणरूपिणि ॥ ४७॥ उकारं परतो नाभेर्वितस्तिं व्याप्य संस्थितम् । ततः परमकारन्तु हृदयाच्चतुरङ्गुलम्॥४८॥ ओंकारवाचकं विष्णोस्ततोऽष्टाङ्गुलकण्ठकम् । चतुरङ्गुलतालुस्थं मकारं रुद्रवाचकम् ॥ ४९ ॥ तद्वल्ललाटमध्यस्थं बिन्दुमीश्वरवाचकम् । नादं

करना चाहिए । उसके पश्चात् आचार्य शिष्य के शरत्कालीन चन्द्रमा के समान उदित विशुद्ध जीवात्मा को रौद्रीसंकार मुद्रा के द्वारा अपने आत्मा में संयुक्त करके आत्मस्थ कर लें । शिष्य के शरीर में विद्यमान आत्मा का उद्भव मुद्रा के द्वारा उद्धार करके, उसके पोषण के लिए शिष्य के मस्तक पर अर्घ्यजल के एक बूँद को स्थापित करे । इसके बाद परम भक्तिभाव से क्षमा प्रार्थना करके माता-पिता का विसर्जन करना चाहिए ।। ३०-३१ ।। उस समय यह प्रार्थना करनी चाहिए कि- शिष्य को दीक्षा देने के लिए आप दोनों को जो मैंने कष्ट दिया है उसे आप दोनों क्षमा करके अपने स्थान को पधारें ।। ३२ ।। शिखामन्त्र से अभिमन्त्रित कटार से चार अंगुल बड़ी बोधशक्तिस्वरूपिणी शिखा का छेदन करना चाहिए ।। ३३ ।। उसका मन्त्र है- ओं क्लीं शिखायै हूँ फट्, ओमस्त्राय हूं फट् ।। ३४ ।। गाय के गोबर के गोले के भीतर रखी हुयी उस शिखा को घी से भरे स्रुक् में रखकर 'हूं फट्' अन्त वाले अस्त्र मन्त्र से हवन करना चाहिए ।। ३५ ।। हवन का मन्त्र है- 'ओं हौं हः अस्त्राय हूँ फट् ।। ३६ ।। तदनन्तर स्रुक् तथा स्रुवा को धोकर तथा शिष्य को स्नान कराकर तथा स्वयं आचमन करके योजनिका में स्थित आत्मा को अस्त्र मन्त्र से ताड़ित करना चाहिए ।। ३७ ।। से स्पर्श कराकर तथा स्रुवा को घी से भरकर उसे शंख के सदृश मुद्रा से नित्योक्त विधि से पकड़े । उसके पश्चात् नादोच्चारण के अनुसार मस्तक एवं ग्रीवा फैलाकर दृष्टि को समभाव से रख्वाते हुए स्थिर शान्त उसके पश्चात् समान उसका वियोजन, आकर्षण तथा संग्रहण करके पहले के ही समान द्वादशान्त (ललाट के ऊर्ध्व भाग) से जीव चैतन्य को लजे जाकर अपने हृदयकमल की कर्णिका में स्थापित करे ।। ३८ ।। अधोमुख स्रुक् से स्पर्श कराकर तथा स्रुवा को घी से भरकर उसे शंख के सदृश मुद्रा से नित्योक्त विधि से पकड़ें।।३९।। उसके पश्चात् नादोच्चारण के अनुसार मस्तक एवं ग्रीवा फैलाकर दृष्टि को समभाव से रखते हुए स्थिर, शान्त एवं परमभाव से सम्पन्न होकर कलश, मण्डल, अग्नि, शिष्य तथा अपने आत्मा से भी छह प्रकार के अध्वाओं का ग्रहण करके स्रुक् के अग्रभाग में उन्हें प्राणमयी नाड़ी में स्थापित करके उसी भाव से उसका चिन्तन करना चाहिए । फिर क्रमशः सात प्रकार के विषुओं का ध्यान करना चाहिए । वे सातों विषुव इस प्रकार हैं- पहला विषुव प्राण के संयोग स्वरूप है,उसके बाद दूसरा हृदयादिक्रम से उच्चारित मन्त्रसंज्ञक है । तीसरा सुषुम्णा में अनुगत नाद स्वरूप है ।। ४०-४३ ।। चौथा कारण का त्याग करने से सातवें में लीन प्रशान्त विषुव है । शक्ति में लीन हुए नाद का पुनः उज्जीवन होकर जो ऊपर की ओर संचार तथा समता में लय होता है

सदाशिवं देवं ब्रह्मरन्ध्रावसानकम्॥ ५०॥ शक्तिं च ब्रह्मरन्ध्रस्थां त्यजन्नित्यमनुक्रमात् । दिव्यं पिपीलिकास्पर्शं तस्मिन्नेवानुभूय च ॥ ५१ ॥ द्वादशान्ते परे तत्त्वे परमानन्दलक्षणे । भावशून्ये मनोतीते शिवे नित्यगुणोदये ॥ ५२ ॥ विलीयमानमेतस्मिञ्छिष्यात्मानं विभावयेत् । विमुञ्चन्सर्पिषो धारां ज्वालान्तेऽपि परे शिवे॥५३॥ योजनिकास्थिरत्वाय वौषडन्तशिवाणुना । दत्त्वा पूर्णां विधानेन गुणापादनमाचरेत् ॥ ५४ ॥ ॐ हामात्मने सर्वज्ञो भव स्वाहा। ॐ हामात्मने परितृप्तो भव स्वाहा । ॐ हू मात्मनेऽनादिबोधो भव स्वाहा । ॐ हौमात्मने स्वतन्त्रो भव स्वाहा । ॐ हौमात्मन्नलुप्तशक्तिर्भव स्वाहा। ॐ हः, आत्मनेऽनन्तशक्तिर्भव स्वाहा ॥ ५५ ॥ इत्थं षड्गुणमात्मानं गृहित्वा परमाक्षरात् । विधिना भावनोपेतः शिष्य देहे नियोजयेत् ॥ ५६॥ तीव्राणुशक्तिसंपातजनितश्रमशान्तये । शिष्यमूर्धनि विन्यस्येद् अर्घ्यादमृतबिन्दुकम्॥५७॥ प्रणम्यध्येशकुम्भादीञ्शिवाद्दक्षिणमण्डले । सौम्यवक्त्रं व्यवस्थाप्य शिष्यं दक्षिणमात्मनः ॥ ५८ ॥ त्वयैवानुगृहीतोऽयं मूर्तिमास्थाय मामकीम् । देवे वह्नौ गुरौ तस्माद्भक्तिं चाप्यस्य वर्धय ॥ ५९ ॥ इति विज्ञाप्य देवेशं प्रणम्य च गुरुः स्वयम् । श्रेयस्तवास्त्विति ब्रूयादाशिषं शिष्यमादरात्॥६०॥ ततः परमया भक्त्या दत्त्वा देवेऽष्टपुष्पिकाम् । पुत्रकं शिवकुम्भेन संस्नाप्य विसृजेन्मखम् ॥ ६१ ॥

इत्यादिमहापुराण आग्नेये निर्वाणदीक्षाकथनं नामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

उसे शक्ति विषुव कहते हैं । सम्पूर्ण प्राण का शक्ति की सीमा को पार करके उन्मनी में लीन होने को कलाविषुव कहते है, यह छठा विषुव है, सातवाँ विषुव शक्त्यतीतनामक है।।४४-४५।। इसी को तत्त्व विषुव कहते हैं। यही योजना स्थान है । पूरक तथा कुम्भक करके थोड़ा सा मुँह खोलकर धीरे-धीरे मूलमन्त्र का उच्चारण करते हुए विजली जैसी आकृति वाले तथा षडध्वा के प्राणस्वरूप हकार में शिष्य की आत्मा का लय करना चाहिए ।। ४६-४७ ।। नाभि से ऊपर एक वित्ते में विद्यमान उकार का चिन्तन करना चाहिए । उसके चार अंगुल ऊपर अकार का स्थान है ।। ४८ ।। उसके आठ अंगुल ऊपर कण्ठ में अकार के वाचक विष्णु का स्थान है । तालु में विद्यमान चार अंगुल में रुद्र के वाचक मकार का स्थान है ।। ४९ ।। उसी तरह का ललाट के मध्य में विद्यमान विन्दु ईश्वर का वाचक है । उसके पश्चात् ब्रह्मरन्ध्र पर्यन्त नाद स्वरूप देव सदाशिव का स्थान है ।। ५० ।। ब्रह्मरन्ध्र में विद्यमान शक्ति का भी चिन्तन करके उसको भी क्रमशः त्याग देना चाहिए । उसी में दिव्य पिपीलिका के स्पर्श का अनुभव करके द्वादशान्त (ललाट के ऊपर के भाग) में परम तत्त्व, परमानन्दस्वरूप, भावशून्य, मनोतीत, नित्य गुणोदयशाली शिवतत्त्व में शिष्यात्मा के विलीन होने की भावना करनी चाहिए ।। ५१-५२ ।। परम शिव में योजनिका की स्थिरता के लिए 'ओं नमः शिवाय वौषट्' इस मन्त्र का उच्चारण करते हुए अग्नि की ज्वाला में घी की धारा छोड़ते हुए विधिपूर्वक पूर्णाहुति देकर गुणापादन करना चाहिए ।। ५३-५४ ।। गुणापादन के लिए निम्नांकित मन्त्रों से आहुतियाँ देनी चाहिए । (क) ओं हामात्मने सर्वज्ञो भव स्वाहा, (ख) ओं हामात्मने परितृप्तोभव स्वाहा, (ग) ओं हूँमात्मनेऽनादिबोधो भव स्वाहा, (घ) ओं हौमात्मने स्वतन्त्रो भव स्वाहा, (ङ) ओं होमात्मन्नलुप्तशक्ति भव स्वाहा, (च) ओं हः आत्मने ऽनन्तशक्तिर्भव स्वाहा ।। ५५ ।। इस तरह छह गुणों से युक्त आत्मा को परम अक्षर शिद से लेकर भावना से युक्त होकर विधिपूर्वक शिष्य के देह में उसे नियुक्त करना चाहिए ।।५६।। तीव्र एवं मन्द शक्ति संपात जनित श्रम की शान्ति के लिए शिष्य के मस्तक पर न्यासपूर्वक अमृत विन्दु शिष्य के सिर पर रखना चाहिए ।। ५७ ।। शिव से दक्षिण मण्डल में 'शिवरूप से पूजित) ईशान कलश को प्रणाम करके अपने दाहिनी ओर शिष्य को उत्तराभिमुख बैठाकर, भगवान शंकर से यह प्रार्थना करनी चाहिए- हे भगवन् ! चूँकि आपने ही मेरे शरीर में रहकर इस शिष्य को अनुगृहीत किया है, अतएव आप इस शिष्य की भक्ति देवता, अग्नि तथा आचार्य में बढ़ाएँ ।। ५८-५९ ।। इस तरह से भगवान् शंकर की प्रार्थना करके आचार्य को स्वयं उन्हें प्रणाम करना चाहिए और आदरपूर्वक शिष्य को यह आशीर्वाद देना चाहिए कि तुम्हारा कल्याण हो ।। ६० ।। उसके पश्चात् अत्यन्त भक्तिपूर्वक भगवान् शंकर पर अष्टपुष्पिका चढ़ाकर, शिष्यको शिवकुम्भ से स्नान कराकर यज्ञ का विसर्जन करना चाहिए ।। ६१ ।।

**इस तरह से आदिमहापुराण अगिनपुराण का निर्वाणदीक्षा वर्णन नामक अट्ठासीवाँ अध्याय सम्पूर्ण हुआ ॥ ८८ ॥**

## अथैकोननवतितमोऽध्यायः

## एकतत्त्वदीक्षाविधिः

ईश्वर उवाच– **अथैकतात्त्विकी दीक्षा लघुत्वादुपदिश्यते । सूत्रबन्धादि कुर्वीत यथायोगं निजाणुना ॥ १ ॥ कालाग्न्यादिशिवान्तानि तत्त्वानि परिभावयेत् । शिवतत्त्वे समग्राणि सूत्रे मणिगणानिव ॥ २ ॥ आवाह्य शिवतत्त्वादि गर्भाधानादि पूर्ववत् । मूलेन किं तु कुर्वीत सर्वशुल्कसमर्पणम् ॥ ३ ॥ प्रददीत ततः पूर्णां तत्त्वव्रतोपगर्भिताम् । एकयैव यया शिष्यो निर्वाणमधिगच्छति ॥ ४ ॥ योजनायै शिवे चान्यां स्थिरत्वापादनाय च । दत्त्वा पूर्णां प्रकुर्वीत शिवकुम्भाभिषेचनम् ॥ ५ ॥**

**इत्यादिमहापुराण आग्नेये एकतत्त्वदीक्षाविधिकथनं नामैकोननवतितमोऽध्यायः ॥ ८९ ॥**

## अथ नवतितमोऽध्यायः

## अभिषेकादिविधिकथनम्

ईश्वर उवाच– **शिवमभ्यर्च्याभिषेकं कुर्याच्छिष्यादिके श्रिये । कुम्भानीशादिकाष्ठासु क्रमशो नव विन्यसेत् ॥ १ ॥ तेषु क्षारोदं क्षीरोदं दध्युदं घृतसागरम् । इक्षुकादम्बरीस्वादुमस्तूदानष्ट सागरान् ॥ २ ॥ निवेशयेद्यथासंख्यमष्टौ विद्येश्वरानथ । एकं शिखण्डिनं रुद्रं श्रीकण्ठं तु द्वितीयकम् ॥ ३ ॥ त्रिमूर्तिमेकरुद्राक्षमेकनेत्रं शिवोत्तमम् । सप्तमं सूक्ष्मनामानमनन्तं रुद्रमष्टमम् ॥ ४ ॥ मध्ये शिवं समुद्रं च शिवमन्त्रं च विन्यसेत् । यागालयान्दिगीशस्य**

---

**श्रीशिवजी ने कहा–** अब मैं छोटी होने के कारण एक तत्त्व दीक्षा का उपदेश दे रहा हूँ । यथावसर अपने मन्त्र से सूत्रबन्ध इत्यादि का कार्य कर विधिपूर्वक करना चाहिए ।। १ ।। उसके पश्चात् काल तथा अग्नि आदि से लेकर शिव पर्यन्त के तत्त्वों का चिन्तन करना चाहिए । सूत्र में पिरोए गए मणि के समूह के समान शिवतत्त्व में सभी तत्त्व ओतप्रोत हैं ।। २ ।। शिवतत्त्व आदि का आवाहन पहले के ही समान उनका गर्भाधान आदि संस्कार करना चाहिए, किन्तु समस्त शुल्कों का समर्पण मूलमन्त्र से करना चाहिए ।। २ ।। उसके पश्चात् तत्त्व समूह से उत्पन्न पूर्णाहुति देनी चाहिए जिससे कि एक ही पूर्णाहुति से शिष्य निर्वाण की प्राप्ति कर लेता है ।। ४ ।। दूसरी पूर्णाहुति शिव से युक्त होकर उसके स्थिरत्वापादन के लिए करनी चाहिए । उसके पश्चात् शिवकुम्भ के द्वारा अभिषेक करना चाहिए ।। ५ ।।

**इस तरह से आदिमहापुराण अग्निपुराण के एकतत्त्वदीक्षा विधि वर्णन नामक नवासीवाँ अध्याय सम्पूर्ण हुआ ॥ ८९ ॥**

**श्रीशिवजी ने कहा–** शिवजी की पूजा करके आचार्य को श्री प्राप्ति के लिए शिष्य आदि का अभिषेक करना चाहिए । ईशान आदि दिशाओं में क्रमशः नव कलशों की स्थापना करनी चाहिए ।। १ ।। आठों दिशाओं के आठ कलशों में क्षारोदक, क्षीरोदक, दध्युदक, घृतोदक, इक्षुरसोदक, मद्योदक, स्वादूदक तथा गर्भोदक इन आठ सागरों का आवाहन करके उनमें आठ संख्या

रचिते स्नानमण्डपे ॥ ५ ॥ कुर्यात्करद्वयायामां वेदीमष्टाङ्गुलोच्छ्रिताम् । श्रीपर्णाद्यासने तत्र विन्यस्यानन्तमासनम् ॥ ६ ॥ शिष्यं निवेश्य पूर्वास्यं सकलीकृत्य पूजयेत् । काञ्जिकौदनमृद्भस्मदूर्वागोमयगोलकैः ॥ ७ ॥ सिद्धार्थदधितोयैश्च कुर्यान्निर्मन्थनं ततः। क्षारोदानुक्रमेणाथ हृदा विद्येशशम्बरैः॥८॥ कलशैः स्नपयेच्छिष्यं सुधाधारणयाऽन्वितम् । परिधाप्य सिते वस्त्रे निवेश्य शिवदक्षिणे ॥ ९ ॥ पूर्वोदितासने शिष्यं पुनः पूर्ववदर्चयेत् । उष्णीषं योगपट्टं च मुकुटं कर्तरीं घटीम् ॥ १० ॥ अक्षमालां पुस्तकादि शिबिकाद्यधिकारकम् । दीक्षाव्याख्याप्रतिष्ठाद्यं ज्ञात्वाऽद्यप्रभृति त्वया ॥ ११॥ सुपरीक्ष्य विधातव्यमाज्ञां संश्रावयेदिति । अभिवाद्य ततः शिष्यं प्रणिपत्य महेश्वरम् ॥ १२ ॥ विघ्नज्वालापनोदार्थं कुर्याद्विज्ञापनां यथा । अभिषेकार्थमादिष्टस्त्वयाऽहं गुरुमूर्तिना ॥ १३ ॥ संहितापारगः सोऽयभिषिक्तो मया शिव । तृप्तये मन्त्रचक्रस्य पञ्चपञ्चाऽऽहुतीर्यजेत् ॥ १४ ॥ दद्यात्पूर्णां ततः शिष्यं स्थापयेन्निजदक्षिणे। शिष्यदक्षिणपाणिस्था अङ्गुष्ठाद्यङ्गुलीः क्रमात्॥१५॥ लाञ्छयेदुषरत्वाय दग्धदर्भाङ्गशम्बरैः। कुसुमानि करे दत्त्वा प्रणामं कारयेदमुम् ॥ १६ ॥ कुम्भेऽनले शिवे स्वस्मिंस्ततस्तत्कृत्यमादिशेत् । अनुग्राह्यास्त्वया शिष्याः शास्त्रेण सुपरीक्षिताः ॥ १७ ॥ भूपवन्मानवादीनामभिषेकादभीप्सितम् । ॐ श्रां श्रौं पशुं हूं फडित्यस्त्रराजाभिषेकतः ॥ १८ ॥

इत्यादिमहापुराणे आग्नेयेऽभिषेकादिविधिकथनं नाम नवतितमोऽध्यायः ॥ ९० ॥

---

वाले विद्येश्वरों का भी आवाहन करना चाहिए । विद्येश्वरों के नाम क्रमशः इस प्रकार हैं- (१) शिखण्डी रुद्र, (२) श्रीकण्ठरुद्र, (३) त्रिमूर्तिरुद्र, (४) एकरुद्राक्ष रुद्र, (५) एकनेत्र रुद्र, (६) शिवोत्तम रुद्र, (७) सूक्ष्म रुद्र तथा (८) अनन्त रुद्र ।। २-४ ।। मध्यकलश में शिव, समुद्र तथा शिवमन्त्र का विन्यास करना चाहिए । यागमण्डप की दिशा के स्वामी के लिए बनायी गयी स्नानमण्डप में दो हाथ लम्बी और आठ अंगुल ऊँची एक वेदी बनानी चाहिए । उस पर कमल आदि का आसन बिछाकर उस पर आसनस्वरूप अनन्त का न्यास करके शिष्य को पूर्वाभिमुख बैठाकर सकलीकरण करके उसका पूजन करना चाहिए ।। ५-६ ।। उसके पश्चात्, काञ्जी, भात, मिट्टी, भस्म, दूर्वा, गोबर के गोले, सरसों,दही और जल उसके शरीर में मलकर, हृदयमन्त्र का उच्चारण करके, क्षारोदक आदि के क्रम से नमस्कारपूर्वक हृदयमन्त्र से विद्येश्वरों के कलश जल से शिष्य को स्नान कराना चाहिए ।उस समय शिष्य यह भावना करे कि मुझे अमृत से स्नान कराया जा रहा है । इसके पश्चात् शिष्य को दो नए वस्त्र पहनाकर और उसे शिव के दक्षिणभाग में पूर्वोक्त आसन पर बैठाकर उसकी पूजा करनी चाहिए ।। ७-९ ।। उसके पश्चात् आचार्य अपनी यह आज्ञा सुनाएँ कि- आज से तुम्हें दीक्षा की व्याख्या तथा प्रतिष्ठा आदि को जानकर, पगड़ी, योगपट्टिका, मुकुट, कटार, घटी, अक्षमाला, पुस्तक आदि तथा शिविका आदि के अधिकार की अच्छी तरह से परीक्षा करके उनका प्रयोग करना चाहिए ।। १० ।। उसके पश्चात् आचार्य शिष्य को तथा महेश्वर को प्रणाम करके, विघ्नज्वाला को दूर करने के लिए यह प्रार्थना करनी चाहिए कि- हे शिव ! गुरुमूर्ति स्वरूप आपने मुझे अभिषेक करने के लिए आदेश दिया है, इसलिए मैंने संहिताभाग का पूर्णरूप से अध्ययन किए हुए इस शिष्य का अभिषेक किया है । उसके पचात् मन्त्र चक्र की शान्ति के लिए पाँच-पाँच आहुतियाँ देकर पूजन करना चाहिए ।। १२-१४ ।। उसके पश्चात् पूर्णाहुति देकर शिष्य को आचार्य अपने दाहिनी ओर बैठाएँ और उसके दाहिने हाथ के अंगुष्ठ आदि अंगुलियों को क्रमशः जले हुए दर्भाङ्गशम्बरों से 'उषरत्व' के लिए लांक्षित करे । पुनः उसके हाथ में फूल देकर उससे कलश, अग्नि एवं शिव को प्रणाम करवाये । पुनः उसे कर्तव्य का उपदेश दे ।। १५-१६ ।। 'तुम्हें शास्त्र के अनुसार भली-भाँति परीक्षा करके शिष्यों को अनुगृहीत करना चाहिए ।' मानव आदि की राजा के समान अभिषेक करने से अभीष्ट अर्थ की प्राप्ति होती है । ओं श्रां श्रीं पशुं हूं फट् यह अस्त्रराज मन्त्र है, इसी के द्वारा शिष्य का अभिषेक करना चाहिए ।। १७-१८ ।।

इस तरह से आदिमहापुराण का अभिषेकादि विधि वर्णन नामक नबेवाँ अध्याय सम्पूर्ण हुआ ॥ ९० ॥

## अथैकनवतितमोऽध्यायः

## अभिषिक्तेन कर्तव्यस्य तत्तद्देवतापूजनस्य विधिः

ईश्वर उवाच– **अभिषिक्तः शिवं विष्णुं पूजयेद्भास्करादिकान् । शङ्खभेर्यादिनिर्घोषैः स्नापयेत्पञ्चगव्यकैः ॥ १ ॥ योदेवान्देवलोकं स याति स्वं कुलमुद्धरन् । वर्षकोटिसहस्रैस्तु यत्पापं समुपार्जितम् ॥ २ ॥ घृताभ्यङ्गेन देवानां भस्मीभवति पावके । आढकेन घृताद्यैश्च देवान्स्नाप्य सुरो भवेत्॥३॥ चन्दनेनानुलिप्याथ गन्धाद्यैः पूजयेत्तथा । अल्पायासेन स्तुतिभिः स्तुता देवास्तु सर्वदा ॥ ४ ॥ अतीतानागतज्ञानमन्त्रधीभुक्तिमुक्तिदाः। गृहीत्वा प्रश्नसूक्ष्मार्णे हृते द्वाभ्यां शुभाशुभम् ॥ ५ ॥ त्रिभिर्जीवो मूलधातुश्चतुर्भिब्राह्मणादिधीः । पञ्चादौ भूततत्त्वादि शेषे चैवं जयादिकम् ॥ ६॥ एकत्रिकातित्रिकान्ते पदे द्विपमकान्तके । अशुभं मध्यमं मध्येष्विन्द्रस्त्रिषु नृपः शुभः ॥ ७ ॥ संख्यावृन्दे जीविताब्दं यमोऽब्ददशहा ध्रुवम् । सूर्येभास्येशदुर्गाश्रीविष्णुमन्त्रैर्लिखेत्कजे॥ ८॥ कठिन्या जप्तया स्पृष्टे गोमूत्राकृतिरेखया । आरभ्यैकं त्रिकं यावत्त्रिचतुष्कावसानकम् ॥ ९ ॥ मरुद्व्योममरुद्व्योमैश्चतुःषष्टिपदे तथा। अक्षाणां पातनात्स्पर्शाद्विषमादौ शुभादिकम् ॥ १० ॥एकत्रिकादिमारभ्य अन्ते चाष्टत्रिकं तथा । ध्वजाद्यायाः समा हीना विषमाः शोभनादिदाः ॥ ११ ॥ आईपल्लवितैः काद्यैः षोडशस्वरपूर्वगैः । आद्यैस्तैः सस्वरैः काद्यैस्त्रिपुरानाम मन्त्रकाः॥ १२ ॥ ह्रीं**

---

**श्रीशिवजी ने कहा**– अभिषिक्त पुरुष शिव, विष्णु तथा सूर्य आदि (दुर्गा एवं गणेश) की पूजा करे । वह इन देवताओं को शंख, भेरी आदि वाद्यों के ध्वनि पूर्वक पञ्चगव्य से स्नान कराए।।१।। जो पुरुष ऐसा करता है, वह अपने कुल का उद्धार करके स्वयं देवलोक जाता है । घी देवताओं के शरीर में मलने वाले पुरुष के करोड़ों हजार वर्ष के पाप अग्नि में भस्म हो जाते हैं । एक आढ़क घी से देवताओं का स्नान कराने वाला पुरुष स्वयं देवता हो जाता है ।। २-३ ।। इसके बाद वह देवताओं के शरीर में चन्दन लगाकर गन्ध आदि से पूजा करे । थोड़े से प्रयास पूर्वक सदा स्तुति करने पर देवतागण अतीत तथा अनागत विषयक ज्ञान मन्त्रज्ञान, भोग तथा मोक्ष प्रदान करने वाले हो जाते हैं ।। ४ ।। यदि कोई मन्त्र के शुभाशुभ के विषय में प्रश्न करे तो प्रश्नवाक्य के अक्षरों को गिन लेना चाहिए और उसमें दो का भाग दें यदि एक बचे तो शुभ और दो या शून्य बचे तो अशुभ समझना चाहिए ।। ५ ।। तीन से भाग देने पर मूलधातु रूप जीव का परिचय मिलता है । अर्थात् एक शेष हो तो बात जीव, दो शेष हो तो पित्त जीव और तीन शेष हो तो कफ जीव समझना चाहिए । चार से भाग देने पर ब्राह्मण आदि वर्ण की बृद्धि का ज्ञान प्राप्त होता है । अर्थात् एक शेष रहने पर ब्राह्मण वर्ण दो शेष रहने पर क्षत्रिय वर्ण की तीन शेष रहने पर वैश्य वर्ण की और चार या शून्य शेष रहने पर शूद्र वर्ण की बुद्धि समझनी चाहिए ।। पाँच का भाग देने पर शेष के अनुसार पृथिवी आदि भूत तत्त्वों का ज्ञान होता है। इसी तरह से जय पराजय आदि को भी जाना जा सकता है ।। ६ ।। यदि मन्त्र पद के अन्त में एक त्रिक हो, या अधिक त्रिक हों (तीन बीजाक्षर) हों, अथवा दो प, म, एवं क हों तो इनमें से प्रथम वर्ण अशुभ द्वितीय वर्ण शुभ होता है । यदि मन्त्र पद के अन्त में संख्या समूह हो तो वह जीवनकाल के दस वर्ष को सूचित करता है । यदि दस की संख्या हो तो उस मन्त्र के साधक पर दस वर्ष के पश्चात् यमराज का निश्चित रूप से आक्रमण होता है ।। ७।। सूर्य, गणेश, शिव, दुर्गा, लक्ष्मी तथा श्रीविष्णु भगवान् के मन्त्रों द्वारा जप करने वाला व्यक्ति कमल के पत्ते पर अपनी कनिष्ठा अंगुलि से गोमूत्र की रेखा पर यन्त्र के वर्णों के प्रथम त्रिक से, प्रारम्भ करके चारत्रक पर्यन्त पृथक्-पृथक् लिखे ।। ८-९ ।। और चौसठ कोष्ठों का मण्डल बनाकर (मरुत् (यं) व्योम (हं) और मरुत् (यं) इन तीन बीजों के त्रिक कोष्ठों में लिखे और उन पर पासा फेंके । यदि विषम कोष्ठ का स्पर्श हो तो शुभ तथा समकोष्ठ का स्पर्श होने पर अशुभ समझना चाहिए ।। १० ।। यं, हं, यं इन तीन बीजाक्षरों के आठ त्रिक ध्वजादि आठ आयों के प्रतीक

बीजाः प्रणवाद्याः स्युर्नमोन्ता यत्र पूजने । मन्त्रा विंशतिसाहस्राः शतं षष्ट्यधिकं ततः ॥ १३ ॥ आं ह्रीं मन्त्राः सरस्वत्याश्चण्डिकायास्तथैव च।
तथा गौर्याश्च दुर्गाया आं श्रीमंत्राः श्रियस्तथा ॥ १४ ॥ तथा आं क्षौंमन्त्राः सूर्यस्य आंहौंमन्त्राः शिवस्य च । आं गं मन्त्रा गणेशस्य आं मन्त्राश्च
तथा हरेः ॥ १५ ॥ शतार्धैकाधिकैः काद्यैस्तथा षोडशभिः स्वरैः । काद्यैस्तैः सस्वरैराद्यैः कान्तैर्मन्त्रास्तथाऽखिलाः॥ १६ ॥ रवीशदेवीविष्णूनां
खाब्धीदेवेन्द्रवर्तनात् । शतत्रयं षष्ट्यधिकं प्रत्येकं मण्डलं क्रमात् ॥ १७ ॥ अभिषिक्तो जपेद्ध्यायेच्छिष्यादीन्दीक्षयेद्गुरुः ॥ १८ ॥

इत्यादिमहापुराण आग्नेयेऽभिषिक्तेन कर्तव्यस्य तत्तद्देवतापूजनस्य विधिकथनं नामैकनवतितमोऽध्यायः ॥ ९१ ॥

## अथ द्विनवतितमोऽध्यायः

### संक्षेपेण प्रतिष्ठाविधिः

ईश्वर उवाच– **प्रतिष्ठां संप्रवक्ष्यामि क्रमात्संक्षेपतो गुह । पीठं शक्ति शिवो लिङ्गं तद्योगः सा शिवाणुभिः ॥ १ ॥ प्रतिष्ठायाः पञ्च भेदास्तेषां रूपं वदामि ते । यत्र ब्रह्मशिलायोगः सा प्रतिष्ठा विशेषतः ॥ २ ॥ स्थापनं तु यथायोगं पीठ एव निवेशनम् । प्रतिष्ठा भिन्नपीठस्य स्थिरस्थापनमुच्यते॥३॥ उत्थापनं च सा प्रोक्ता लिङ्गोद्धारपुरःसरा । यस्यां तु लिङ्गमारोप्य संस्कारः क्रियते बुधैः ॥ ४ ॥ आस्थापनं तदुद्दिष्टं द्विधा विष्णवादिकस्य च । आसु सर्वासु चैतन्यं नियुञ्जीत परं शिवम् ॥ ५ ॥ यदाधारादिभेदेन प्रासादेष्वपि पञ्चधा । परीक्षामथ मेदिन्याः कुर्यात्प्रासादकाम्यया ॥ ६ ॥**

हैं । इन आयों में जो सम हैं, वे शुभ तथा जो विषम आय हैं वे शुभ होते हैं ।। ११ ।। क आदि अक्षरों को सोलह स्वरों से तथा सोलह स्वरों को क आदि से युक्त करना चाहिए । उन सबों के साथ आ तथा ई यह पल्लव लगा दें । पल्लव युक्त इन सस्वर कादि अक्षरों को आदि में रखकर उनके साथ त्रिपुरा के नाममन्त्रों को पृथक्-पृथक् सन्बद्ध कर दें । उनके आदि में ओं ह्रीं तथा अन्त में 'नमः' जोड़ दें । इसतरह से पूजन के काम में आने वाले मन्त्रों का प्रस्तार बीस हजार एक सौ तक पहुँच जाता है ।। १२-१३ ।। आं ह्रीं बीज से युक्त सरस्वती के मन्त्र होते हैं तथा चण्डी, गौरी तथा दुर्गा के भी मन्त्र ऐसे ही होते हैं। श्री देवी के मन्त्र 'आं श्रीं' बीज से युक्त, सूर्य के मन्त्र 'आं क्षौं' बीजो से युक्त, 'आं हौं' इन बीजों से युक्त शिवजी के मन्त्र, गणेश जी के मन्त्र 'आं गं' इन दो बीजों से युक्त तथा श्रीहरि के मन्त्र आं अं बीज से युक्त होते हैं ।। १४-१५ ।। 'क' आदि व्यञ्जनवर्ण तथा सोलह स्वरों को मिलाकर एक्यावन होते है। । इस प्रकार सस्वर कादि अक्षरों को आदि में और सस्वर 'क्ष' से लेकर 'क' तक के अक्षरों के अन्त में रखने से सम्पूर्ण मन्त्र बनते हैं ।। १६ ।। १४४० खाब्धि देवेन्द्र मण्डलों के होने से सूर्य, शिव, दुर्गा तथा विष्णु इन सबों की तीन सौ साठ मण्डल होते हैं । अभिषिक्त गुरु इन सभी मन्त्रों का जप करे, ध्यान करे तथा शिष्यों को दीक्षित करे ।।१७-१८।।

**इस तरह से आदिमहापुराण अग्निपुराण का अभिषिक्तपुरुष के द्वारा किए जाने वाले देवताओं के पूजन की विधि का वर्णन नामक एकानबेवाँ अध्याय सम्पूर्ण हुआ ॥ ९१॥**

**श्रीशिवजी ने कहा–** हे स्कन्द ! अब मैं क्रमशः संक्षेप से प्रतिष्ठा का वर्णन कर रहा हूँ । पीठ ही शक्ति है, तथा शिव ही लिङ्ग है । उन दोनों (शिव और शक्ति) का संयोग ही प्रतिष्ठा कहलाती है, जो प्रतिष्ठा शिवमन्त्रों से की जाती है ।। १ ।। प्रतिष्ठा के पाँच भेद होते हैं, उन सबों का स्वरूप मैं तुम्हें बतला रहा हूँ । जहाँ पर ब्रह्मशिला का योग होता है, उसे विशेष रूप से प्रतिष्ठा कहते हैं ।। २ ।। जहाँ पीठ पर ही देवता का निवेश किया जाता है उसे स्थापना कहते हैं । दूसरे पीठ की स्थापना को स्थित स्थापन कहते हैं ।। ३ ।। लिङ्गोद्धारपूर्वक की जाने

नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः ॥ ५ ॥ लक्षप्रमाणौ द्वौ मध्ये दशहीनास्तथाऽपरे । सहस्त्रद्वितयोच्छ्रास्तावद्विस्तारिणश्च ते ॥ ६ ॥ भारतं प्रथमं वर्षं ततः किं पुरुषं स्मृतम् । हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विज ॥ ७ ॥ रम्यकं चोत्तरे वर्षं तथैवान्यद्धिरण्मयम् । उत्तराः कुरवश्चैव यथा वै भारतं तथा ॥ ८ ॥ नवसाहस्त्रमेकैकमेतेषां मुनिसत्तम। इलावृतं च तन्मध्ये सौवर्णो मेरुरुच्छ्रितः ॥ ९ ॥ मेरोश्चतुर्दिशं तत्र नवसाहस्त्रविस्तृतम्। इलावृतं महाभाग चत्वारश्चात्र पर्वताः ॥ १० ॥ विष्कम्भा रचिता मेरोर्योजनायुतविस्तृताः ॥ पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः ॥ ११ ॥ विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्मृत; । कदम्बस्तेषु जम्बूश्च पिप्पलो वट एव च ॥ १२ ॥ एकादशशतायामाः पादपाः गिरिकेतवः । जम्बूद्वीपेति संज्ञास्यात् फलं जम्ब्वा गजोपमम् ॥ १३ ॥ जम्बूनदी रसेनास्यास्त्विदं जाम्बूनदं परम् । भद्राश्वः पूर्वतो मेरोः केतुमालस्तु पश्चिमे॥१४॥ वनं चैत्ररथं पूर्वे दक्षिणे गन्धमादनः । वैभ्राजं पश्चिमे सौम्ये नन्दनं च सरांस्यथ ॥ १५ ॥ अरुणोदं महाभद्रं शीतोदं मानसं तथा । सिताम्भश्चक्रमुञ्जाद्याः पूर्वतः केसराचलाः ॥ १६ ॥ दक्षिणेऽद्रेस्त्रिकूटाद्याः शिखिवास-मुखा जले । शङ्खकूटादयः सौम्ये मेरौ च ब्रह्मणः पुरी ॥ १७ ॥ चतुर्दश सहस्त्राणि योजनानां च दिक्षु च । इन्द्रादिलोकपालानां समन्ताद्ब्रह्मणः पुरः ॥ १८ ॥ विष्णुपादात्प्लावयित्वा चन्द्रं स्वर्गात्पतत्यपि । पूर्वेण शीता भद्राश्वाच्छैलाच्छैलाद्गताताऽर्णवम् ॥ १९ ॥ तथैवालकनन्दाऽपि दक्षिणेनैव भारतम् । प्रयाति सागरं कृत्वा सप्तभेदाऽथ पश्चिमम् ॥ २० ॥ अब्धिं च चक्षुः सौम्याऽब्धिं भद्रोत्तरकुरूनपि । आनीलनिषधा यामौ माल्यवद्गन्धमादनौ ॥ २१ ॥ तयोर्मध्यगतो मेरुः कर्णिकाकारसंस्थितः । भारताः

---

योजन पृथिवी में गड़ा हुआ है । पुनः यह पर्वत कर्णिका के आकार वाला है । इसके दक्षिण ओर हिमवान, हेमकूट, तथा निषध पर्वत स्थित है । उसके उत्तर में नील, श्वेत तथा शृङ्गी नामक पर्वत स्थित है । इन्हें वर्ष पर्वत कहते हैं ।। ४-५ ।। इनमें बीच के दो पर्वत एक-एक लाख योजन लम्बे हैं और अन्य पर्वत दस-दस हजार योजन कम लम्बे हैं । उनकी ऊँचाई तथा चौड़ाई भी दो-दो हजार योजन हैं ।। ६ ।। हे वसिष्ठ! वर्षों में प्रथम भारत वर्ष है ।उसके बाद किंपुरुष वर्ष है । उससे भिन्न तीसरा हरिवर्ष है, इसी तरह से मेरु से दक्षिण के अन्य वर्षों को जानना चाहिए ।। ७ ।। सुमेरु के उत्तर में रम्यक वर्ष तथा हिरण्यमय वर्ष और उत्तरकुरुवर्ष हैं ।। ८ ।। इनमें से प्रत्येक का विस्तार नव-नव हजार योजन है । इन सबों के बीच में इलावृत्त नामक वर्ष है और उसके बीच सुवर्णमय सुमेरु पर्वत है ।। ९ ।। सुमेरु पर्वत के चारों ओर नव-नव हजार योजन में इलावृत्त वर्ष फैला हुआ है । यहाँ पर दस-दस हजार योजन में फैले हुए चार-चार पर्वत हैं जो सुमेरु पर्वत के अर्गला का काम करते हैं । उसके पूर्व में मन्दराचल तथा दक्षिण में गन्धमादन नामक पर्वत है ।। १०-११ ।। उसके पश्चिम में पार्श्व पर्वत तथा उत्तर सुपार्श्व नामक पर्वत बतलाया गया है । इन चारों पर क्रमशः- कदम्ब, जम्बू, पिप्पल तथा वट के वृक्ष हैं जिनका विस्तार ग्यारह-ग्यारह सौ योजनों में है; अतएव ये सुमेरु पर्वत की पताका का काम करते हैं । जम्बू वृक्ष के जम्बू फल हाथी के समान बड़े-बड़े होते हैं, अतएव उस द्वीप का नाम जम्बूद्वीप है।।१२-१३।। उन फलों के रस से निकलने वाली नदी जम्बू नदी और जम्बूनद है। सुमेरु पर्वत के पूर्व में भद्राश्ववर्ष है ओर पश्चिम में केतुमाल वर्ष है ।। १४ ।। उसके पूर्व में चैत्ररथ नामक वन है, दक्षिण में गन्धमादन पर्वत है । उसके पश्चिम में वैभ्राज तथा नन्दनवन हैं। इसके अतिरिक्त वहाँ पर निम्नांकित सरोवर है- अरुणोद, महाभद्र, शीतोद, मान सरोवर तथा सिताम्भ । सुमेरु पर्वत के पूर्व ओर चक्र, मुञ्ज आदि के सराचल है । सुमेरु के दक्षिण ओर त्रिकूट आदि, पश्चिम दिशा में शिखिवास आदि तथा उत्तर दिशा में शंखकूट आदि पर्वत हैं । सुमेरु पर्वत के ऊपर ब्रह्मा की पुरी है ।। १४-१७ ।। ब्रह्मपुरी के चारों ओर इन्द्र आदि लोकपालों की नगरी चौदह हजार योजन में फैली हुयी है ।। १८ ।। विष्णु भगवान् के चरणों से निकलकर चन्द्रलोक को प्लावित करती हुयी स्वर्ग से गिरकर मेरुपर्वत से पूर्व भद्राश्व नामक पर्वत से एक पर्वत से दूसरे पर्वत पर होती हुयी गङ्गा समुद्र पर्यन्त पहुँचती है ।। १८-१९ ।। उसी तरह से अलकनन्दा भी सुमेरु पर्वत के दक्षिण से भारत में आकर सात धाराओं में विभक्त होकर पश्चिम समुद्र में मिल जाती हैं ।। २० ।। पश्चिम में वह अब्धि, चक्षुष्, सौमयाब्धि, भद्र, उत्तरकुरु, आनील तथा निषध देशों में होती हुयी माल्यवान तथा गन्धमादन पर्वत पर आती है, जो आनील

केतुमालाश्च भद्राश्चाः कुरवस्तथा ॥ २२ ॥ पत्राणि लोकपद्मस्य मर्यादाशैलबाह्यतः । जठरो देवकूटश्च मर्यादापर्वतावुभौ ॥ २३ ॥ तौ दक्षिणोत्तरायामावानीलनिषधायतौ । गन्धमादनकैलासौ पूर्ववच्चाऽऽयतावुभौ ॥ २४ ॥ अशीतियोजनायामावर्णवान्तर्व्यवस्थितौ । निषधः पारियात्रश्च मर्यादापर्वतावुभौ ॥ २५ ॥ मेरोः पश्चिमदिग्भागे यथा पूर्वे तथा स्थितौ । त्रिशृङ्गो रुधिरश्चैव उत्तरौ वर्षपर्वतौ ॥ २६ ॥ पूर्वपश्चायतावेतावर्णवान्तर्व्यवस्थितौ । जाठराद्याश्च मर्यादाशैला मेरोश्चतुर्दिशम् ॥ २७ ॥ केशरादिषु याः श्रेण्यस्तासु सन्ति पुराणि हि । लक्ष्मीविष्ण्वाग्निसूर्यादिदेवानां मुनिसत्तम ॥ २८ ॥ भौमानां स्वर्गधर्माणां न पापास्तत्र यान्ति च । भद्राश्वेऽस्ति हयग्रीवो वराहः केतुमालके॥२९॥ भारते कूर्मरूपी च मत्स्यरूपः कुरुष्वपि । विश्वरूपेण सर्वत्र पूज्यते भगवान्हरिः ॥ ३० ॥ किं पुरुषाद्यष्टसु क्षुद्भीतिशोकादिकं न च । चतुर्विंशति साहस्रं प्रजा जीवन्त्यनामयाः ॥ ३१ ॥ कृतादिकल्पना नास्ति भौमान्यम्भांसि नाम्बुदाः । सर्वेष्वेतेषु वर्षेषु सप्त सप्त कुलाचलाः॥३२॥ नद्यश्च शतशस्तेभ्यस्तीर्थभूताः प्रजज्ञिरे । भारते यानि तीर्थानि तानि तीर्थानि वच्मि ते ॥ ३३ ॥

इत्यादिमहापुराण आग्नेये भुवनकोशकथनं नाम अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

## अथ नवाधिकशततमोऽध्यायः

## तीर्थमाहात्म्यम्

अग्निरुवाच– माहात्म्यं सर्वतीर्थानां वक्ष्ये यद्भुक्तिमुदित्तदम् । यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ॥ १ ॥ विद्यातपश्च कीर्तिश्च स

---

तथा निषध देशों में फैले हुए हैं ।। २१ ।। उन दोनों पर्वतों के बीच में कर्णिका रूप से सुमेरु पर्वत स्थित है । मर्यादा पर्वत के बाह्यभाग में स्थित भारत, केतुमाल, भद्राश्व एवं उत्तर कुरुवर्ष इस लोकपद्म के दल हैं । जठर एवं देवकूट ये दो मर्यादापर्वत हैं ।। २२-२३ ।। ये दोनों उत्तर एवं दक्षिण में आनील तथा निषध देश पर्यन्त फैले हुए हैं । गन्धमादन एवं कैलास पूर्व से पश्चिम तक पूर्व के ही समान अस्सी हजार योजन में समुद्र पर्यन्त फैले हुए हैं । निषध और पारियात्र ये दो मर्यादा पर्वत हैं ।। २४-२५ ।। ये दोनों मेरु पर्वत के पूर्व तथा पश्चिम दिशा में स्थित हैं । त्रिशृङ्ग तथा रुधिर ये दोनों उत्तर में वर्ष पर्वत के रूप में विद्यमान् हैं ।। २६ ।। ये दोनों पूर्व से पश्चिम सागर तक फैले हैं । सुमेरु पर्वत के चारों ओर जठर आदि मर्यादा शैल हैं।।२७।। हे मुनिश्रेष्ठ ! केसर आदि पर्वतों के शिखरों पर लक्ष्मी, विष्णु, अग्नि तथा सूर्य आदि देवताओं के नगर हैं ।। २८ ।। ये भौम होते हुए भी स्वर्गीय धर्मों से युक्त नगर हैं । इनमें पापी जीवों का प्रवेश नहीं होता है । भद्रश्व वर्ष में भगवान् विष्णु हयग्रीव रूप से, केतुमाला वर्ष में वराहरूप से, भारतवर्ष में कूर्मरूप से, तथा कुरुवर्ष में मत्स्य रूप से पूजे जाते हैं । विश्वरूप से भगवान् श्रीहरि सर्वत्र पूजे जाते हैं ।। २९-३०।। किं पुरुष आदि आठ वर्षों में भूख, भय तथा शोक आदि नहीं है। वहाँ की प्रजा चौबीस हजार वर्षों तक निरोग रहकर जीती है ।। ३१ ।। वहाँ पर सत्ययुग आदि की कल्पना नहीं है और न वहाँ वर्षा के जल हेते हैं । वहाँ जल भूमि से ही उत्पन्न होता है । इन सभी वर्षों में सात-सात कुलाचल हैं ।। ३२ ।। हजारों नदियाँ हैं और उनसे पवित्र जल उत्पन्न होते हैं ।। भारतवर्ष में जो तीर्थ हैं, उन सबों का वर्णन तुम से करता हूँ ।। ३३ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का भुवनकोश वर्णन नामक एक सौ आठवाँ अध्याय सम्पूर्ण हुआ ॥ १०८ ॥**

**अग्निदेव ने कहा–** अब मैं तीर्थों का माहात्म्य बतलाता हूँ जो भोग तथा मोक्ष प्रदान करने वाला है । जिसके दोनों हाथ, दोनों पैर तथा मन सुसंयत हैं ।। १ ।। जो विद्या, तपस्या

तीर्थफलमश्नुते । प्रतिग्रहादुपावृत्तो लघ्वाहारो जितेन्द्रियः ॥ २ ॥ निष्पापस्तीर्थयात्री तु सर्वयज्ञफलं लभेत् । अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ॥ ३ ॥ अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते । तीर्थाभिगमने तत्स्याद्यद्यज्ञेनाऽऽप्यते फलम् ॥ ४ ॥ पुष्करं परमं तीर्थं सांनिध्यं हि त्रिसंध्यकम् । दशकोटिसहस्राणि तीर्थानां विप्र पुष्करे ॥ ५ ॥ ब्रह्मा सह सुरैरास्ते मुनयः सर्वमिच्छवः । देवाः प्राप्ताः सिद्धिमत्र स्नात्वा पितृसुरार्चकाः ॥ ६ ॥ अश्वमेधफलं प्राप्य ब्रह्मलोकं प्रयान्ति ते । कार्तिक्यामन्नदानाच्च निर्मलो ब्रह्मलोकभाक् ॥ ७ ॥ पुष्करे दुष्करं गन्तुं पुष्करे दुष्करं तपः । दुष्करं पुष्करे दानं वस्तुं चैव सुदुष्करम् ॥ ८ ॥ तत्र वासाज्जपाच्छ्राद्धात्कुलानां शतमुद्धरेत् । जम्बूमार्गं च तत्रैव तीर्थं तण्डुलिकाश्रमम्॥९॥ कण्वाश्रमं कोटितीर्थं नर्मदा चार्बुदं परम् । तीर्थं चर्मण्वती सिन्धुः सोमनाथः प्रभासकम् ॥ १० ॥ सरस्वत्यब्धिसङ्गश्च सागरं तीर्थमुत्तमम् । पिण्डारकं द्वारका च गोमती सर्वसिद्धिदा ॥ ११ ॥ भूमितीर्थं ब्रह्मतुङ्गं तीर्थं पञ्चनदं परम् । भीमतीर्थं गिरीन्द्रश्च देविका पापनाशिनी ॥ १२ ॥ तीर्थं विनशनं पुण्यं नागोद्भेदमघार्दनम् । तीर्थं कुमारकोटिश्च सर्वदानीरितानि च ॥ १३ ॥ कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् । य एवं सततं ब्रूयात्सोऽमलः प्राप्नुयाद्दिवम् ॥ १४ ॥ तत्र विष्ण्वादयो देवास्तत्र वासाद्धरिं ब्रजेत् । सरस्वत्यां संनिहित्यां स्नानकृद्ब्रह्मलोकभाक् ॥ १५॥ पांशवोऽपि कुरुक्षेत्रे नयन्ति परमां गतिम् । धर्मतीर्थं सुवर्णाख्यं गङ्गाद्वारमनुत्तमम् ॥ १६ ॥ तीर्थं कनखलं पुण्यं भद्रकर्णह्रदं तथा । गङ्गासरस्वतीसङ्गं ब्रह्मावर्तमघार्दनम् ॥१७॥ भृगुतुङ्गं च कुब्जाम्रं गङ्गोद्भेदमघान्तकम् । वाराणसी वरं तीर्थमविमुक्तमनुत्तमम् ॥ १८ ॥ कपालमोचनं तीर्थं तीर्थराजं

---

तथा यशस्वी है वही तीर्थों का फल प्राप्त करता है । जो प्रतिग्रह नहीं लेता है, थोड़ा भोजन करता है तथा जितेन्द्रिय होता है, वही तीर्थ का फल प्राप्त करता है ।। २ ।। तीर्थयात्रा करने वाला पुरुष सभी यज्ञों का फल प्राप्त कर लेता है । तीन दिन तक उपवास किए विना तीर्थों में गए विना, सुवर्ण दान दिए विना मनुष्य अगले जन्म में दरिद्र होता है । तीर्थों में जाने से वही फल प्राप्त होता है जो फल यज्ञ से प्राप्त होता है ।। ३-४ ।। हे विप्र वसिष्ठ ! पुष्कर सर्वश्रेष्ठ तीर्थ है । वहाँ तीनों सन्ध्याओं में दस हजार कोटि तीर्थों का सन्निधान बना रहता है ।। ५ ।। वहाँ पर देवताओं के साथ ब्रह्मा जीं निवास करते हैं । यहाँ पर सब कुछ चाहने वाले देवता तथा मुनियों ने सिद्धि प्राप्त की । स्नान करके पितरों तथा देवताओं की पूजा करने वाले लोग अयश्वमेधयज्ञ करने का फल प्राप्त करके ब्रह्मलोक को प्राप्त करते है। ।। ६-७ ।। पुष्कर जाना कठिन है, पुष्कर में तपस्या करना कठिन है, पुष्कर में दान करना कठिन है तथा पुष्कर में निवास करना कठिन है ।। ८ ।। पुष्कर में निवास, जप एवं श्राद्ध करके मनुष्य अपनी सौ पीढ़ियों का उद्धार कर लेता है । वहाँ पर जम्बूमार्ग तथा तण्डुलिकाश्रम नामक तीर्थ हैं ।। ९ ।। कण्वाश्रम, कोटितीर्थ, नर्मदा तथा अर्बूद (आबू) ये श्रेष्ठ तीर्थ हैं । चर्मण्वती, सोमनाथ, प्रभास क्षेत्र, सरस्वती समुद्र सङ्गम, सागर तीर्थ, ये उत्तम तीर्थ हैं । पिण्डकारक क्षेत्र, द्वारका एवं गोमती ये सभी प्रकार की सिद्धि प्रदान करने वाले तीर्थ हैं ।। १०-११ ।। भूमितीर्थ, ब्रह्मतुङ्गतीर्थ, तथा पञ्चनद, भीम तीर्थ, गिरीन्द्र तीर्थ, पापों को विनष्ट करने वाली देविका नदी, पवित्र विनशन तीर्थ, पापविनाशक नागोद्भेद तीर्थ तथा कुमार कोटि तीर्थ ये समस्त अभिलषित अर्थों को प्रदान करने वाले तीर्थ हैं ।। १२-१३ ।। मैं कुरुक्षेत्र जाऊँगा और वहाँ निवास करूँगा; जो इस प्रकार से सदा कहा करता है, वह सभी पापों से छुटकारा पाकर स्वर्गलोक चला जाता है ।। १४ ।। वहाँ पर विष्णु आदि देवता रहते हैं, वहाँ पर निवास करने वाला पुरुष श्रीहरि को प्राप्त करता है । उसके सन्निकट में रहने वाली सरस्वती नदी में स्नान करने वाली मनुष्य ब्रह्म लोक जाता है ।। १५ ।। कुरुक्षेत्र की धूलि भी परमगति की प्राप्ति करा देती है, धर्मतीर्थ, सुवर्णतीर्थ, तथा उत्तम गङ्गाद्वार (हरिद्वार) पवित्र, कनखल तीर्थ, तथा भद्रकर्ण ह्रद, गङ्गा तथा सरस्वती नदी का सङ्गम तथा पाप विनाशक ब्रह्मावर्त, ये उत्तमतीर्थ हैं ।। १६-१७ ।। भृगुतुङ्ग कुब्जाम्र तथा गङ्गोद्भेद ये पापों को विनष्ट करने वाले हैं । वाराणसी परमतीर्थ है, यह अविमुक्तक्षेत्र है ।।१८।। कपालमोचनतीर्थ तीर्थराज प्रयाग, गोमती तथा गङ्गा का सङ्गम स्थल, ये सभी उत्तम तीर्थ हैं । गङ्गा चाहे कहीं भी हो स्वर्ग

प्रयागकम् । गोमतीगङ्गयोः सङ्गं गङ्गा सर्वत्र नाकदा ॥ १९ ॥ तीर्थं राजगृहं पुण्यं शालग्राममघान्तकम् । बटेशं वामनं तीर्थं कालिकासङ्गमुत्तमम्॥२०॥ लौहित्यं करतोयाख्यं शोणं चाथर्षभं परम् । श्रीपर्वतं कोल्लगिरिः सह्याद्रिर्मलयो गिरिः ॥ २१ ॥ गोदावरी तुङ्गभद्रा कावेरी वरदा नदी । तापी पयोष्णी रेवा च दण्डकारण्यमुत्तमम् ॥ २२ ॥ कालंजरं मुञ्जवटं तीर्थं शूर्पारकं परम् । मन्दाकिनी चित्रकूटं शृङ्गवेरपुरं परम् ॥ २३ ॥ अवन्ती परमं तीर्थमयोध्या पापनाशिनी । नैमिषं परमं तीर्थं भुक्तिमुक्तिप्रदायकम् । ॥ २४ ॥

इत्यादिमहापुराण आग्नेये तीर्थमाहात्म्यवर्णनं नाम नवाधिकशततमोऽध्यायः ॥ १०९ ॥

## अथ दशाधिकशततमोऽध्यायः

### गङ्गामाहात्म्यम्

गङ्गामाहात्म्यमाख्यास्ये सेव्या सा भुक्तिमुक्तिदा । येषां मध्ये याति गङ्गा ते देशाः पावना वराः ॥ १ ॥ गतिर्गङ्गा तू भूतानां गतिमन्वेषतां सदा । गङ्गा तारयते चोभौ वंशौ नित्यं हि सेविता ॥ २ ॥ चान्द्रायणसहस्राच्च गङ्गाम्भः पानमुत्तमम् । गङ्गा मासं तु संसेव्य सर्वयज्ञफलं लभेत्॥३॥ सकलाघहरी देवी स्वर्गलोकप्रदायिनी । यावदस्थि च गङ्गायां तावत् स्वर्गे स तिष्ठति ॥ ४ ॥ अन्धादयस्तु तां सेव्य देवैर्गच्छन्ति तुल्यताम् । गङ्गातीर्थसमुद्भूतमृद्धारी सोऽघहाऽर्कवत् ॥ ५ ॥ दर्शनात्स्पर्शनात्पानात्तथा गङ्गेतिकीर्तनात् । पुनाति पुण्यपुरुषाञ्शतशोऽथ सहस्रशः॥६॥

इत्यादिमहापुराण आग्नेये गङ्गामाहात्म्यवर्णनं नाम दशाधिकशततमोऽध्यायः ॥ ११०॥

---

प्रदान करती है।।१९।। राजगृह तीर्थ तथा पाप प्रणाशक शालग्राम तीर्थ वटेश तीर्थ, वामनतीर्थ, उत्तमकालिक सङ्गतीर्थ, ये उत्तम तीर्थ हैं।।२०।। लौहित्यतीर्थ, करतोया नदी, शोणभद्र, तथा ऋषभ तीर्थ श्रेष्ठ हैं । श्रीपर्वत, कोलाचल, सहस्त्र्यादि तथा मलयादि गोदावरी, तुङ्गभद्रा, वरदायिनी कावेरी, तापी, पयोष्णी, रेवा (नर्मदा) उत्तम दण्डकारण्य, कालञ्जर तीर्थ, मुञ्जवट, शूर्पारक, मन्दाकिनी, चित्रकूट तथा शृङ्गवेरपुर ये श्रेष्ठ तीर्थ हैं।।२१-२३।। अवन्तिका श्रेष्ठ तीर्थ हैं, अयोध्या पापों को विनष्ट करने वाली है, श्रेष्ठ तीर्थ नैमिषारण्य भोग तथा मोक्ष प्रदान करने वाला है।।२४।।

**इस तरह से आदिमहापुराण अग्निपुराण का तीर्थमाहात्म्य वर्णन नामक एक सौ नवाँ अध्याय सम्पूर्ण हुआ ॥ १०९ ॥**

**अग्निदेव ने कहा—** अब मैं गङ्गा के माहात्मय का वर्णन करता हूँ । सेवन करने से गङ्गा भोग तथा मोक्ष प्रदान करने वाली हैं । जिन देशों से होकर गङ्गा आती हैं, वे देश उत्तम हैं।।१।। गति चाहने वाले जीवों के लिए गङ्गा गति स्वरूपा हैं । जो नित्य ही गङ्गा का सेवन करता है, वह अपने दोनों वंशों को तार देता है ।। २ ।। हजारों चन्द्रायण व्रत करने की अपेक्षा गङ्गाजल का पान करना उत्तम है । व्यक्ति एक मास तक गङ्गा का सेवन करके समस्त यज्ञों के फल को प्राप्त कर लेता है ।। ३ ।। गङ्गादेवी सभी पापों को विनष्ट करने वाली तथा स्वर्गलोक प्रदान करने वाली हैं । मनुष्य की हड्डी जब तक गङ्गा में पड़ी रहती है तब तक वह मनुष्य स्वर्ग में निवास करता है ।। ४ ।। अन्धे आदि मनुष्य गङ्गा का सेवन करके देवताओं के तुल्य हो जाते है । गङ्गातीर्थ से निकली हुई मिट्टी को धारण करने वाला मनुष्य सूर्य के समान पापों को नष्ट करने वाला होता है । गङ्गा का दर्शन, स्पर्श, जलपान तथा गङ्गा इस नाम का उच्चारण करने वाला मनुष्य अपने सैकड़ों, हजारों पीढ़ियों को पवित्र कर देता है ।। ५-६ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का गङ्गामाहात्म्य वर्णन नामक एक सौ दसवाँ अध्याय सम्पूर्ण हुआ ॥ ११० ॥**

## अथैकादशाधिकशततमोऽध्यायः

## प्रयाग-माहात्म्यम्

अग्निरुवाच– **वक्ष्ये प्रयागमाहात्म्यं भुक्तिमुक्तिप्रदं परम् । प्रयागे ब्रह्मविष्ण्वाद्या देवा मुनिवराः स्थिताः ॥ १ ॥ सरितःसागराः सिद्धा गन्धर्वाप्सरसस्तथा । तत्र त्रीण्यग्निकुण्डानि तेषां मध्ये तु जाह्नवी ॥ २ ॥ वेगेन समतिक्रान्ता सर्वतीर्थपुरस्कृता । तपनस्य सुता तत्र त्रिषु लोकेषु विश्रुताः ॥ ३ ॥ गङ्गायमुनयोर्मध्यं पृथिव्या जघनं स्मृतम् । प्रयागं जघनस्यान्तरुपस्थमृषयो विदुः ॥ ४ ॥ प्रयागं सप्रतिष्ठानं कम्बलाश्वतरावुभौ। तीर्थं भोगवती चैव वेदी प्रोक्ता प्रजापतेः ॥ ५ ॥ तत्र वेदाश्च यज्ञाश्च मूर्तिमन्तः प्रयागके । स्तवनादस्य तीर्थस्य नामसंकीर्तनादपि ॥ ६ ॥ मृत्तिकालम्भनाद्वाऽपि सर्वपापैः प्रमुच्यते । प्रयागे सङ्गमे दानं श्राद्धं जप्यादि चाक्षयम् ॥ ७ ॥ न वेदवचनाद्विप्र न लोकवचनादपि । मतिरुत्क्रमणीयान्ते प्रयागे मरणं प्रति ॥ ८ ॥ दशतीर्थसहस्राणि षष्टिकोट्यस्तथाऽपराः । तेषां सांनिध्यमत्रैव प्रयागं परमं ततः ॥ ९ ॥ वासुकेर्भोगवत्यत्र हंसप्रपतनं परम् । गवां कोटिप्रदानाद्यत्र्यहं स्नानस्य तत्फलम् ॥ १० ॥ प्रयागे माघमासे तु एवमाहुर्मनीषिणः । सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा॥११॥ गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे । अत्र दानाद्दिवं यान्ति राजेन्द्रो जायतेऽत्र च ॥ १२ ॥ वटमूले सङ्गमादौ मृतो विष्णुपुरीं व्रजेत्। उर्वशीपुलिनं रम्यं तीर्थं सन्ध्यावटस्तथा ॥ १३ ॥ कोटितीर्थं चाश्वमेधं गङ्गायमुनमुत्तमम् । मानसं रजसा हीनं तीर्थं वासरकं परम् ॥ १४ ॥**

**इत्यादिमहापुराण आग्नेये प्रयागमाहात्म्यवर्णनं नामैकादशाधिकशततमोऽध्यायः ॥ १११ ॥**

---

**अग्निदेव ने कहा–** अब मैं सर्वोत्तम भोग तथा मोक्ष प्रदान करने वाले प्रयाग का माहात्म्य बतलाता हूँ । प्रयाग में ब्रह्मा, विष्णु आदि देवता तथा श्रेष्ठ मुनि निवास करते हैं ।। १ ।। नदियाँ समुद्र, सिद्ध, गन्धर्व तथा अप्सराएँ निवास करती हैं प्रयाग में तीन अग्निकुण्ड हैं, उनके बीच में सभी तीर्थों को साथ लिए गङ्गा बड़े वेग से प्रवाहित होती है । वहाँ पर त्रैलोक्य विख्यात सूर्य कन्या यमुना हैं ।। २-३ ।। गङ्गा तथा यमुना को मध्यभाग पृथिवी का जंघा कहा गया है । ऋषियों ने प्रयाग को जघन (जंघों) का अन्तिम भाग उपस्थ माना है ।। ४ ।। प्रतिष्ठानपुरी (झूसी) के साथ प्रयाग, कम्बल तथा अश्वतर ये दोनों तथा भोगवती तीर्थ ये सबके सब ब्रह्मा के यज्ञ की वेदी कहे गए हैं ।। ५ ।। प्रयाग मे वेद तथा यज्ञ मूर्तिमान रूप से रहते हैं । इस तीर्थ की स्तुति करने तथा नाम संकीर्तन करने से भी तथा इसकी मिट्टी को शरीर में लगाने से भी मनुष्य सभी पापों से मुक्त हो जाता है । प्रयाग के संगम स्थल पर, दान, श्राद्ध तथा जप आदि अक्षय होते हैं ।। ६-७ ।। हे ब्रह्मन् ! वसिष्ठ ! वेद अथवा लोक किसी के भी कहने से प्रयाग तीर्थ के भीतर में शरीर त्याग करने का विचार नहीं त्यागना चाहिए ।। ८ ।। प्रयाग में साठ करोड़ दस हजार तीर्थों का निवास है अतएव प्रयाग सबों से महान तीर्थ है ।। ९ ।। यहाँ पर वासुकि की भोगवती तथा हंस प्रपतन है । करोड़ गायों के दान करने से जो फल प्राप्त होता है वही फल यहाँ पर तीन दिन स्नान करने से होता है ।। १० ।। मनीषियों का कहना है कि माघ मास में गङ्गा सुलभ होती है किन्तु तीन स्थानों पर गङ्गा का मिलना दुर्लभ होता है- हरिद्वार, प्रयाग तथा गङ्गा एवं सागर के संगम स्थल पर । इन स्थानों पर दान करके मनुष्य स्वर्गलोक प्राप्त करता है और पुनः इस लोक में वह राजाओं का भी राजा होता है ।। ११-१२ ।। अक्षयवट के मूल में तथा सङ्गम आदि स्थानों पर शरीर त्यागने पर जीव विष्णुलोक में जाता है । प्रयाग के उर्वशी पुलिन, सन्ध्यावट, कोटितीर्थ, दशाश्वमेघ घाट, उत्तम गङ्गा एवं यमुना का संगम स्थल, जो रजोगुण रहित मानस तीर्थ तथा वासरक तीर्थ, ये सभी तीर्थ मनोहर एवं उत्तम हैं ।। १३-१४।।

**इस तरह से आदिमहापुराण, अग्निपुराण का प्रयागमाहात्म्य वर्णन नामक एक सौ ग्यारहवाँ अध्याय सम्पूर्ण हुआ ॥ १११ ॥**

## अथ द्वादशाधिकशततमोऽध्यायः

### वाराणसीमाहात्मयम्

अग्निरुवाच– **वाराणसी परं तीर्थं गौर्यै प्राह महेश्वरः । भुक्तिमुक्तिप्रदं पुण्यं वसतां गृणतां हरिम् ॥ १ ॥ रुद्र उवाच- गौरि क्षेत्रं न मुक्तं वै अविमुक्तं ततः स्मृतम्। जप्तं तप्तं हुतं दत्तमविमुक्ते किलाक्षयम् ॥ २ ॥ अश्मना चरणौ हत्वा वसेत्काशीं नहि त्यजेत् । हरिश्चन्द्रं परं गुह्यं गुह्यमाम्रातकेश्वरम् ॥ ३ ॥ जप्येश्वरं परं गुह्यं गुह्यं श्रीपर्वतं तथा । महालयं परं गुह्यं भूमिचण्डेश्वरं तथा ॥ ४ ॥ केदारं परमं गुह्यमष्टौ सन्त्यविमुक्तके। गुह्यानां परमं गुह्यमविमुक्तं परं मम ॥ ५ ॥ द्वियोजनं तु पूर्वं स्याद्योजनार्धं तदन्यथा । वरणा च नदी नासी मध्ये वाराणसी तयोः॥६॥ अत्र स्नानं जपो होमो मरणं देवपूजनम् । श्राद्धं दानं निवासश्च यद्यत्स्याद्भुक्तिमुक्तिदम् ॥ ७ ॥**

इत्यादिमहापुराण आग्नेये वाराणसीमाहात्म्यकथनं नाम द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

## अथ त्रयोदशाधिकशततमोऽध्यायः

### नर्मदामाहात्मयम्

अग्निरुवाच– **नर्मदादिकमाहात्म्यं वक्ष्येऽहं नर्मदां पराम् । सद्यः पुनाति गाङ्गेयं दर्शनाद्वारि नार्मदम् ॥ १ ॥ विस्तराद्योजनशतं योजनद्वयमायतम्। षष्टिस्तीर्थसहस्राणि षष्टिकोट्यस्तथाऽपराः ॥ २ ॥ पर्वतस्य समन्तात्तु तिष्ठन्त्यमरकण्टके । कावेरीसङ्गमं पुण्यं श्रीपर्वतमतः शृणु ॥ ३ ॥ गौरी श्रीरूपिणी तेपे तपस्तामब्रवीद्धरिः। अवाप्स्यसि त्वमध्यात्म नाम्ना श्रीपर्वतस्तव ॥ ४ ॥ समन्ताद्योजनशतं महापुण्यं भविष्यति । अत्र दानं ततो**

**अग्निदेव ने कहा–** गौरी से भी शिवजी ने कहा कि वाराणसी ही उत्तम तीर्थ है । जो लोग यहाँ निवास करते हैं तथा श्रीहरि का नाम स्मरण करते हैं, उनके लिए यह पवित्र तथा भोग एवं मोक्ष प्रदान करने वाला है ।। १ ।। रुद्र ने कहा- गौरि ! मैं इस क्षेत्र को मैं कभी नहीं छोड़ता हूँ अतएव इसे अविमुक्त क्षेत्र कहते हैं । इस अविमुक्त क्षेत्र में किए गए जप, तप, हवन तथा दान अक्षय होते हैं ।। २ ।। पत्थर से दोनों पैरों को तोड़कर काशी में बैठा रहे, उसे कभी छोड़े नहीं । हरिश्चन्द्र, आम्रातकेश्वर, जप्येश्वर, श्री पर्वत, महालय, भृगु, चण्डेश्वर और केदार तीर्थ ये आठ तीर्थ अविमुक्त क्षेत्र के परम गोपनीय हैं । सभी गोप्यों में परमगोप्य मेरा अविमुक्त क्षेत्र है ।। ३-५ ।। वह दो योजन लम्बा और आधा योजन चौड़ा है । 'वरण' और 'नसी' इन दो नदियों के बीच में वाराणसी नगरी है।।६।। यहाँ पर रहकर स्नान, जप,होम, मृत्यु, देवपूजन, श्राद्ध, दान तथा निवास जो कुछ भी किया जाय वह भोग तथा मोक्ष प्रदान करने वाला होता है।।७।।

**इस तरह से आदिमहापुराण अग्निपुराण का वाराणसी माहात्म्य वर्णन नामक एक सौ बारहवाँ अध्याय सम्पूर्ण हुआ ॥ ११२ ॥**

**अग्नि ने कहा–** अब मैं नर्मदा आदि का माहात्म्य बतलाता हूँ । गङ्गा का जल तो स्पर्श से पवित्र कर देता है किन्तु नर्मदा का जल तो देखने मात्र से पवित्र कर देता है ।। १ ।। नर्मदा तीर्थ सौ योजन लम्बा तथा दो योजन चौड़ा है । यहाँ पर साठ करोड़ तथा साठ हजार तीर्थ निवास करते हैं ।। २ ।। ये सभी तीर्थ अमरकण्टक पर्वत की चारों ओर निवास करते हैं । यहाँ पर कावेरी संगम परम पवित्र है । अब श्री पर्वत का वर्णन सुनो ।। २-३ ।। एक बार श्रीदेवी का रूप धारण करके यहाँ पर गौरी ने तपस्या की तो उनसे भगवान् श्रीहरि ने कहा- देवि! तुम

जप्यं श्राद्धं सर्वमथाक्षयम् ॥ ५ ॥ मरणं शिवलोकाय सर्वदं तीर्थमुत्तमम् । हरोऽत्र क्रीडते देव्या हिरण्यकशिपुस्तथा ॥ ६ ॥ तपस्तप्त्वा बली चाभून्मुनयः सिद्धिमाप्नुवन् ॥ ७ ॥

इत्यादिमहापुराण आग्नेये नर्मदामाहात्म्यवर्णनं नाम त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

## अथ चतुर्दशाधिकशततमोऽध्यायः

### गयामाहात्म्यम्

अग्निरुवाच– **गयामाहात्म्यमाख्यास्ये गया तीर्थोत्तमोत्तमम् । गयासुरस्तपस्तेपे तत्तपस्तापिभिः सुरैः ॥ १ ॥ उक्तः क्षीराब्धिगो विष्णुः पालयास्मान् गयासुरात्। तथेत्युक्त्वा हरिर्दैत्यं वरं ब्रूहीति चाब्रवीत् ॥ २ ॥ दैत्योऽब्रवीत्पवित्रोऽहं भवेयं सर्वतीर्थतः । तथेत्युक्त्वा गतो विष्णुर्दैत्यं दृष्ट्वा नवा हरिम् ॥ ३ ॥ गताः शून्या मही स्वर्गे देवा ब्रह्मादयः सुराः । गता ऊचुर्हरिं देवाः शून्या भूस्त्रिदिवं हरे ॥ ४ ॥ दैत्यस्य दर्शनादेव ब्रह्माणं चाब्रवीद्धरिः । यागार्थं दैत्यदेहं त्वं प्रार्थय त्रिदशैः सह ॥ ५ ॥ तच्छ्रुत्वा ससुरो ब्रह्मा गयासुरमथाब्रवीत् । अतिथिः प्रार्थयामि त्वां देहं यागाय पावनम् ॥ ६ ॥ गयासुरस्तथेत्युक्त्वाऽपतत्तस्य शिरस्यथ । यागं चकार चलिते देहे पूर्णाहुतिं विभुः ॥ ७ ॥ पुनर्ब्रह्माऽब्रवीद्विष्णुं पूर्णाकालेऽसुरोऽचलत्। विष्णुधर्ममथाऽऽहूय प्राह देवमयीं शिलाम् ॥ ८॥ धारयस्व सुराः सर्वे तस्यामुपरि सन्तु ते । गदाधरो मदीयाऽथ मूर्तिः स्थास्यति साऽमरैः ॥ ९ ॥ धर्मः शिलां देवमयीं तच्छ्रुत्वाऽधारयत्पराम् । या धर्माद् धर्मवत्यां च जाता धर्मव्रता सुता ॥१०॥ मरीचिर्ब्रह्मणः पुत्रस्तामुवाह तपोन्विताम् । यथा**

---

अध्यात्म ज्ञान प्राप्त करोगी । यह पर्वत तुम्हारे नाम पर श्रीपर्वत कहलायेगा । इसके चारों ओर सौ योजन अत्यन्त पुण्यवान क्षेत्र होगा। यहाँपर किया गया दान, जप तथा श्राद्ध सब कुछ अक्षय होगा ।। ४-५ ।। यहाँ पर मरने वाले को शिवलोक की प्राप्ति होगी तथा यह उत्तम तीर्थ सब कुछ प्रदान करने वाला होगा । यहाँ पर भगवान् शंकर सदा पार्वती के साथ क्रीड़ा करते हैं, यहीं पर हिरण्यकशिपु तपस्या करके बलवान् हो गया तथा मुनियों ने सिद्धि प्राप्त की ।। ६-७ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का नर्मदामाहात्म्य वर्णन नामक एक सौ तेरहवाँ अध्याय सम्पूर्ण हुआ ॥ ११३ ॥**

**अग्निदेव ने कहा–** मैं गया का माहात्म्य वर्णन कर रहा हूँ । गया सभी उत्तम तीर्थों में उत्तम है । गयासुर ने तपस्या की उससे संतप्त होकर देवताओं ने क्षीरसागर में शयन करने वाले भगवान् विष्णु के पास जाकर प्रार्थना की कि आप हमारी गयासुर से रक्षा करें । भगवान् ने कहा मैं ऐसा ही करूँगा । श्रीहरि ने दैत्य से कहा कि तुम वर माँगो ।। १-२ ।। दैत्य ने कहा कि मैं सभी तीर्थों से अधिक पवित्र हो जाऊँ । भगवान् ने कहा- ऐसा ही हो । यह कहकर भगवान् चले गए । मनुष्यों ने जब दैत्य को देखा तो वे श्रीहरि के पास गये; पृथिवी खाली हो गयी स्वर्ग में ब्रह्मा इत्यादि देवता भी दैत्य को देखकर श्रीहरि के पास जाकर बोले- श्रीहरे ! पृथिवी और स्वर्गलोक खाली हो गए हैं ।। ४ ।। श्रीहरि ने ब्रह्माजी से कहा- तुम देवताओं के साथ जाकर दैत्य से यज्ञ भूमि बनाने के लिए उसका देह माँगो ।। ५ ।। यह सुनकर ब्रह्माजी देवताओं के साथ गयासुर से बोले- मैं अतिथि हूँ । तुम से तुम्हारा पवित्र शरीर याग करने के लिए माँग रहा हूँ । गयासुर ने कहा- अच्छी बात है । वह पृथिवी पर लेट गया । ब्रह्मा ने उसके सिर के ऊपर याग किया किन्तु पूर्णाहुति के समय उसका शरीर चञ्चल हो गया ।। ७ ।। इस पर ब्रह्मा जी ने विष्णु से कहा कि पूर्णाहुति के समय तो असुर चञ्चल हो गया । इस पर भगवान् ने धर्म को बुलाकर कहा- तुम असुर के शरीर पर धर्ममयी शिला रख दो उसके ऊपर सभी देवता हो जायँ।

हरिः श्रिया रेमे गौर्या शम्भुस्तथा तया ॥ ११ ॥ कुशपुष्पाद्यरण्याच्च आनीयातिश्रमान्वितः । भुक्त्वा धर्मव्रतां प्राह पादसवाहनं कुरु ॥ १२ ॥ विश्रान्तस्य मुनेः पादौ तथेत्युक्त्वा प्रियाऽकरोत् । एतस्मिन्नन्तरे ब्रह्मा मुनौ सुप्ते समागतः ॥ १३ ॥ धर्मव्रताऽचिन्तयच्च किं ब्रह्माणं समर्चये । पादसंवाहनं कुर्वे ब्रह्मा पूज्यो गुरोर्गुरुः ॥ १४ ॥ विचिन्त्य पूजयामास ब्रह्माणं चार्हणादिभिः । मरीचिस्तामपश्यत् स शशापोक्तिव्यतिक्रमात्॥१५॥ शिला भविष्यसि क्रोधाद्धर्मव्रताऽब्रवीच्च तम् । पादाभ्यङ्गं परित्यज्य त्वद्गुरुः पूजितो मया ॥ १६ ॥ अदोषाऽहं यतस्त्वं हि शापं प्राप्स्यसि शंकरात् । धर्मव्रता पृथक्शापं धारयित्वाऽग्निमध्यगात् ॥ १७॥ तपश्चचार वर्षाणां सहस्राण्ययुतानि च । ततो विष्णवादयो देवा वरं ब्रूहीति चाब्रुवन् ॥ १८॥ धर्मव्रताऽब्रवीद्देवाञ्शापं निर्वर्तयन्तु मे । देवा ऊचुः- दत्तो मरीचिना शापो भविष्यति न चान्यथा । शिला पवित्रा देवाङ्घ्रिलांक्षिता त्वं भविष्यसि ॥ १९ ॥ देवव्रता देवशिला सर्वदेवादिरूपिणी । सर्वदेवमयी पुण्या नैश्चलायासुरस्य हि ॥ २० ॥ देवव्रतोवाच- यदि तुष्टाःस्थ मे सर्वे मयि तिष्ठन्तु सर्वदा । ब्रह्मा विष्णुश्च रुद्राद्या गौरी लक्ष्मीमुखाः सुराः ॥ २१ ॥ अग्निरुवाच- देवव्रतावचः श्रुत्वा तथेत्युक्त्वा दिवं गताः । सा धर्मेणासुरस्यास्य धृता देवमयी शिला ॥ २२ ॥ सशिलश्चलितो दैत्यः स्थिता रुद्रादयस्ततः । सदेवश्चलितो दैत्यस्ततो देवैः प्रसादितः ॥ २३ ॥ क्षीराब्धिगो हरिः प्रादात्स्वमूर्तिं श्रीगदाधराम्। गच्छन्तु भोः स्वयं यास्ये मूर्त्या वै देवगम्यया ॥ २४ ॥ स्थितो गदाधरो देवो व्यक्ताव्यक्तोभयात्मकः। नैश्चल्यार्थं स्वयं देवः स्थित आदिगदाधरः ॥ २५ ॥ गदो नामासुरो रौद्रः स हतो विष्णुना पुरा । तदस्थिनिर्मिता चाऽऽद्या गदा या विश्वकर्मणा॥२६॥

---

देवताओं के साथ मेरी गदाधर मूर्ति भी रहेगी ।। ८-९ ।। यह सुनकर धर्म ने उसके ऊपर देवमयी शिला रख दी । वही धर्म की पत्नी धर्मवती हुयी । उससे एक कन्या उत्पन्न हुयी, धर्मव्रता।।१०।। ब्रह्मा के पुत्र मरीचि ने उस तपस्विनी धर्मव्रता से शादी की । जिस तरह श्रीहरि श्रीदेवी के साथ रमण करते हैं तथा शम्भु गौरी के साथ रमण करते हैं,उसी तरह से महर्षि मरीचि ने उसके साथ रमण किया ।। ११ ।। अरण्य से कुश तथा पुष्प आदि लाकर अत्यन्त श्रान्त महर्षि ने धर्मव्रता से पैर दबाने के लिए कहा ।। १२ ।। अच्छी बात है,यह कहकर धर्मव्रता मुनि का पैर दबाने लगी। जब मुनि सो गए तो उसी के बीच ब्रह्मा जी आए ।। १३ ।। धर्मव्रता ने कहा अब मैं ब्रह्मा जी की पूजा कैसे करूँ ? यह विचार करके उसने ब्रह्मा जी की पूजा पूजन सामग्रियों से की। मरीचि महर्षि ने उसे देखकर अपनी आज्ञा का उल्लघन समझकर उसे शाप दिया ।। १५ ।। उन्होंने क्रोधपूर्वक कहा- तुम शिला हो जाओगी । धर्मव्रता ने कहा- पैर दबाना छोड़कर मैंने आपके पिता जी की पूजा की है ।। १६ ।। मैं निर्दोष हूँ फिर भी आपने मुझे शाप दिया है । अतएव आपको शिवजी का शाप मिलेगा । धर्मव्रता ने शाप को अलग रख दिया और अग्नि के भीतर प्रवेश करके दस हजार वर्ष पर्यन्त उसने तपस्या की । इसके पश्चात् विष्णु आदि देवताओं ने कहा- वरदान माँगो । धर्मव्रता ने कहा आप लोग मेरा शाप दूर कर दें ।।१७-१८।। **देवताओं ने कहा–** मरीचि महर्षि का दिया हुआ शाप अन्यथा नहीं होगा, तुम देवताओं के चरणचिह्नों से चिह्नित पवित्र शिला होओगी । देवव्रता तुम सर्वदेवमयी पवित्र देवशिला होओगी जिससे कि गयासुर का शरीर निश्चल रहे ।। १९-२० ।। **देवव्रत ने कहा–** यदि आप सभी प्रसन्न हैं तो ब्रह्मा, विष्णु, रुद्र, गौरी, लक्ष्मी आदि सभी देवता मेरे ऊपर निवास करें ।। २१ ।। **अग्नि ने कहा–** धर्मव्रता की बात सुनकर **देवताओं ने कहा–** ऐसा ही होगा, और वे स्वर्गलोक चले गए । उस देवमयी शिला को, धर्म ने असुर के शरीर पर रख दिया ।। २२ ।। उस शिला के साथ दैत्य चञ्चल हो उठा, तब रुद्र आदि देवता उसके ऊपर चढ़ गए । देवताओं के साथ भी वह दैत्य चञ्चल हो गया । तब देवताओं ने श्री भगवान् को प्रसन्न किया । क्षीरशायी श्रीहरि ने अपनी गदाधारण करने वाली मूर्ति को दिया । देवताओं ! आप लोग जायँ मैं देवताओं के साथ जाने वाली अपनी मूर्ति के साथ जाऊँगा ।। २३-२४ ।। व्यक्तस्वरूप तथा अव्यक्त स्वरूप दोनों प्रकार के स्वरूप वाले आदिगदाधर श्रीभगवान् उसके ऊपर बैठ गए, जिससे कि दैत्य का शरीर स्थिर हो जाय ।। २५ ।। पहले गद नामक एक भयंकर असुर को भगवान् विष्णु

आद्यया गदया हेतिप्रमुखा राक्षसा हताः । गदाधरेण देवेन तस्मादादिगदाधरः ॥ २७ ॥ देवमय्यां शिलायां च स्थिते चाऽऽदिगदाधरे । गयासुरे निश्चलेऽथ ब्रह्मा पूर्णाहुतिं ददौ ॥ २८ ॥ गयासुरोऽब्रवीद्देवान्किमर्थं वञ्चितो ह्यहम् । विष्णूर्वचनमात्रेण किं न स्यां निश्चलो ह्यहम् ॥ २९ ॥ आक्रान्तो यद्यहं देवा दातुमर्हत मे वरम् ॥ ३० ॥ देवा ऊचुः- तीर्थस्य करणे यत्त्वमस्माभिर्निश्चलीकृतः । विष्णोः शम्भोर्ब्रह्मणश्च क्षेत्रं तव भविष्यति ॥ ३१ ॥ प्रसिद्धं सर्वतीर्थेभ्यः पित्रादेर्ब्रह्मलोकदम् । इत्युक्त्वा ते स्थिता देवा देव्यस्तीर्थादयः स्थिताः ॥ ३२॥ यागं कृत्वा ददौ ब्रह्मा ऋत्विग्भ्यो दक्षिणास्तदा । पञ्चक्रोशं गयाक्षेत्रं पञ्चाशत्पञ्च चाऽऽर्पयत् ॥ ३३ ॥ ग्रामान्स्वर्णगिरीन्कृत्वा नदीर्दुग्धमधुश्रवाः। सरोवराणि दध्याज्यैर्बहूनन्नादिपर्वतान् ॥ ३४ ॥ कामधेनुं कल्पतरुं स्वर्णरूप्यगृहाणि च । न याचयन्तु विप्रेन्द्रा अल्पानुक्त्वा ददौ प्रभुः ॥ ३५॥ धर्मयागे प्रलोभात्तु प्रतिगृह्य धनादिकम् । स्थिता यदा गयायां ते शप्तास्ते ब्रह्मणा तदा ॥ ३६ ॥ विद्या विवर्जिता यूयं तृष्णायुक्ता भविष्यथ । दुग्धादिवर्जिता नद्यः शैलाः पाषाणरूपिणः ॥ ३७ ॥ ब्रह्माणं ब्राह्मणाश्चोचुर्नष्टं शापेन चाखिलम् । जीवनाय प्रसादं नः कुरु विप्रांश्च सोऽब्रवीत्॥३८॥ तीर्थोपजीविका यूयं सचन्द्रार्कं भविष्यथ । ते युष्मान्पूजयिष्यन्ति गयायामागता नराः ॥ ३९ ॥ हव्यकव्यैर्धनैः श्राद्धैस्तेषां कुलशतं व्रजेत् । नरकात्स्वर्गलोकाय स्वर्गलोकात्परां गतिम् ॥ ४० ॥ गयोऽपि चाकरोद्यागं बह्वन्नं बहुदक्षिणम् । गयापुरी तेन नाम्ना पाण्डवा ईजिरे हरिम् ॥ ४१॥

इत्यादिमहापुराण आग्नेये गयामाहात्म्यवर्णनं नाम चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

---

ने मारा था, उसकी हड्डी से विश्वकर्मा ने सर्वप्रथम एक गदा बनायी । उस आदि गदा के द्वारा गदाधारी भगवान् ने हेति आदि राक्षसों को मारा । अतएव वे आदि गदाधर कहे जाते हैं ।। २६-२७ ।। उस देवमयी शिला के ऊपर भगवान् आदि गदाधर के स्थित हो जाने पर, गयासुर स्थिर हो गया उसके पश्चात् ब्रह्मा ने पूर्णाहुति दी ।। २८ ।। गयासुर ने देवताओं से पूछा- मेरे साथ वञ्चना क्यों की गयी ? क्या मैं भगवान् विष्णु के वचनमात्र से स्थिर नहीं हो जाता ?।। १९ ।। कि आप लोगों ने मुझे दबा रखा है ? अतएव आप लोग मुझे वरदान दें ।। ३०।। देवताओं ने कहा- तीर्थ का निर्माण करने के लिए हम लोगों ने तुम्हें निश्चल किया है । तुम ब्रह्मा, विष्णु तथा शिव का निवास स्थान बनोगे ।। ३१ ।। सभी तीर्थों से प्रसिद्ध, पितृगण को ब्रह्मलोक प्रदान करने वाले तुम होओगे। यह कहकर सभी देवता, देवियाँ तथा तीर्थ वहाँ निवास करने लगे ।। ३२ ।। याग करके ब्रह्मा ने ऋत्विजों को दक्षिणा दी । पाँच कोश के गया क्षेत्र, पचपन गाँव, सोने के पहाड़,दुग्ध तथा दधि की नदियाँ एवं चाँदी के गृह प्रदान किए गए । ब्रह्मा जी ने ब्राह्मणों को यह कहकर ये सारी चीजें प्रदान की कि- अल्पशक्ति वाले मनुष्यों से आप लोग कभी याचना नहीं करेंगे।।३३-३५।। धर्म के याग में लोभ के कारण,धन आदि का दान लेकर जब ब्रह्मा गया में आए तो ब्रह्मा ने शाप दे दिया- तुम सभी विद्याविहीन तथा लोभी हो जाओगे। नदियाँ, दुग्ध आदि रहित तथा पर्वत पाषाण हो जायेंगे ब्राह्मणों ने ब्रह्मा से कहा- हमारे जीवन के लिए आप कृपा करें । ब्रह्माजी ने कहा- जब तक चन्द्रमा तथा सूर्य रहेंगे तब तक तीर्थों से अपनी जीविका चलाएँ । गया में आए हुए लोग आप लोगों की पूजा करेंगे ।। ३८-३९ ।। गया में कव्य, कथा, धन तथा श्राद्ध के द्वारा आप लोगों का सत्कार करने वाले लोगों के सौ पीढ़ी पितृगण नरक से स्वर्गलोक जायेंगे और स्वर्ग में रहने वाले पितृगण परमपद को प्राप्त करेंगे ।। ४० ।। गयासुर ने भी याग करके बहुत अन्न तथा बहुत दक्षिण दिया । इसी से इस नगरी का नाम गयापुरी पड़ा । यहाँ पर पाण्डवों ने श्रीहरि की आराधना किया ।। ४१ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का गयामाहात्म्य वर्णन नामक एक सौ चौदहवाँ अध्याय सम्पूर्ण हुआ ॥ ११४ ॥**

## अथ पञ्चदशाधिकशततमोऽध्यायः

### गयायात्राविधिः

अग्निरुवाच– उद्यतश्चेद्गयां यातुं श्राद्धं कृत्वा विधानतः । विधाय कार्पटीवेशं ( षं ) ग्रामूस्यापि प्रदक्षिणम् ॥ १ ॥ कृत्वा प्रतिदिनं गच्छेत्संयतश्चाप्रतिग्रही । गृहाच्चलितमात्रस्य गयाया गमनं प्रति ॥ २ ॥ स्वर्गारोहणसोपानं पितृणां तु पदे पदे । ब्रह्मज्ञानेन किं कार्यं गोगृहे मरणेन किम् ॥ ३ ॥ किं कुरुक्षेत्रवासेन यदा पुत्रो गयां व्रजेत् । गयां प्राप्तं सुतं दृष्ट्वा पितृणामुत्सवो भवेत् ॥ ४ ॥ पद्भ्यामपि जलं स्पृष्ट्वा अस्मभ्यं किंन दास्यति । ब्रह्मज्ञानं गयाश्राद्धं गोगृहे मरणं तथा ॥ ५ ॥ वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्विधा । काङ्क्षन्ति पितरः पुत्रं नरकाद्भयभीरवः ॥ ६ ॥ गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति । मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ॥ ७ ॥ न कालादि गयातीर्थे दद्यात्पिण्डांश्च नित्यशः । पक्षत्रयनिवासी च पुनात्यासप्तमं कुलम् ॥ ८ ॥ अष्टकासु च वृद्धौ च गयायां मृतवासरे । अत्र मातुः पृथक्श्राद्धमन्यत्र पतिना सह ॥ ९ ॥ पित्रादिनवदैवत्यं तथा द्वादशदैवतम् । प्रथमे दिवसे स्नायात्तीर्थे ह्युत्तरमानसे ॥ १० ॥ उत्तरे मानसे पुण्य आयुरारोग्यवृद्धये। सर्वाघौघविघाताय स्नानं कुर्याद्विमुक्तये ॥ ११॥ सन्तर्प्य देवपित्रादीञ्श्राद्धकृत्पिण्डदो भवेत् । दिव्यान्तरिक्षभौमस्था ( भूमिष्ठा ) न्देवान्संतर्पयाम्यहम्॥१२॥ दिव्यान्तरिक्षभौमादि पितृमात्रादि तर्पयेत् । पिता पितामहश्चैव तथैव प्रपितामहः ॥ १३ ॥ माता पितामही चैव तथैव प्रपितामही । मातामहः प्रमातामहो वृद्धप्रमातामहः ॥ १४ ॥ तेभ्योऽन्येभ्य इमान्पिण्डानुद्धाराय ददाम्यहम् । ॐ नमः सूर्यदेवाय सोम भौमस्वरूपिणे॥१५॥

अग्नि ने कहा– यदि कोई गया जाने के लिए तैयार हो तो, उसे विधिपूर्वक श्राद्ध करके गेरुआ कपड़ा पहनकर ग्राम की प्रदक्षिणा करके संयत तरीके से विना किसी प्रकार का दान लिए हुए प्रतिदिन चलना चाहिए । जो गया जाने के लिए अपने घर से प्रस्थान करता है, वह पग-पग पर अपने को स्वर्गारोहण का सोपान बनाता है । यदि पुत्र गया जाय तो ब्रह्मज्ञान से, अथवा गोशाला अथवा कुरुक्षेत्र में निवास करने से क्या लाभ है ? गया गए हुए पुत्र को देखकर पितृगण उत्सव मनाते हैं ।। १-४ ।। वे सोचते हैं कि यह अपने पैरों से भी छूकर हमें जल नहीं देगा । पुरुषों को मुक्ति चार प्रकार से होती है- ब्रह्मज्ञान से, गया में श्राद्ध करने से, गोशाला में शरीर त्याग करने से तथा कुरुक्षेत्र में निवास करने से । नरक के भय से डरे हुए पितृगण पुत्र की चाहना करते हैं । वे सोचते हैं कि जो पुत्र गया जायेगा वह हम लोगों की रक्षा करेगा । सभी तीर्थों की यह विधि है कि वहाँ पर जाकर मुण्डन तथा उपवास करना चाहिए ।। ५-७।। गया तीर्थ में जाने का कोई समय निश्चित नहीं है, गया तीर्थ में सदा ही पिण्डदान किया जा सकता है । गया में तीन पस तक निवास करने वाला अपने वंश की सात पीढ़ियों को शुद्ध कर देता है । अष्टका श्राद्ध, वृद्धिश्राद्ध तथा क्षयाह्न में यहाँ पर माता का पृथक् श्राद्ध किय जाता है,गया से भिन्न स्थल में उसके पति के साथ श्राद्ध किया जाता है ।। ८-९ ।। गया में पिता आदि के क्रम से नव देवताक अथवा द्वादश देवताक श्राद्ध किया जाता है । पहले दिन उत्तर मानस तीर्थ में स्नान करना चाहिए । पवित्र उत्तरमानस तीर्थ में आयु के लिए आरोग्य वृद्धि के लिए, सभी पापों का विनाश करने के लिए तथा मोक्ष प्राप्ति के लिए स्नान करना चाहिए ।। १०-११ ।। देवताओं तथा पितरों का तर्पण करके श्राद्धकर्ता को पिण्डदान करना चाहिए । उसे यह कहना चाहिए कि द्युलोकस्थ, अन्तरिक्षलोकस्थ तथा भूलोकस्थ देवताओं का मैं तर्पण कर रहा हूँ । दिव्य, अन्तरिस्थस्थ तथा भूमिस्थ पिता-माता का तर्पण करना चाहिए।। १२ ।। पिता, पितामह, तथा प्रपितामह, माता, पितामही, प्रपितामही, मातामह, प्रमातामह, वृद्धमातामह, मातामही, प्रमातामही, तथा वृद्धप्रमातामही इन सबके तथा अन्य पितरों के उद्धार के लिए मैं पिण्डदान करता हूँ, इस तरह से कहकर कहना चाहिए कि सोम, भौम, बुध, वृहस्पति, शुक्र, शनिश्चर, राहु तथा केतु स्वरूप, श्री सूर्य को नमस्कार है । उत्तर मानस तीर्थ में स्नान करके मनुष्य अपने सम्पूर्ण कुल

जीवशुक्रशनैश्चारि राहुकेतुस्वरूपिणे । उत्तरे मानसे स्नात्वा उद्धरेत्सकलं कुलम् ॥ १६ ॥ सूर्यं नत्वा व्रजेन्मौनी नरो दक्षिणमानसम् । दक्षिणे मानसे स्नानं करोमि पितृतृप्तये ॥ १७ ॥ गयायामागताः स्वर्गं यान्तु मे पितरोऽखिलाः । श्राद्धं पिण्डं ततः कृत्वा सूर्यं नत्वा वदेदिदम् ॥१८ ॥ ॐ नमो भानवे भर्त्रे भवाय भव मे विभो । भुक्तिमुक्तिप्रदः सर्वपितृणां भव भावितः॥ १९ ॥ कव्यवाहोऽनलः सोमो यमश्चैवार्यमा तथा । अग्निष्वात्ता बर्हिषद आज्यपाः पितृदेवताः ॥ २० ॥ आगच्छन्तु महाभागा युष्माभी रक्षितास्त्विह । मदीयाः पितरो ये च मातृमातामहादयः॥२१॥ तेषां पिण्डप्रदाताऽहमागतोऽस्मि गयामिमाम् । उदीच्यां मुण्डपृष्ठस्य देवर्षिगणपूजितम् ॥ २२ ॥ नाम्ना कनखलं तीर्थं त्रिषु लोकेषु विश्रुतम् । सिद्धानां प्रीतिजननैः पापानां च भयङ्करैः ॥ २३ ॥ लेलिहानैर्महानागै रक्ष्यते चैव नित्यशः । तत्र स्नात्वा दिवं यान्ति क्रीडन्ते ( न्ति ) भुवि मानवाः ॥ २४ ॥ फल्गुतीर्थं ततो गच्छेन्महानद्यां स्थितं परम् । नागाज्जनार्दनात्कूपाद्वटाच्चोत्तरमानसात् ॥ २५ ॥ एतद्गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते । मुण्डपृष्ठं नगा द्यौश्च सारात्सारमथान्तरम् ॥ २६ ॥ यस्मिन्फलति श्रीर्गौर्वा कामधेनुर्जलं मही । दृष्टिरम्यादिकं यस्मात्फल्गुतीर्थं न फल्गुवत् ॥ २७ ॥ फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम् । एतेन किं न पर्याप्तं नृणां सुकृतकारिणाम् ॥ २८ ॥ पृथिव्यां यानि तीर्थानि आसमुद्रात्सरांसि च । फल्गुतीर्थं गमिष्यन्ति वारमेकं दिने दिने ॥ २९ ॥ फल्गुतीर्थे तीर्थराजे करोति स्नानमादृतः । पितृणां ब्रह्मलोकाप्त्या आत्मनो भुक्तिमुक्तये॥३०॥ स्नात्वा श्राद्धी पिण्डदोऽथ नमेद्देवं पितामहम् । कलौ माहेश्वरा लोका अत्र देवो गदाधरः॥३१॥ पितामहो लिङ्गरूपी

---

का उद्धार कर लेता है ।। १३-१६ ।। सूर्य को नमस्कार करके मनुष्य को मौन होकर दक्षिण मानस तीर्थ में जाना चाहिए । वहाँ स्नान करते समय यह भावना करनी चाहिए कि- मैं पितरों की तृप्ति के लिए दक्षिण मानस में स्नान कर रहा हूँ ।। १७ ।। गया में आए हुए मेरे समस्त पितृगण स्वर्ग जाएँ । पुनः श्राद्ध तथा पिण्ड दान करके यह उच्चारण करना चाहिए ।। १८ ।। सम्पूर्ण जगत् के स्वमी भगवान् सूर्य को नमस्कार है । हे विभो ! आप मेरा कल्याण करें । मेरे द्वारा पूजित होकर आप समस्त पितरों के लिए भोग तथा मोक्षप्रद होएँ ।। १९ ।। हे महाभाग, कव्यवाड्, अनल, सोम, यम, आर्यमा, अग्निष्वान्त, बहिर्षद तथा आज्यप (घृत पान करने वाले) पितृदेवता, आप सभी आएँ, आप सबों के द्वारा मेरे पिता आदि तथा माता एवं मातामह आदि रक्षित रहें । उन सबों को पिण्ड देने वाला मैं इस गया में आया हूँ ।। २० ।। गया में मुण्डपृष्ठ के उत्तर ओर देवर्षियों से पूजित, कनखल नामक तीर्थ है, जो तीनों लोकों में विख्यात है । उसकी रक्षा, सिद्धों को प्रसन्न करने वाले,पापियों के लिए भयंकर जिह्वा को लपलपाते हुए बड़े-बड़े नाग किया करते हैं । वहाँ पर स्नान करने वाले मनुष्य इस लोक में आनन्दपूर्वक रहकर अन्त में स्वर्गलोक जाते हैं ।। २२-२४ ।। उसके पश्चात् महानदी में विद्यमान फल्गु तीर्थ में जाना चाहिए । यह तीर्थ नाग,जनार्दन, कूप, वट तथा उत्तर मानस तीर्थ से भी श्रेष्ठ है । इसे ही फल्गु तीर्थ तथा गया कहते हैं । यह मुण्डपृष्ठ, नग, द्यौ से भी सारतम तीर्थ है । यह आभ्यन्तर तीर्थ है । यहाँ पर लक्ष्मी, कामधेनु, गौ, जल तथा पृथ्वी का किया हुआ दान फलप्रद होता है । देखने में मनोहर होने के कारण इसे फल्गु तीर्थ कहते हैं । यह छोटा तीर्थ नहीं है ।। २५-२७ ।। मनुष्य फल्गु तीर्थ में स्नान करने तथा गदाधर भगवान् का दर्शन करने से पुण्यात्मा पुरुषों को क्या नहीं प्राप्त हो सकता है ? अर्थात् वह पुरुष सब कुछ प्राप्त कर लेता है । पृथिवी पर समुद्र से लेकर जितने भी तीर्थ तथा सरोवर हैं, वे सबके सब प्रतिदिन फल्गु तीर्थ में प्रतिदिन एक बार अवश्य जाते हैं ।। २८-२९ ।। तीर्थराज फल्गुतीर्थ में एक बार आदरपूर्वक जो मनुष्य स्नान करता है, उसके पितृगण ब्रह्मलोक की प्राप्ति कर लेते हैं तथा स्वयं भोग तथा मोक्ष प्राप्ति का अधिकारी हो जाता हैं ।। ३० ।। श्राद्ध करने वाला पुरुष यहाँ पर स्नान करके तथा पिण्डदान करके ब्रह्मा जी को नमस्कार करे । कलियुग में लोगों के उपास्य देवता महेश्वर हैं, किन्तु गया में उपास्य देवता भगवान् गदाधर हैं ।। ३१ ।। इसके पश्चात् यह भावना करनी चाहिए कि-'यहाँ पर पितामह लिङ्गरूप में हैं । मैं उन्हीं महेश्वर को नमस्कार करता हूँ। मैं गदाधर, बलराम (संकर्षण)

तं नमामि महेश्वरम् । गदाधरं बलं काममनिरुद्धं नरायणम् ॥ ३२ ॥ ब्रह्मविष्णुनृसिंहाख्यं वराहादीन्नमाम्यहम् । ततो गदाधरं दृष्ट्वा कुलानां शतमुद्धरेत् ॥ ३३ ॥ धर्मारण्यं द्वितीयेऽह्नि मतङ्गस्याऽऽश्रमे वरे । मतङ्गवाप्यां संस्नाप्य श्राद्धकृत्पिण्डदो भवेत् ॥ ३४ ॥ मतङ्गेशं सुसिद्धेशं नत्वा चेदमुदीरयेत् । प्रमाणं देवताः सन्तु लोकपालाश्च साक्षिणः ॥ ३५ ॥ मयाऽऽगत्य मतङ्गेऽस्मिन् पितृणां निष्कृतिः कृता । स्नानतर्पणश्राद्धादि ब्राह्मतीर्थेऽथ कूपके ॥ ३६ ॥ तत्कूपयूपयोर्मध्ये श्राद्धं कुलशतोद्धतो । महाबोधितरुं नत्वा धर्मवान्स्वर्गलोकभाक् ॥ ३७ ॥ तृतीये ब्रह्मसरसि स्नानं कुर्याद्यतव्रतः । स्नानं ब्रह्मसरस्तीर्थे करोमि ब्रह्मभूतये ॥ ३८ ॥ पितृणां ब्रह्मलोकाय ब्रह्मर्षिगणसेविते । तर्पणं श्राद्धकृत्पिण्डं प्रदद्यात्तु प्रसेचनम् । कुर्याच्च वाजपेयार्थी ब्रह्मयूपप्रदक्षिणम् ॥ ३९ ॥ एको मुनिः कुम्भकुशाग्रहस्त आम्रस्य मूले सलिलं ददाति । आम्राश्च सिक्ताः पितरश्च तृप्ता एका क्रिया द्व्यर्थकरीप्रसिद्धा ॥ ४० ॥ ब्रह्माणं च नमस्कृत्य कुलानां शतमुद्धरेत् । फल्गुतीर्थे चतुर्थेऽह्नि स्नात्वा देवादितर्पणम्॥४१॥ कृत्वा श्राद्धं सपिण्डं च गयाशिरसि कारयेत् । पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ॥ ४२ ॥ तत्र पिण्डप्रदानेन कुलानां शतमुद्धरेत् । मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता ॥ ४३ ॥ मुण्डपृष्ठे शिरः साक्षाद्गयाशिर उदाहृतम् । साक्षाद्गयाशिरस्तत्र फल्गुतीर्थाश्रमं कृतम् ॥ ४४ ॥ अमृतं तत्र वहति पितृणां दत्तमक्षयम् । स्नात्वा दशाश्वमेधे तु दृष्ट्वा देवं पितामहम् ॥ ४५ ॥ रुद्रपादं नरः स्पृष्ट्वा नेह भूयोऽभिजायते । शमीपत्रप्रमाणेन पिण्डं दत्त्वा गयाशिरे ॥ ४६ ॥ नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः । पायसेनाथ पिष्टेन सक्तुना चरुणा तथा ॥ ४७ ॥ पिण्डदानं

---

प्रद्युम्न, अनिरुद्ध, नारायण, ब्रह्मा, विष्णु, नृसिंह तथा वराह आदि को नमस्कार करता हूँ । इसके पश्चात् गदाधर भगवान् को नमस्कार करके मनुष्य अपनी सौ पीढ़ी का उद्धार कर लेता है ।।३२-३३।। दूसरे दिन धर्मारण्य के श्रेष्ठ मतङ्ग आश्रम में जाकर मतङ्गवापी में स्नान करना चाहिए तथा श्राद्धकर्ता को पिण्डदान करना चाहिए ।। ३४ ।। वहाँ पर प्रख्यात सिद्धों के स्वामी मतङ्गेश को नमस्कार करके यह कहना चाहिए । सभी देवता इसमें प्रमाण रहें तथा लोकपाल साक्षी रहें कि इस मतङ्ग आश्रम में आकर मैंने पितरों का निस्तार किया है । इसके पश्चात् ब्रह्मतीर्थ स्वरूप ब्रह्मकूप में जाकर स्नान, तर्पण तथा श्राद्ध आदि करना चाहिए ।। ३५-३६ ।। उस कूप तथा कूप के यूप के मध्य में किया गया श्राद्ध सौ पीढ़ियों का उद्धार कर देता है । धार्मिक पुरुष महाबोधिवृक्ष को नमस्कार करके स्वर्गलोक का अधिकारी होता है ।। ३७ ।। नियम और व्रत का पालन करने वाले पुरुष को तीसरे दिन ब्रह्म सरोवर में स्नान करके यह प्रार्थना करनी चाहिए कि- मैं ब्रह्मर्षियों द्वारा सेवित ब्रह्म सरोवर में पितरों के ब्रह्मलोक की प्राप्ति के लिए स्नान कर रहा हूँ । श्राद्धकर्ता पुरुष तर्पण करके पिण्डदान करे फिर वृक्ष का सेचन करे । वाजपेय यज्ञ का फल चाहने वाले पुरुष को ब्रह्मयूप की प्रदक्षिणा करनी चाहिए ।। ३८-३९ ।। उस तीर्थ में रहने वाले एक मुनि अपने हाथ में जल का घड़ा तथा कुश लेकर आम की जड़ में जल देते थे। इससे आम भी सींच गया और पितृगण भी तृप्त हो गए । इस तरह दो प्रयोजनों को सिद्ध करने वाली उनकी एक ही क्रिया प्रसिद्ध हो गयी ।। ४० ।। ब्रह्मा जी को नमस्कार करके मनुष्य सौ पीढ़ी का उद्धार कर लेता है । चौथे दिन फल्गु तीर्थ में स्नान तथा देवताओं आदि का तर्पण करके तथा सिर में सपिण्डन श्राद्ध करना चाहिए । गया क्षेत्र पाञ्च कोस में है तथा गया सिर एक कोस में है । वहाँ पर पिण्ड दान करके मनुष्य अपने सैकड़ों पीढ़ियों का उद्धार कर लेता है । बुद्धिमान महादेव ने मुण्डपृष्ठ पर अपना पैर रखा था ।। ४१-४३ ।। मुण्डपृष्ठ तीर्थ में साक्षात् गया सिर है,उसे ही गया कहा जाता है । साक्षात् गया शिर में फल्गुतीर्थाश्रम है ।। ४४ ।। वहाँ पर अमृत के तुल्य जल बहता है, पितरों का तर्पण करने से वह जल पितरों के लिए अक्षय बनता है । पुनः दशाश्वमेध तीर्थ में स्नान करके ब्रह्माजी का दर्शन करना चाहिए ।। ४५ ।। रुद्रपाद का स्पर्श करके मनुष्य पुनः इस लोक में नहीं उत्पन्न होता है । गया शिर पर शमी पत्र के बराबर भी पिण्डदान करने वाले पुरुष के नरकस्थ पितृगण भी स्वर्ग चले जाते हैं तथा स्वर्गस्थ पितृगण मुक्त हो जाते हैं । वहाँ पर खीर, आटा, सत्तू, चरु और चावल से पिण्डदान करना

तण्डुलैश्च गोधूमैस्तिलमिश्रितैः । पिण्डं दत्त्वा रुद्रपतेः कुलानां शतमुद्धरेत् ॥ ४८ ॥ तथा विष्णुपदे श्राद्धपिण्डदो ऋणमुक्तिकृत् । पित्रादीनां शतकुलं स्वात्मानं तारयेन्नरः ॥ ४९ ॥ तथा ब्रह्मपदे श्राद्धी ब्रह्मलोकं नयेत्पितृन् ॥ दक्षिणाग्निपदे तद्वद्गार्हपत्यपदे तथा ॥ ५० ॥ पदे चाऽऽहवनीयस्य श्राद्धी यज्ञफलं लभेत् । आवसथ्यस्य चन्द्रस्य सूर्यस्य च गणस्य च ॥ ५१ ॥ अगस्त्यकार्तिकेयस्य श्राद्धी तारयते कुलम् । आदित्यस्य रथं नत्वा कर्णादित्यं नमेन्नरः ॥ ५२ ॥ कनकेशपदं नत्वा गया केदारकं नमेत् । सर्वपापविनिर्मुक्तः पितृन्ब्रह्मपुरं नयेत् ॥ ५३ ॥ विशालोऽपि गयाशीर्षे पिण्डदोऽभूच्च पुत्रवान् । विशालायां विशालोऽभूद्राजपुत्रोऽब्रवीद्द्विजान् ॥ ५४ ॥ कथं पुत्रादयः स्युर्मे द्विजा ऊचुर्विशालकम्। गयायां पिण्डदानेन तव सर्वं भविष्यति ॥ ५५ ॥ विशालोऽपि गयाशीर्षे पितृपिण्डान्ददौ ततः । दृष्ट्वाऽऽकाशे सितं रक्तं पुरुषांस्तांश्च पृष्टवान्॥५६॥ के यूयं तेषु चैवैकः सितः प्रोचे विशालकम् । अहं सितस्ते जनक इन्द्रलोकं गतः शुभात् ॥ ५७ ॥ मम रक्त पिता पुत्र कृष्णश्चैव पितामहः । अब्रवीन्नरकं प्राप्तास्त्वया मुक्तीकृता वयम् ॥ ५८ ॥ पिण्डदानाद् ब्रह्मलोकं व्रजाम इति ते गताः । विशालः प्राप्तपुत्रादीन् राज्यं कृत्वा हरिं ययौ॥५९॥ प्रेतराजः स्वमुक्त्यै च वणिजं चेदमब्रवीत् । प्रेतैः सर्वैं सहाऽऽर्तः सन्सुकृतं भुज्यते फलम् ॥ ६० ॥ श्रवणद्वादशीयोगे कुम्भः सान्नश्च सोदकः । दत्तः पुरा स मध्याह्ने जीवनायोपतिष्ठते ॥ ६१ ॥ धनं गृहीत्वा मे गच्छ गयायां पिण्डदो भव । वणिग्धनं गृहीत्वा तु गयायां पिण्डदोऽभवत् ॥ ६२ ॥ प्रेतराजः सह प्रेतैर्मुक्तो नीतो हरेः पुरम् । गयाशीर्षे पिण्डदानादात्मानं स्वपितृंस्तथा ॥ ६३ ॥ पितृवंशे मृता ये च

---

चाहिए । रुद्रपाद में तिल मिश्रित गेहूँ से भी पिण्डदान करके अपनी सौ पीढ़ी का उद्धार कर लेता है ।। ४६-४८ ।। उसी प्रकार से विष्णुपद में श्राद्ध करने वाला तथा पिण्डदान करने वाला पुरुष, पितृऋण से मुक्त हो जाता है, सैकड़ों पितरों तथा अपना उद्धार कर लेता है ।। ४९ ।। ब्रह्मपद में श्राद्ध करने वाला अपने पितरों को ब्रह्मलोक पहुँचा देता है, उसी तरह से दक्षिणाग्नि पद,गार्हपत्यपद तथा आह्वनीय पद पर श्राद्ध करने वाला पुरुष यज्ञ करने का फल प्राप्त करता है ।। ४९-५० ।। आवसथ्याग्नि, चन्द्रमा,सूर्य,गणेश,आगस्त्य तथा कार्तिकेय के स्थान में पिण्डदान करने वाला पुरुष अपने कुल को तार देता है । मनुष्य को आदित्य को नमस्कार करके कर्णादित्य को नमस्कार करना चाहिए ।। ५१-५२ ।। कनकेश पद को नमस्कार करके गया केदार को नमस्कार करना चाहिए । ऐसा करने वाला पुरुष अपने पितरों को ब्रह्मलोक पहुँचा देता है ।। ५३ ।। गया शीर्ष पर पिण्डदान करके विशाल नामक राजा ने पुत्र प्राप्त किया था। विशाला नगरी में विशाल नामक राजपुत्र राज्य करता था । उसने ब्राह्मणों से पूछा- मुझे पुत्र आदि की प्राप्ति कैसे हो सकती है । ब्राह्मणों ने विशाल से कहा- गया में पिण्डदान करके तुम सब कुछ प्राप्त कर लोगे ।। ५४-५५ ।। उसके पश्चात् विशाल ने गयाशीर्ष में पितरों को पिण्डदान किया । उसने आकाश में उजले तथा लाल वर्ण के पुरुषों को देखकर उनसे पूछा आप लोग कौन हैं ?।। ५६।। उनमें से लाल एवं शुभ्रवर्ण के पुरुष ने विशाल से कहा- मैं तुम्हारा पिता सित हूँ, तुम्हारे पुण्य से इन्द्रलोक को प्राप्त कर चुका हूँ । ये रक्त वर्ण के मेरे पिता हैं और कृष्ण वर्ण के मेरे पितामह हैं। हम सब नरक में थे । तुमने हम लोगों को मुक्त कर दिया ।। ५७-५८ ।। तुम्हारे पिण्डदान करने से हम लोग ब्रह्मलोक जा रहे हैं । यह कहकर वे चले गए। विशाल ने भी पुत्र आदि को प्राप्त करके राज्य करके श्रीहरि के लोक में चला गया ।। ५९ ।। एक प्रेतराज था वह अपनी मुक्ति के लिए किसी वणिक से कहा- सभी प्रेतों के साथ मैं दुःखी हूँ और अपने पुण्य का फल मैं प्राप्त कर रहा हूँ ।। ६० ।। पहले द्वादशी के दिन श्रावण के योग में मैंने अन्न और जल के साथ कुम्भ दान किया था वही मेरे जीवन के लिए दो पहर की बोला में मुझे मिलता है।।६१।। आप धन लेकर गया जाएँ और मेरे लिए पिण्डदान करें । वणिक धन लेकर गया गया और वहाँ पर पिण्डदान किया ।। ६२ ।। वह प्रेतराज अन्य प्रेतों के साथ मुक्त हो गया और सबों को श्रीहरि के लोक में पहुँचा दिया । गयाशीर्ष में पिण्डदान करके मनुष्य अपना तथा अपने पितरों का उद्धार कर लेता है ।। ६३ ।। पिण्डदान करते समय यह कहना चाहिए कि- मेरे

मातृवंशे तथैव च । गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ॥ ६४ ॥ ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः । क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा ॥ ६५ ॥ विरूपा आमगर्भा ये ज्ञाताज्ञाताः कुले मम । तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥ ६६ ॥ ये केचित्प्रेतरूपेण तिष्ठन्ति पितरो मम । ते सर्वे तृप्तिमायान्तु पिण्डदानेन सर्वदा ॥ ६७ ॥ पिण्डो देयस्तु सर्वेभ्यः सर्वैर्वै कुलतारकैः । आत्मनस्तु तथा देयो ह्यक्षयं लोकमिच्छता ॥ ६८ ॥ पञ्चमेऽह्नि गदालोले स्नायान्मन्त्रेण बुद्धिमान् । गदाप्रक्षालने तीर्थे गदालोलेऽतिपावने ॥ ६९ ॥ स्नानं करोमि संसारगदशान्त्यै जनार्दन । नमोऽक्षयवटायैव अक्षय्यस्वर्गदायिने ॥ ७० ॥ पित्रादीनामक्षयाय सर्वपापक्षयाय च । श्राद्धं वटतले कुर्याद्ब्राह्मणानां च भोजनम् ॥ ७१ ॥ एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता । कि पुनर्बहुभिर्भुक्तैः पितृणां दत्तमक्षयम् ॥ ७२ ॥ गयायामन्नदाता यः पितरस्तेन पुत्रिणः । वटं वटेश्वरं नत्वा पूजयेत्प्रपितामहम् ॥ ७३ ॥ अक्षयाँल्लभते लोकान्कुलानां शतमुद्धरेत् । क्रमतोऽक्रमतो वाऽपि गयायात्रा महाफला ॥ ७४ ॥

इत्यादिमहापुराण आग्नेये गयायात्राविधिवर्णनं नाम पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

अध्याय ११६

## अथ षोडशाधिकशततमोऽध्यायः

### गयायात्राविधिः

अग्निरुवाच– गायत्र्यैव महानद्यां स्नातः सन्ध्यां समाचरेत् । गायत्र्यां अग्रतः प्रातः श्राद्धं पिण्डमथाक्षयम् ॥ १ ॥ मध्याह्ने चोद्यति स्नात्वा

पिता के वंश में अथवा माता के वंश में तथा मेरे गुरु, श्वशुर एवं बन्धुओं के वंश में जो मर गए हों,उनसे अतिरिक्त भी जो मेरे बान्धव मरे हैं, मेरे वंश में जिन जीवों का पिण्ड लुप्त हो गया हो,जो पुत्र तथा पत्नी से रहित हो, जिन मृत जीवों का क्रियालोप हो गया हो, जो जन्मान्ध तथा पङ्गुजीव मर गये हों, जो विरूप हो, जो अपक्व गर्भ के रूप में मर गए हों,इस तरह जो भी मेरे वंश के ज्ञात तथा अज्ञात बन्धु रहे हों, वे सबके सब मेरे दिए हुए इस पिण्डदान से सदा के लिए तृप्त हो जायँ ।। ६४-६७ ।। अपने वंश का उद्धार करने वाले समस्त पुरुषों के द्वारा यहाँ पिण्डदान अपने पितरों के उद्देश्य से किया जाना चाहिए । किञ्च जो लोग स्वयं अक्षय लोक प्राप्त करना चाहते हों उन्हें भी यहाँ पर पिण्डदान करना चाहिए ।। ६८ ।। बुद्धिमान पुरुष को पाँचवें दिन गदालोल नामक तीर्थ में स्नान करना चाहिए । उस समय उसे इस मन्त्र का उच्चारण करना चाहिए- भगवन् ! जनार्दन ! जिसमें आपकी गदा पायी गयी थी उस अत्यन्त पवित्र गदा लोल तीर्थ में संसार गद (रोग) की शान्ति के लिए स्नान कर रहा हूँ । अक्षय स्वर्ग प्रदान करने वाले अक्षय वट को नमस्कार है, जिससे कि पितरों को अक्षय स्वर्ग की प्राप्ति हो तथा मेरे समस्त पाप विनष्ट हो जायँ । इसके पश्चात् वट वृक्ष के नीचे श्राद्ध करना चाहिए तथा ब्राह्मणों को भोजन कराना चाहिए ।। ६९-७१ ।। यहाँ पर एक ब्राह्मण को भोजन कराने से करोड़ ब्राह्मणों को भोजन कराने का फल होता है । यदि अनेक ब्राह्मणों को भोजन कराया जाय तो उसके पुण्य का क्या कहना है । यहाँ पर पितरों के उद्देश्य से जो कुछ भी दिया जाता है, वह अक्षय होता है ।। ७२।। गया में जाकर अन्नदान करने वाले पुत्र से ही पितृगण अपने को पुत्रवान् मानते हैं । वट तथा वटेश्वर को नमस्कार करके प्रपितामह की पूजा करनी चहिए ।। ७३ ।। ऐसा करने वाला स्वयं अक्षय लोकों का अधिकारी होता है तथा अपने वंश की सौ पीढ़ी को तार देता है । गया की यात्रा चाहे क्रमानुसार की जाय अथवा विना क्रम से की जाय तो उससे महान फल की प्राप्ति होती है।। ७४ ।।

इस तरह से आदिमहापुराण अग्निपुराण का गया यात्रा विधि वर्णन नामक एक सौ पन्द्रहवाँ अध्याय सम्पूर्ण हुआ ॥ ११५ ॥

अग्नि ने कहा– गायत्री मन्त्र से ही महानदी में स्नान करके सन्ध्या करनी चाहिए । प्रातःकाल में गायत्री के सम्मुख किया गया पिण्डदान अक्षय होता है ।। १ ।। मध्याह्नकाल में तथा

गीतवाद्यैर्ह्युपास्य च । सावित्रीं पुरतः सन्ध्यां पिण्डदानं च तत्तटे ॥ २ ॥ अगस्त्यस्य पदे कुर्याद्योनिद्वारं प्रविश्य च । निर्गतो न पुनर्योनिं प्रविशेन्मुच्यते भवात् ॥ ३ ॥ बलिं काकशिलायां च कुमारं च नमेत्ततः । स्वर्गद्वार्यां सोमकुण्डे वायुतीर्थेऽथ पिण्डदः ॥ ४ ॥ भवेदाकाशगङ्गायां कपिलायां च पिण्डदः । कपिलेशशिवं नत्वा रुक्मिकुण्डे च पिण्डदः ॥ ५ ॥ कोटितीर्थे च कोटीशं नत्वाऽमोघपदे नरः। गदालोले वानरके गोप्रचारे च पिण्डदः ॥ ६ ॥ नत्वा गां वै वैतरण्यामेकविंशकुलद्धृतिः । श्राद्धपिण्डप्रदाता स्यात्क्रौञ्चपादे च पिण्डदः ॥ ७ ॥ तृतीयायां विशालायां निश्चिरायां च पिण्डदः । ऋणमोक्षे पापमोक्षे भस्मकुण्डेऽथ भस्मना ॥ ८ ॥ स्नानकृन्मुच्यते पापान्नमेद्देवं जनार्दनम् । एष पिण्डो मया दत्तस्तव हस्ते जनार्दन ॥ ९ ॥ परलोकगते मह्यमक्षय्यमुपतिष्ठताम् । गयायां पितृरूपेण स्वयमेव जनार्दनः ॥ १० ॥ तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते वै ऋणत्रयात् । मार्कण्डेयेश्वरं नत्वा नमेद्गृध्रेश्वरं नरः ॥ ११ ॥ मूलक्षेत्रे महेशस्य धारायां पिण्डदो भवेत् । गृध्रकूटे गृध्रवटे धौतपादे च पिण्डदः॥१२॥ पुष्करिण्यां कर्दमाले रामतीर्थे च पिण्डदः । प्रभासेशं नमेत्प्रेतशिलायां पिण्डदो भवेत् ॥ १३ ॥ दिव्यान्तरिक्षभूमिष्ठाः पितरो बान्धवादयः । प्रेतादिरूपा मुक्ताः स्युः पिण्डैर्दत्तैर्मयाऽखिलाः ॥ १४ ॥ स्थानत्रये प्रेतशिला गयाशिरसि पावनी । प्रभासे प्रेतकुण्डे च पिण्डदस्तारयेत्कुलम्॥१५॥ वसिष्ठेशं नमस्कृत्य तदग्रे पिण्डदो भवेत् । गयानाभौ सुषुम्णायां महाकोष्ठ्यां च पिण्डदः ॥ १६ ॥ गदाधराग्रतो मुण्डपृष्ठे देव्याश्च संनिधौ । मुण्डपृष्ठं नमेदादौ क्षेत्रपालादिसंयुतम् ॥ १७ ॥ पूजयित्वा भयं न स्याद्विषरोगादिनाशनम् । ब्रह्माणं च नमस्कृत्य

---

सायंकाल में स्नान करके गीतों तथा वाद्यों से सावित्री देवी की उपासना करनी चाहिए । पुनः उन्हीं के समक्ष सन्ध्या करके नदी के तट पर पिण्डदान करना चाहिए ।। २ ।। उसके पश्चात् अगस्त्यपद में पिण्डदान करना चाहिए । तदनन्तर योनिद्वार में प्रवेश करके निकलना चाहिए । योनिद्वार से निकलने वाला पुरुष पुनः योनि में नहीं प्रवेश करता वह संसार के बन्धन से मुक्त हो जाता है।।३।। काकशिला पर बलि देकर कुमार कार्तिकेय को नमस्कार करना चाहिए । स्वर्गद्वार में सोमकुण्ड पर तथा वायुतीर्थ में पिण्डदान करना चाहिए ।। ४ ।। उसके पश्चात् आकाशगङ्गा तथा कपिला तीर्थ में पिण्डदान करे। कपिलेश शिव को नमस्कार करके रुक्मकुण्ड पर पिण्डदान करना चाहिए ।। ६ ।। वैतरणी तीर्थ में गौ को नमस्कार करके गया यात्री अपने इक्कीस पीढ़ी का उद्धार कर लेता है । पुनः उस व्यक्ति को क्रौञ्चपाद तीर्थ में पिण्डदान करना चाहिए ।। ७ ।। तृतीय तिथि को विशाला में, निश्चिरा तीर्थ में, ऋणमोचन पर तथा पापमोचन पर पिण्डदान करने वाला तथा भस्मकुण्ड पर भस्म से स्नान करने वाला पुरुष भगवान् जनार्दन को नमस्कार करके पापों से छुटकारा पा लेता है । उसे पिण्डदन करते समय कहना चाहिए- हे जनार्दन ! मैंने यह पिण्ड आपके हाथ में दिया है ।। ८-९ ।। मैं जब परलोक जाऊँ तो यह मेरे लिए अक्षय होकर उपस्थित हो । गया में स्वयं भगवान् जनार्दन पितर रूप से विद्यमान हैं । उनका दर्शन करके जीव तीनों ऋणों (देवऋण, ऋषिऋण एवं पितृऋण) से मुक्ति पा लेता है । पुनः मनुष्य को माकण्डेयेश्वर तथा गृध्रेश्वर को नमस्कार करना चाहिए ।। १०-११ ।। इसके बाद महेश के मूलक्षेत्र धारा में पिण्डदान करना चाहिए । पुनः गृध्रकूट, गृध्रवट तथा धौतपाद पर पिण्ड देना चाहिए ।। १२ ।। पुष्करिणी,कर्दमाल और रामतीर्थ में पिण्डकेश्वर प्रभासेश को नमस्कार करके प्रेतशिला पर पिण्डदान करना चाहिए ।। १३ ।। उस समय कहना चाहिए- दिव्यलोक, अन्तरिक्षलोक तथा भूमिलोक में जो मेरे पितर तथा बान्धव आदि प्रेतरूप में रहते हों वे मेरे द्वारा दिए गए पिण्ड के द्वारा मुक्त हो जायँ ।। १४ ।। पवित्र प्रेतशिला, गयासिर तथा प्रभास क्षेत्र स्थित प्रेतकुण्ड पर पिण्डदान करने वाला पुरुष अपने कुल को तार देता है ।। १५ ।। उसके पश्चात् वसिष्ठेश्वर को नमस्कार करके उनके लिए भी पिण्डदान करना चाहिए । गयानाभि, सुषुम्णा तथा महाकोष्ठी में पिण्डदान करना चाहिए । फिर गदाधर के समक्ष तथा मुण्डपृष्ठ में देवी के सन्निकट पिण्ड देना चाहिए । पहले क्षेत्रपाल आदि से युक्त मुण्डपृष्ठ को नमस्कार करना चाहिए ।। १६-१७ ।। मुण्डपृष्ठ का पूजन करने वाले को किसी प्रकार का भय नहीं होता क्योंकि यह तीर्थ भय तथा रोग

ब्रह्मलोकं नयेत्कुलम् ॥ १८ ॥ सुभद्रां बलभद्रं च प्रपूज्य पुरुषोत्तमम् । सर्वकामसमायुक्तः कुलमुद्धृत्य नाकभाक् ॥ १९ ॥ हृषीकेशं नमस्कृत्य तदग्रे पिण्डदो भवेत् । माधवं पूजयित्वा च देवो वैमानिको भवेत् ॥ २० ॥ महालक्ष्मीं प्रार्च्य गौरीं मङ्गलां च सरस्वतीम् । पितृनुद्धत्य स्वर्गस्थे भुक्तभोगोऽत्र शास्त्रधीः ॥ २१ ॥ द्वादशादित्यमभ्यर्च्य वह्निं रेवन्तमिन्द्रकम् । रोगादिमुक्तः स्वर्गी स्याच्छ्रीकपर्दिविनायकम् ॥ २२ ॥ प्रपूज्य कार्तिकेयं च निर्विघ्नः सिद्धिमाप्नुयात् । सोमनाथं च कालेशं केदारं प्रपितामहम् ॥ २३ ॥ सिद्धेश्वरं च रुद्रेशं रामेशं ब्रह्मकेश्वरम्। अष्टलिङ्गानि गुह्यानि पूजयित्वा तु सर्वभाक् ॥ २४ ॥ नारायणं वराहं च नारसिंहं नमेच्छ्रिये । ब्रह्मविष्णुमहेशाख्यं त्रिपुरघ्नमशेषदम् ॥ २५ ॥ सीतारामं च गरुडं वामनं सम्प्रपूज्य च । सर्वकामानवाप्नोति ब्रह्मलोकं नयेत्पितृन् ॥ २६ ॥ देवैः सार्धं सम्प्रपूज्य देवमादिगदाधरम् । ऋणत्रयविनिर्मुक्तस्तारयेत्सकलं कुलम् ॥ २७ ॥ देवरूपा शिला पुण्या तस्माद्देवमयी शिला । गयायां न हि तत्स्थानं यत्र तीर्थं न विद्यते ॥ २८॥ यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम्। फल्गूग्वीशं फल्गुचण्डीं च प्रणम्याङ्गारकेश्वरम् ॥ २९॥ मतङ्गस्य पदे श्राद्धी भरताश्रमके भवेत् । हंसतीर्थे कोटितीर्थे यत्र पाण्डुशिलानदः॥३०॥ तत्र स्यादग्निधारायां मधुश्रवसि पिण्डदः । इन्देशं किलिकिलेशं नमेद्वृद्धिविनायकम् ॥ ३१॥ पिण्डदो धेनुकारण्ये पदे धेनोर्नमेच्च गाम् । सर्वान्पितृंस्तारयेच्च सरस्वत्यां च पिण्डदः ॥ ३२ ॥ सन्ध्यामुपास्य सायाह्ने नमेद्देवीं सरस्वतीम् । त्रिसन्ध्याकृद्भवेद्विप्रो वेदवेदाङ्गपारगः ॥ ३३॥ गयां प्रदक्षिणीकृत्य गयाविप्रान्प्रपूज्य च । अन्नदानादिकं सर्वं कृतं तत्राक्षयं भवेत् ॥ ३४ ॥ स्तुत्वा सम्प्रार्थयेद्देवमादिदेवं गदाधरम् । गदाधरं

---

को नष्ट करने वाला है । ब्रह्मा को नमस्कार करने वाला अपने वंश को ब्रह्मलोक में पहुँचा देता है ।। १८ ।। सुभद्रा (लक्ष्मी) बलभद्र तथा पुरुषोत्तम भगवान् की पूजा करके मनुष्य अपने समस्त अभिलषित अर्थों को प्राप्त करके तथा अपने कुल का उद्धार करके स्वयं स्वर्गलोक का भागी बनता है ।। १९ ।। हृषीकेश भगवान् को नमस्कार करके उनके समक्ष पिण्डदान करना चाहिए। भगवान् माधव की पूजा करके मनुष्य वैमानिक देवता हो जाता है ।। २० ।। भगवती महालक्ष्मी, गौरी तथा मङ्गलमयी सरस्वती देवी की पूजा करके मनुष्य अपने पितरों का उद्धार कर लेता है और स्वयम् भी स्वर्गलोक का भागी बनता है । वहाँ पर भोगों को भोग कर इस लोक में आकशास्त्रज्ञ बनता है ।। २१ ।। पुनः द्वादशादित्य, अग्नि, रेवन्त और इन्द्र का पूजन करके मनुष्य रोग आदि से छुटकारा पा लेता है और अन्त में स्वर्गलोक का निवासी होता है । श्रीकपर्दि विनायक तथा कार्तिकेय का पूजन करने से मनुष्य को निर्विघ्न सिद्धि प्राप्त होती है।।२२।। सोमनाथ,कालेश्र, केदार, प्रपितामह, सिद्धेश्वर, रुद्रेश्वर, रामेश्वर तथा ब्रह्मकेश्वर इन आठ गुप्तलिंगों का पूजन करने से मनुष्य सब कुछ पा लेता है ।। २३-२४ ।। लक्ष्मी प्राप्ति की कामना से भगवान्, नारायण, नृसिंह तथा वाराह को नमस्कार करना चाहिए । ब्रह्मा, विष्णु तथा त्रिपुर विनाशक महेश्वर को नमस्कार करना चाहिए,वे सब कुछ देने वाले हैं ।। २५ ।। सीताराम,गरुड़ तथा वामन की पूजा करके मनुष्य अपने समस्त अभिलषित अर्थो को प्राप्त करके पितरों को ब्रह्मलोक पहुँचा देता है ।। २६ ।। देवताओं के साथ आदिगदाधर भगवान् की पूजा करके मनुष्य तीनों ऋणों से मुक्त होकर अपने समस्त वंश का उद्धार कर देता है ।। २७ ।। देवस्वरूपा प्रेतशिला पवित्र है, अतएव वह शिला देवमयी है । गया में कोई भी ऐसा स्थान नहीं है जहाँ पर तीर्थ न हो ।। २८ ।। यहाँ पर जिसके नाम से पिण्डदान किया जाता है, उसे शाश्वत ब्रह्म की प्राप्ति होती है । उसके पश्चात् फल्ग्वीश, फल्गुचण्डी एवं अङ्गारकेश्वर को नमस्कार करके मतङ्गपद में श्राद्ध करना चाहिए । उसके पश्चात् भरताश्रम, हंसतीर्थ, कोटितीर्थ, पाण्डुशिलानद, अग्निधारा तथा मधुश्रवातीर्थ में पिण्डदान करना चाहिए । पुनः इन्द्रेश, किलकिलेश, तथा वृद्धिविनायक को नमस्कार करना चाहिए ।। २९-३१ ।। फिर धेनुकारण्य में पिण्डदान करके धेनुपद में गौ को नमस्कार करना चाहिए । सरस्वती तीर्थ में पिण्डदान करने वाला पुरुष अपने समस्त पितरों का उद्धार कर देता है ।। ३२ ।। यहाँ पर सन्ध्या करके सरस्वती देवी को नमस्कार करना चाहिए । यहाँ पर तीन सन्ध्याओं में सन्ध्या करने वाला पुरुष वेदवेदाङ्ग पारङ्गत ब्राह्मण होता है ।।३३।।

गयावासं पित्रादीनां गतिप्रदम् ॥ ३५ ॥ धर्मार्थकाममोक्षार्थं योगदं प्रणमाम्यहम् । देहेन्द्रियमनोबुद्धिप्राणाहंकारवर्जितम् ॥ ३६ ॥ नित्यशुद्धं बुद्धमुक्तं सत्यं ब्रह्म नमाम्यहम् । आनन्दमद्वयं देवं देवदानववन्दितम् ॥ ३७ ॥ देवदेवीवृन्दयुक्तं सर्वं प्रणमाम्यहम् । कलिकल्मषकालार्तिदमनं वनमालिनम्॥३८॥ पालिताखिललोकेशं कुलोद्धरणमानसम् । व्यक्ताव्यक्तविभक्तात्माविभक्तात्मानमात्मनि ॥ ३९ ॥ स्थितं स्थिरतरं सारं वन्दे घोराघमर्दनम्। आगतोऽस्मि गयां देव पितृकार्ये गदाधर॥४०॥ त्वं मे साक्षी भवाद्येह अनृणोऽहमृणत्रयात्। साक्षिणःसन्तु मे देवा ब्रह्मेशानादयस्तथा॥४१॥ मया गयां समासाद्य पितृणां निष्कृतिः कृता । गयामाहात्म्यपठनाच्छ्राद्धादौ ब्रह्मलोकभाक् ॥ ४२ ॥ पितृणामक्षयं श्राद्धमक्षयं ब्रह्मलोकदम्॥४३॥

इत्यादिमहापुराण आग्नेये गयायात्राविधिकथनं नाम षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

## अथ सप्तदशाधिकशततमोऽध्यायः

### श्राद्धकल्पः

अग्निरुवाच— **कात्यायनो मुनीनाह यथा श्राद्धं तथा वदे । गयादौ श्राद्धं कुर्वीत संक्रान्त्यादौ विशेषतः॥ १ ॥ काले चापरपक्षे च चतुर्थ्यामूर्ध्वमेव वा । सम्पाद्य च पदर्क्षे च पूर्वेद्युश्च निमन्त्रयेत् ॥ २ ॥ यतीन्गृहस्थसाधून्वा स्नातकाञ्श्रोत्रियान्द्विजान् । अनवद्यान्कर्मनिष्ठाञ्शिष्टानाचारसंयुतान्॥३॥**

---

गया की प्रदक्षिणा करके, गया के ब्राह्मणों की पूजा करके वहाँ पर जो अन्नदान आदि किया जाता है, वह सब कुछ अक्षय होता है ।। ३४ ।। पुनः आदिदेव गदाधर की स्तुति करते हुए यह प्रार्थना करनी चाहिए कि- 'मैं धर्म, अर्थ, काम तथा मोक्ष की प्राप्ति के लिए, तथा पितरों का उद्धार करने वाले गया में निवास करने वाले भगवान् गदाधर को प्रणाम करता हूँ।।३५-३५१।। मै देव इन्द्रिय, मन, बुद्धि तथा अहंकार से रहित, नित्य, शुद्ध, बुद्ध, मुक्त एवं सत्यस्वरूप ब्रह्म को नमस्कार करता हूँ । वे भगवान् आनन्दस्वरूप, अद्वितीय, देवों तथा दानवों से वन्दित सदा देवों तथा देवियों के समूह से युक्त श्रीभगवान् को प्रणाम करता हूँ । वे कलि के कल्मष तथा कालजन्य भय को विनष्ट करने वाले तथा वनमाला धारण करने वाले हैं ।। ३६-३८ ।। वे ही सम्पूर्ण लोकपालों का पालन करते हैं,वे सबों के कुलों का उद्धार करना चाहते हैं, वे व्यक्त तथा अव्यक्त सबमें अपने स्वरूप को विभक्त करके स्थित होते हुए भी वे वस्तुतः अविभक्त आत्मा हैं ।। ३९ ।। वे सर्वत्र स्थित, सबों से अधिक स्थिर तथा सारस्वरूप हैं । ऐसे भगवान् आदि गदाधर को मैं नमस्कार करता हूँ । हे भगवन् ! गदाधर ! मैं पितृकार्य करने के लिए गया आया हूँ ।। ४० ।। आप इसके साक्षी होएँ । मैं तीनों ऋणों से आज मुक्त हो गया । मेरे इस कर्म के साक्षी ब्रह्मा तथा शंकर आदि देवता बनें ।। ४१ ।। मैंने गया में आकर पितरों का उद्धार किया। जो व्यक्ति श्राद्ध आदि में गया माहात्म्य का पाठ करता है, वह ब्रह्मलोक को प्राप्त करता है ।। ४२ ।। यहाँ पर पितरों के लिए किया गया श्राद्ध अक्षय तथा उन्हें ब्रह्मलोक प्रदान करने वाला होता है ।। ४३ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का गया यात्रा विधि वर्णन नामक एक सौ सोलहवाँ अध्याय सम्पूर्ण हुआ ॥ ११६ ॥**

**अग्नि ने कहा—** महर्षि कात्यायन ने जिस तरह की श्राद्ध विधि मुनियों को बतलाया है, उसे मैं बतला रहा हूँ । गया आदि तीर्थों में विशेष रूप से संक्रान्ति आदि के अवसर पर श्राद्ध करना चाहिए ।। १ ।। अपपक्ष (कृष्ण पक्ष) अपराह्णकाल में चतुर्थी तिथि को अथवा उसके बाद श्राद्ध की सामग्री को एकत्रित करके उत्तम नक्षत्र में श्राद्ध से एक दिन पूर्व ही,संन्यासियों, गृहस्थों, अथवा साधुओं या स्नातकों अथवा वैदिक ब्राह्मणों को निमन्त्रित करना चाहिए । इन ब्राह्मणों को अनिन्दित, कर्मनिष्ठ, शिष्ट तथा आचारनिष्ठ होना चाहिए ।। २-३ ।। सफेद दाग

वर्जयेच्छ्विवत्रिकुष्ठा ( ष्ठ्या ) दीन्न गृह्णीयान्निमन्त्रितान् । स्नाताञ्शुचींस्तथाऽऽचान्तान्प्राङ्मुखान्देवकर्मणि ॥ ४ ॥ उपवेशयेत्त्रीन्पित्र्योनेकैकमुभयत्र वा । एवं मातामहादेश्च शाकैरपि च कारयेत् ॥ ५ ॥ तदह्नि ब्रह्मचारी स्यादकोपोऽत्वरितो मृदुः । सत्योऽप्रमत्तोऽनध्वन्यो ह्यस्वाध्यायश्च वाग्यतः॥६॥ सर्वांश्च पंक्तिमूर्धन्यान्पृच्छेत्प्रश्ने तथाऽऽसने । दर्भानास्तीर्य द्विगुणान्पित्र्ये दैवादिकं चरेत् ॥ ७ ॥ विश्वान्देवानावाहयिष्ये पृच्छेदावाहयेति च । विश्वे देवास आवाह्य विकीर्याथ यवाञ्जपेत् ॥ ८ ॥ विश्वेदेवाः शृणुतेमं पितृनावाहयिष्येति । पृच्छेदावाहयेत्युक्त उशन्तस्त्वा समाह्वयेत् ॥ ९॥ तिलान्विकीर्याथ जपेदापस्त्वित्यादि पात्रके । सपवित्रे निषिञ्चेद्वा शं नो देवीरिति ह्यृचा ॥ १० ॥ यवोऽसीति यवान्दत्त्वा पित्रे सर्वत्र वै तिलान्। तिलोऽसि सोमदैवत्यो गोसवे देवनिर्मितः ॥ ११ ॥ प्रत्नवद्भिः प्रत्तः स्वधया पितृ ( निमा ) ल्लोकाँन्प्रीणया हि नः स्वधेति । श्रीश्चतेति ददेत्पुष्पं पात्रे हैमेऽथ राजते । १ २ ॥ औदुम्बरे वा खड्गे वा पूर्णपात्रे प्रदक्षिणम् । देवानामपसव्यं तु पितृणां सव्यमाचरेत् । एकैकस्य एकैकेन सपवित्रकरेषु च ॥ १३ ॥ या दिव्या आपः पयसा संबभूवुर्या अन्तरिक्षा ( क्ष्या ) उत पार्थिवीर्याः । हिरव्यवर्णा यज्ञियास्ता न आपः शिव स्योना भवन्तु ॥ १४॥ विश्वेदेवा एव वोऽर्घः स्वाहा च पितरेष ते । स्वधैवं पितामहादेः संस्रवान्प्रथमे चरेत् ॥ १५ ॥ पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः । अत्र गन्धपुष्पधूपदीपाच्छादनदानकम् ॥१६॥ घृताक्तमन्नमुद्धृत्य पृच्छत्यग्नौ करिष्येति । कुरुष्वेत्यभ्यनुज्ञातो जुहुयात्साग्निकोऽनले ॥ १७ ॥ अनग्निकः

---

तथा कुष्ठ वाले ब्राह्मणों को नहीं निमन्त्रित करना चाहिए । देवकर्म में स्नान करके पवित्र हुए तथा आचमन किए हुए ब्राह्मणों को पूर्वाभिमुख बैठावें । देव तथा पितृ दोनों कार्यों में तीन-तीन अथवा दोनों में एक-एक ब्राह्मण को बैठाएँ । इसी तरह से मातामह आदि के भी श्राद्ध में करना चाहिए । शाक आदि से भी श्राद्ध करना चाहिए ।। ४-५ ।। श्राद्ध के दिन ब्रह्मचारी रहना चाहिए, क्रोध नहीं करना चाहिए तथा मृदु स्वभाव बनाए रखना चाहिए । सत्यवादी और सावधान रहना चाहिए, ज्यादा रास्ता न चलें । उस दिन स्वाध्याय न करें और मौन रहें ।। ६ ।। पंक्तिपावन श्रेष्ठ ब्राह्मणों को कुश के आसन पर बैठाकर उनसे कुशल क्षेम पूछना चाहिए । फिर आसन पर कुश बिछाएँ । पितरों के लिए दुगना कुश विछाएँ । पुनः देवकार्य करें । पुनः ब्राह्मणों से पूछें कि मैं विश्व देवों का आवाहन करूँगा । इस पर ब्राह्मण कहें कि आवाहन करें । पुनः 'विश्वेदेवास आगत' इत्यादि मन्त्र से आवाहन करके देवासन पर जौ छिड़ककर 'विश्वेदेवाः शृणुतेमं' इत्यादि मन्त्र का जप करें । फिर यजमान पितृ ब्राह्मणों से पूछें कि मैं पितरों का आवाहन करूँगा, पुनः ब्राह्मण आज्ञा दें कि आवाहन करो । इसके बाद 'उशन्तस्त्वा' इत्यादि मन्त्र से पितरों का आवाहन करना चाहिए । पुनः तिल छिड़ककर 'आपस्तु' इत्यादि मन्त्र का जप करना चाहिए । अथवा पवित्र युक्त पात्र में 'शन्नो देवी' इस मन्त्र से जल छिड़कना चाहिए ।। ७-१० ।। 'यवेऽसि' इत्यादि मन्त्र से जौ छिड़कना चाहिए । पितरों के लिए सर्वत्र तिल देना चाहिए । पितरों के पात्र में तिल डालने का मन्त्र 'तिलोऽसि सोमदेवत्यो' इत्यादि है । 'श्रीश्चते' इत्यादि मन्त्र से सोने अथवा चाँदी के अर्घ्य पात्र में पुष्प डालना चाहिए ।। ११-१२ ।। अर्घ्यपात्र गूलर अथवा पत्ते का भी हो सकता है । उसमें प्रदक्षिण क्रम से देवताओं के लिए सव्य होकर तथा पितरों के लिए अपसव्य होकर उपर्युक्त वस्तुएँ डालनी चाहिए । एक-एक के लिए एक-एक अर्घ्यपात्र हाथ में पवित्री पहनकर देना चाहिए।।१३।। तत्पश्चात् देवताओं के अर्घ्यपात्र को बाएँ हाथ में लेकर उसमें रखी हुयी पवित्री को दाहिने हाथ से निकालकर देव भोजन पात्र पर पूर्वाग्र रख देना चाहिए । उसके ऊपर दूसरा जल देकर अर्घ्यपात्र को ढँककर 'या दिव्या आपः पयसा' इत्यादि मन्त्र को पढ़ना चाहिए। पुनः हाथ में जल कुश जौ लेकर पितृ संबन्धी देवताओं का स्वाहान्त संकल्प तथा पितरों का स्वधान्त संकल्प तिल, जल, मोटक लेकर अपसव्य होकर करना चाहिए । इसी प्रकार से पितामह आदि के लिए अर्घ्य देना चाहिए ।। १४-१५ ।। इसके पश्चात् सभी अर्घ्य का अवशेष पहले पात्र में डाल देना चाहिए । अर्थात् प्रपितामह के अर्घ्य में जो जल आदि हो,उसे पितामह के पात्र में डालना चाहिए । उसके बाद वह सब पिता के अर्घ्यपात्र में रख देना चाहिए । पिता के अर्घ्यपात्र को सबसे ऊपर, उसके नीचे पितामह के अर्घ्यपात्र को और उन दोनों के नीचे प्रपितामह के अर्घ्यपात्र को रखकर तीनों को पिता के आसन के बाम भाग में 'पितृभ्यः स्थानमसि' यह कहकर उलट देना चाहिए । उसके पश्चात् वहाँ चन्दन, पुष्प, धूप तथा वस्त्रदान करना चाहिए।। १६।।

पितृहस्ते सपवित्रे तु मन्त्रतः । अग्नये कव्यवाहनाय स्वाहेति प्रथमाऽऽहुतिः ॥ १८ ॥ सोमाय पितृमतेऽथ यमायाङ्गिरसेऽपरे । हुतशेषं चान्नं पात्रे दत्त्वा पात्रं समालभेत् ॥ १९ ॥ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्यमुखेऽमृतेऽमृतंजुहोमि स्वाहेति ॥ जप्त्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत्॥२०॥ अपहतेति तिलान्विकीर्यान्नं प्रदापयेत् । जुषध्वमिति चोक्त्वाऽथ गायत्र्यादि ततो जपेत् ॥ २१ ॥ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥ २२ ॥ तृप्ताञ्ज्ञात्वाऽन्नं विकिरेदपो दद्यात्सकृत्सकृत् । गायत्रीं पूर्ववज्जप्त्वा मधु वातेति वै जपेत् ॥ २३॥ तृप्ताः स्थ इति सम्पृच्छेत्तृप्ताः स्म इति वै वदेत् । शेषमन्नमनुज्ञाप्य सर्वमन्नमथैकतः ॥ २४ ॥ उद्धृत्योच्छिष्ट पार्श्वे तु कृत्वा चैवावनेजनम् । दद्यात्कुशेषु त्रीन्पिण्डानाचान्तेषु परे जगुः ॥ २५ ॥ आचान्तेषूदकं पुष्पाण्यक्षतानि प्रदापयेत् । अक्षय्योदकमेवाथ आशिषः प्रार्थयेन्नरः ॥ २६ ॥ अघोराः पितरः सन्तु गोत्रं नो वर्धतां सदा । दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ॥ २७ ॥ श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्त्विति । अन्नं च नो बहु भवेदतिथींश्च लभेमहि ॥ २८ ॥ याचितारश्च नः सन्तु मा च याचिष्म कंचन । स्वधावाचनीयान्कुशानास्तीर्य सपवित्रकान् ॥२९॥ स्वधां वाचयिष्ये पृच्छेदनुज्ञातश्च वाच्यताम् । पितृभ्यः पितामहेभ्यः प्रपितामहमुख्यके ॥ ३० ॥ स्वधोच्यतामस्तु स्वधा उच्यमानस्तथैव च । अपो निषिञ्चेदुत्तानं पात्रं कृत्वाऽथ दक्षिणाम् ॥ ३१ ॥ यथाशक्ति प्रदद्याच्च दैवे पित्रेऽ ( त्र्येऽ ) थ वाचयेत् । विश्वेदेवाः प्रीयन्तां च वाजे वाजे विसर्जयेत् ॥ ३२ ॥ आ मा वाजस्येत्यनुव्रज्य कृत्वा विप्रान्प्रदक्षिणम् । गृहे विशेदमावास्यां मासि मासि चरेत्तथा ॥ ३३ ॥ एकोद्दिष्टं प्रवक्ष्यामि

---

इसके पश्चात् घृतयुक्त अन्न निकालकर यजमान को ब्राह्मण से पूछना चाहिए कि मैं इसका अग्नि में हवन करूँगा और ब्राह्मण को आज्ञा देनी चाहिए कि करो । यदि यजमान अग्निहोत्री हो तो वह उसका अग्नि में हवन करे ।। १७ ।। यदि यजमान निरग्नि पुरुष हो तो पवित्रीयुक्त पितरों के हाथ में अथवा जल में मन्त्र से आहुति देनी चाहिए । 'अग्नये कव्यवाहनाय स्वाहा' इस मन्त्र से पहली आहुति तथा 'सोमाय पितृमते स्वाहा' इस मन्त्र से दूसरी आहुति देनी चाहिए । तीसरी और चौथी यम तथा अङ्गिरा के लिए आहुति देनी चाहिए । हवन से अवशिष्ट अन्न को थोड़ा-थोड़ा पात्र में देकर पात्र का स्पर्श करना चाहिए ।। १८-१९ ।। फिर 'पृथिवी ते पात्रम्' इत्यादि मन्त्र पढ़कर 'इदं विष्णुः' इत्यादि मन्त्र से अन्न में ब्राह्मण का अंगूठा छुआना चाहिए ।। २०।। 'अपहताः' इत्यादि मन्त्र से तिल छिड़ककर अन्नदान करना चाहिए । फिर 'जुषध्वम्' कहकर गायत्री आदि का जप करना चाहिए ।। २१ ।। 'देवताभ्यः पितृभ्यश्च' इत्यादि मन्त्र पढ़कर पितरों के तृप्त होने की भावना करनी चाहिए । पुनः सबों को अलग-अलग जल प्रदान करना चाहिए । पहले के ही समान गायत्री जपकर 'मधु वाता ऋतायते' इत्यादि मन्त्र जपना चाहिए ।। २१-२२ ।। इसके पश्चात् ब्राह्मणों से कहे कि आप तृप्त होएँ और ब्राह्मण कहें कि 'हम तृप्त हैं ।' इसके पश्चात् ब्राह्मणों की आज्ञा लेकर एक में मिला देना चाहिए ।। २४ ।। पिण्ड बनाने के लिए उसे पात्र से बाहर निकालकर पितरों के उच्छिष्ट अन्न के पास ही अवनेजन करके कुशों पर संकल्प पूर्वक तीन पिण्डदान करना चाहिए । दूसरों का मत है कि ब्राह्मण के भोजन के पश्चात् ब्राह्मण हाथ मुँह धोकर आचमन कर लें तब पिण्डदान करना चाहिए ।। २५ ।। आचमन के पश्चात् जल,पुष्प और अक्षत देना चाहिए । इसके पश्चात् अक्षय्योदक देकर इस प्रकार प्रार्थना करनी चाहिए मेरे पितृगण सौम्य हों, हमारा वंश सदा बढ़ता रहे, मेरे वंश में दानियों, वेदों तथा सन्तानों की वृद्धि होती रहे । हमारी श्रद्धा में कमी न हो, हम बहुत अधिक दान करते रहें । हमारे यहाँ अन्न बहुत होए और हम अतिथियों को प्राप्त करते रहें । हमारे यहाँ याचक आते रहें और हम किसी से कुछ माँगें नहीं ।। २६-२८।। पुनः स्वधा वाचन के लिए पिण्डों पर पवित्रक सहित कुश बिछाना चाहिए और ब्राह्मणों से पूछना चाहिए-मैं स्वधावाचन करूँगा और ब्राह्मण कहें- कीजिए । इसके पश्चात् श्राद्धकर्ता पुरुष कहे- ब्राह्मणों ! आप लोग मेरे पिता, पितामह और प्रपितामह के लिए स्वधा वाचन करें । तब ब्राह्मण कहें- अस्तु स्वधा । इसके पश्चात् यजमान पात्र को उत्तान करके दुग्ध मिश्रित दक्षिणाग्र जल धारा कुशों पर गिराना चाहिए ।। २९-३१ ।। फिर देव तथा पितृ श्राद्ध की प्रतिष्ठा के लिए सुवर्ण तथा रजत की दक्षिणा देनी चाहिए । इसके पश्चात् 'विश्वेदेवाः प्रीयन्ताम्' यह कहकर देवताओं का विसर्जन करना चाहिए और 'वाजे वाजे वाजिनो

श्राद्धं पूर्ववदाचरेत् । एकं पवित्रमेकार्घ्यमेकं पिण्डं प्रदापयेत् ॥ ३४ ॥ नावाहनाग्नौकरणं विश्वेदेवा न चात्र हि । तृप्तिप्रश्ने स्वदितमिति वदेत्सुस्वदितं द्विजः ॥ ३५ ॥ उपतिष्ठतामित्यक्षय्ये विसर्गे चाभिरम्यताम् । अभिरताः स्म इत्यपरे शेषं पूर्ववदाचरेत् ॥ ३६ ॥ सपिण्डीकरणं वक्ष्ये अब्दान्ते मध्यतोऽपि वा । पितृणां त्रीणि पात्राणि एकं प्रेतस्य पात्रकम् ॥ ३७ ॥ सपवित्राणि चत्वारि तिलपुष्पयुतानि च । गन्धोदकेन युक्तानि पूरयित्वाऽभिषिञ्चति ॥ ३८ ॥ प्रेतपात्रं पितृपात्रे ये समाना इतिद्वयात् । पूर्ववत् पिण्डदानादि प्रेतानां पितृता भवेत् ॥ ३९॥ अथाऽऽभ्युदयिकं श्राद्धं वक्ष्ये सर्वं तु पूर्ववत् । जपेत्पितृमन्त्रवर्जं पूर्वाह्णे तत्प्रदक्षिणम् ॥ ४० ॥ उपचारा ऋजुकुशास्तिलार्थैश्च यवैरिह । तृप्तिप्रश्नस्तु सम्पन्नं सुसम्पन्नं वदेद्द्विजः ॥ ४१ ॥ दध्यक्षतबदराद्याः पिण्डा नान्दीमुखान्पितॄन् । आवाहयिष्ये पृच्छेच्च प्रीयतामिति चाक्षये॥४२॥ नान्दीमुखाश्च पितरो वाचयिष्येऽथ पृच्छति । नान्दीमुखान्पितृगणान्प्रीयन्तामित्यथो वदेत् ॥ ४३ ॥ नान्दीमुखाश्च पितरस्तत्पिता प्रपितामहः । मातामहः प्रमातामहो वृद्धप्रमातृकामहः ॥ ४४ ॥ स्वधाकारान्न युञ्जीत युग्मान्विप्रांश्च भोजयेत् । तृप्तिं वक्ष्ये पितृणां च ग्राम्यैरोषधिभिस्तथा ॥ ४५ ॥ मासं तृप्तिस्तथाऽऽरण्यैः कन्दमूलफलादिभिः । मत्स्यैर्मासद्वयं मार्गैस्त्रयं वै शाकुनेन च ॥ ४६ ॥ चतुरो रौरवेणाथ पञ्च षट्छागलेन तु । कूर्मेण सप्त चाष्टौ च वाराहेण नवैव तु ॥ ४७ ॥ मेषमांसेन दश च माहिषैः पार्वतैः शिवैः। संवत्सरं तु गव्येन पयसा पायसेन वा ॥ ४८ ॥ वाध्रीनसस्य मांसेन तृप्तिर्द्वादश वार्षिकी । खड्गमांसं कालशाकं लोहितच्छागलो मधु ॥ ४९ ॥ महाशल्काश्च वर्षासु मघाश्राद्धमथाक्षयम्। मन्त्राध्याय्यग्निहोत्री च

---

नो धनेषु०' इत्यादि मंत्र पढ़कर पितरों का विसर्जन करना चाहिए ।। ३२ ।। 'आमा वाजस्य०' इत्यादि मन्त्र पढ़ते हुए ब्राह्मणों के पीछे चलकर उनकी प्रदक्षिणा करके अपने घर में प्रवेश करे। फिर प्रत्येक मास की अमावस्या के दिन इसी प्रकार से श्राद्ध करना चाहिए ।। ३३ ।। अब मैं एकोदिष्ट श्राद्ध का वर्णन कर रहा हूँ । इस श्राद्ध को भी पहले की ही भाँति करना चाहिए । इसमें एक पवित्रक, अर्घ्यपात्र तथा एक ही पिण्डदान किया जाता है ।। ३४ ।। इसमें आवाहन, अग्नीकरण और विश्वेदेव नहीं होते । तृप्ति के स्थान पर ब्राह्मण से 'स्वादितम्' यह प्रश्न करना चाहिए तथा ब्राह्मण को भी 'सुस्वादितम्' यह उत्तर देना चाहिए । अक्षय्य अर्घ्योदक के समय 'उपतिष्ठताम्' कहना चाहिए तथा विसर्जन के समय 'अभिरभ्यताम्' कहना चाहिए और ब्राह्मणों को भी 'अभिरताः स्म' यह कहना चाहिए । शेष कार्य पहले के ही समान करना चाहिए।। ३५-३६ ।। अब मैं सपिण्डीकरण बतला रहा हूँ। इस श्राद्ध को वर्ष के अन्त में अथवा मध्य में करना चाहिए । इसमें पितरों के तीन पात्र तथा प्रेत का एक पात्र होता है ।। ३७ ।। चारों पात्रों को तिल, पुष्प से युक्त चन्दन के जल से भरकर अभिसिञ्चन किया जाता है । 'ये समानाः' इत्यादि यजुर्वेद के १९/४५-४६) दो मन्त्रों से प्रेत के अर्घ्य पात्र को तीनों पितरों के अर्घ्यपात्र से मिलाया जाता है । फिर पिण्डदान आदि करके प्रेत के पिण्ड को पितरों के पिण्ड से मिलाया जाता है । इस तरह से प्रेत पितृकोटि में आ जाता है ।। ३९ ।। अब मैं आभ्युदयिक श्राद्ध का वर्णन करता हूँ। इसमें भी सभी कार्य पहले के ही समान होते हैं । किन्तु इस श्राद्ध में पितृमन्त्रों को न पढ़कर दूसरे मन्त्रों को पढ़ा जाता है । पूर्वाह्ण में पितरों की प्रदक्षिणा की जाती है । अन्य क्रियाओं को सीधे कुशों तिलों और जौ से करना चाहिए । यजमान ब्राह्मणों से 'तृप्ति प्रश्न सम्पन्नम्' कहकर करें तथा ब्राह्मण 'सुसम्पन्नम्' कहकर उत्तर दें ।। ४०-४१ ।। नान्दीमुख पितरों को दधि, अक्षत तथा बेर आदि का पिण्ड देना चाहिए । अक्षय अर्घ्योदक के समय यजमान ब्राह्मणों से 'प्रीयताम्' कहें तथा आवाहन के समय 'आवाहयिष्ये' कहें । फिर ब्राह्मणों से कहें कि मैं नान्दीमुख पितरों से निवेदन करूँगा । नान्दीमुख पितरों में पिता, पितामह, प्रपितामह, मातामह, प्रमातामह, और वृद्धप्रमातामह होते हैं । इस श्राद्ध में स्वधा शब्द का प्रयोग नहीं करना चाहिए । अन्त में दो ब्राह्मणों को भोजन कराना चाहिए ।। ४२-४४।। अब मैं पितरों को तृप्त करने वाली ग्राम्य वस्तुओं तथा औषधियों का वर्णन करता हूँ । वन के कन्दमूल तथा फलों से पितरों की एक मास पर्यन्त तृप्ति होती है, मछली से दो मास तक,हरिण के मांस से तीन मास तक,पक्षी के मांस से चार मास तक, रुरुमृग के मांस से पाँच मांस तक, छाग के मांस से छह मांस तक, कछुए के मांस से सात मांस तक, वराह (वनैला शूकर) के मांस से आठ मास तक, मेष के

शाखाध्यायी षडङ्गवित् । ५० ॥ तृणाचिकेतस्त्रिमधुर्धर्मद्रोणस्य पाठकः । त्रिसु पर्णज्येष्ठ सामज्ञानी स्युः पङ्क्तिपावनाः ॥ ५१॥ काम्यानां कल्पमाख्यास्ये प्रतिपत्सु धनं बहु । स्त्रियः परा द्वितीयायां चतुर्थ्यां धर्मकामदः ॥ ५२ ॥ पञ्चम्यां पुत्रकामस्तु षष्ठ्यां च श्रैष्ठ्यभागपि। कृषिभागी च सप्तम्यामष्टम्यामर्थलाभकः ॥ ५३ ॥ नवम्यां च एकसफा दशम्यां गोगणो भवेत् । एकादश्यां परीवारो द्वादश्यां धनधान्यकम् ॥ ५४ ॥ ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यां च शस्त्रतः । मृतानां श्राद्धं सर्वाप्तममावस्यां समीरितम् ॥ ५५ ॥ सप्तव्याधा दशारण्ये मृगाः कालञ्जरे गिरौ । चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ॥ ५६ ॥ तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः । प्रस्थिता दूरमध्वानं यूयं तेभ्योऽवसीदत ॥ ५७ ॥ श्राद्धादौ पठिते श्राद्धं पूर्णं स्याद्ब्रह्मलोकदम् । श्राद्धं कुर्याच्च पुत्रादिः पितुर्जीवति तत्पितुः ॥ ५८ ॥ तत्पितुस्तत्पितुः कुर्याज्जीवति प्रपितामहे । पितुः पितामहस्याथ परस्य प्रपितामहात् ॥ ५९ ॥ एवं मात्रादिकस्यापि तथा मातामहादिके । श्राद्धकल्पं पठेद्यस्तु स लभेच्छाद्धकृत्फलम् ॥६०॥ तीर्थे युगादौ मन्वादौ श्राद्धं दत्तमथाक्षयम् । अश्वयुक्शुक्लनवमी द्वादशी कार्तिके तथा ॥ ६१ ॥ तृतीया चैव माघस्य तथा भाद्रपदस्य च । फाल्गुनस्याप्यमावास्या पौषस्यैकादशी तथा ॥ ६२ ॥ आषाढस्यापि दशमी माघमासस्य सप्तमी । श्रावणे चाष्टमी कृष्णा तथाऽऽषाढे च पूर्णिमा॥६३॥ कार्तिकी फाल्गुनी तद्वज्ज्येष्ठे पञ्चदशी सिता । स्वायंभुवाद्या मनवस्तेषामाद्याः किलाक्षयः ॥ ६४ ॥ गया प्रयागो गङ्गा च

---

मांस से नव मास तक, भैंसे के मास से दस मास तक भेंड़े तथा शृगाल के मांस से ग्यारह मास तक और गोदुग्ध से बने खीर से एक वर्ष तक की तृप्ति पितरों की होती है ।। ४५-४८ ।। परिपक्व बकरे के मांस से द्वादशवर्षपर्यन्त पितरों की तृप्ति होती है । वर्षाऋतु के मघानक्षत्र में गेंड़े के मांस तथा कालशाक,लाल बकरे के मांस, मधु तथा बड़ी मछलियों को मिलाकर किए गए श्राद्ध से पितरों की अक्षय तृप्ति होती है । मन्त्रों का अध्ययन करने वाला अग्निहोत्री अपनी वेदशाखा का अध्ययन करने वाला षडङ्गवेत्ता, ऋग्वेद के 'मधुवाता ऋतायते' इत्यादि तीन ऋचाओं का ज्ञाता, धर्मद्रोण का पाठक, त्रिसुपर्ण तथा ज्येष्ठसाम के ज्ञाता ये ब्राह्मण पंक्तिपावन ब्राह्मण होते हैं ।। ४९-५१ ।। अब मैं काम्य श्राद्धों का वर्णन करता हूँ- प्रतिपत् श्राद्ध से बहुत अधिक धन मिलता है, द्वितीया श्राद्ध से श्रेष्ठ स्त्रियाँ मिलती हैं, चतुर्थी श्राद्ध से धर्म और काम की प्राप्ति होती है, पञ्चमी श्राद्ध से पुत्र प्राप्ति होती है, षष्ठी श्राद्ध से श्रेष्ठता प्राप्त होती है, सप्तमी श्राद्ध से कृषि में लाभ होता है, अष्टमी श्राद्ध से अर्थ की प्राप्ति होती है, नवमी श्राद्ध से एक खुर वाले घोड़े आदि की प्राप्ति होती है, दशमी श्राद्ध से गौओं की प्राप्ति होती है,एकादशी श्राद्ध से परिवार बढ़ता है,द्वादशी श्राद्ध से धन धान्य की वृद्धि होती है, त्रयोदशी श्राद्ध से जाति में श्रेष्ठता की प्राप्ति होती है, शस्त्र से मरे जीवों का चतुर्दशी को श्राद्ध किया जाता है और सबों का श्राद्ध अमावस्या को किया जाता है ।। ५२-५५ ।। दशार्ण देश के वन में सात व्याधे थे, वे कलंजर गिरि पर मृग हुए, शरद्वीप में चक्रवाक हुए और मानसरोवर में हंस हुए, वे अब कुरुक्षेत्र में वेदों के पारंगत विद्वान् हुए हैं । उन्होंने अब तक दूर तक का रस्ता तय कर लिया है,उनसे बहुत पीछे रहकर आप लोग क्यों कष्ट का अनुभव कर रहे हैं ? अग्निपुराण के ११७ । ५६-५७ इन दो श्लोकों को श्राद्ध के आरम्भ में पाठ करने से श्राद्धपूर्ण तथा ब्रह्मलोक की प्राप्ति कराने वाला होता है । श्राद्ध पुत्र आदि को करना चाहिए । पिता के जीवित रहने पर पिता को ही श्राद्ध करना चाहिए ।। ५६-५८ ।। प्रपितामह के जीवित होने पर प्रपितामह को ही श्राद्ध करना चाहिए । श्राद्ध करने वाला पुरुष अपने पिता पितामह और प्रपितामह का श्राद्ध करना चाहिए । इसी तरह से माता आदि का तथा मातामह आदि का श्राद्ध करना चाहिए । इस श्राद्धकल्प का पाठ करने से भी श्राद्ध करने का फल प्राप्त होता है ।। ५९-६० ।। तीर्थ में युगादि तथा मन्वादि तिथियों में किया हुआ श्राद्ध अक्षय फलप्रद होता है । आश्विन शुक्ल नवमी, कार्तिक की द्वादशी,माघ की तृतीया,भाद्रपद तथा फाल्गुन की अमावस्या, पौषमास की एकादशी, आषाढ़ की दशमी,माघमास की सप्तमी,श्रावणमास की कृष्णा अष्टमी, अषाढ़ की पूर्णिमा, कार्तिक, फाल्गुन, एवं ज्येष्ठमास की पूर्णिमा, ये तिथियाँ, स्वायम्भुव आदि मनु से सम्बन्ध रखने वाली हैं । इनके आदि भाग

कुरुक्षेत्रं च नर्मदा । श्रीपर्वतः प्रभासश्च शालग्रामो वाराणसी ॥ ६५ ॥ गोदावरी तेषु श्राद्धं श्रीपुरुषोत्तमादिषु ॥ ६६ ॥

इत्यादिमहापुराण आग्नेये श्राद्धकल्पवर्णनं नाम सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

## अथाष्टादशाधिकशततमोऽध्यायः

## भारतवर्षवर्णनम्

अग्निरुवाच– **उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारतं नाम नवसाहस्त्रविस्तृतम् ॥ १ ॥ कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम्। महेन्द्रो मलयः सह्यः सुक्तिमान्हे ( म्हि ? ) मपर्वतः ॥ २ ॥ विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः । इन्द्रद्वीपः कसेरुश्च ताम्रवर्णो गभस्तिमान्॥३॥ नागद्वीपस्तथा सौम्यो गान्धर्वस्त्वथ वारुणाः। अयं तु नवमस्तेषां द्वीपः सागरसंवृतः ॥ ४ ॥ योजनानां सहस्त्राणि द्वीपोऽयं दक्षिणोत्तरात् । नव भेदा भारतस्य मध्यभेदेऽथ पूर्वत;॥ ५ ॥ किराता यवनाश्चापि ब्राह्मणाद्याश्च मध्यतः। वेदस्मृतिमुखा नद्यः पारियात्रोद्भवास्तथा ॥ ६ ॥ विन्ध्याच्च नर्मदाद्याः स्युःसह्यात्तापी पयोष्णिका । गोदावरी भीमरथी कृष्णवेणादिकास्तथा ॥ ७ ॥ मलयात्कृतमालाद्यास्त्रिसामाद्या महेन्द्रजाः । कुमाराद्याः शुक्तिमतो हिमाद्रेश्चन्द्रभागका । पश्चिमे कुरुपाञ्चालमध्यदेशादयः स्थिताः॥ ८ ॥**

इत्यादिमहापुराण आग्नेये भारतवर्षवर्णनं नामाष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

---

में किया हुआ श्राद्ध अक्षय होता है ।। ६१-६४ ।। गया, प्रयाग, गङ्गातट, कुरुक्षेत्र, नर्मदा तट, श्रीपर्वत, प्रभास क्षेत्र, शालग्राम तीर्थ, वाराणसी, गोदावरी नदी तथा पुरुषोत्तम क्षेत्र (जगन्नाथपुरी) आदि में श्राद्ध करने का अत्यधिक महत्त्व है ।। ६५-६६ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का श्राद्ध कल्प वर्णन नामक एक सौ सत्रहवाँ अध्याय सम्पूर्ण हुआ ॥ ११७ ॥**

**अग्नि ने कहा–** जो समुद्र से उत्तर तथा हिमालय से दक्षिण है वह नव हजार योजन विस्तृत भारतवर्ष है ।। १ ।। स्वर्ग तथा मोक्ष प्राप्त करने वालों की यह कर्मभूमि है । यहाँ पर महेन्द्र, मलय,सह्य, शुक्तिमान, हेमाद्रि, विन्ध्य तथा पारियात्र ये सात कुल पर्वत हैं ।। २ ।। इन्द्रद्वीप, कसेरुद्वीप, ताम्रवर्णद्वीप, गभस्तिमानद्वीप, नागद्वीप, सौम्यद्वीप, गान्धर्वद्वीप और वारुणद्वीप इन आठ द्वीपों से भिन्न यह नवम द्वीप भारत है जो समुद्र से घिरा हुआ है ।। ३-४ ।। यह द्वीप दक्षिण से उत्तर हजारों योजन में फैला हुआ है । नव भागों में विभक्त द्वीपों के बीच में भारत द्वीप है । इसके पूर्व में किरातों और यवनों का निवास है, मध्य में ब्राह्मण आदि रहते हैं । वेदस्मृति आदि नदियाँ परियात्र पर्वत से निकलती हैं । विन्ध्याद्रि से नर्मदा आदि निकली हैं । सह्य पर्वत से तापी तथा पयोष्णी, गोदावरी, भीमरथी तथा कृष्णा आदि नदियाँ निकलती हैं । मलय पर्वत से कृतमाला आदि महेन्द्र पर्वत से त्रिसामा आदि नदियाँ निकलती हैं । शुक्तिमान् पर्वत से कुमारा आदि नदियाँ और हिमालय से चन्द्रभागा आदि नदियाँ निकलती हैं । भारतवर्ष के पश्चिम में कुरु, पाञ्चाल तथा मध्यदेश आदि स्थित हैं ।। ५-८ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का भारत वर्ष वर्णन नामक एक सौ अठारहवाँ अध्याय सम्पूर्ण हुआ ॥ ११८ ॥**

अथैकोनविंत्यधिकशततमोऽध्यायः

## महाद्वीपादिवर्णनम्

अग्निरुवाच– **लक्षयोजनविस्तारं जम्बूद्वीपं समावृतम् । लक्षयोजनमानेन क्षारोदेन समन्ततः ॥ १ ॥ संवेष्ट्य क्षारमुदधिं प्लक्षद्वीपस्तथा स्थितः। सप्तमेधातिथेः पुत्राः प्लक्षद्वीपेश्वरास्तथा ॥ २ ॥ स्याच्छान्तभयः शिशिरःसुखोदय इतः परः । आनन्दश्च शिवः क्षेमो ध्रुवस्तन्नाम वर्षकम्॥३॥ मर्यादाशैलो गोमेधश्चन्द्रो नारददुन्दुभी । सोमकः सुमनाः शैलो वैभ्राजास्तर्जनाः शुभाः ॥ ४ ॥ नद्यः प्रधानाः सप्तात्र प्लक्षाकान्तिकेषु च । जीवनं पञ्चसाहस्त्रं धर्मो वर्णाश्रमात्मकः ॥ ५ ॥ आर्यकाः कुरवश्चैव विविंशा भाविनश्च ते । विप्राद्यास्तैश्च सोमोऽर्च्यो द्विलक्षश्चैव प्लक्षकः॥६॥ मानेनेक्षुरसोदेन वृतो द्विगुणशाल्मलः। वपुष्मतः सप्त पुत्राः शाल्मलेशास्तथाऽभवन् ॥ ७ ॥ श्वेतोऽथ हरितश्चैव जीमूतो लोहितः क्रमात् । वैद्युतो मानसश्चैव सुप्रभो नाम वर्षकः ॥ ८ ॥ द्विगुणो द्विगुणेनैव सुरोदेन समावृतः । कुमुदश्चानलश्चैव तृतीयस्तु बलाहकः॥ ९ ॥ द्रोणः कङ्कोऽथ महिषःककुद्मान्सप्तनिम्नगाः । कपिलाश्चारुणाः पीताः कृष्णाः स्युर्ब्राह्मणादयः ॥ १० ॥ वायुरूपं यजन्तिस्म सुरोदेनायमावृतः । ज्योतिष्मतः कुशेशाः स्युरुद्भिदो वेणुमान्सुत; ॥ ११ ॥ द्वैरथीं लम्बनी धैर्यः कपिलश्च प्रभाकरः। विप्राद्या दमिमुख्यास्तु ब्रह्मरूपं यजन्ति ते॥१२॥ विद्रुमो हेमशैलश्चद्युतिमान्पुष्पवांस्तथा । कुशेशयो हरिःशैलो वर्षार्थं मन्दराचलः॥ १३॥ वेष्टितोऽयं घृतोदेन क्रौञ्चद्वीपेन सोऽप्यथ । क्रौञ्चेश्वराद्युतिमतः पुत्रास्तन्नामवर्षकाः ॥ १४ ॥ कुशलो मनोनुगश्चोष्णः प्रधानोऽथान्धकारकः। मुनिश्च दुन्दुभिः सप्त सप्त शैलाश्च निम्नगाः ॥ १५ ॥ क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः । देवावृत्पुण्डरीकश्च दुन्दुभिर्द्विगुणो मिथः ॥ १६॥ द्वीपा द्वीपेषु ये शैला यथा द्वीपानि ते तथा । पुष्कराः पुष्कलः**

---

**अग्नि ने कहा–** जम्बूद्वीप का विस्तार एक लाख योजन है और तथा एक लाख योजन ही विस्तृत क्षार समुद्र से घिरा हुआ है ।। १ ।। क्षार समुद्र को घेरकर प्लक्षद्वीप स्थित है । मेघातिथि के सात पुत्र प्लक्षद्वीप के स्वामी हैं ।। २ ।। उनके नाम हैं- शान्तभय, शिशिर,सुखोदय, आनन्द, शिव, क्षेम तथा ध्रुव । इन्हीं के नाम पर इस द्वीप के सात वर्ष हैं ।। ३ ।। प्लक्षद्वीप के मर्यादा पर्वत हैं- गोमेध, चन्द्र, नारद, दुन्दुभि,सोमक,सुनक, वैभ्राज तथा तर्जन ।। ३-४ ।। प्लक्षद्वीप के भीतर बहने वाली सात प्रधान नदियाँ हैं । यहाँ के लोगों का जीवन पाँच हजार वर्ष तथा धर्म वर्णाश्रमात्मक है ।। ५ ।। यहाँ के ब्राह्मण आदि की संज्ञा है- आर्यक, कुरु, विविंश तथा भावी । वे चन्द्रमा की पूजा करते हैं तथा प्लक्षद्वीप का विस्तार दो लाख योजन है।।६।। वह शाल्मलद्वीप से घिरा है, जिसका विस्तार प्लक्षद्वीप से दो गुना है । शाल्मल द्वीप के स्वामी वपुष्मान के सात पुत्र हैं ।। ७ ।। उनके नाम हैं- श्वेत, हरित, जीमूत, लोहित, वैद्युत, मानस तथा सुप्रभ । उन्हीं के नाम वाले यहाँ सात वर्ष हैं ।। ८ ।। यह अपने द्विगुण विस्तार वाले सुरा समुद्र से घिरा हुआ है । यहाँ के सात मर्यादा पर्वत हैं- कुमुद,अनल, बलाहक, द्रोण, कंक, महिष तथा ककुद्मान् यहाँ की सात प्रधान नदियाँ हैं । यहाँ के ब्राह्मण आदि वर्णों के नाम क्रमशः- कपिल, अरुण, पीत तथा कृष्ण हैं । ये वायुरूपधारी श्रीभगवान् की पूजा करते हैं और यह सुरा सागर से घिरा हुआ है ।। ८-१०।। कुश द्वीप के स्वामी ज्योतिष्मान् के सात पुत्र हैं । उनके नाम हैं-उद्भिद्, वेणुमान्, द्वैरथी, लम्बनी, धैर्य, कपिल और प्रभाकर । वहाँ के ब्राह्मण आदि वर्णों के नाम दमी आदि हैं । वे ब्रह्मारूपधारी श्रीभगवान् का पूजन करते हैं ।। ११-१२ ।। इस द्वीप में सात मर्यादा पर्वत हैं- विद्रुम, हेमशैल, द्युतिमान्, पुष्पवान्, कुशेशय, हरिशैल तथा मन्दराचल । यह घी के समुद्र से घिरा हुआ है और वह घृत सागर भी क्रौञ्चद्वीप से घिरा हुआ है । द्युतिमान् के पुत्र क्रौञ्चद्वीप के स्वामी हैं और उन्हीं के नाम वाले यहाँ के सात वर्ष हैं।।१३-१४।। कुशल, मनोनुग, उष्ण, प्रधान अन्धकारक, मुनि और दुन्दुभि ये सात द्युतिमान के पुत्र हैं । वहाँ के सात पर्वत हैं- क्रौञ्च, वामन, अन्धकारक, देवावृत, पुण्डरीक, दुन्दुभि तथा द्विगुण।

धन्याः तिष्यां विप्रादयो हरिम् ॥ १७ ॥ यजन्ति क्रौञ्चद्वीपस्तु दधिमण्डोदकावृतः। संवृतः शाकद्वीपेन भव्याच्छाकेश्वराः सुताः॥ १८॥ जलदश्च कुमारश्च सुकुमारो मणीचकः। कुशोत्तरथो ( रोऽथ ) मोदाकी द्रुमस्तन्नामवर्षकाः ॥ १९ ॥ उदयाख्यो जलधरो रैवतः श्यामकोद्रकौ । आम्बिकेयस्तथा रम्यः; केशरी सप्तनिम्नगाः॥ २० ॥ मगा मगधमानस्यामन्दगाश्च द्विजातयः । यजन्ति सूर्यरूपं तु शाकः क्षीराब्धिनाऽऽवृतः॥ २१ ॥ पुष्करेणाऽऽवृतः सोऽपि द्वौ पुत्रौ सवनस्य च । महावीतो धातकिश्च वर्षे द्वे नामचिह्निते ॥ २२ ॥ एकोऽद्रिर्मानसाख्योऽत्र मध्यतो वलयाकृतिः । योजनानां सहस्राणि विस्तारोच्छ्रायतःसमः ॥ २३ ॥ जीवनं दशसाहस्रं सुरैर्ब्रह्माऽत्र पूज्यते । स्वादूदकेनोदधिना वेष्टितो द्वीपमानतः ॥ २४ ॥ ऊनातिरिक्तता चापां समुद्रेषु न जायते । उदयास्तमनेष्विन्दोः पक्षयोः शुक्लकृष्णयोः ॥ २५ ॥ दशोत्तराणि पञ्चैव अङ्गुलानां शतानि वै । अपां वृद्धिक्षयौ दृष्टौ सामुद्रीणां महामुने ॥ २६ ॥ स्वादूदकात्तु द्विगुणा भूर्हैमी जन्तुवर्जिता । लोकालोकस्ततः शैलो योजनायुतविस्तृतः ॥ २७ ॥ लोकालोकस्तु तमसाऽऽवृतोऽथाण्डकटाहतः। भूमिःसाऽण्डकटाहेन पञ्चाशत्कोटिविस्तरा ॥ २८ ॥

इत्यादिमहापुराणे महाद्वीपादिवर्णनं नामैकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

---

## अथ विंशत्यधिकशततमोऽध्यायः

## भुवनकोशवर्णनम्

अग्निरुवाच— **विस्तारस्तु स्मृतो भूमेः सहस्राणि च सप्ततिः। उच्छ्रायो दशसाहस्रं पातालं चैकमेककम् ॥ १ ॥ अतलं वितलं चैव नितलं च**

---

यहाँ की सात नदियाँ भी हैं । उत्तरोत्तर द्विगुण विस्तार वाले हैं ।। १५-१६ ।। उन द्वीपों में जो वर्ष पर्वत हैं वे पूर्ववती द्वीप से द्विगुण विस्तार वाले हैं । वहाँ के ब्राह्मण आदि वर्णों के नाम क्रमशः पुष्कर, पुष्कल, धन्य तथा तिष्य है । वे श्री भगवान् की आराधना करते हैं ।। १७ ।। क्रौञ्चद्वीप दधिमण्डोदक सागर से आवृत्त है । वह सागर भी शाक द्वीप से वेष्टित है । राजा भव्य के सात पुत्र ही वहाँ के स्वामी हैं । उनके नाम हैं- जलद कुमार, सुकुमार, मणीचक, कुशोत्तर, मोदाकी और द्रुम है । उन्हीं के नाम पर वहाँ के वर्षों के नाम हैं ।। १८-१९ ।। यहाँ के भी सात प्रधान पर्वत हैं- उदयगिरि, जलधर, रैवत, श्याम, कोद्रक, अम्बिकेय तथा मनोहर केसरी । वहाँ की सात प्रसिद्धि नदियाँ हैं ।। २० ।। वहाँ के ब्राह्मण आदि वर्णों के नाम क्रमशः- मग, मगध, मानस्य और मन्दग हैं । ये सूर्यरूपधारी श्रीभगवान् की आराधना करते हैं । शाकद्वीप क्षीरसागर से घिरा हुआ है और क्षीरसगर पुष्कर द्वीप से परिवेष्टित है । यहाँ के अधिकारी राजा सवन के दो पुत्र हुए महावीत तथा धातकि । उन्हीं के नाम पर यहाँ के दो वर्ष है। । इसद्वीप के बीच में वलयाकार एक मानस नामक पर्वत है यह हजारों योजन विस्तृत तथा हजारों योजन ऊँचा है।।२१-२३।। यहाँ के जीव दस हजार वर्ष जीते हैं । यहाँ पर देवता ब्रह्मा की पूजा करते हैं । यह पुष्कर द्वीप स्वादिष्ट जल के समुद्र से घिरा है । उस समुद्र का विस्तार उस द्वीप के समान ही है। समुद्रों का जल न तो घटता है और न तो बढ़ता ही है । महामुने ! शुक्ल और कृष्ण दोनों पक्षों में चन्द्रमा के उदय तथा अस्तकाल में केवल पाँच से दस अंगुल तक समुद्र का जल घटता बढ़ता है ।। २४-२६ ।। स्वादिष्ट जल वाले समुद्र के दुगने विस्तार वाली तथा जीवों से रहित सुवर्णमयी पृथिवी है । उसके पश्चात् दस हजार योजन में विस्तृत लोकालोक पर्वत है ।।२७।। लोकालोक पर्वत अण्डकटाह के अन्धकार से घिरा हुआ है । पचास करोड़ योजन विस्तृत भूमि अण्डकटाह से आवृत्त है ।। २८ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का महाद्वीपादि वर्णन नामक एक सौ उन्नीसवाँ अध्याय सम्पूर्ण हुआ ॥ ११९ ॥**

---



**अग्नि ने कहा—** वसिष्ठ भूमि का विस्तार सत्तर योजन बतलाया गया है और उसकी ऊँचाई दस हजार योजन बतलाया गया है । अतल, वितल, नितल, प्रकाशमान्, महातल, सुतल,

गभस्तिमत् । महाग्र्यं सुतलं चाग्र्यं पातालं चापि सप्तमम् ॥ २ ॥ कृष्णपीतारुणाः शुक्लशर्कराः शैलकाञ्चनाः । भूमयस्तेषु रम्येषु सन्ति दैत्यादयः सुखम् ॥ ३ ॥ पातालानामधश्चाऽऽस्ते शेषो विष्णुश्च तामसः । गुणानन्त्यात्स चानन्तः शिरसा धारयन्महीम् ॥ ४ ॥ भुवोऽधो नरका नैके न पतेत्तत्र वैष्णवः । रविणा भासिता पृथ्वी यावत्तावन्नभो मतम् ॥ ५ ॥ भूमेर्योजनलक्षं तु वसिष्ठरविमण्डलम् । रवेर्लक्षेण चन्द्रश्च लक्षान्नाक्षत्रमिन्दुतः॥६॥ द्विलक्षाद्बुधश्चाऽऽस्ते बुधाच्छुको द्विलक्षतः । द्विलक्षेणकुजः शुक्राद्भौमाद् द्विलक्षतो गुरुः ॥ ७ ॥ गुरोर्द्विलक्षतः सौरिर्लक्षात्सप्तर्षयः शनेः । लक्षाद् ध्रुवोह्यृषिभ्यस्तु त्रैलोक्यं चोच्छ्रयेण च ॥ ८ ॥ ध्रुवात्कोट्या महर्लोको यत्र ते कल्पवासिनः । जनो द्विकोटितस्तस्माद्यत्राऽऽसन्सनकादयः॥९॥ जनात्तपश्चाष्टकोट्या वैराजा यत्र देवताः । षण्णवत्या तु कोटीनां तपसः सत्यलोककः ॥ १० ॥ अपुनर्मारका यत्र ब्रह्मलोको हि स स्मृतः । पादगम्यस्तु भूर्लोको भुवः सूर्यान्तरः स्मृतः ॥ ११ ॥ स्वर्गलोको ध्रुवान्तस्तु नियुतानि चतुर्दश । एतदण्डकटाहेन वृतो ब्रह्माण्डविस्तरः ॥ १२॥ वारिवह्न्यनिलाकाशैस्ततो भूतादिना बहिः । वृतं दशगुणैरण्ड भूतादिर्महता तथा ॥ १३ ॥ दशोत्तराणि शेषाणि एकैकस्मान्महामुने । महान्तं च समावृत्य प्रधानं समवस्थितम् ॥ १४ ॥ अनन्तस्य न तस्यान्तः संख्यानं नापि विद्यते । हेतुभूतमशेषस्य प्रकृतिः साऽपरा मुने ॥ १५ ॥ असंख्यातानि चाण्डानि तत्र जातानि चेदृशाम् । दारुण्यग्निर्यथा तैलं तिले तद्वत्पुमानिति ॥ १६ ॥ प्रधाने च स्थितो व्यापी चेतनात्माऽऽत्मवेदनः।

---

तलातल तथा पाताल ये सात पाताल (भूमि के नीचे के लोक) हैं । ये सबके सब दस-दस हजार योजन विस्तृत हैं ।। १-२ ।। इन पाताल लोकों की भूमियाँ क्रमशः काली, पीली, लाल, उजली, कंकरीली, पत्थरीली और सुवर्णमयी हैं । ये सबके सब मनोहर हैं तथा इन लोकों में दैत्य सुखपूर्वक निवास करते हैं ।। ३ ।। पातालों के नीचे विष्णु के तामस स्वरूप शेष विद्यमान हैं । ये अपने शिर पर पृथिवी को धारण करते हैं । गुणों की अनन्तता के कारण इनको अनन्त कहा जाता है ।। ४ ।। पृथ्वी के नीचे अनेक नरक हैं, किन्तु उनमें वैष्णव नहीं जाते हैं । जितनी पृथिवी को सूर्य प्रकाशित करते हैं उतना ही परिमाण आकाश का भी है ।। ५ ।। हे वसिष्ठ ! पृथिवी से एक लाख योजन की दूरी पर सूर्यमण्डल है । सूर्य से एक लाख योजन की दूरी पर चन्द्रमण्डल है और चन्द्रमण्डल से एक लाख योजन की दूरी पर नक्षत्रमण्डल है ।। ६ ।। नक्षत्रमण्डल से दो लाख योजन की दूरी पर बुध है । बुध से दो लाख योजन की दूरी पर शुक्र है । शुक्र से दो लाख योजन की दूरी पर भौम है तथा भौम से दो लाख योजन की दूरी पर गुरु हैं ।। ७ ।। गुरु से दो लाख योजन की दूरी पर शनैश्चर हैं और उनसे एक लाख योजन की दूरी पर सप्तर्षिमण्डल है । सप्तर्षिमण्डल से एक लाख योजन की दूरी पर ध्रुव हैं । ध्रुवमण्डल पर्यन्त ही त्रिलोकी (भूलोक, भुवर्लोक और स्वर्लोक) है ।। ८ ।। ध्रुव से करोड़ योजन ऊपर महर्लोक है, जहाँ पर कल्पान्तवासी भृगु आदि महर्षि रहते हैं । उससे दो करोड़ योजन ऊपर जनलोक है, जहाँ पर सनकादि महर्षि रहते हैं ।। ९ ।। जनलोक से आठ करोड़ योजन ऊपर तपोलोक है जहाँ पर वैराज देवता निवास करते हैं । तपोलोक से छयानबे करोड़ योजन की दूरी पर सत्यलोक है ।। १० ।। यहाँ पर रहने वाले जीवों की मृत्यु नहीं होती । इसे ही ब्रह्मलोक कहते हैं । जहाँ पर पैरों से चलकर जाया जा सके उसे भूर्लोक कहते हैं । सूर्यमण्डल तथा पृथिवी के बीच के स्थान को भुवर्लोक कहते हैं । उसके ऊपर ध्रुवलोक पर्यन्त के भाग को स्वर्गलोक कहते हैं । उसका विस्तार चौदह लाख योजन है । यही (भूर्भुवः स्वः ही) अण्डकटाह से घिरा हुआ विस्तृत ब्रह्माण्ड है ।। ११-१२ ।। बाहर से वह ब्रह्माण्ड क्रमशः जल, अग्नि, वायु और आकाशरूपी आवरणों से घिरा हुआ है । इन सबों के ऊपर भूतादि (अहंकार) का आवरण है । ये सभी आवरण क्रमशः उत्तरोत्तर दस-दस गुना बड़े हैं । अहंकाररूपी आवरण महत्त्वरूपी आवरण से घिरा हुआ है ।।१३।। हे महामुने ! ये सभी आवरण एक दूसरे की अपेक्षा दस-दस गुने बड़े हैं । महत् तत्त्व प्रधान से आवृत्त है ।। १४ ।। वह प्रधान अनन्त है, उसकी कोई सीमा नहीं है । वह सबों का कारण है । उसे ही अपराप्रकृति कहते हैं ।। १५ ।। जिस तरह काष्ठ में अग्नि होती है तथा तिल में तेल रहता है, उसी तरह व्यापक पुरुष प्रधान में स्थित है । वह ज्ञाता चेतन आत्मा है । प्रधान तथा पुरुष दोनों धर्मी हैं (परस्पर में संयुक्त रहने वाले हैं) और सबों की आत्माभूत विष्णु की शक्ति से आवृत्त हैं । उन दोनों के परस्पर में संयुक्त होने का कारण वह विष्णुशक्ति ही है । अर्थात्

प्रधानं च पुमांश्चैव सर्वभूतात्मभूतया ॥ १७ ॥ विष्णुशक्त्या महाप्राज्ञ वृतौ संश्रयधर्मिणौ । तयोः सैव पृथग्भावे कारणं संश्रयस्य च ॥ १८ ॥ क्षोभकारणभूतश्च सर्गकाले महामुने । यथा शैत्यं जले वातो बिभर्ति कणिकागतम् ॥ १९ ॥ जगच्छक्तिस्तथा विष्णोः प्रधानप्रतिपादिकाम् । विष्णु शक्तिं समासाद्य देवाद्याः सम्भवन्ति हि ॥ २० ॥ स च विष्णुः स्वयं ब्रह्म यतःसर्वमिदं जगत् । योजनानां सहस्राणि भास्करस्य रथो नव॥२१॥ ईशादण्डस्तथैवास्य द्विगुणो मुनिसत्तम । सार्धकोटिस्तथा सप्त नियुतान्यधिकानि वै॥२२॥ योजनानां तु तस्याक्षस्तत्र चक्रं प्रतिष्ठितम्। त्रिनाभिमतिपञ्चारं षण्नेमि द्व्ययनात्मकम् ॥ २३ ॥ संवत्सरमयं कृत्स्नं कालचक्रं प्रतिष्ठितम् । चत्वारिंशत्सहस्राणि द्वितीयाक्षो विवस्वतः॥२४॥ पञ्चान्यानि तु सार्धानि स्यन्दनस्य महामते । अक्षप्रमाणमुभयोः प्रमाणं तद्युगार्धयोः ॥ २५ ॥ ह्रस्वोऽक्षस्तद्युगार्धं च ध्रुवाधारं रथस्य वै । हयाश्च सप्त च्छन्दांसि गायत्र्यादीनि सुव्रत ॥ २६ ॥ उदयास्तमनं ज्ञेयं दर्शनादर्शनं रवेः । यावन्मात्रप्रदेशे तु वसिष्ठावस्थितो ध्रुवः ॥ २७ ॥ स्वयमायाति तावत्तु भूमेराभूतसंप्लवम् । ऊर्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्र व्यवस्थितः ॥ २८ ॥ एतद् विष्णुपदं दिव्यं तृतीयं व्योम्नि भास्वरम् । निर्धूतदोषपङ्कानां यतीनां स्थानमुत्तमम् ॥ २९ ॥ ततो गङ्गा प्रभवति स्मरणात्पापनाशिनी । दिवि रूपं हरेर्ज्ञेयं शिशुमाराकृति प्रभोः ॥ ३० ॥ स्थितः पुच्छै ध्रुवस्तत्र भ्रमन्भ्रामयति ग्रहान् । स रथोऽधिष्ठितो देवैरादित्यैर्ऋषिभिर्वरैः ॥ ३१ ॥ गन्धर्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः। हिमोष्णवारिवर्षाणां कारणं भगवान् रविः ॥ ३२ ॥ ऋग्वेदादिमयो विष्णुः स शुभाशुभकारणम् । रथस्त्रिचक्रः सोमस्य कुन्दाभास्तस्य वाजिनः ॥ ३३ ॥ वाम दक्षिणतो युक्ता दश तेन चरत्यसौ । त्रयस्त्रिंशत्सहस्राणि त्रयस्त्रिंशच्छतानि च॥३४॥ त्रयस्त्रिंशत्तथा देवा; पिबन्ति क्षणदाकरम् । एकां कलां च पितर एकामास्मिन्

---

वह दोनों को मिलाती है ।। १६-१८ ।। जिस तरह से जल में रहने वाली शीतलता को वायु उसके अनेक कणों को धारण करके उसकी शीतलता को भी धारण करता है; उसी तरह से विष्णु शक्ति भी प्रकृति तथा पुरुषमय जगत् को धारण करती है । विष्णु शक्ति को ही प्राप्त करके देवता आदि भी प्रकट होते हैं ।। १९-२० ।। वे विष्णु स्वयं ब्रह्म हैं उनसे ही सम्पूर्ण जगत् उत्पन्न होता है । सूर्य का रथ नवहजार योजन विस्तृत है ।। २१ ।। हे मुनिश्रेष्ठ उसका ईशादण्ड (हरीश) अठारह हजार योजन लम्बा है । उसकी धूरी डेढ़ करोड़ सात लाख योजन विस्तृत है और उसी में वह चक्र प्रतिष्ठित है । उसकी तीन नाभि पाञ्च और छह (ऋतुमय) नेमि तथा दो (उत्तरायण तथा दक्षिणायन) अयन (गृह) हैं । इस तरह संवत्सरमय रथ चक्र में ही कालचक्र प्रतिष्ठित हैं । सूर्य का दूसरी धूरी साढ़े पैंतालिस हजार योजन विस्तृत है ।। २२-२४ ।। हे महाबुद्धिमान् वसिष्ठ ! उसके दोनों धूरों के बराबर उसके युगार्धों का विस्तार है । रथ की छोटी धूरी तथा उसका युगार्ध ध्रुव के आधार पर टिका है । हे सुव्रत सूर्य के रथ के सात घोड़े गायत्री आदि सात छन्द स्वरूप हैं ।। २५-२६ ।। सूर्य का दिखायी देना ही सूर्योदय और नहीं दिखायी देना ही सूर्यास्त कहलाता है । हे वसिष्ठ जितने प्रदेश पर्यन्त ध्रुव स्थित है, भूमि से लेकर उतने प्रदेश पर्यन्त का प्रलयकाल में नाश हो जाता है ।सप्तर्षिमण्डल से लेकर ध्रुवमण्डल पर्यन्त आकाश का देदीप्यमान स्थान विष्णु का तृतीयपद है । यही दोषरूपी पङ्क से रहित यतियों का उत्तम स्थान है ।। २७-२९ ।। स्मरण करने से वहाँ से ही सभी पापों को विनष्ट करने वाली गङ्गा उत्पन्न होती है । आकाश में प्रभु श्रीहरि का शिशुमार के आकार का रूप समझना चाहिए ।। ३० ।। उस (शिशुमार चक्र) के पुच्छभाग में ध्रुव स्थित है और वे घूमते हुए समस्त ग्रहों को घुमाते रहते हैं । भगवान् का वह रथ विभिन्न आदित्य देवों, श्रेष्ठ ऋषियों, गन्धर्वों, अप्सराओं तथा श्रेष्ठ सर्पों एवं राक्षसों से अधिष्ठित है । प्रत्येक वर्ष होने वाले ठंढी,गर्मी तथा बरसात के कारण भगवान् सूर्य हैं । भगवान् विष्णु ऋग्वेदादि स्वरूप तथा समस्त शुभों एवं अशुभों के कारण हैं । सोम (चन्द्रमा) के रथ में तीन चक्र हैं और घोड़े कुन्द के समान श्वेत वर्ण के हैं ।। ३१-३३ ।। दस घोड़े से युक्त अपने बाएँ और दाएँ विचरण करते हैं । चन्द्रमा की अमृतमयी किरणों का पान तैंतिस हजार तैंतिस सो तैंतिस देवता पान करते हैं । उसकी एक कला का पान अमावस्या के दिन

संस्थिताः ॥ ३५ ॥ वाय्वग्निद्रव्यसंभूतो रथश्चन्द्रसुतस्य च । अष्टाभिस्तुरगैर्युक्तो बुधस्तेन चरत्यपि ॥ ३६ ॥ शुक्रस्यापि रथोऽष्टाश्वो भौमस्यपि रथस्तथा । बृहस्पते रथोऽष्टाश्वः शनेश्चाष्टाश्वको रथः ॥ ३७ ॥ स्वर्भानोश्च रथोऽष्टाश्वः केतोश्चाष्टाश्वको रथः । यदद्य वैष्णवः कायस्ततो विप्र वसुन्धरा ॥ ३८ ॥ पद्माकारा समुद्भूता पर्वताद्यादि संयुता । ज्योतिर्भुवननद्यद्रिसमुद्रवनकं हरिः ॥ ३९ ॥ यदस्ति नास्ति तद्विष्णुर्विष्णुज्ञानविजृम्भितम्। न विज्ञानमृते किंचिज्ज्ञानं विष्णुः परं पदम् ॥ ४० ॥ तत् कुर्याद्येन विष्णुः स्यात्सत्यं ज्ञानमनन्तकम् । पठेत्भुवनकोशं हि यः सोऽवाप्तसुखात्मभाक्॥४१॥ ज्योतिः शास्त्रादिविद्याश्च शुभाशुभाधिपो हरिः॥ ४२ ॥

इत्यादिमहापुराण आग्नेये भुवनकोशवर्णनं नाम विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

## अथैकविंशत्यधिकशततमोऽध्यायः

### ज्योतिःशास्त्रकथनम्

अग्निरुवाच– **ज्योतिःशास्त्रं प्रवक्ष्यामि शुभाशुभविवेकदम् । चातुर्लक्षस्य सारं यत्तज्ज्ञात्वा सर्वविद्भवेत् ॥ १ ॥ षट्काष्टके विवाहो न न च द्विर्द्वादशे स्त्रियाः । न त्रिकोणे ह्यथ प्रीतिः शेषे च समसप्तके ॥ २ ॥ द्विर्द्वादशे त्रिकोणे च मैत्री क्षेत्रपर्योयदि । भवेदेकाधिपत्यं च ताराप्रीतिरथापि वा ॥ ३ ॥ तथाऽपि कार्यः संयोगो न तु षट्काष्टके पुनः । जीवे भृगौ चास्तमिते म्रियते च पुमान्स्त्रियाः ॥ ४ ॥ गुरुक्षेत्रगते सूर्ये सूर्यक्षेत्रगते गुरौ।**

अमानामक कला में स्थित पितृगण किया करते हैं ।। ३४-३५ ।।। चन्द्रमा के पुत्र बुध का रथ वायु तथा अग्नि द्रव्य से उत्पन्न है । वह आठ घोड़ों से युक्त है बुध उसी से संचरण करते हैं।।३६।। शुक्र तथा भौम के भी रथ में आठ-आठ घोड़े हैं ।। ३७ ।। राहु तथा केतु के भी रथ में आठ-आठ घोड़े हैं । हे विप्र ! जो भगवान् विष्णु का जलमय शरीर है, उसी से पद्म के आकार वाली पर्वतों तथा समुद्रों से युक्त पृथिवी उत्पन्न हुयी । अग्नि, भुवन, नदी, पर्वत, समुद्र तथा वन श्रीहरि स्वरूप है। जो है और जो नहीं वह सब भगवान् विष्णु के विज्ञान से उत्पन्न भगवान् विष्णु का शरीर है । विज्ञान से भिन्न किसी भी वस्तु की सत्ता नहीं है । भगवान् विष्णु विज्ञान स्वरूप हैं । वे ही परमपद हैं । वही कार्य करना चाहिए जिससे कि सत्य स्वरूप ज्ञान स्वरूप एवं अनन्त स्वरूप भगवान् विष्णु की प्रसन्नता हो । जो भुवनकोश का पाठ करता है वह सुख का भागी होता है ।। ३८-४१ ।। अब मैं ज्योतिःशास्त्र का वर्णन करूँगा । उसमें विवेचित समस्त शुभों तथा अशुभों के वामी भगवान् श्रीहरि हैं ।। ४२ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का भुवनकोश वर्णन नामक एक सौ बीसवाँ अध्याय सम्पूर्ण हुआ ॥ १२० ॥**

**अग्नि ने कहा–** अब मैं ज्योतिषशास्त्र का वर्णन करता हूँ जो शुभ तथा अशुभ का ज्ञान प्रदान करने वाला है । चार लाख श्लोकों में निबद्ध ज्योतिष् शास्त्र के सारांश को जानकर मनुष्य सर्वज्ञ हो सकता है ।। १ ।। यदि कन्या की राशि से वर की राशि संख्या परस्पर छह-आठ, नव-पाँच तथा दो-बारह हो तो विवाह शुभ नहीं होता है । शेष यदि दस-चार, ग्यारह-तीन और सात हो तो विवाह शुभ होता है ।। २ ।। यदि वर एवं कन्या की राशियों के स्वामियों में मित्रता हो तो अथवा दोनों के ताराओं (जन्म नक्षत्रों) में मित्रता हो तो नव-पाँच तथा दो बारह का दोष होने पर भी विवाह कर लेना चाहिए । किन्तु षडष्टक (छह- आठ) के दोष में शादी नहीं करनी चाहिए। गुरु तथा शुक्र के अस्त रहने पर विवाह करने से बधू के पति का नाश होता है।।३-४।।

विवाहं न प्रशंसन्ति कन्यावैधव्यकृद्भवेत् ॥ ५ ॥ अतिचारे त्रिपक्षं स्याद्वक्रे मासचतुष्टयम् । व्रतोद्वाहौ न कुर्वीत गुरोर्वक्रातिचारयोः ॥ ६ ॥ चैत्रे पौषे न रिक्तासु हरौ सुप्ते कुजे रवौ । चन्द्रक्षये चाशुभं स्यात्सन्ध्याकालः शुभावहः ॥ ७ ॥ रोहिणी चोत्तरा मूलं स्वाती हस्तोऽथ रेवती । तुले न मिथुने शस्तो विवाहः परिकीर्तितः ॥ ८ ॥ विवाहे कर्णवेधे च व्रते पुंसवने तथा । प्राशने चाऽऽद्यचूडायां विद्धर्क्षं च विवर्जयेत् ॥ ९ ॥ श्रवणे मूलपुष्ये च सूर्यमङ्गलजीवके । कुम्भे सिंहे च मिथुने कर्म पुंसवनं स्मृतम् ॥ १० ॥ हस्ते मूले मृगे पौष्णे बुधे शुक्रे च निष्कृतिः । अर्केन्दुजीवभृगुजे मूले ताम्बूलभक्षणम् ॥ ११ ॥ अन्नस्य प्राशनं शुक्रे जीवे मृगे च मीनके । हस्तादिपञ्चके पुष्ये कृत्तिकादित्रये तथा ॥ १२ ॥ अश्विन्यामथ रेवत्यां नवान्नफलभक्षणम् । पुष्यो हस्तस्तथा ज्येष्ठा रोहिणी श्रवणाश्विनी ॥ १३ ॥ स्वातिसौम्ये च भैषज्यं कुर्यादन्यत्र वर्जयेत् । पूर्वात्रयं मघा याम्यं पावनं श्रवणत्रयम् ॥ १४ ॥ भौमादित्यशनेर्वारे स्नातव्यं रोगमुक्तितः । पार्थिवे चाष्टह्रींकारं मध्ये नाम च दिक्षु च ॥ १५ ॥ ह्रींपुटे पार्थिवे दिक्षु ह्रीं विदिक्षु लिखेद्वसून् । गोरोचनाकुङ्कुमेन भूर्जे वस्त्रे गले धृतम् ॥ १६ ॥ शत्रवो वशमायान्ति मन्त्रेणानेन निश्चितम् । श्रीं ह्रीं सम्पुटं नाम श्रीं ह्रीं ( च ) पत्राष्टके क्रमात् ॥ १७ ॥ गोरोचनाकुङ्कुमेन भूर्जेऽथ सुभगावृते। गोमध्यवागमः पत्रे हरिद्राया रसेन च ॥ १८ ॥ शिलापट्टेऽरीन्स्तम्भयति भूमावधोमुखी कृतम् । ॐ हूँ सः सम्पुटं नाम ओं हूं सः पत्राष्टके क्रमात् ॥ १९ ॥ गोरोचनाकुङ्कुमेन भूर्जे मृत्युनिवारणम् । एकपञ्चनवप्रीत्यै

गुरु के क्षेत्र (धनु और मीन) में सूर्य के होने पर तथा सूर्य के क्षेत्र (सिंह) में गुरु के होने पर वह विवाह शुभ नहीं होता, वह कन्या के लिए वैधव्यकारक होता है ।। ५ ।। अतिचार होने पर तीन पक्ष तक तथा वक्र होने पर चार मास तक उपनयन तथा विवाह नहीं करना चाहिए । गुरु के वक्री तथा अतिचारी होने पर उपनयन नहीं करना चाहिए ।। ६ ।। चैत्र तथा पौष मासों में रिक्ता तिथियों में भगवान् के सो जाने पर भौम तथा रविवार को एवं चन्द्रमा का क्षय होने पर विवाह शुभ नहीं होता है । विवाह के लिए सन्ध्याकाल का समय शुभ होता है ।। ७ ।। रोहिणी, तीनों उत्तरा, मूल, स्वाती, हस्त तथा रेवती नक्षत्र में, तुला को छोड़कर मिथुन आदि (लग्नों में विवाह करना शुभ होता है) ।। ८ ।। विवाह, कर्णवेध, उपनयन, पुंसवन, अन्नप्राशन तथा चूड़ाकरण संस्कार में विद्ध नक्षत्र का त्याग कर देना चाहिए । (विद्ध नक्षत्र को पञ्चशलाकाचक्र से जाना जा सकता है) ।। ९ ।। श्रवण, मूल तथा पुष्य, नक्षत्रों में रवि, मङ्गल तथा वृहस्पतिवारों में, एवं कुम्भ, सिंह एवं मिथुन लग्नों में पुंसवन कर्म करने का विधान है ।। १० ।। हस्त, मूल, मृगशिरा तथा रेवती नक्षत्रों में, बुध तथा शुक्रवारों में बालक का निष्क्रमण करना चाहिए । रविवार, सोमवार, गुरुवार तथा शुक्रवार तथा मूल नक्षत्र में ताम्बूल सेवन करना चाहिए ।। ११ ।। शुक्र तथा वृहस्पतिवार को मकर तथा मीन लग्न में हस्त आदि पाञ्च नक्षत्रों में पुष्य नक्षत्र में तथा कृत्तिका आदि तीन नक्षत्रों में अन्नप्राशन करना शुभ होता है ।। १२ ।। अश्विनी, रेवती, पुष्य, हस्त,ज्येष्ठा, रोहिणी तथा श्रवण नक्षत्र में नवीन अन्न तथा नवीन फल खाना चाहिए । स्वाती तथा मृगशिरा नक्षत्र में भैषज्य सेवन करना चाहिए, अन्य नक्षत्रों में नहीं । तीनों पूर्वा, मघा, भरणी, स्वाती तथा श्रवण से तीन नक्षत्रों में- रवि, शनि और भौमवारों को रोगमुक्त व्यक्ति को स्नान करना चाहिए ।। १३-१४।। मिट्टी के चौकोर पट्ट पर आठों दिशाओं में- ह्रीं लिखकर बीच में शत्रु का नाम लिखे । अथवा चौकोर वस्त्र या चौकोर भोज पर आठों दिशाओं में ह्रीं लिखकर बीच में गोरोचन तथा कुंकुम से शत्रु का नाम लिखकर गले में धारण करना चाहिए ।। १५-१६ ।। ऐसा करने तथा श्रीं ह्रीं के बीच में शत्रु का नाम लिखने पर शत्रु वशवर्ती हो जाता है। श्रीं ह्रीं ऐसा आठ भोजपत्र खण्डों पर गोरोचन एवं कुंकुम से लिखकर भूमि में गाड़ देने पर तो विदेश गया हुआ व्यक्ति शीघ्र घर आ जाता है । उसी यन्त्र को हल्दी के रस से शिलापट्ट पर लिखकर नीचे मुँह करके पृथिवी पर रख दे तो शत्रु का स्तम्भन हो जाता है ।। १७-१८ ।। भोजपत्र के आठ खण्डों पर ओं हूँ सः बीच में नाम ओं हूँ सः इस तरह से गोरोचन तथा कुंकुम से लिखकर धारण करने से मृत्यु का निवारण होता है । यह यन्त्र एक, पाँच और नव बार लिखने से परस्पर में प्रेम होता है, दो छह,और बारह बार लिखने से दो वियुक्त व्यक्तियों का संयोग होता है, तीन, सात, तथा ग्यारह बार लिखने से लाभ होता है तथा चार, आठ एवं बारह बार लिखने से शत्रुता होती है ।। १९-२० ।। लग्न से क्रमशः तन, धन, सहज (भाई) मित्र, पुत्र, शत्रु,

द्विषड्द्वादश योगकाः ॥ २० ॥ त्रिसप्तैकादशे लाभो वेदाष्टद्वादशे रिपुः । तनुर्धनं च सहजः सुहृत्सुतौ रिपुस्तथा ॥ २१ ॥ जायानिधनधर्मौ च कर्माऽऽयव्ययकं क्रमात् । स्फुटं मेषादिलग्नेषु नवताराबलं वदेत् ॥ २२ ॥ जन्म सम्पद्विपत्क्षेमं प्रत्यरिः साधकः क्रमात् । निधनं मित्रपरममित्रं ताराबलं विदुः ॥ २३ ॥ वारे ज्ञगुरुशुक्राणां सूर्याचन्द्रमसोस्तथा । माघादिमासषट्के तु क्षौरमाद्यं प्रशस्यते ॥ २४ ॥ कर्णवेधो बुधे जीवे पुष्ये श्रवणचित्रयोः । पञ्चमेऽब्दे चाध्ययनं षष्ठीप्रतिपदं त्यजेत् ॥ २५ ॥ रिक्तां पञ्चदशीं भौमं प्राच्र्य वाणीं हरिं श्रियम् । माघादिमासषट्के तु मेखलाबन्धनं शुभम् ॥ २६ ॥ चूडाकरणमाद्यं च श्रावणादौ न शस्यते । अस्तं याते गुरौ शुक्रे क्षीणे च शशलाञ्छने ॥ २७॥ उपनीतस्य विप्रस्य मृत्युं जाड्यं विनिर्दिशेत् । क्षौरर्क्षे शुभवारे च समावर्तनमिष्यते ॥ २८ ॥ शुभक्षेत्रे विलग्नेषु शुभयुक्तेक्षितेषु च । अश्विनीमघाचित्रासु स्वातीयाम्योत्तरासु च ॥ २९ ॥ पुनर्वसौ च पुष्ये च धनुर्वेदः प्रशस्यते । भरण्यार्द्रा मघाऽश्लेषा बह्निभगर्क्षयोस्तथा ॥ ३० ॥ जिजीविषुर्न कुर्वीत वस्त्रप्रावरणं नरः। गुरौ शुक्रे बुधे वस्त्रं विवाहादौ न भादिकम् ॥ ३१ ॥ रेवत्यश्विधनिष्ठासु हस्तादिषु च पञ्चसु । शङ्ख विद्रुमरत्नानां परिधानं प्रशस्यते ॥ ३२ ॥ याम्यसार्प धनिष्ठासु त्रिषु पूर्वेषु चानले । क्रीतं हानिकरं द्रव्यं विक्रीतं हानिकृद्भवेत् ॥ ३३ ॥ अश्विनीस्वातिचित्रासु रेवत्यां वारुणे हरौ । क्रीतं लाभकरं द्रव्यं विक्रीतं हानिकृद्भवेत् ॥ ३४ ॥ भरणी त्रीणि पूर्वाणि आर्द्राश्लेषामघानिलाः । वह्निज्येष्ठाविशाखासु स्वामिनो नोपतिष्ठते ॥ ३५ ॥ द्रव्यं दत्तं प्रयुक्तं वा यत्र निक्षिप्यते धनम् । उत्तराश्रवणे शाक्रे कुर्याद्राजाभिषेचनम् ॥ ३६ ॥ चैत्रं ज्येष्ठं तथा भाद्रमाश्विनं पौषमेव च । माघं चैव

---

जाया (पत्नी) मृत्यु, धर्म, कर्म, आय तथा व्यय ये बारह भाव होते हैं । मेष आदि लग्नों से स्पष्ट नव ताराओं का बल बतलाना चाहिए । जन्म, सम्पत्, विपत् , क्षेम, प्रत्यरि, साधक, निधन, मित्र तथा परममित्र ये नवतारा बल क्रमशः होते हैं ।। २१-२३ ।। बुध, गुरु एवं शुक्रवार सूर्य तथा सोमवारों को; माघ आदि छह मासों में प्रथम क्षौरकर्म शुभ होता है ।। २४।। बुध एवं वृहस्पतिवारों को पुष्य, श्रवण तथा चित्रा नक्षत्रों में कर्णवेध संस्कार करना चाहिए । पाँचवें वर्षा में विद्यारम्भ करना चाहिए किन्तु षष्ठी प्रतिपदा रिक्ता (चतुर्थी, नवमी और चतुर्दशी) और पूर्णिमा तिथियों एवं भौमवार को छोड़कर शेष वारों एवं तिथियों में, सरस्वती, लक्ष्मी एवं विष्णु का पूजन करके विद्यारम्भ करना चाहिए । माघ से लेकर आषाढ़ तक छह मासों में उपनयन शुभ होता है ।। २५-२६ ।। प्रथम चूड़ाकरण श्रावण आदि मासों में नहीं करना चाहिए । गुरु तथा शुक्र अस्त हो जाने पर चन्द्रमा के क्षीण होने पर यदि ब्राह्मण का उपनयन संस्कार किया जाय तो उसकी मृत्यु अथवा जड़ता होती है । समावर्तन संस्कार क्षौर के नक्षत्रों तथा शुभवार में ही करना चाहिए ।। २७-२८ ।। शुभग्रह का लग्न हो, लग्न में शुभग्रह बैठा हो या उसे शुभग्रह देख रहा हो तो अश्विनी, मघा, चित्रा, स्वाती तीनों उत्तरा, पुनर्वसु, तथा पुष्य नक्षत्र में धनुर्वेद को प्रारम्भ करना शुभ होता है ।। २९ ।। जीवन की इच्छा वाले मनुष्य को भरणी, आर्द्रा, मघा, अश्लेषा, कृत्तिका तथा पूर्वाफाल्गुनी नक्षत्र में नवीन वस्त्र नहीं धारण करना चाहिए । गुरु, शुक्र और बुधवारों में नवीन वस्त्र धारण करना शुभ होता है । किन्तु विवाह आदि के अवसर पर वस्त्र धारण करने के लिए नक्षत्र आदि का विचार नहीं करना चाहिए ।। ३०-३१ ।। रेवती, अश्विनी, धनिष्ठा, हस्ता नक्षत्र से लेकर पाञ्च नक्षत्रों में शंख, मूँगा तथा रत्नों को धारण करना शुभ होता है।।३२।। भरणी, आश्लेषा, धनिष्ठा तीनों पूर्वा और कृत्तिका इन नक्षत्रों में खरीदी गयी वस्तु हानिकर होती है और बेचा गया द्रव्य, लाभकर होता है ।। ३३ ।। अश्विनी,स्वाती, चित्रा, रेवती, शतभिषा और श्रवण इन नक्षत्रों में खरीदा हुआ सामान लाभकर होता है तथा बेचना हानिकर होता है ।। ३४ ।। भरणी, तीनों पूर्वा, आर्द्रा, आश्लेषा, मया, स्वाती, कृत्तिका, ज्येष्ठा और विशाखा में न तो नौकरी प्रारम्भ करना चाहिए, न दूसरों को द्रव्य देना चाहिए न तो व्यापार द्रव्य देना चाहिए और न तो थाती धरोहर के रूप में रखना चाहिए । तीनों उत्तरा श्रवण और ज्येष्ठा इन नक्षत्रों में राज्याभिषेक करना चाहिए ।। ३५-३६ ।। चैत्र, ज्येष्ठ, भाद्रपद, आश्विन, पौष तथा माघ महीनों को छोड़कर शेष मासों में गृहारम्भ करना चाहिए ।। ३७ ।। अश्विनी, रोहिणी, मूल, तीनों

परित्यज्य शेषमासे गृहं शुभम् ॥३७॥ अश्विनी रोहिणीमूलमुत्तरात्रयमैन्दवम् । स्वाती हस्तोऽनुराधा च गृहारम्भे प्रशस्यते॥३८॥ आदित्यभौमवर्जं तु वापीप्रासादके तथा । सिंहराशिगते जीवे गुर्वादित्ये मलिम्लुचे ॥ ३९ ॥ बाले बृद्धेऽस्तगे शुक्रे गृहकर्मविवर्जयेत् । अग्निदाहौ भयं रोगो राजपीडा धनक्षतिः ॥ ४० ॥ संग्रहे तृणकाष्ठानां कृते श्रवणपञ्चके । गृहप्रवेशनं कुर्याद्धनिष्ठोत्तरवारुणे ॥ ४१ ॥ नौकाया घटने द्वित्रिपञ्चसप्तत्रयोदशी। नृपदर्शो धनिष्ठासु हस्तपौष्णाश्विनीषु च ॥ ४२ ॥ पूर्वात्रयं धनिष्ठाऽऽर्द्रा वह्निः सौम्यविशाखयोः । आश्लेषा चाश्विनी चैव यात्रासिद्धिस्तु सम्पदा॥४३॥ त्रिषूत्तरेषु रोहिण्यां सिनीवाली चतुर्दशी । श्रवणा चैव हस्ता च चित्रा चैवाष्टमी तथा॥४४॥ गोषु यात्रां न कुर्वीत प्रवेशं नैव कारयेत् । अनिलोत्तररोहिण्यां मृगमूलपुनर्वसौ ॥ ४५ ॥ पुष्यश्रवणहस्तेषु कृषिकर्मसमाचरेत्। पुनर्वसूत्तरास्वातीभगमूलेन्द्रवारुणे ॥ ४६ ॥ गुरोः शुक्रस्य वारे वा वारे च सोमभास्वतोः । वृषलग्ने च कर्तव्यं कन्यायां मिथुने तथा ॥ ४७ ॥ द्विपञ्चदशमी सप्ततृतीया च त्रयोदशी । रेवती रोहिणीन्द्राग्निहस्तमैत्रोत्तरेषु च ॥ ४८ ॥ मन्दारवर्जं बीजानि वापयेत्सम्पदर्थ्यपि । रेवतीहस्तमूलेषु श्रवणे भगमैत्रयोः ॥ ४९ ॥ पितृदैवे तथा सौम्ये धान्यच्छेदं मृगोदये । हस्तचित्राऽदितिस्वातीरेवत्यां श्रवणत्रये ॥ ५० ॥ स्थिरे लग्ने गुरोर्वारेऽथ वा भार्गवसोम्ययोः । याम्यादितिमघाज्येष्ठासूत्तरेषु प्रवेशयेत् ॥ ५१ ॥ ॐ धनदाय सर्वधनेशाय देहि मे धनं स्वाहा । ॐ नवे हर्षे, इलादेवि लोकसंवर्धिनि कामरूपिणि देहि मे धनं स्वाहा ॥ ५२॥ पत्रस्थं लिखितं धान्यराशिस्थं धान्यवर्धनम् । त्रिपूर्वासु विशाखायां धनिष्ठावारुणेऽपि च ॥ ५३॥ एतेषु षट्सु विज्ञेयं धान्यनिष्क्रमणं बुधैः देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ ॥ ५४ ॥ मिथुनस्थे रवौ दर्शाद्यदि स्याद्द्वादशी तिथिः । सदा तत्रैव कर्तव्यं शयनं चक्रपाणिनः ॥ ५५ ॥

---

उत्तरा, मृगशिर, स्वाती, हस्त एवं अनुराधा ये नक्षत्र गृहारम्भ के लिए शुभ हैं ।। ३८ ।। बावली खोदवाने तथा मकान बनवाने में रविवार तथा भौमवार वर्जित है। जब गुरु सिंह राशि के हों तथा सूर्य धनु एवं मीन राशि के हों, मलमास का महीना हो शुक्र बाल, वृद्ध अथवा अस्त हों तो गृहकर्म नहीं करना चाहिए ।। ३९ ।। श्रवण पञ्चक (श्रवण,धनिष्ठा, पूर्वाभाद्रपद, उत्तराभाद्रपद तथा रेवती) में तृणों तथा काष्ठ का संग्रह करने से आग लगने का भय, राजा से पीड़ा तथा धनक्षय का भय होता है ।। ४०-४१ ।। द्वितीया, तृतीया, पञ्चमी, सप्तमी तथा त्रयोदशी तिथियों में नाव बनवानी चाहिए । धनिष्ठा, हस्त, रेवती तथा अश्विनी नक्षत्र राजा का दर्शन करने के लिए उत्तम होते हैं ।। ४२ ।। तीनों पूर्वा, धनिष्ठा, आर्द्रा, कृत्तिका, मृगशिरा, विशाखा आश्लेषा तथा अश्विनी युद्ध यात्रा में विजय प्रदान करने वाली होती हैं ।। ४३ ।। तीनों उत्तरा, रोहिणी, श्रवण, हस्त तथा चित्रा नक्षत्र, अष्टमी, अमावस्या तथ चतुर्दशी तिथियों में न तो गौओं को बाहर ले जाय और न तो नयी गायों को लाएँ ।। ४४-४४।। स्वाती, तीनों उत्तरा, रोहिणी, मृगशिर, मूल, पुनर्वसु, पुष्य, श्रवण और हस्त नक्षत्र में कृषि कार्य करना चाहिए । पुनर्वसु, तीनों उत्तरा, स्वाती, पूर्वाफाल्गुनी, ज्येष्ठा और शतभिष, नक्षत्रों में, द्वितीया, पञ्चमी, दशमी, सप्तमी तृतीया और त्रयोदशी तिथियों में, वृहस्पति, शुक्र, सोम तथा रविवारों में, वृष, कन्या तथा मिथुन लग्नों में खेती का कार्य प्रारम्भ करना चाहिए ।। ४५-४७।। सम्पत्ति प्राप्ति की इच्छा वाले पुरुष को केवल मंगल तथा शनिवार को छोड़कर; रेवती, रोहिणी, ज्येष्ठा, कृत्तिका, हस्त, अनुराधा तथा तीनों उत्तरा इन नक्षत्रों में बीज वपन करना चाहिए ।। ४८ ।। रेवती, हस्त, मूल, श्रवण, पूर्वाफाल्गुनी, अनुराधा, मघा तथा मृगशिरा इन नक्षत्रों में तथा मकर लग्न में धान्य छेदन अच्छा होता है । हस्त, चित्रा, पुनर्वसु, स्वाती रेवती तथा श्रवण आदि तीन नक्षत्रों में भी धान्यच्छदन शुभ होता है।।४९-५०।। स्थिरलग्न,गुरु, बुध तथा शुक्रवारों में, भरणी, पुनर्वसु, मघा, ज्येष्ठा तथा तीनों उत्तरा में धान को बखार आदि में रखना चाहिए ।। ५१ ।। ओं धनदाय सर्वधनेशाय देहि मे धनं स्वाहा । ओं नवे वर्षे ! इलादेवि ! संवर्धिनि कामरूपिणि देहि मे धनं स्वाहा ।। ५२।। इन दोनों मन्त्रों को पत्ते पर अथवा भोजपत्र पर लिखकर धान्यराशि में रख देने से धान की वृद्धि होती है । तीनों पूर्वा विशाखा, धनिष्ठा और शतभिषा इन छह नक्षत्रों में बखार से धान्य (अनाज)

सिंहतौलिगते चार्के दर्शाद्यद्द्वादशीद्वयम् । आदाविन्द्रसमुत्थानं प्रबोधश्च हरेः क्रमात् ॥ ५६ ॥ तथाा कन्यागते भानौ दुर्गोत्थाने तथाऽष्टमी । त्रिपादेषु च ऋक्षेषु यदा भद्रा तिथिर्भवेत् ॥ ५७ ॥ भौमादित्यशनैश्चारी विज्ञेयं तत्त्रिपुष्करम् । सर्वकर्मण्युपादेया विशुद्धिश्चन्द्रतारयोः॥५८॥ जन्माश्रितस्त्रिषष्ठश्च सप्तमी दशमस्तथा । एकादशः शशी येषां तेषामेव शुभं वदेत् ॥ ५९ ॥ शुक्लपक्षे द्वितीयश्च पञ्चमो नवमः शुभः । मित्रातिमित्रसाधकसंपत्क्षेमादितारकाः ॥ ६० ॥ जन्मना मृत्युमाप्नोति विपदा धनसंक्षयम् । प्रत्यरौ मरणं विद्यान्निधने याति पञ्चताम् ॥ ६१ ॥ कृष्णाष्टमीदिनादूर्ध्वं यावच्छुक्लाष्टमी दिनम् । तावत्कालं शशी क्षीणः पूर्णस्तत्रोपरि स्मृतः ॥ ६२ ॥ वृषे च मिथुने भानौ जीवे चन्द्रेन्द्रदैवते । पौर्णमासीगुरोवरि महाज्यैष्ठी प्रकीर्तिता ॥ ६३ ॥ ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा । पूर्णिमा ज्येष्ठमासस्य महाज्यैष्ठी प्रकीर्तिता ॥ ६४॥ स्वात्यन्तरे यन्त्रनिष्ठे इन्द्रस्योत्थापयेद्ध्वजम् । हर्यृक्षपादे चाश्विन्यां सप्ताहान्ते विसर्जयेत् ॥ ६५ ॥ सर्वं हेमसमं दानं सर्वे ब्रह्मसमा द्विजाः । सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे ॥ ६६ ॥ ध्वाङ्क्षी महोदरी घोरा मन्दा मन्दाकिनी तिला । राक्षसी च क्रमेणार्कात्सङ्क्रान्तिर्नामभिः स्मृता ॥ ६७॥ बालवे कौलवे नागे तैतिले करणे यदि। उत्तिष्ठन्सङ्क्रमत्यर्कस्तदा लोकः सुखी भवेत् ॥ ६८॥ गरे बवे बणिग्विष्टौ किंस्तुघ्ने शकुनौ व्रजेत्। राज्ञो दोषेण लोकोऽयं पीड्यते सम्पदा समम्॥ ६९॥ चतुष्पाद्विष्टिवाणिज्ये शयितः सङ्क्रमेद्रविः । दुर्भिक्षं राजसङ्ग्रामो दम्पत्योः संशयो भवेत्॥७०॥ कृत्तिकायां नवदिनं त्रिरात्रं रोहिणीषु च । मृगशिरः पञ्चरात्रमार्द्रासु प्राणनाशनम् ॥ ७१ ॥ पुनर्वसौ च पुष्ये च सप्तरात्रं विधीयते । नवरात्रं

---

बाहर निकालना चाहिए ।। ५३ ।। सूर्य के उत्तरायण रहने पर देवता, बगीचा तथा तड़ाग, बापी आदि की प्रतिष्ठा करानी चाहिए ।। ५४ ।। सूर्य के मिथुन राशि के होने पर शुक्लपक्ष की द्वादशी तिथि हो तो उस समय श्रीहरि का शयन कराना चाहिए ।। ५५।। सिंह तथा तुला राशि के सूर्य के होने पर क्रमशः सिंह राशि के सूर्य के होने पर शुक्ल पक्ष की द्वादशी के दिन श्रीहरि का पार्श्व परिवर्तनोत्सव तथा तुला राशि के सूर्य के होने पर शुक्ल पक्ष की द्वादशी के दिन श्रीहरि का प्रबोधोत्सव मनाना चाहिए ।। ५६ ।। कन्या राशि के सूर्य के होने पर शुक्ल पक्ष की अष्टमी तिथि को दुर्गा जी को जगाना चाहिए । त्रिपाद नक्षत्र (जिन नक्षत्रों के तीन चरण दूसरी राशि में प्रविष्ट होते हैं- जैसे कृत्तिका, पुनर्वसु, उत्तराफाल्गुनी, विशाखा, उत्तराषाढा और पूर्वाभाद्रपद) में जब भद्रा, द्वितीया, सप्तमी और द्वादशी तिथियों में रवि शनि तथा भौमवार को पड़े तो त्रिपुष्कर योग होता है । समस्त कार्यों में चन्द्रमा तथा तारा का बल देखना चाहिए ।। ५७-५८ ।। जन्म राशि से तृतीय, षष्ठ, सप्तम, दसम, एकादश जिनके राशि हों उनके लिए चन्द्रमा शुभ होता है ।। ५९ ।। शुक्ल पक्ष में द्वितीय, पञ्चम तथा नवम चन्द्रमा शुभ होता है । मित्र, अतिमित्र, साधक,संपत् तथा क्षेम आदि तारा शुभ होते हैं । जन्म का तारा मृत्युकारक, विपदा नामक तारा से धन का विनाश, प्रत्यरि नामक तारा से मृत्यु तथा निधन नामक तारा से मृत्यु होती है । अतएव इन तारों में कोई नया काम अथवा यात्रा नहीं करना चाहिए ।। ६०-६१ ।। कृष्णपक्ष की अष्टमी से शुक्लपक्ष की अष्टमी तक चन्द्रमा क्षीण रहता है तथा उसके बाद वह पूर्ण होता है ।। ६२।। अथवा मिथुन राशि के सूर्य के होने पर मृगशिरा अथवा ज्येष्ठा नक्षत्र में यदि गुरु हों तो गुरुवार को पड़ने वाली पूर्णिम महाज्येष्ठी पूर्णिमा होती है ।। ६३ ।। स्वातीनक्षत्र के आने से पूर्व ही यन्त्र पर इन्द्रेवता का पूजन करना चाहिए । एक सप्ताह के पश्चात् श्रवण अथवा अश्विनी नक्षत्र में उसका विसर्जन कर देना चाहिए ।। ६५ ।। जब सूर्यग्रहण लगता है, उस समय सभी प्रकार के दान सुवर्ण दान के समान होते हैं, सभी ब्राह्मण ब्रह्म के समान होते हैं तथा सभी जल गङ्गा के समान होते हैं ।। ६६।। रवि आदि वारों में होने वाली सूर्य की संक्रान्तियों के नाम क्रमशः- ध्वाङ्क्षी, महोदरी, घोरा, मन्दा, मन्दाकिनी,तिला तथा राक्षसी होते हैं ।। ६७।। बालव,कौलव, नाग तथा तैतिल नामक करणों में यदि सूर्य का संक्रमण होता हो तो संसार के लोग सुखी होते हैं । गर, वव, वणिक्, विष्टि तथा बालव नामक करणों में सूर्य की संक्रान्ति के होने पर राजा के दोष से प्रजा सम्पत्ति के साथ दुखी होती है ।। ६७-६९ ।। चतुष्पात्, विष्टि तथा नाग करण

तथाऽश्लेषा श्मशानान्तं मघासु च ॥ ७२ ॥ द्वौ मासौ पूर्वफाल्गुन्यामुत्तरासु त्रिपञ्चकम् । हस्ते तु दृश्यते चित्रास्वर्धमासं तु पीडनम् ॥ ७३ ॥ मासद्वयं तथा स्वातिविशाखा विंशतिर्दिनम् । मैत्रे चैव दशाहानि ज्येष्ठास्वेवार्धमासकम् ॥ ७४ ॥ मूलेन जायते मोक्षः पूर्वाषाढा त्रिपञ्चकम् । उत्तरा दिनविंशत्या द्वौ मासौ श्रवणेन च ॥ ७५॥ धनिष्ठा चार्धमासं च वारुणे च दशाहकम् । न च भाद्रपदे मोक्ष उत्तरासु त्रिपञ्चकम् ॥ ७६॥ रेवती दशरात्रं च अहोरात्रं तथाऽश्विनी । भरण्यां प्राणहानिः स्याद्गायत्री होमतः शुभम् ॥ ७७ ॥ पञ्चधान्यतिलाज्याद्यैर्धेनुदानं द्विजे शमम् । सूर्यदशाषडाब्दा स्यादिन्दोः पञ्चदशैव तु ॥ ७८ ॥ अष्टौ वर्षाणि भौमस्य दशसप्त दश बुधे । दशाब्दानि दशा पङ्गोरूनविंशद्गुरोर्दशा ॥ राहोर्द्वादशवर्षाणि भार्गवस्यैकविंशतिः॥ ७९॥

इत्यादिमहापुराण आग्नेये ज्योतिःशास्त्रकथनम् नामैकविंशत्यधिकशततमोऽध्यायः॥ १२१॥

---

## अथ द्वाविंशत्यधिकशततमोऽध्यायः

## कालगणनम्

अग्निरुवाच— **कालः समागणो वक्ष्ये गणितं कालबुद्धये । कालः समागणोऽर्कघ्नो मासैश्चैत्रादिभिर्युतः॥ १ ॥ द्विघ्नो द्विष्ठः सवेदः स्यात्पञ्चाङ्गाष्टयुतो गुणः । त्रिष्ठो मध्यो वसुगुणः पुनर्वेदगुणश्च सः ॥ २ ॥ अष्टरन्ध्राग्निहीनः स्यादधःसैकरसाष्टकैः । मध्यो हीनः षष्टिहतो लब्धयुक्तस्तथोपरि ॥ ३॥**

---

में सूर्य का संक्रमण होने पर दुर्भिक्ष होता है, राजा का संग्राम होता है तथा पति-पत्नी के जीवन का संशय होता है ।। ७० ।। कृत्तिका नक्षत्र में रोग उत्पन्न हो जाय तो वह नव दिन तक रहता है, रोहिणी में उत्पन्न होने पर वह तीन रात तक रहता है, आर्द्रा में यदि रोग उत्पन्न हो तो प्राणनाशक होता है ।। ७१ ।। पुनर्वसु अथवा पुष्य नक्षत्रों में उत्पन्न होने वाला रोग सात रात तक रहता है; आश्लेषा नक्षत्र में उत्पन्न नक्षत्र नव रात तक बना रहता है और मघा में उत्पन्न रोग अत्यन्त घातक होता है ।। ७२ ।। पूर्वाफाल्गुनी में उत्पन्न रोग दो मास तक रहता है । तीनों उत्तरा में उत्पन्न रोग पन्द्रह दिन तक रहता है । हस्त तथा चित्रा नक्षत्रों में उत्पन्न रोग दो मास तक कष्ट देता है ।। ७३ ।। स्वाती नक्षत्रों में उत्पन्न रोग दो मास तक, विशाखा नक्षत्र में उत्पन्न रोग बीस दिन तक, अनुराधा में उत्पन्न रोग दस दिन तक और ज्येष्ठा नक्षत्र में उत्पन्न रोग पन्द्रह दिन तक कष्ट देता है ।। ७४ ।। मूल नक्षत्र में उत्पन्न रोग से छुटकारा नहीं मिलता है। पूर्वाषाढ़ा में उत्पन्न होने वाला रोग पन्द्रह दिन तक रहता है । उत्तराषाढ़ा में उत्पन्न होने वाला रोग बीस दिन तक रहता है, श्रवण नक्षत्र में उत्पन्न होने वाला रोग दो मास तक रहता है ।। ७५ ।। धनिष्ठा का रोग आधे मास तक, शतभिषा नक्षत्र का रोग दस दिन तक, भाद्रपद में उत्पन्न रोग से छुटकारा नहीं मिलता है, तथा तीनों उत्तरा में उत्पन्न होने वाला रोग पन्द्रह दिन रहता है ।। ७५-७६।। रेवती का रोग दस रात तक रहता है और अश्विनी नक्षत्रका रोग एक दिन और एक रात रहता है । भरणी नक्षत्र रोग से मृत्यु संभव होता है और गायत्री के होम से कल्याण होता है ।। ७७।। पञ्चधान्य तिल तथा घी के होम ब्राह्मण को तथा धेनु दान करने से शान्ति होती है । सूर्य की दशा आठ वर्ष, चन्द्रमा की पन्द्रह वर्ष, भौम की आठ वर्ष, बुध की सत्रह वर्ष, केतु की दस वर्ष, वृहस्पति उन्नीस वर्ष, राहु की बारह वर्ष तथा शुक्र की इक्कीस वर्ष की दशा होती है । (यह अष्टोत्तरी दशा का क्रम है।) ।। ७८-७९ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का ज्योतिःशास्त्र वर्णन नामक एक सौ इक्कीसवाँ अध्याय सम्पूर्ण हुआ ॥ १२१ ॥**

---

अध्याय १२२

**अग्नि ने कहा—** अब मैं वर्षों के समुदाय स्वरूप काल का वर्णन कर रहा हूँ । और काल का ज्ञान प्राप्त करने के लिए गणित बतला रहा हूँ । (सृष्टिकाल के समुदाय से अथवा संवत्सर

न्यूनः सप्तकृतो वारस्तदधस्तिथिनाडयः । सगुणो द्विगुणश्चोर्ध्वं त्रिभिरूनो गुणः पुनः ॥ ४ ॥ अधः खरामसंयुक्तो रसार्काष्टपलैर्युतः । अष्टाविंशच्छेषपिण्डस्तिथिनाड्या अधः स्थितः ॥ ५ ॥ गुणस्तिसृभिरूनोऽर्धं द्वाभ्यां च गुणयेत्पुनः । मध्ये रुद्रगुणः कार्यो ह्यधः सैको नवाग्निभिः ॥६॥ लब्धहीनो भवेन्मध्यो द्वाविंशतिविवर्जितः। षष्टिशेषे ऋणं ज्ञेयं लब्धमूर्धं ( र्ध्वं ( ? ) विनिक्षिपेत् ॥ ७ ॥ सप्तविंशतिशेषस्तु ध्रुवो नक्षत्रयोगयोः। मासि मासि क्षिपेद्वारं द्वात्रिंशदघटिकास्तिथौ ॥ ८ ॥ द्वे पिण्डे द्वे नक्षत्रे नाड्य एकादश ह्यृणे । वारस्थाने तिथिं दद्यात्सप्तभिर्भागमाहरेत् ॥ ९ ॥ शेषवाराश्च सूर्याद्या घटिकासु च पातयेत् । पिण्डकेषु तिथिं दद्याद्धरेच्चैव चतुर्दश ॥ १० ॥ ऋणं धनं धनमृणं क्रमाज्ज्ञेयं चतुर्दशे । प्रथमे त्रयोदशे पञ्च द्वितीयद्वादशे दश ॥ ११ ॥ पञ्चदश तृतीये च तथा चैकादशे स्मृतम् । चतुर्थे दशमे चैव भवेदेकोनविंशतिः॥ १२ ॥ पञ्चमे नवमे चैव द्वाविंशतिरुदाहृताः । षष्ठाष्टमे त्वखण्डाःस्युश्चतुर्विंशतिरेव च ॥ १३ ॥ सप्तमे पञ्चविंशः स्यात्खण्डशः पिण्डकाद्भवेत् । कर्कटादे हरेद्राशिमृतुवेदत्रयैः क्रमात् ॥ १४ ॥ तुलादौ प्रातिलोम्येन त्रयो वेदरसाः क्रमात् । मकरादौ दीयते ( न्ते ) ( ? ) च रसवेदत्रयः क्रमात् ॥ १५ ॥ मेषादौ प्रातिलोम्येन

आदि के आरम्भ काल समुदाय से) बारह से गुणा करके उसमें चैत्र आदि मासों की संख्या मिला देनी चाहिए ।। १ ।। फिर उसको दो से गुणा करके दो स्थानों में रखें प्रथम स्थान में चार जोड़े और द्वितीय स्थान में आठ सौ पैंसठ जोड़ना चाहिए । इस तरह जो अङ्क आए उसे सगुण कहते हैं । फिर उसे तीन स्थान में रखें । उसमें बीच वाली संख्या को आठ से गुणा करके फिर उसे चार से गुणा करना चाहिए ।। २ ।। इस तरह तीनों का संस्कार करके उन सबों का नाम ऊर्ध्व, मध्य तथा अधः रखना चाहिए । फिर अधः अङ्ग में ३८८ घटाना चाहिए और मध्य अङ्ग में ८७ । फिर उसमें साठ का भाग देकर जो शेष बचे उसे अलग लिखना चाहिए ।। ३ ।। प्रथम अथवा ऊर्ध्व स्थान में रखी संख्या में सात का भाग देने से जो शेष बचे उसे रवि आदि वारों को जानना चाहिए । शेष दो स्थानों का जो अंक होता है वह तिथि आदि का ध्रुव होता है । सगुण को दो से गुणा करके तीन घटाना चाहिए । फिर उसके नीचे सगुण को लिखकर उसमें तीस जोड़ना चाहिए । पुनः तीनों स्थानों में क्रमशः- ६, १२ तथा ८ पलों को जोड़ दें । फिर ६० का भाग देकर प्रथम स्थान में अट्ठाइस का भाग देकर शेष को लिखना चाहिए । उसके नीचे तिथि ध्रुवा को लिखना चाहिए । सबको मिलाने पर ध्रुवा हो जायेगा । पुनः उसी सगुण को आधा करना चाहिए और उसमें तीन घटाना चाहिए । और दो से गुणा करना चाहिए ।। ४ ।। मध्य को ग्यारह से गुणा करें । अधः में एक जोड़ना चाहिए । द्वितीय स्थान में उनचालिस से भाग देकर लब्धि को प्रथम स्थान में घटाना चाहिए उसी को मध्य कहते हैं । मध्य में बाइस घटाना चाहिए उसमें ६० से भाग देने पर जो शेष हो उसे ही ऋण कहते हैं । लब्धि को ऊर्ध्व (नक्षत्र ध्रुवा) में मिला देना चाहिए । सत्ताइस से भाग देने पर जो शेष होता है वह नक्षत्र तथा योग का ध्रुवा होता है ।। ५-७ ।। अब महीने का ध्रुवा बतलाया जा रहा है । तिथि की ध्रुवा और नक्षत्र ध्रुवा को प्रत्येक मास में जोड़कर वार के स्थान में सात का भाग देने पर जो शेष बचे उसे ही तिथि का दण्ड एवं पल समझना चाहिए । नक्षत्र के लिए सत्ताइस (२७) का भाग देकर शेष के अनुसार अश्विनी आदि नक्षत्रों का दण्ड पल आदि समझना चाहिए।।८-९।। अब तिथि आदि के मान को स्पष्ट करने के लिए उसके संस्कार को बतलाते हैं । चतुर्दशी आदि तिथियें में कही गयी घड़ियों को क्रमशः जोड़ना घटाना तथा घटाना जोड़ना चाहिए। जैसे चतुर्दशी में शून्य घड़ी तथा त्रयोदशी और प्रतिपदा में पाँच घड़ी क्रमशः ऋण तथा धन करना चाहिए। द्वितीया तथा द्वादशी में दश घड़ी का ऋण एवं धन करना चाहिए।।१०-११ ।। तृतीया एवं एकादशी में पन्द्रह घड़ी का ऋण एवं धन करना चाहिए । चतुर्थी एवं दशमी में उन्नीस घड़ी का धन एवं ऋण करना चाहिए ।। १२ ।। पञ्चमी एवं नवमी में बाइस घड़ी का धन एवं ऋण करना चाहिए षष्टी तथा अष्टमी में चौबीस (२४) घड़ी का धन एवं ऋण करना चाहिए एवं सप्तमी में (२५) पच्चीस घड़ी का धन एवं ऋण संस्कार करना चाहिए। यह अंशात्मक फल चतुर्दशी आदि तिथियों में किया जाता है ।। १३-१३-१/२ ।। कर्क आदि तीन राशियों (कर्क, सिंह एवं कन्या) में क्रमशः छह, चार और तीन तथा तुला आदि तीन राशियों (तुला, वृश्चिक तथा धनु) में इसके विपरीत क्रमशः तीन चार एवं छह का संस्कार करना चाहिए । यही अखण्ड कहलाता है । मकर आदि तीन राशियों में (मकर, कुम्भ तथा मीन) में क्रमशः छह, चार तथा तीन का संस्कार करना चाहिए

त्रयो वेदरसाः क्रमात् । खेषवः खयुगा मैत्रं मेषादौ विकला धनम् ॥ १६ ॥ कर्कटे प्रातिलोम्यं स्यादृणमेतत्तुलादिके। चतुर्गुणा तिथिर्ज्ञेया विकलाश्चेह सर्वदा ॥ १७ ॥ हन्याल्लिप्ता गतागामिपिण्डसंख्याफलान्तरैः । षष्ट्याऽऽप्तं प्रथमोच्चार्ये हानौ देयं धने धनम् ॥ १८ ॥ द्वितीयोच्चरिते वर्गे वैपरीत्यमिति स्थितिः । तिथिर्द्विगुणिता कार्या षड्भागपरिवर्जिताः॥ १९ ॥ रविकर्मविपरीता तिथिनाडी समायुता । ऋणे शुद्धे तु नाड्यः स्युर्ऋणं शुध्येत नो यदा ॥ २० ॥ सषष्टिकं प्रदेयं तत्षष्ट्याधिक्ये च तत्त्यजेत् । नक्षत्रं तिथिमिश्रं स्याच्चतुर्भिर्गुणिता तिथिः ॥ २१ ॥ तिथिस्त्रिभागं संयुक्ता ऋणेन च तथान्विता । तिथिरत्र चिता कार्या तद्वेदाद्योगशोधनम् ॥ २२ ॥ रविचन्द्रौ समौ कृत्वा योगो भवति निश्चलः । एकोना तिथिर्द्विगुणा सप्तभिन्नाकृतिर्द्विधा ॥ २३ ॥ तिथिश्च द्विगुणैकोना कृताङ्कै करणं निशि । कृष्णचतुर्दश्यन्ते शकुनिः पर्वणीह चतुष्पदम् । प्रथमे तिथ्यर्धतो हि किंस्तुघ्नं प्रतिपन्मुखे ॥ २४ ॥

इत्यादिमहापुराण आग्नेये कालगणनं नाम द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

अथ त्रयोविंशत्यधिकशततमोऽध्यायः

## युद्धजयार्णवीयनानायोगाभिधानम्

अग्निरुवाच– **वक्ष्ये जयशुभाद्यर्थं सारं युद्धजयार्णवे । अ इ उ ए ओ स्वराः स्युः क्रमान्नन्दादिका तिथिः ॥ १ ॥ कादिहान्ता भौमरवी ज्ञसोमौ**

तथा मेष आदि तीन राशियों में इसके विपरीत तीन, चार एवं छह का संस्कार करना चाहिए ।। १४-१५ ।। (इसी को कलात्मक फल संस्कार कहते हैं।) मेष आदि तीन राशियों में क्रमशः ५०, ४० तथा १२ का धन करना चाहिए । कर्कादि तीन राशियों में इनके विपरीत १२, ४० तथा ५० का धन करना चाहिए । तुल आदि छह राशियों में भी इसी प्रकार से ऋण संस्कार करना चाहिए । चतुर्गुणित तिथियों में विकलात्मक फल संस्कार किया जाता है ।। १६-१७ ।। गत तथा आगामी खण्डों के अन्तर से कला को गुणित करना चाहिए और ६० से भाग दें । लब्धि को प्रथमोच्चार में ऋण फल रहने पर भी धन करना चाहिए और धन रहने पर भी धन करना चाहिए ।। १८ ।। द्वितीयोच्चरित वर्ग के रहने पर विपरीत करना चाहिए । तिथि को द्विगुणित करना चाहिए और उसका छठा भाग उसमें घटा देना चाहिए ।। १८ ।। सूर्य संस्कार के विपरीत तिथि दण्ड को मिलाना चाहिए । ऋण फल को घटा देने पर स्पष्ट रूप से तिथि का मान होता है । यदि ऋणफल न घटे तो उसमें साठ (६०) जोड़ देना चाहिए । यदि फल साठ (६०) से अधिक हो तो उसमें साठ घटाकर शेष का संस्कार करना चाहिए । इससे तिथि के साथ-साथ नक्षत्र का भी मान निकल आयेगा । उसके बाद चौगुनी तिथि में तिथि का त्रिभाग मिलाकर उसमें से ऋणफल निकाल देना चाहिए ।। २०-२१।। तिथि का मान स्पष्ट हो गया सूर्य और चन्द्रमा को योग करके भी 'योग' का मान निश्चित होता है । तिथि की संख्या से एक घटाकर उसे दूना करके फिर गुणनफल से एक घटाने पर चर इत्यादि करण बन जाते हैं । कृष्ण पक्ष की चतुर्दशी के उत्तरार्द्ध से शकुनि,चतुष्पद, किंस्तुघ्न और नाग ये चार स्थिर करण होते हैं । इस तरह शुक्लपक्ष की प्रतिपदा तिथि के पूर्वार्द्ध में किंस्तुघ्नकरण होता है ।। २२-२४ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का काल गणना नामक एक सौ बाइसवाँ अध्याय सम्पूर्ण हुआ ॥ १२२ ॥**

अध्याय १२३

**अग्नि ने कहा–** अब मैं युद्धजयार्णव में विजयरूपी शुभ प्रयोजन की सिद्धि के लिए सारतत्त्व का वर्णन करूँगा । अ, इ, उ, ए तथा ओ ये पाँच स्वर हैं जो क्रमशः नन्दा आदि

गुरुभार्गवौ । शनिर्दक्षिणनाड्यां तु भौमार्कशनयः परे ॥ २ ॥ खार्णवः खरसैर्गुण्यो रुद्रैर्भागं समाहरेत् । रसाहतं तु तत्कृत्वा पूर्वभागेन भाजयेत्॥३॥ वह्निभिश्चाऽऽहतं कृत्वा रूपं तत्रैव निक्षिपेत् । स्पन्दनं नाड्याः पलानि सप्राणस्पन्दनं पुनः ॥ ४ ॥ अनेनैव तु मानेन उदयन्ति दिने दिने । स्फुरणैस्त्रिभिरुच्छ्वास उच्छ्वासैस्तु पलं स्मृतम् ॥ ५ ॥ षष्टिभिश्च पलैर्लिप्ता लिप्ताषष्टिस्त्वहर्निशम् । पञ्चमार्धोदये बालकुमारयुववृद्धकाः॥६॥ मृत्युर्येनोदयस्तेन चास्तमेकादशांशकैः । कुलागमे भवेद्भङ्गः समृत्युः पञ्चमोऽपि वा ॥ ७ ॥ शनिचक्रे चार्धमासं ग्रहाणामुदयः क्रमात् । विभागैः पञ्चदशभिः शनिभागस्तु मृत्युदः ॥ ८ ॥ दशकोटिसहस्राणि अर्बुदं न्युर्बुदं हरेत् । त्रयोदश च लक्षाणि प्रमाणं कूर्मरूपिणः ॥ ९॥ मघादौ कृत्तिकाद्यतस्तद्देशान्तः शनिस्थितौ । राहुचक्रे च सप्तोर्ध्वमधः सप्त च संलिखेत् ॥ १०॥ वाय्वग्न्योश्चैव नैर्ऋत्ये पूर्णिमाऽऽग्नेय भागतः । अमावास्यां वायवे च राहुर्वैतिथिरूपकः ॥ ११॥ रकारं दक्षभागे तु हकारं वायवे लिखेत् । प्रतिपदादौ ककारादीन्सकारं नैर्ऋते पुनः ॥ १२॥ राहोर्मुखे तु भङ्गः स्यादिति राहुरुदाहृतः । विष्टिरग्नौ पौर्णमास्यां करालीन्द्रे तृतीयकम् ॥ १३॥ घोरा याम्यां तु सप्तम्यां दशम्यां रौद्रसौम्यगा । चतुर्दश्यां तु वायव्ये चतुर्थ्यां वरुणाश्रये ॥ १४॥ शुक्लाष्टम्यां दक्षिणे च एकादश्यां भृशं त्यजेत् । रौद्रश्चैव तथा श्वेतो मैत्रः सारभटस्तथा॥१५॥

---

(भद्रा, जया,रिक्ता तथा पूर्णा) तिथियों को सूचित करते हैं ।। १ ।। 'कैसे लेकर ह' पर्यन्त व्यञ्जन वर्णों को उनके नीचे क्रमशः भौम, रवि, बुध, सोम, वृहस्पति, शुक्र तथा शनि को लिखना चाहिए । किन्तु शनि, मङ्गल तथा सूर्य को दाहिनी ओर लिखना चाहिए ।। २ ।। ४० (चालीस) का साठ से गुणा करके ग्यारह से भाग देना चाहिए । भजन फल में छह से गुणा करके फिर उसमें ग्यारह से भाग देना चाहिए । लब्धि तीन से गुणा करके एक मिला दें तो उतने ही बार नाड़ी के स्फुरण पल होते हैं । उसके बाद भी अहर्निश नाड़ी का स्फुरण होता रहता है । तीन स्फुरण का एक उच्छ्वास होता है । उच्छ्वास को अणु भी कहते हैं । छह उच्छ्वासों का एक पल होता है । साठ पलों का एक लिप्ता (दण्ड) होता है । और साठ दण्ड का एक रात एक दिन (अहोरात्र) होता है । अ, इ, उ,ए तथा ओ इन पाँचों स्वरों की क्रमशः, बाल, कुमार, युवा, वृद्ध तथा मृत्यु ये पाँच संज्ञाएँ होती हैं। इनमें से किसी एक का स्वर का उदय होने पर उसका अस्त पाँचवें खण्ड पर होता है । इनमें से प्रत्येक के अस्त होने का काल मान दिन को ग्यारहवाँ अंश ५ दण्ड २७ पल हुआ करता है । अर्थात् किसी स्वर के उदय होने पर दूसरा स्वर ५ दण्ड पल पर उदित होगा । मृत्युस्वर के उदित होने पर युद्ध करने पर पराजय के साथ-साथ मृत्यु भी होती है ।। ३-७ ।। **शनिचक्र का वर्णन–** शनिचक्र में ग्रहों का उदय आधे मास पर होता है । इन पन्द्रह विभागों में शनि का भाग युद्ध के लिए मृत्यु कारक होता है । अर्थात् शनि प्रत्येक राशि पर ३ मास रहता है अतएव इसमें दिनों की संख्या ३०X३० = ९०० हुई। इसमें पन्द्रह का भाग देने पर ९००/१५ = ६० लब्धि हुआ । अतएव शनिचक्र में प्रत्येक ग्रह साठ-साठ दिन पर उदित होते हैं । इनमें से जब शनि को उदय का समय आता है तो वह युद्ध के लिए मृत्युदायक होता है । उस समय में युद्ध नहीं करना चाहिए । दस करोड़ हजार तथा तेरह लाख इतने का ही दशांश मिला दें तो उतने ही योजन में कूर्मरूपी शनिबिम्ब के पृष्ठ का क्षेत्रफल होता है । अर्थात् शनि विम्ब पृष्ठ का क्षेत्रफल ११००१४३०००० ग्यरह अरब, चौदह लाख तीस हजार योजन होता है । मघा के प्रथम चरण से लेकर कृत्तिका नक्षत्र के अन्तिम चरण तक शनि की स्थिति होती है ।। ९ ।। **राहुचक्र का वर्णन–** राहुचक्र के लिए सात खड़ी तथा सात पड़ी रेखाएँ खींचनी चाहिए। उसमें वायव्यकोण से अग्नि कोण तक शुक्ल पक्ष की तिथियों को लिखना चाहिए । एवं अग्निकोण से ईशानकोण को लिए हुए वायव्य कोण तक कृष्णपक्ष की अमावस्या पर्यन्त की तिथियों को लिखना चाहिए । इसी तरह तिथि रूपी राहु का न्यास होता है । र को दक्षिण दिशा में और ह को वायव्य कोण में लिखना चाहिए ।। १०-११ ।। प्रतिपद् आदि तिथियों के सहारे ककार आदि को लिखना चाहिए, सकार को नैर्ऋत्यकोण में लिखना चाहिए । यह कहलाता है राहुचक्र । राहुमुख में यात्रा करने से यात्रा भंग होता है ।। १२ ।। **भद्रानिवास का वर्णन–** पूर्णिमा तिथि को होने वाली भद्रा का नाम विष्टि तथा उसका निवास अग्निकोण में होता है । तृतीया तिथि को होने वाली भद्रा का नाम कराली होता है और उसका निवास पूर्वदिशा में होता है ।सप्तमी तिथि को होने वाली भद्रा का नाम घोरा तथा उसक निवास

सावित्रो विरोचनश्च जयदेवोऽभिजित्तथा । रावणो विजयश्चैव नन्दी वरुण एव च ॥ १६॥ यमसौम्यौ भवश्चान्ते दश पञ्च मुहूर्तकाः । रौद्रे रौद्राणि कुर्वीत श्वेते स्नानादिकं चरेत् ॥ १७॥ मैत्रे कन्याविवाहादि शुभं सारभटे चरेत् । सावित्रे स्थापनाद्यं वा विरोचने नृपक्रिया ॥ १८॥ जयदेवे जयं कुर्याद्रावणे रणकर्म च । विजये कृषिवाणिज्यं पटबन्धं च नन्दिनि ॥ १९॥ वरुणे च तडागादि नाशकर्म यमे चरेत् । सौम्ये सौम्यादि कुर्वीत भवेल्लग्नमहर्दिवा ॥ २०॥ योगा नाम्नाऽविरुद्धाः स्युर्योगा नाम्नैव शोभनाः । राहुरिन्द्रात्समीरं च वायोर्दक्षं यमच्छिवम् ॥ २१॥ शिवादाप्यं जलादग्निरग्नेः सौम्यं ततस्त्रयम् । ततश्च संक्रमं हन्ति चतस्रो घटिका भ्रमन् ॥ २२ ॥ राहुचक्रम् चण्डीन्द्राणी वाराही च मुशली गिरिकर्णिका । बला चातिबला क्षीरी मल्लिकाजातियूथिकाः ॥ २३ ॥ यथालाभं धारयेत्ताः श्वेतार्कश्च शतावरी । गुडूची वागुरी दिव्या ओषध्यो धारिता जये॥२४॥ ॐ नमो भैरवाय खड्गपरशुहस्ताय ॐ हूं बिघ्नविनाशाय ॐ हूं फट् ॥ २५ ॥ अनेनैव तु मन्त्रेण शिखाबन्धादिकृज्जये । तिलकं चाञ्जनं चैव धूपलेपनमेव च ॥ २६ ॥ स्नानपानानि तैलानि योगधूलिमतः शृणु । सुभगा मनः शिला तालं लाक्षारससमन्वितम् ॥ २७॥ तरुणीक्षीरसंयुक्तो ललाटे तिलको वशे । विष्णुक्रान्ता च सर्पाक्षी सहदेवी च रोचना ॥ २८ ॥ अजादुग्धेन संपिष्टं तिलको वश्यकारकः । प्रियंगुकुङ्कुमं कुष्ठं मोहनी तगरं घृतम् ॥ २९ ॥ तिलको वश्यकृच्चैव रोचना रक्तचन्दनम् । निशा मनःशिला तालं प्रियंगुः सर्षपास्तथा ॥ ३०॥

---

दक्षिण दिशा में होता है । सप्तमी तथा दशमी तिथि को होने वाली भद्रा का नाम रौद्रा तथा उसका निवास क्रमशः ईशानकोण तथा उत्तर दिशा में होता है ।। १३ ।। चतुर्दशी तिथि को भद्रा वायव्यकोण में, चतुर्थी तिथि को पश्चिम दिशा में, शुक्ल पक्ष की अष्टमी तथा एकादशी के दक्षिण दिशा में भद्रा रहती है । प्रत्येक शुभ कार्य में भद्रा का त्याग करना चाहिए ।। १४ ।। पन्द्रह मुहूर्त होते हैं- रौद्र, श्वेत,मैत्र, सारभट, सावित्र, विरोचन, नन्दी,वरुण, यम, सौम्य तथा भव ।। १५-१६ ।। रौद्र मुहूर्त में भयंकर कार्यों को करना चाहिए, श्वेत में स्नान आदि करना चहिए। मैत्र मुहूर्त में कन्या का विवाह आदि करना चाहिए । सारभट में शुभ कार्यो को करना चाहिए ।। १५-१७ ।। सावित्र में स्थापना आदि कार्यों को करना चाहिए, विरोचन में राज्य कार्य करना चाहिए । जय मुहूर्त में विजय कार्य को करना चाहिए, रावण मुहूर्त में युद्ध कार्य करना चाहिए ।। १८ ।। विजय में कृषि एवं व्यापार कर्म करना चाहिए, नन्दी मुहूर्त में वस्त्र बनाने का कार्य करना चाहिए, वरुण मुहूर्त में तडाग (बावली) निर्माण आदि कार्य करना चाहिए तथा यम मुहूर्त में नाश करने का कार्य करना चाहिए ।। १९ ।। सौम्य मुहूर्त में सौम्य कार्य करना चाहिए । इन मुहूर्तों में लग्न दिनभर एवं रात्रिभर रहता है । अपने नाम से ही योग विरुद्ध होता है तथा अपने नाम से ही शोभन होता है ।। २० ।। दैनिक राहु प्रतिदिन पूर्व दिशा से वायुकोण तक,वायुकोण से दक्षिणदिशा तक, दक्षिण दिशा से ईशानकोण तक, ईशानकोण से पश्चिम दिशा तक, पश्चिम से अग्निकोण तक, एवं अग्निकोण से उत्तर दिशा तक, तीन-तीन दिशा करके चार घटियों में भ्रमण करता है ।। २१-२२ ।। (अब औषधियों के लेपादि द्वारा विजय का वर्णन किया जा रहा है ।) चण्डी, इन्द्राणी (सिन्धुवार) वाराही (वाराहीकंद) मुशली (तालमूली) गिरिकर्णिका (अपराजिता) बला (कुट) अतिबला (कंघी) क्षीरी (सिरखोला) मल्लिका (मोतियाँ) जहाती (चमेली) यूथिका (जूही) श्वेतार्क (सफेद मदार) शतावरी, गुडूची, वागुरी इन दिव्य औषधियों को धारण करके संग्राम में जाने से विजय की प्राप्ति होती है ।। २३-२४ ।। 'ओं नमो भैरवाय खड्गपरशुहस्ताय ओं हूँ विघ्नविनाशकाय ओं हूँ फट् ।। २५ ।। इस मन्त्रसे शिखा बाँधकर युद्ध करने से विजय की प्राप्ति होती है । अब तुम तिलक, अञ्जन, धूपलेपन, स्नान, पान, तैल तथा योगधूलि का विवरण सुनो ।। २६ ।। सुभगा (नील दूर्वा) मैनसिल, हरताल इन सबको लाक्षारस में मिलाकर, स्त्री के दूध में घोंटकर ललाट में तिलक करने से शत्रु वश में हो जाता है । विष्णुकान्ता सर्पाक्षी (महिकंद) सहदेइया, गोरोचन,इनको बकरी के दूध में पिसकर तिलक लगाने से शत्रु वश में हो जाता है ।। २७-२८ ।। प्रियंगु नाग केसर, कुंकुम, कुठ, चमेली, तगर, घी इन सबको मिलाकर तिलक लगाने से वह वश्यकारक होता है । गोरोचन, रक्तचन्दन, निशा (हल्दी) मैनसिल, हरिताल, प्रियंगु (नागकेसर) तथा सरसों, मोहनी (चमेली) दूर्वा, विष्णुकांता,सहदेइया और जटामांसी इन सबों को बिजौरा नींबू के रस में पिसकर ललाट में किया हुआ तिलक

**मोहनी हरिता कान्ता सहदेवी शिखा तथा । मातुलुङ्गरसैः पिष्टं ललाटे तिलको वशे ॥ ३१ ॥ सेन्द्राः सुरा वशं यान्ति किं पुनः क्षुद्रमानुषाः। मञ्जिष्ठा चन्दनं रक्तं कटुकन्दा विलासिनी ॥ ३२ ॥ पुनर्नवासमायुक्तो लेपोऽयं भास्करो वशे । चन्दनं नागपुष्पं च मञ्जिष्ठा तगरं वचा ॥ ३३॥ लोध्रं प्रियंगुरजनी मांसीतैलं वशंकरम् ॥ ३४ ॥**

इत्यादिमहापुराण आग्नेये युद्धजयार्णवीयनानायोगाभिधानं नाम त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

## अथ चतुर्विंशत्यधिकशततमोऽध्यायः

### युद्धजयार्णवीयज्योतिःशास्त्रकारः

अग्निरुवाच– **ज्योतिःशास्त्रादिसारं च वक्ष्ये युद्धजयार्णवे । वेलामन्त्रौषधाद्यं च यथोमामीश्वरोऽब्रवीत् ॥ १ ॥** देव्युवाच- **देवैर्जिता दानवाश्च येनोपायेन तद्वद । शुभाशुभविवेकाद्यं ज्ञानं युद्धजयार्णवम् ॥ २ ॥** ईश्वर उवाच– **मूलदेवच्छया जाता शक्तिः पञ्चदशाक्षरा । चराचरं ततो जातं यामाराध्याखिलार्थवित् ॥ ३ ॥ मन्त्रपीठं प्रवक्ष्यामि पञ्चमन्त्रसमुद्भवम् । ते मन्त्राः सर्वमन्त्राणां जीविते मरणे स्थिताः ॥ ४ ॥ ऋग्यजुः सामाथर्वाख्यवेदमन्त्राः क्रमेण ते । सद्योजातादयो मन्त्रा ब्रह्मा विष्णुश्च रुद्रकः ॥ ५ ॥ ईशः सप्तशिखा देवाः शब्दाद्याः पञ्च च स्वराः । अ इ उ ए ओ कलाश्च मूलं ब्रह्मेतिकीर्तितम् ॥ ६ ॥ काष्ठमध्ये यथा वह्निरप्रवृद्धो न दृश्यते । विद्यमाना तथा देहे शिवशक्तिर्न दृश्यते ॥ ७ ॥ आदौ शक्तिःसमुत्पन्ना ओंकारस्वरभूषिता । ततो बिन्दुर्महादेवि एकारेण व्यवस्थितः ॥ ८ ॥ जातो नाद उकारस्तु नदते हृदि संस्थितः । अर्धचन्द्रादिकारस्तु**

---

वश्यकारक होता है ।। २९-३१ ।। इन सबों के तिलक लगाने से इन्द्र आदि देवता भी बश में हो जाते हैं सामान्य मनुष्य की कौन सी बात है ।। ३१ ।। मञ्जिष्ठ, रक्तचन्दन, सहिजन,विलासिनी तथा पुनर्नवा, इनको मिलाकर लेप करने से सूर्य वश में हो जाते हैं । चन्दन (मलय चन्दन) नागपुष्प (सोनचम्पा) मञ्जीठ, तगर, वच, लोध्र, प्रियंगु (नागकेसर) तथा रजनी (जटामांसी) इन सबों के सम्मिश्रण से बना हुआ तैल वश्यकारक होता है ।। ३२-३४ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का युद्ध जयार्णवीय अनेकयोग वर्णन नामक एक सौ तेइसवाँ अध्याय सम्पूर्ण हुआ ॥ १२३ ॥**

**अग्निदेव ने कहा–** अब मैं युद्ध जयार्णव विषयक ज्योतिष शास्त्र का सार बतलाऊँगा । जैसा कि शिव जी ने पार्वती से युद्ध में विजय प्राप्ति की बेला, मन्त्र तथा औषधि आदि को बतलाया था ।। १ ।। **पार्वती जी ने कहा–** उस युद्ध जयार्णव विषयक ज्ञान तथा शुभ एवं अशुभ का विवेक आदि मुझे बतलाइये ।। २ ।। **श्री शिव जी ने कहा–** मूलदेव परमात्मा की इच्छा से पन्द्रह अक्षरों वाली शक्ति उत्पन्न हुयी उसी से चराचर जगत् की उत्पत्ति हुयी ।उस शक्ति की आराधना करके मनुष्य सर्वज्ञ हो जाता है ।। ३ ।। अब मैं पाँच मंत्रों के योग से बने मन्त्रपीठ का वर्णन करूँगा। ये मन्त्र सभी मन्त्रों के जीवन एवं करण अर्थात् सद्भाव तथा असद्भाव में स्थित हैं । ऋग्वेद, यजुर्वेद, सामवेद तथा अथर्ववेद के मन्त्र प्रथम मन्त्र हैं । सद्योजात आदि द्वितीयमन्त्र हैं, ब्रह्मा, विष्णु, एवं रुद्र ये तृतीय प्रकार के मन्त्र हैं, ईश, सप्तशिखा (अग्नि) तथा इन्द्र आदि देवता चौथे प्रकार के मन्त्र हैं और अ, इ,उ, ए तथा ओ ये पाँचवें प्रकार के मन्त्र हैं ; इन स्वरों को मूलब्रह्म भी कहते हैं ।। ४-६ ।। जिस तरह काष्ठ की अग्नि की प्रतीति विना जलाए नहीं होती है उसी तरह से विद्यमान भी शिवशक्ति की प्रतीति नहीं होती है ।। ७ ।। हे महादेवि ! सर्वप्रथम ओंकार स्वर से विभूषित शक्ति उत्पन्न हुयी उसके पश्चात् विन्दु एकार के रूप में परिणत हुआ ।। ८ ।। फिर नाद पैदा हुआ उससे उकार पैदा हुआ और वह हृदय में स्थित हुआ।

मोक्षमार्गस्य बोधकः ॥ ९ ॥ अकारोऽव्यक्त उत्पन्नो भोगमोक्षप्रदः परः । अकार ऐश्वरे मुक्तिर्निवृत्तिश्च कला स्मृता ॥ १० ॥ अकारो बीजः प्राणाख्या इडा शक्तिः स्थिरा स्मृता । इकारश्च प्रतिष्ठाख्यो रसोयानश्च पिङ्गला ॥ ११ ॥ क्रूरा शक्तिरीबीजः स्याद्धरबीजोऽग्निरूपवान् । विद्यासम्माना गान्धारी शक्तिश्च दहनी स्मृता ॥ १२ ॥ ए शान्तिर्वायुपस्पर्शो ओवायुश्चलक्रिया । ओंकारः शान्त्यतीताख्यः खशब्दयूथपालिनः॥१३॥ पञ्च वर्गाः स्वरा जाताः कुजज्ञगुरुभार्गवाः । शनिः क्रमादकाराद्याः ककाराद्यास्त्वधः स्थिताः ॥ १४ ॥ एतन्मूलमतः सर्वं ज्ञायते सचराचरम् । विद्यापीठं प्रवक्ष्यामि प्रणवः शिव ईरितः ॥ १५॥ उमा सोमः स्वयं शक्तिर्वामा ज्येष्ठा च रौद्र्यपि । ब्रह्मा विष्णुः क्रमाद्रुद्रो गुणाः सर्गादयस्त्रयः॥१६॥ रत्ननाडीत्रयं चैव स्थूलः सूक्ष्मः परोऽपरः । चिन्तयेच्छ्वेतवर्णं तं मुञ्चमानं परामृतम् ॥ १७ ॥ प्लाव्यमानं यथाऽऽत्मानं चिन्तयेत्तं दिवानिशम् । अजरत्वं भवेद्देवि शिवत्वमुपगच्छति ॥ १८ ॥ अंगुष्ठादौ न्यसेदङ्गान्नेत्रमध्येऽथ देहके । मृत्युञ्जयं ततःप्राच्य रणादौ विजयी भवेत् ॥ १९ ॥ शून्यो निरालयः शब्दः स्पर्शस्तिर्यङ्नतं स्पृशेत् । रूपस्योर्ध्वगतिः प्रोक्ता जलस्याधः समाश्रिता ॥ २० ॥ सर्वस्थानविनिर्मुक्तो गन्धो मध्ये च मूलकम्। नाभिमूले स्थितं कन्दं शिवरूपं तु मण्डितम् । शक्तिव्यूहेन सोमोऽर्को हरिस्तत्र व्यवस्थितः ॥ २१ ॥ दशवायुसमोपेतं पञ्चतन्मात्रमण्डितम्॥२२॥

---

अर्धचन्द्र से इकार पैदा हुआ, जो मोक्षमार्ग का बोधक है ।। ९ ।। उसके पश्चात् भोग तथा मोक्षप्रद अकार उत्पन्न हुआ और अकार सर्वशक्तिमान प्रवृत्ति तथा निवृत्ति की कला है ।। ९-१०।। (यही पाँचों स्वरों की उत्पत्ति का प्रकार है ।) अकार शरीर के प्रधान शक्ति प्राणरूप से स्थिर है । इसी को इडा भी कहते हैं । प्रतिष्ठा नामक इकार शरीर में रसरूप से तथा पालक रूप से स्थित है । इसे ही पिङ्गला कहते हैं ।। ११ ।। ई बीज क्रूरा शक्ति है । हरीबीज (उकार) स्वर शरीर में अग्निरूप से रहता है । यही समान का बोध कराने वाली विद्या है । इसे ही गान्धारी भी कहते हैं । यह दहनात्मिका शक्ति से युक्त है ।। १२ ।। एकार स्वर शरीर में जलरूप से विद्यमान रहती है । इसमें शान्ति की क्रिया विद्यमान रहती है । ओकार स्वर शरीर में वायुरूप से विद्यमान रहता है तथा उसमें चलन क्रिया होती रहती है । ओंकार शान्त्यतीत नाम से बोधित होता है और वह शब्द नामक गुण वाले आकाश रूप से शरीर में विद्यमान रहता है ।। १३।। इस तरह से उत्पन्न होने वाले पाँचों स्वरों (अ, इ, उ, ए तथा ओ) के स्वामी क्रमशः भौम, बुध, गुरु, शुक्र तथा शनि हैं । इन पाँचों स्वरों के नीचे क्रमशः ककार आदि वर्ण होते हैं । शब्दब्रह्म मूलक ही यह सम्पूर्ण सचराचर जगत् है ।। १४ ।। अब मैं विद्यापीठ का वर्णन करूँगा । विद्यापीठ में शिव प्रणव रूप से कहे गए है। और उमा स्वयं सोम स्वरूपा (अमृतस्वरूपा) हैं । उन्हीं को वामाशक्ति, ज्येष्ठा शक्ति तथा रौद्री शक्ति भी कहते हैं । ब्रह्मा, विष्णु तथा रुद्र ये तीनों गुण हैं । इन्हीं से जगत् की सृष्टि, पालन तथा संहार होते हैं ।। १५-१६ ।। शरीर के भीतर तीन रत्न नाड़ियाँ हैं, स्थूल, सूक्ष्म तथा पर । साधक को यह ध्यान करना चाहिए कि रत्न नाड़ी त्रय का वर्ण श्वेत है, इनसे सदा अमृत का स्राव हो रहा है, उससे आत्मा अहर्निश आप्लावित होती रहती है । हे देवि ! इस प्रकार से चिन्तन करने वाला साधक शिवतत्त्व को प्राप्त कर लेता है ।। १७-१८ ।। इसके पश्चात् साधक अंगुष्ठ आदि अंगों में नेत्र में तथा देह में मृत्युञ्जय का न्यास करे । इस तरह से मृत्युञ्जय का न्यास करें । इस तरह से मृत्युञ्जय की पूजा करके साधक संग्राम आदि में विजयी होता है ।। १९ ।। आकाश शून्य, निराश्रय और शब्द गुणात्मक है, वायु स्पर्श गुण वाला, तिरछी गति वाला और झुककर स्पर्श करने वाला होता है । रूप अर्थात् अग्नि की ऊर्ध्वगति बतलायी गयी है और जल की नीचे की ओर गति होती है ।। २० ।। गन्धगुणवती पृथ्वी सभी स्थानों को छोड़कर मध्य में विद्यमान है, वह सबों का मूल है । नाभि के मूल में कन्द रूप से श्रीशिवजी सुशोभित हो रहे हैं ।। २१ ।। वहीं पर शक्तिव्यूह के साथ सोम, सूर्य

कालानलसमाकारं प्रस्फुरन्तं शिवात्मकम् । तज्जीवं जीवलोकस्य स्थावरस्य चरस्य च ॥ तस्मिन्नष्टे मृतं मन्ये मन्त्रपीठेऽनिलात्मकम् ॥ २३ ॥

इत्यादिमहापुराण आग्नेये युद्धजयार्णवीयज्योतिःशास्त्रसारवर्णनं नाम चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

## अथ पञ्चविंशत्यधिकशततमोऽध्यायः

## युद्धजयार्णवीयनानाचक्राणि

ईश्वर उवाच– **ॐ ह्रीं कर्णमोटनि बहुरूपे बहुदंष्ट्रे हूं फट्, ॐ हः, ॐ ग्रस ग्रस कृन्त कृन्त च्छक च्छक हूं फट्, नमः ॥ १ ॥ पठ्यमानो ह्ययं मन्त्रः क्रुद्धः संरक्तलोचनः । मारणे पातने वाऽपि मोहनोच्चाटने भवेत् ॥ कर्णमोटी महाविद्या सर्ववर्णेषु रक्षिका ॥ २ ॥ इति नानाविद्या ( द्याः ) पञ्चोदयं प्रवक्ष्यामि स्वरोदय समाश्रितम् । नाभिहृदन्तरं यावत्तावच्चरति मारुतः ॥ ३ ॥ उच्चाटयेद्रणादौ तु कर्णाक्षीणि प्रभेदयेत् । करोति साधकः क्रुद्धो जपहोमपरायणः ॥ ४ ॥ हृदयात्पायुकं कण्ठं ज्वरादाहारिमारणे । कण्ठोद्भवो रसो वायुः शान्तिकं पौष्टिकं रसम् ॥ ५ ॥ दिव्यं स्तम्भं समाकर्षं गन्धो नासान्तिको भ्रुवः । गन्धलीनं मनः कृत्वा स्तम्भयेन्नात्र संशयः ॥ ६ ॥ स्तम्भनं कीलनाद्यं च करोत्येव हि साधकः । चण्डघण्टा कराली च सुमुखी दुर्मुखी तथा ॥ ७ ॥ रेवती प्रथमा घोरा वायुचक्रे तु ता यजेत् । उच्चाटकारिका देव्यः स्थितास्तेजसि संस्थिताः॥८॥ सौम्या च भीषणी देवी जया च विजया तथा । अजिता चापराजिता महाकोटी च रौद्रया ॥ ९ ॥ शुष्ककाया प्राणहरा रसचक्रे**

---

तथा श्रीहरि विद्यमान हैं। वहीं पर पञ्चतन्मात्राओं से समलंकृत दस प्राणवायुओं से युक्त कालाग्नि के समान देदीप्यमान श्रीशिवजी विद्यमान हैं। वे ही सम्पूर्ण जड़ जङ्गमात्मक जीवलोक के आत्मा हैं । उसके मन्त्रपीठ के नष्ट हो जाने पर वायुस्वरूप जीव का नाश हो जाता है, ऐसा मैं मानता हूँ ।। २२-२३ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का युद्धजयार्णवीय ज्योतिःशास्त्र का सार वर्णन नामक एक सौ चौबीसवाँ अध्याय सम्पूर्ण हुआ ॥ १२४ ॥**

**श्रीशिवजी ने कहा–** ओं ह्रीं कर्णमोटनि बहुरूपे बहुदंष्ट्रे हूँ फट्, ओं हः ग्रस ग्रस, कृन्त, कृन्त, च्छक च्छक हूँ फट् नमः ।। १ ।। इस मन्त्र को पढ़ने वाला पढ़ने मात्र से क्रुद्ध हो जाता है, उसकी आँखें लाल हो जाती हैं । इस मन्त्र को ही कर्णमोटी महाविद्या कहते हैं, यह सभी वर्णों में रक्षा करने वाली है । यह मन्त्र, मारण, पातन, मोहन तथा उच्चाटन करने का काम करने वाला है ।। २ ।। अब मैं स्वरोदय से सम्बद्ध, पञ्चोदय का वर्णन कर रहा हूँ । नाभि से लेकर हृदयपर्यन्त जो स्थान है, उसे मारुत चक्र कहते हैं । क्रुद्ध साधक जप तथा होम करके उससे संग्राम आदि में उच्चाटन कर्म करे तथा उसके कर्ण तथा नेत्रों को वायु से प्रभेदन करे ।। ३-४ ।। शत्रु के मारण कार्य में लगा हुआ साधक हृदय से लेकर गुदा मार्ग तक जाने वायु से ज्वरदाह कार्य करे । इसी को वायुचक्र कहते हैं। हृदय से लेकर कण्ठ तक जाने वाली वायुरस है । इसे ही रसचक्र कहते हैं । इससे शान्ति कर्म किया जाता है, इसका रस पौष्टिक है ।।५।। भौंहें से लेकर नासिका तक जाने वाली वायु को दिव्य कहते हैं । इसे ही तेजश्चक्र कहते हैं । इसका गुण गन्ध है । इससे स्तम्भन तथा आकर्षण का कार्य होता है । साधक नासिकाग्र में अपने मन को लगाकर निःसंदेह स्तम्भन का कार्य कर देता है ।। ६ ।। यह साधक स्तम्भन तथा कीलन तो करता ही है । साधक को चाहिए कि वह वायुचक्र में तेज में स्थित रहने वाली तथा उच्चाटन क्रिया करने वाली चन्द्रघण्टा, कराली, सुमुखी, दुर्मुखी, रेवती, प्रथमा तथा घोरा इन देवियों की पूजा करे ।। ७-८ ।। सौम्या, भीषणा, देवी, जया, विजया, अजिता, अपराजिता, महाकोटि,

स्थिता अमूः । विरूपाक्षी परा दिव्यास्तथा चाऽऽकाशमातरः ॥ १० ॥ संहारी जातहारी च दंष्ट्राला शुष्करेवती । पिपीलिका पुष्टिहरा महापुष्टिप्रवर्धना॥११॥ भद्रकाली सुभद्रा च भद्रभीमा सुभद्रिका । स्थिरा च निष्ठुरा दिव्या निष्कम्पा गदिनी तथा ॥ १२ ॥ द्वात्रिंशन्मातरश्चक्रे अष्टाष्टक्रमशः स्थिताः । एक एव रविश्चन्द्र एकश्चैकैकशक्तिक ॥ १३ ॥ भूतभेदेन तीर्थानि यथा तोयं महीतले । प्राण एको मण्डलैश्च भिद्यते भूतपञ्जरे ॥ १४ ॥ वामदक्षिणयोगेन दशधा सम्प्रवर्तते । वि ( वि ) न्दुमुण्डविचित्रं च तत्त्ववस्त्रेण वेष्टितम् ॥ १५ ॥ ब्रह्माण्डेन कपालेन पिबेत परमामृतम् । पञ्चवर्गबलाद्युद्धे जयो भवति तच्छृणु ॥ १६ ॥ अआकचटतपयाः श आद्यो वर्ग ईरितः । इईखछठथफराः षो वर्गश्च द्वितीयकः । उऊगजजडदबलाः सो वर्गस्य तृतीयकः। एऐघझढधभवा हो वर्गश्च चतुर्थकः ॥ १८ ॥ आ औ अं अः, ङञणना मो वर्गः पञ्चमो भवेत् । वर्णाश्चाभ्युदये नृणां चत्वारिंशच्च पञ्च च ॥ १९ ॥ बालः कुमारो युवा स्याद् वृद्धे मृत्युश्च नामतः । अत्मपीडाशोषकः स्यादुदासीनश्च कालकः॥२०॥ कृत्तिका प्रतिपद्भौम आत्मनो लाभदः स्मृतः । षष्ठी भौमो मघा पीडा आर्द्रा चैकादशी कुजः ॥ २१ ॥ मृत्युर्मघा द्वितीया ज्ञो लाभश्चाऽऽर्द्रा च सप्तमी । बुधोऽहनि भरणीज्ञः श्रवणं काल ईदृशः ॥ २२ ॥ जीवो लाभाय च भवेत्तृतीया पूर्वफाल्गुनी । जीवोऽष्टमी धनिष्ठाऽऽर्द्रा जीवोऽश्लेषा त्रयोदशी ॥ २३ ॥ मृत्यौ शुक्रश्चतुर्थी स्यात् पूर्वभाद्रपदा श्रिये । पूर्वाषाढा च नवमी शुक्रः पीडाकरो भवेत् ॥ २४ ॥ भरणी भूतजा शुक्रो यमदण्डो हि हानिकृत् । कृत्तिका पञ्चमी मन्दो लाभाय तिथिरीरिता॥२५॥ आ ( अ ) श्लेषा दशमी मन्दो योगः पीडाकरो भवेत्।

---

रौद्री, शुष्ककाया एवं प्राणहरा ये ग्यारह देवियाँ रस चक्र में स्थित हैं ।। ९ ।। विरूपाक्षी, परा,दिव्या, आकाश मातृकएँ संहारी, जातमातृका, दंष्ट्राला, शुष्करेवती, पिपीलिका, पुष्टिहरा, महापुष्टि, प्रवर्धना, भद्रकाली, सुभद्रा, भद्रभीमा सुभद्रिका, स्थिरा, निष्ठुरा, निष्कम्पा तथा गदिनी एवं रेवती ।। १०-१२ ।। ये बारह मातृकाएँ हैं ये क्रमशः- मारुत, वायु, रस एवं दिव्य इन चारों चक्रों में आठ-आठ करके स्थित हैं ।। १२ ।। सूर्य और चन्द्रमा भी एक ही हैं और उनकी शक्तियाँ भी भूतभेद से एक ही हैं, जैसे पृथ्वी पर नदी का एक ही जल स्थान भेद के कारण तीर्थ (पवित्र) समझा जाता है । जैसे शरीर के भीतर अस्थिपञ्जर में रहने वाला एक ही प्राण भिन्न-भिन्न मण्डलों में विभक्त हो जाता है ।। १३-१४ ।। एक ही वाम वाण तथा दक्षिण अङ्गों के योग से दस रूप में प्रवर्तित हो जाता है । वहीं वायु तत्त्वरूपी वस्त्र में वेष्टित होकर विचित्र विन्दुरूपी मुण्ड के द्वारा कपालरूपी ब्रह्माण्ड के अमृत का पान करता है ।। १५ ।। अब तुम्हें मैं जिस तरह से पञ्चवर्ग के बल से विजय होती है, उसे बतला रहा हूँ, सुनो ।। १६ ।। अ, आ, क, च, ट, त, प, य तथा श यह प्रथम वर्ग कहा गया है । इ, ई, ख, छ, ठ, थ, फ, र तथा ष यह द्वितीय वर्ग है ।। १७ ।। उ, ऊ, ग, ज, ड, द, ब, ल तथा स यह तृतीय वर्ग है । ए, ऐ, घ, झ, ढ, ध, भ, व तथा ह यह चतुर्थ वर्ग है ।। १८ ।। ओ, औ, अं, अः, ङ, ञ, ण, न तथा म यह पञ्चमवर्ग है । ये वर्ण मनुष्यों का कल्याण करने वाले तथा पैंतालिस हैं ।। १९ ।। इन वर्गों के क्रमशः नाम- बाल, कुमार, युवा, वृद्ध तथा मृत्यु है ।। १९ ।। अब तिथि, वार तथा नक्षत्रों के योग से काल ज्ञान का वर्णन किया जा रहा है । काल तीन प्रकार के होते हैं आत्मपीड, शोषक तथा उदासीन ।। २० ।। यदि मङ्गलवार को प्रतिपद तिथि तथा कृत्तिका नक्षत्र हो तो वह प्राणी के लिए लाभकारक होता है । यदि भौमवार को षष्ठी तिथि तथा मघा नक्षत्र हो तो वह पीड़ाकारक हेता है । यदि भौमवार को एकादशी तिथि तथा आर्द्रा नक्षत्र हो तो वह मृत्युकारक होता है ।। २१ ।। यदि बुधवार को द्वितीया तिथि तथा मघा नक्षत्र हो अथवा सप्तमी तिथि एवं आर्द्रा नक्षत्र हो तो लाभ होता है, बुधवार को भरणी नक्षत्र का योग हानिकारक होता है, एवं बुधवार को श्रवण नक्षत्र के आने पर कालयोग (मृत्युयोग) होता है ।। २२ ।। यदि बृहस्पतिवार को तृतीया तिथि एवं पूर्वा फाल्गुनी नक्षत्र हो तो लाभकर होता है । वृहस्पतिवार को अष्टमी तिथि धनिष्ठा नक्षत्र का योग हानिकारक होता है एवं आर्द्रा नक्षत्र एवं त्रयोदशी तिथि का योग मृत्युकारक होता है ।। २३ ।। शुक्रवार को चतुर्थी तिथि और पूर्वाभाद्रपद नक्षत्र का योग श्रीवर्धक होता है । शुक्रवार को नवमी तिथि और पूर्वाषाढ़ नक्षत्र का योग पीड़ाकारक होता है ।। २४ ।। शुक्रवार को भरणी नक्षत्र और चतुर्दशी तिथि का योग यमदण्ड योग (मृत्युकारक) और

शुक्ला चाग्निमुखी दिव्या कात्यायनसगोत्रजा । त्रैलोक्यवरणा दिव्या पृथिव्याधारसंयुता ॥ ३३॥ अक्षसूत्रधरा देवी पद्मासनगता शुभा । ओं तेजोऽसि महोऽसि बलमसि भ्राजोऽसि देवानान्धामनामासि विश्वमसि विश्वायुःसर्वमसि सर्वायुः ओं अभि भूः । आगच्छ वरदे । देवि ! जप्ये ! मे सन्निधौ भव ॥ ३४ ॥ व्याहृतीनान्तु सर्वासामृषिरेव प्रजापतिः। व्यस्ताश्चैव समस्ताश्च ब्राह्ममक्षरमोमिति ॥ ३५॥ विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गोतमः । ऋषिरत्रिर्वसिष्ठश्च काश्यपश्च यथाक्रमम् ॥ ३६॥ अग्निर्वायू रविश्चैव वाक्पतिर्वरुणस्तथा। इन्द्रो विष्णुर्व्याहृतीनां दैवतानि यथाक्रमम्॥३७॥ गायत्र्युष्णिगनुष्टुप् च वृहती पङ्क्तिरेव च । त्रिष्टुप् च जगती चेति छन्दांस्याहुरनुक्रमात् ॥ ३८ ॥ विनियोगे व्याहृतीनां प्राणायामे च होमके । आपोहिष्ठेत्यृचा चापान्द्रुपदादीति वा स्मृता ॥ ३९ ॥ तथाहिरण्यवर्णाभिःपावमानीभिरन्ततः । विप्रुषोऽष्टौ क्षिपेदूर्ध्वमाजन्मकृतपापजित्॥ ४०॥ अन्तर्जले ऋतञ्चेति जपेत् त्रिरघमर्षणम् । आपोहिष्ठेत्यृचोऽस्याश्च सिन्धुद्वीप ऋषिः स्मृतः ॥ ४१ ॥ ब्रह्मस्नानाय छन्दोऽस्य गायत्री देवता जलम्। मार्जने विनियोगस्य ह्यावभृथके क्रतोः ॥ ४२ ॥ अघमर्षणसूक्तस्य ऋषिरेवाघमर्षणम् । अनुष्टुप् च भवेच्छन्दो भाववृत्तस्तु दैवतम् ॥ ४३॥ आपोज्योतीरस इति गायत्र्यास्तु शिरः स्मृतम् । ऋषिः प्रजापतिस्तस्य छन्दोहीनं यजुर्यतः॥ ४४ ॥ ब्रह्माग्निवायुसूर्य्याश्च देवताः परिकीर्त्तिताः ।

---

का ध्यान शुक्लाचाग्निमुखी- इत्यादि मन्त्र से करना चाहिए । मन्त्र का अर्थ है- गायत्री देवी शुक्लवर्ण के हैं,, अग्नि ही उनका मुख है, दिव्य गुणसम्पन्न वे कात्यायन गोत्र वाली हैं । दिव्यगुणों से युक्त गायत्री देवी का त्रैलोक्य ही आवरण है । वे पृथिवी रूपी आधार से संयुक्त हैं ।। ३३ ।। गायत्री देवी अक्षसूत्र धारण करती हैं तथा कल्याणकारिणी वे पद्मासन पर विराजमान हैं ।।३३।। इसके पश्चात् गायत्री देवी का आवाहन निम्नांकित मन्त्र से करना चाहिए- ओम् तेजोऽसि महोऽसि बलमसि भ्राजोऽसि,देवानां धामनामसि, विश्वमसि विश्वायुःसर्वमसि सर्वायुः ओम् अभिभूः ।' आगच्छ वरदेदेवि ! जप्ये मे सन्निधौ भव ।। ३४ ।। अर्थात्- सभी व्याहृतियों के ऋषि प्रजापति ही हैं । वे व्यष्टि एवं समष्टि दोनों रूपों से परब्रह्मस्वरूप एकाक्षर ब्रह्म ओंकार में स्थित हैं ।।३५।। विश्वामित्र, जमदग्नि, भरद्वाज, गौतम, अत्रि, वसिष्ठ तथा कश्यप ये सातों व्याहृतियों के क्रमशः ऋषि हैं ।। ३६ ।। सप्तव्याहृतियों के क्रमशः ये सात देवता हैं- अग्नि, वायु, सूर्य, वाक्पति, वरुण, इन्द्र तथा विष्णु ।। ३७ ।। इन सातों व्याहृतियों के क्रमशः छन्द ये हैं- गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पंक्ति, त्रिष्टुप् तथा जगती ।। ३८ ।। प्राणायाम करने तथा होम करने में व्याहृतियों का विनियोग करना चाहिए । सप्त व्याहृतियों के विनियोग का स्वरूप निम्नांकित है- सप्त व्याहृतीनां विश्वामित्रजमदग्न्यग्निभरद्वाजगोतमात्रिवसिष्ठकश्यपा ऋषयो गायत्र्युष्णिगनुष्टु बृहती पंक्तित्रिष्टुब्जगत्यश्छन्दांसि अग्निवायवादित्य बृहस्पतिवरुणेन्द्रविश्वेदेवा देवताः अनादिष्टप्रायश्चित्ते प्राणायामे विनियोगः ।। ओं आपोहिष्ठा इत्यादि तीन ऋचाओं तथा द्रुपद्रादि ऋचा तथा 'हिरण्यवर्णाभिः' इत्यादि आठ पवमानी ऋचाओं से जल के आठ छींटे ऊपर छिड़कना चाहिए, ऐसा करने वाला जन्म मरण के पापों को विनष्ट कर देता है ।। ४० ।। (१) ओं आपो हिष्ठा मयो भुवः, (२) ओं तान ऊर्जे दधातन, (३) ओं महेरणाय चक्षसे, (४) ओं यो वः शिवतमो रसः । (५) ओं तस्य भाजयते हनः, (६) ओं उशतीरिवमातरः, (७) ओं तस्मा अरंगमामव । (८) ओं आपोजनयथाचनः ।। ओं द्रुपदादिव मुमूचानः स्विन्नः स्नातो मलादिव । पूतो पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ।। जल के भीतर 'ऋतञ्च' इत्यादि अघमर्षण मन्त्र का तीन बार जप करना चाहिए। 'आपोहिष्ठाः' इत्यादि तीन ऋचाओं के ऋषि सिन्ण्धुद्वीप हैं ।। ४१ ।। इसका छन्द गायत्री है और देवता जल हैं । इसका विनियोग यज्ञ के अवभृथ स्नान के ब्रह्मस्नान के मार्जन में होता है।।४२।। अघमर्षण सूक्त के ऋषि अघमर्षण हैं । इसका छन्द अनुष्टुप् है और भाववृत्त रस के देवता हैं ।। ४३ ।। 'आपो ज्योति रसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् ' यह गायत्री का शिरोभाग है। इसके प्रजापति ऋषि हैं । यह छन्दरहित यजुर्मन्त्र है क्योंकि यजुर्वेद के मन्त्र किसी नियत अक्षर वाले छन्द में आबद्ध नहीं हैं ।। ४४ ।। इस शिरोमन्त्र के ब्रह्मा, अग्नि, वायु तथा सूर्य देवता कहे गये हैं । प्राणायाम से वायु, वायु से अग्नि और अग्नि से जल की उत्पत्ति होती है ।उसी जल से शुद्धि होती है । इसीलिए जल का आचमन निम्नलिखित मन्त्र से करना चाहिए- 'अन्तश्चरसि भूतेषु गुहायां विश्वमूर्तिषु । तपो यज्ञो वषट्कार आपो ज्योती रसोऽमृतम् ।।' उदुत्यं जातवेदसम् ० इस मन्त्र के ऋषि प्रष्कण्व कहे जाते हैं । इसके गायत्री छन्द और सूर्य देवता हैं । इसका विनियोग

प्राणरोधात् तु वायुः स्याद् वायोरग्निश्च जायते ॥ ४५ ॥ अग्नेरापस्ततः शुद्धिस्ततश्चाचमनञ्चरेत् । अन्तश्चरसि भूतेषु गुहायां विश्वमूर्त्तिषु ॥ ४६॥ तपोयज्ञवषट्कार आपो ज्योतिरसोऽमृतम् । उदुत्यं जातवेदसमृषि;प्रष्कन्न उच्यते ॥ ४७॥ गायत्रीच्छन्द आख्यातं सूर्यश्चैव तु दैवतम् । अतिरात्रे नियोगः स्यादग्नीषोमो नियोगकः ॥ ४८ ॥ चित्रं देवेति ऋचके ऋषिः कौत्स उदाहृतः । त्रिष्टुप् छन्दो दैवतञ्च सूर्य्योऽस्याः परिकीर्त्तितम् ॥ ४९॥

इत्यादिमहापुराण आग्नेये सन्ध्याविधि वर्णनं नाम पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५॥

## षोडशाधिकद्विशततमोऽध्यायः

### गायत्रीनिर्वाणम्

अग्निरुवाच– **एवं सन्ध्याविधिं कृत्वा गायत्रीञ्च जपेत् स्मरेत् । गायञ्छिष्यान् यतस्त्रायेद् भार्य्यां प्राणांस्तथैव च ॥ १ ॥ ततः स्मृतेयं गायत्री सावित्रीयं ततो यतः । प्रकाशनात् सा सवितुर्वाग्रूपत्वात्सरस्वती॥ २॥ तज्ज्योतिः परमं ब्रह्म भर्गस्तेजो यतःस्मृतम् । भा दीप्ताविति रूपं हि भ्रस्जः पाकेऽथ तत् स्मृतम् ॥ ३ ॥ ओषध्यादिकं पचति भ्राजृ दीप्तौ तथा भवेत् । भर्गः स्याद् भ्राजत इति बहुलं छन्द ईरितम् ॥ ४ ॥ वरेण्यं सर्वतेजोभ्यः श्रेष्ठं वै परमं पदम् । स्वर्गापवर्गकामैर्वा वरणीयं सदैव हि ॥ ५ ॥ वृणोतेर्वरणार्थत्वाज्जाग्रत्स्वप्नादिवर्जितम् । नित्यशुद्धबुद्धमेकं सत्यन्तद्धीमहीश्वरम्॥६॥ अहं ब्रह्म परंज्योतिर्ध्यायेम हि विमुक्तये । तज् ज्योतिर्भगवान् विष्णुर्जगज्जन्मादिकारणम् ॥ ७ ॥ शिवं केचित् पठन्तिस्म शक्तिरूपं पठन्ति च। केचित् सूर्य्यङ्केचिदग्निं वेदगा अग्निहोत्रिणः ॥ ८ ॥ अग्न्यादिरूपी विष्णुर्हि वेदादौ ब्रह्म गीयते । तत् पदं परमं विष्णोर्देवस्य सवितुः स्मृतम् ॥९॥**

---

अतिरात्र विनियोग में होता है तद्यथा इसके नियोक्ता अग्नि तथा सोम हैं ।। ४८ ।। 'चित्रं देवानाम्०' इत्यादि ऋचा के ऋषि कौत्स हैं, छन्द अनुष्टुप् तथा इसके देवता सूर्य बतलाये गये हैं ।।४९।।

**इस तरह से आदि महापुराण अग्निपुराण का सन्ध्या विधि वर्णन नामक दो सौ पन्द्रहवाँ अध्याय सम्पूर्ण हुआ ॥ २१५ ॥**

**अग्निदेव ने कहा–** इस प्रकार संध्याविधि करके गायत्री का स्मरण करना चाहिए । चूँकि इसका ज्ञान करने वाला अपने शिष्यों, पत्नी तथा अपने प्राणों की रक्षा करता है ।। १ ।। इसीलिए इसे गायत्री कहा जाता है । चूँकि यह सविता से वाग्रूपा सरस्वती के रूप में प्रकट् हुई अतएव इसे सावित्री कहते हैं ।। २ ।। गायत्री के 'तत् ' पद से ज्योतिःस्वरूप परब्रह्म परमात्मा अभिहित किये जाते हैं । भर्गः पद तेज का वाचक है, क्योंकि भा धातु दीप्त्यर्थक है । 'भ्रस्ज' पाके इस पाकार्थक भ्रस्ज धातु से भी भर्गशब्द की सिद्धि होती है ।। ३ ।। क्योंकि सूर्य का तेज औषधि आदि को भी पकाता है । भ्राजृदीप्तौ धतु से भी भर्ग शब्द व्युत्पन्न होता है । बहुलं छन्दसि' इस वैदिक सूत्र के अनुसार 'भ्राजते' इति भर्ग शब्द की व्युत्पत्ति होती है ।। ४ ।। गायत्री का 'वरेण्यं' पद समस्त तेजों से श्रेष्ठ परम पद को बतलाता है । स्वर्ग तथा मोक्ष को चाहने वाले मनुष्यों के द्वारा सेवनीय होने के कारण वह वरेण्य कहा गया है ।। ५ ।। क्योंकि 'वृञ्' धातु वरणार्थक है । गायत्री के धीमहि पद का अभिप्राय है कि 'हम जाग्रत एवं सुषुप्ति आदि अवस्थाओं से अतीत, नित्य, शुद्ध, बुद्ध एकमात्र सत्य एवं ज्योतिः स्वरूप परब्रह्म परमेश्वर का ध्यान मुक्ति प्राप्ति के लिए करते हैं ।। ६ ।। वह ज्योति जगत् के जन्म, पालन एवं संहार के कारण स्वरूप भगवान् विष्णु ही हैं ।। ७ ।। कुछ लोग शिव को वह ज्योति मानते हैं, कुछ लोग शक्ति को, कुछ लोग सूर्य को, वैदिक अग्निहोत्री विद्वान् अग्नि को ही वह ज्योति मानते हैं ।। ८ ।। अग्नि आदि का रूप धारण करने वाले भगवान् विष्णु ही वेद आदि में ब्रह्म शब्द से कहे

महदाज्यं सूयते हि स्वयं ज्योतिर्हरिः प्रभुः । पर्जन्यो वायुरादित्यःशीतोष्णाद्यैश्च पाचयेत् ॥ १० ॥ अग्नौ प्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नन्ततः प्रजाः ॥ ११॥ दधातेर्वा धीमहीति मनसा धारयेमहि । नोऽस्माकं यश्च भर्गश्च सर्वेषां प्राणिनां धियः॥ १२ ॥ चोदयात् प्रेरयेद् बुद्धिर्भोक्तृणां सर्वकर्मसु । दृष्टादृष्टविपाकेषु विष्णुसूर्य्याग्निरूपवान् ॥ १३ ॥ ईश्वरप्रेरितो गच्छेत् स्वर्गं वाऽश्वभ्रमेव वा । ईशावास्यमिदं सर्वं महदादिजगद्धरिः॥ १४॥ स्वर्गाद्यैः क्रीडते देवो योऽहं स पुरुषः प्रभुः। आदित्यान्तर्गतं यच्च भर्गाख्यं वै मुमुक्षुभिः॥ १५ ॥ जन्ममृत्युविनाशाय दुःखस्य त्रिविधस्य च । ध्यानेन पुरुषोऽयञ्च द्रष्टव्यःसूर्यर्यमण्डले ॥ १६॥ तत्त्वं सदसि चिद् ब्रह्म विष्णोर्यत् परमं पदम् । देवस्य सवितुर्भर्गो वरेण्यं हि तुरीयकम् ॥ १७ ॥ देहादिजाग्रदाब्रह्म अहं ब्रह्मेति धीमहि । योऽसावादित्यपुरुषःसोऽसावहमनन्त ओम्। ज्ञानानि शुभकर्मादीन् प्रवर्त्तयति यःसदा ॥ १८ ॥

इत्यादिमहापुराण आग्नेये गायत्रीनिर्वाणकथनं नाम षोडशाधिकद्विशततमोऽध्यायः ॥ २१६॥

## सप्तदशाधिकद्विशततमोऽध्यायः

## गायत्रीनिर्वाणम्

अग्निरुवाच– **लिङ्गमूर्त्तिं शिवं स्तुत्वा गायत्र्या योगमाप्तवान्। निर्वाणं परमं ब्रह्म वसिष्ठोऽन्यश्च शङ्करात्॥१॥ नमः कनकलिङ्गाय वेदलिङ्गाय**

---

जाते हैं । अतएव देवस्य सवितुः- जगत् को उत्पन्न करने वाले श्रीविष्णु देव का ही वह परमपद माना गया है ।।९।। स्वयं ज्योतिः स्वयम् प्रकाश' प्रभु श्रीहरि ही महदादि को उत्पन्न करते हैं। वे ही पर्जन्य, वायु, आदित्य एवं शीतग्रीष्म आदि ऋतुओं द्वारा अन्न का पोषण करते हैं ।।१०।। अग्नि में विधिपूर्वक दी गयी आहुति सूर्य तक पहुँचती है, सूर्य से वृष्टि, वृष्टि से अन्न और अन्न से प्रजाओं की उत्पत्ति होती है ।। ११ ।। 'डुधाञ्' धातु से भी धीमहि पद की सिद्धि होती है और उसका अर्थ है कि हम मन से चिन्तन-धारण करते हैं । यः अर्थात् जो परमात्मा श्रीविष्णु का वह तेज (नः) हम सभी प्राणियों की (धियः) बुद्धि वृत्तियों को (प्रचोदयात्) प्रेरित करे वे ईश्वर ही कर्मफल का भोग करने वाले समस्त प्राणियों के प्रत्यक्ष एवं अप्रत्यक्ष परिणामों से युक्त समस्त कर्मों में विष्णु, सूर्य एवं अग्निरूप से स्थित हैं ।।१२-१३।। यह जीव ईश्वर की ही प्रेरणा के अनुसार स्वर्ग अथवा नर्क में जाता है । यह सम्पूर्ण जगत् परमात्मा से व्याप्त है अतएव महत् आदि सम्पूर्ण जगत् परमात्म स्वरूप है ।। १४ ।। वे सर्वसमर्थ हंस स्वरूप परमपुरुष स्वर्गादि लोकों से क्रीड़ा करते हैं । आदित्यमण्डल के भीतर जो भर्ग नामक परमात्मा का तेज है मुमुक्षु पुरुषों के जन्म तथा मृत्यु जन्य दुःख का विनाश करने के लिए तथा त्रिविध तापों का नाश करने के लिए इसी तेज का सूर्यमण्डल के भीतर ध्यान के माध्यम से दर्शन करना चाहिए।।१६।। 'तत्त्वमसि' इत्यादि वाक्य उसी ज्ञान स्वरूप ब्रह्म का प्रतिपादन करते हैं । सम्पूर्ण लोकों का निर्माण करने वाले सविता देवता का जो वरणीय भर्ग है, वह विष्णु का परमपद है और वही गायत्री का ब्रह्मस्वरूप चतुर्थ पाद है ।। १७ ।। गायत्री के 'धीमहि' पद का अभिप्राय है कि देहादि की जाग्रदवस्था में सामान्य जीव से लेकर ब्रह्मपर्यन्त मैं ही ब्रह्म हूँ और आदित्यमण्डल में जो पुरुष है वह भी मैं ही हूँ । मैं सर्वप्रकार से परिपूर्ण ओम् हूँ । (प्रचोदयात्) पद के कर्ता रूप से उन परमेश्वर को ग्रहण करना चाहिए जो सदा ज्ञान तथा शुभ कर्मों को प्रवर्तित करते हैं ।। १८ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का गायत्री निर्वाण वर्णन नामक दो सौ सोलहवाँ अध्याय सम्पूर्ण हुआ ॥ २१६ ॥**

**अग्निदेव ने कहा–** वसिष्ठ किसी अन्य वसिष्ठ ने गायत्री जप पूर्वक लिङ्गमूर्ति शिव की स्तुति करके भगवान् शंकर से निर्वाणस्वरूप परंब्रह्म को प्राप्त किया ।। १ ।। उन वसिष्ठ ने

वै नमः । नमः परमलिङ्गाय व्योमलिङ्गाय वै नमः ॥ २ ॥ नमःसहस्रलिङ्गाय वह्निलिङ्गाय वै नमः । नमः पुराणलिङ्गाय श्रुतिलिङ्गाय वै नमः ॥३॥ नमः पाताललिङ्गाय ब्रह्मलिङ्गाय वै नमः । नमो रहस्यलिङ्गाय सप्तद्वीपोर्ध्वलिङ्गिने ॥ ४॥ नमःसर्वात्मलिङ्गाय सर्वलोकाङ्गलिङ्गिने । नमस्त्वव्यक्तलिङ्गाय बुद्धिलिङ्गाय वै नमः ॥ ५॥ नमोऽहङ्कारलिङ्गाय भूतलिङ्गाय वै नमः । नमः इन्द्रियलिङ्गाय नमस्तन्मात्रलिङ्गिने ॥ ६॥ नमः पुरुषलिङ्गाय भावलिङ्गाय वै नमः । नमो रजोर्द्धलिङ्गाय सत्त्वलिङ्गाय वै नमः ॥ ७॥ नमस्ते भवलिङ्गाय नमस्त्रैगुण्यलिङ्गिने । नमोऽनागतलिङ्गाय तेजोलिङ्गाय वै नमः ॥ ८॥ नमो वायूदूर्ध्वलिङ्गाय श्रुतिलिङ्गाय वै नमः । नमस्तेऽथर्वलिङ्गाय सामलिङ्गाय वै नमः ॥ ९ ॥ नमो यज्ञाङ्गलिङ्गाय यज्ञलिङ्गाय वै नमः ॥ नमस्ते तत्त्वलिङ्गाय देवानुगतलिङ्गिने ॥ १० ॥ दिश नः परमं योगमपत्यं मत्समं तथा । ब्रह्म चैवाक्षयं देव ! शमञ्चैव परं विभो ! ॥ ११॥ अक्षयत्वञ्च वंशस्य धर्मे च मतिमक्षयाम् । अग्निरुवाच– वसिष्ठेन स्तुतः शम्भुस्तुष्टः श्रीपर्वते पुरा । वसिष्ठाय वरं दत्त्वा तत्रैवान्तरधीयत ॥ १२॥

इत्यादि महापुराण आग्नेये गायत्रीनिर्वाणवर्णनं नाम सप्तदशाधिकद्विशततमोऽध्यायः॥ २१७॥

## अष्टादशाधिकद्विशततमोऽध्यायः

## राज्याभिषेककथनम्

पुष्करेण च रामाय राजधर्मं हि पृच्छते । यथादौ कथितं तद्वद् वशिष्ठ ! कथयामि ते ॥ १॥ पुष्कर उवाच– राजधर्मं प्रवक्ष्यामि सर्वस्मात् राजधर्मतः। राजा भवेत् शत्रुहन्ता प्रजापालः सुदण्डवान् ॥ २॥ पालयिष्यति वः सर्वान् धर्मस्थान् व्रतमाचरेत् । संवत्सरं स वृणुयात् पुरोहितमथ

इस प्रकार से स्तुति की- 'कनकलिङ्ग को नमस्कार है, वेदलिङ्ग को नमस्कार है, परमलिङ्ग को नमस्कार को तथा व्योमलिङ्ग को नमस्कार है ।। २ ।। सहस्रलिङ्ग को नमस्कार है, अग्निलिङ्ग को नमस्कार है, पुराणलिङ्ग को नमस्कार है, तथा श्रुतिलिङ्ग को नमस्कार है ।। ३ ।। पाताललिङ्ग को नमस्कार है, ब्रह्मलिङ्ग को नमस्कार है, रहस्यलिङ्ग को नमस्कार है तथा सप्तद्वीपोर्ध्वलिङ्ग को नमस्कार है ।। ४ ।। सर्वात्मलिङ्ग को नमस्कार है, सर्वलोकाङ्गलिङ्ग को नमस्कार है, अव्यक्तलिङ्ग को नमस्कार है तथा बुद्धिलिङ्ग को नमस्कार है ।। ५ ।। अहंकारलिङ्ग को नमस्कार है, भूतलिङ्ग को नमस्कार है, इन्द्रियलिङ्ग को नमस्कार है तथा तन्मात्रलिङ्ग को नमस्कार है ।। ६ ।। पुरुषलिङ्ग को नमस्कार है, भावलिङ्ग को नमस्कार है, रजोर्द्धलिङ्ग को नमस्कार है तथा सत्त्वलिङ्ग को नमस्कार है ।। ७ ।। भवलिङ्ग को नमस्कार है, त्रैगुण्यलिङ्ग को नमस्कार है, अनागतलिङ्ग को नमस्कार है तथा तेज़ोलिङ्ग को नमस्कार है ।। ८ ।। वायूर्ध्वलिङ्ग को नमस्कार है, श्रुतिलिङ्ग को नमस्कार है, अथर्वलिङ्ग को नमस्कार है, तथा सामलिङ्ग को नमस्कार है ।। ९ ।। यज्ञांगलिङ्ग को नमस्कार है, तत्त्वलिङ्ग को नमस्कार है तथा देवानुगतलिङ्ग को नमस्कार है ।। १० प्रभो आप मुझे परमयोग का उपदेश दीजिए और मेरे समान मुझे पुत्र प्रदान कीजिए । भगवन् मुझे अविनाशी परब्रह्म एवं परमशान्ति की प्राप्ति कराइये । मेरा वंश कभी भी क्षीण न होए और मेरी बुद्धि सदा धर्म में लगी रहे ।। ११-१२ ।। **अग्निदेव ने कहा–** प्राचीन काल में श्री शैल पर वसिष्ठ के इस प्रकार से स्तुति करने पर भगवान् शंकर प्रसन्न हो गए और वसिष्ठ को वरदान देकर वहीं अन्तर्ध्यान हो गए ।। १३ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का गायत्री से निर्वाण प्राप्ति का वर्णन नामक दो सौ सत्रहवाँ अध्याय सम्पूर्ण हुआ ॥ २१७ ॥**

अध्याय २१८

**अग्निदेव ने कहा–** वसिष्ठ पूर्वकाल में परशुराम जी के पूछने पर पुष्कर ने उनसे जिस प्रकार राजधर्म का वर्णन किया था, वही मैं तुमसे बतला रहा हूँ ।। १ ।। **पुष्कर ने कहा–**

द्विजम् ॥ ३ ॥ मन्त्रिणश्चाखिलात्मज्ञान् महिषीं धर्मलक्षणाम् । संवत्सरं नृपः काले ससम्भारोऽभिषेचनम् ॥ ४ ॥ कुर्य्यान् मृते नृपेनात्र कालस्य नियमःस्मृतः । तिलैःसिद्धार्थकैःस्नानं सांवत्सरपुरोहितौ॥ ५॥ घोषयित्वा जयं राज्ञो राजा भद्रासने स्थितः । अभयं घोषयेद् दुर्गान् मोचयेद्राजपालके॥६॥ पुरोधसोऽभिषेकात् प्राक् कार्य्यैन्द्री शान्तिरेव च । उपवास्य भिषेकाहे वेद्यग्नौ जुहुयान्मनून् ॥ ७ ॥ वैष्णवानैन्द्रमन्त्रांस्तु सावित्रान् वैश्वदैवतान् । सौम्यान् स्वस्त्ययनं शर्म आयुष्याभयदान्मनून् ॥ ८ ॥ अपराजिताञ्च कलसं वह्नेर्दक्षिणपार्श्वगम् । सम्पातवन्तं हैमञ्च पूजयेद् गन्धपुष्पकैः ॥ ९॥ प्रदक्षिणावर्त्तशिखस्तप्तजाम्बूनदप्रभः। रथौघमेघनिर्घोषो विधूमश्च हुताशनः॥ १०॥ अनुलोमः सुगधिश्च स्वस्तिकाकारसंनिभः। प्रसन्नार्चिमहाज्वालःस्फुलिङ्गरहितो हितः॥ ११॥ न व्रजेयुश्च मध्येन मार्जारमृगपक्षिणः । पर्वतोग्रमृदा तावन्मूर्द्धानं शोधयेन्नृपः ॥ १२॥ वल्मीकाग्रमृदा कर्णौ वदनं केशवालयात् । इन्द्रालयमृदा ग्रीवां हृदयन्तु नृपाजिरात्॥ १३॥ करिदन्तोद्धतमृदा दक्षिणन्तु तथा भुजम् । वृषशृङ्गोद्धतमृदा वामञ्चैव तथा भुजम् ॥ १४ ॥ सरोमृदा तथा पृष्ठमुदरं सङ्गमान् मृदा । नदीतटद्वयमृदा पार्श्वे संशोधयेत् तथा ॥ १५॥ वेश्याद्वारमृदा राज्ञःकटिशौचं विधीयते। यज्ञस्थानात् तथैवोरू गोस्थानाज्जानुनी तथा ॥ १६ ॥ अश्वस्थानात् तथा जंघे रथचक्रमृदाङ्घ्रिके । मूर्द्धानं पञ्चगव्येन भद्रासनगतं नृपम्॥१७॥ अभिषिञ्चदमात्यानां चतुष्टयमथो घटैः। पूर्वतो हेमकुम्भेन घृतपूर्णेन ब्राह्मणः ॥१८॥ रूप्यकुम्भेन याम्ये च क्षीरपूर्णेन क्षत्रियः। दध्ना

---

मैं सम्पूर्ण राजधर्मों से संगृहीत करके राजधर्म का उपदेश कर रहा हूँ । राजा को शत्रुओं को मारने वाला, प्रजाओं का पालन करने वाला तथा सुन्दर दण्ड का प्रयोग करने वाला होना चाहिए।।२।। धर्ममार्ग पर चलने वाले आप सबों का मैं पालन करूँगा । अपनी इस प्रतिज्ञा का उसे पालन करना चाहिए ।संवत्सर का फल बतलाने वाले एक ब्राह्मण पुरोहित का वरण करना चाहिए ।।३।। राजभार ग्रहण करने के एक वर्ष के बाद उसे सभी आत्मतत्त्ववेत्ता मन्त्रियों तथा धार्मिक प्रवृत्ति वाली राजमहिषी का वरण करना चाहिए । और विशेष समारोह के साथ अभिषेक कराना चाहिए।।४।। पहले राजा के मर जाने पर शीघ्र ही राजासन ग्रहण करना चाहिए ।ऐसा होने पर समय का कोई नियम नहीं है ज्योतिषी और पुरोहित द्वारा तिल, सरसों आदि सामग्रियों से राजा स्नान करे ।।५।। वह भद्रासन पर विराजमान होकर सम्पूर्ण राज्य में राजा की विजय घोषणा करे । वह अभय घोषणा कराकर समस्त कैदियों को मुक्त कर दे ।। ६ ।। अभिषेक से पहले वह पुरोहित द्वारा ऐन्द्रीशान्ति कराये । राजा अभिषेक के दिन उपवास करके वेदी पर स्थापित अग्नि में मन्त्रपाठपूर्वक हवन करे ।। ७ ।। विष्णु, इन्द्र, सविता, विश्वेदेव तथा सोम देवता सम्बन्धी वैदिक ऋचाओं का तथा स्वस्त्ययन, शान्ति, आयुष्य तथा अभय प्रदान करने वाले मन्त्रों का पाठ करे ।। ८ ।। उसके पश्चात् अग्नि के दक्षिण तरफ हो, अपराजिता देवी एवं सुवर्ण कलश की, जिसमें जल गिरने के लिए अनेक छिद्र बने हुए हों स्थापना करके चन्दन और फूलों द्वारा उनका पूजन करे ।। ९ ।। यदि अग्नि की शिखा दक्षिणावर्त हो, तप्त सुवर्ण के समान उसकी कान्ति हो रथ और मेघ के समान उसकी ध्वनि निकलती हो, धुआँ विल्कुल नहीं दिखायी देता हो, अग्निदेव अनुकूल होकर हविष्य ग्रहण करते हों, होम की अग्नि सेउत्तम गन्ध निकलती हो, अग्नि से स्वस्तिक के आकार की लपटें निकलती हों, उसकी शिखा स्वच्छ हो ओर ऊँचे तक उठ रही हो और अग्नि से चिनगारी नहीं निकलती हो, तो इस प्रकार की अग्नि की ज्वाला श्रेष्ठ और कल्याणकारी होती है ।। १०-११ ।। राजा और अग्नि के बीच से किसी बिल्ली, पशु अथवा पक्षियों को नहीं जाना चाहिए । राजा सर्वप्रथम पर्वताग्र की मिट्टी से अपने शिरोभाग को शुद्ध करे ।। १२।। बल्मीक (बाँवी) की मिट्टी से दोनों कानों को, मुख को भगवान् के मन्दिर की धूलि से, ग्रीवा को इन्द्र के मन्दिर की धूलि से और राजा के आँगन की मिट्टी से हृदय को शुद्ध करे ।। १३ ।। हाथी के दाँतों से खोदी गयी मिट्टी से दाहिनी भुजा को तथा बायीं भुजा को बैल के शृङ्ग से खोदी गयी मिट्टी से शुद्ध करनी चाहिए ।। १४ ।।सरोवर की मिट्टी से पीठ को, दो नदियों के सङ्गम की मिट्टी से पेट को, नदी के दोनों तटों की मिट्टी से दोनों पसलियों को शुद्ध करे ।। १५ ।। वेश्या के द्वार की मिट्टी से राजा के कमर की शुद्धि का विधान है ।यज्ञस्थल की मिट्टी से उसके दोनों ऊरुओं की तथा गोशाला कीं मिट्टी से दोनों घुटनों के शुद्धि का विधान है ।। १६ ।। अश्वशाला की मिट्टी से दोनों जंघों की तथा रथ के पहिये की मिट्टी से दोनों चरणों

च ताम्रकुम्भेन वैश्यः पश्चिमगेन च ॥ १९ ॥ मृण्मयेन जलेनोदक् शूद्रामात्याऽभिषेचयेत् । ततोऽभिषेकं नृपतेर्वह्व च प्रवरो द्विजः ॥ २०॥ कुर्वीत मधुना विप्रश्छन्दोगश्च कुशोदकैः । सम्पातवन्तं कलशं तथा गत्वा पुरोहितः ॥ २१॥ विधाय वह्निरक्षान्तु सदस्येषु यथाविधि । राजश्रियाभिषेके च ये मन्त्राः परिकीर्तिताः॥ २२॥ तैस्तु तद्वान्महाभाग ! ब्राह्मणानां स्वनैस्तथा । ततः पुरोहितो गच्छेद् वेदिमूलन्तदेव तु ॥ २३ ॥ शतच्छिद्रेण पात्रेण सौवर्णेनाभिषेचयेत्। या औषधित्योषधीभीरथेत्युक्तोति गन्धकैः ॥ २४॥ पुष्पैः पुष्पवतीत्येव ब्राह्मणेति च वीजकैः। रत्नैराशुः शिशानश्च ये देवाश्च कुशोदकैः॥ २५॥ यजुर्वेद्यथर्ववेदी गन्धद्वारेति संस्पृशेत् । शिरः कण्ठं रोचनया सर्वतीर्थोदकैर्द्विजाः॥ २६॥ गीतवाद्यादिनिर्घोषैश्चामरव्यजनादिभिः । सर्वौषधिमयं कुम्भं धारयेयुर्नृपाग्रतः॥२७॥ तं पश्येद् दर्पणं राजा घृतं वै मङ्गलादिकम् । अभ्यर्च्य विष्णुं ब्रह्माणमिन्द्रादींश्च ग्रहेश्वरान् ॥ २८ ॥ व्याघ्रचर्मोत्तरां शय्यामुपविष्टः पुरोहितः । मधुपर्कादिकं दत्त्वा पट्टबन्धं प्रकारयेत् ॥ २९॥ राज्ञो मुकुटबन्धञ्च पञ्चचर्मोत्तरं ददेत् । ध्रुवाद्यैरिति च विशेद् वृषजं वृषदंशजम् ॥ ३०॥ द्वीपिजं सिंहजं व्याघ्रजातञ्चर्म तदासने । अमात्यसचिवादींश्च प्रतीहारः प्रदर्शयेत् ॥ ३१॥ गोऽजावि गृहदानाद्यै सांवत्सरपुरोहितौ । पूजयित्वा द्विजान् प्राच्य ह्यन्यभूगोऽन्नमुख्यकैः॥ ३२ ॥ वह्निं प्रदक्षिणीकृत्य गुरुं

---

की तथा पञ्चगव्य से सिर की शुद्धि करनी चाहिए । उसके पश्चात् चार आमात्य भद्रासन पर बैठे हुए राजा का कलशों से अभिषेक करें । पूर्व दिशा में घी से भरे सुवर्ण-कलश से ब्राह्मण अभिषेक करें।।१७-१८।। दक्षिण-दिशा में क्षत्रिय दुग्ध से परिपूर्ण चाँदी के घड़े से अभिषेक करें । पश्चिम भाग से वैश्य ताम्बे के दधि से परिपूर्ण घटसे राजा का अभिषेक करे ।। १९ ।। शूद्र आमात्य उत्तर की ओर से जल से परिपूर्ण मिट्टी के घड़े से राजा का अभिषेक करें । उसके पश्चात् श्रेष्ठ ऋग्वेदी ब्राह्मण राजा का अभिषेक मधु से करे, सामवेदी ब्राह्मण कुशोदक से राजा का अभिषेक करे ।।१९-२०।। उसके पश्चात् पुरोहित जल गिरने के लिए बनाये गए अनेक छिद्रों से युक्त सुवर्ण कलश के पास जाकर सदस्यों के बीच अग्नि रक्षा का कार्य सम्पादित करे तथा अभिषेक के लिए बतलाये गये मन्त्रों से राजा का अभिषेक करे । हे महाभाग ! उस समय ब्राह्मणों को वेदपाठ करते रहना चाहिए ।। २१-२२।। उसके पश्चात् पुरोहित वेदी के सन्निकट जाय और अभिषेक के लिए बने सुवर्ण के सौ छिद्रों वाले कलश से राजा का अभिषेक करे ।। 'या ओषधिः' इत्यादि मन्त्र से औषधियों द्वारा 'अथेत्युक्ताः' इत्यादि मन्त्रों से गन्धों द्वारा 'पुष्पवतीः०' इत्यादि मन्त्रों से फूलों द्वारा 'ब्राह्मणः०' इत्यादि मन्त्र से वीजों द्वारा 'आशुः शिशानः०' इत्यादि मन्त्र. से रत्नों द्वारा तथा 'ये देवाः' इत्यादि मन्त्र से कुशोदक से राजा का अभिषेक करना चाहिए।।२३-२५।। यजुर्वेदी तथा अथर्ववेदी ब्राह्मण 'गन्ध द्वारां दुरिघर्षाम् ०' इत्यादि मन्त्र से गोरोचन द्वारा राजा के मस्तक तथा कण्ठ में तिलक लगायें । इसके पश्चात् अन्य ब्राह्मण समस्त तीर्थों के जल से राजा का अभिषेक करें ।। २६ ।। उसके पश्चात् गीत, वाद्य आदि निर्घोषों के साथ चमर व्यजन आदि के साथ सर्वौषधि से युक्त कलश को राजा के समक्ष लेकर खड़े हों ।।२७।। राजा को चाहिए कि सर्वप्रथम वह उस कलश को देखे उसके पश्चात् दर्पण तथा घृत आदि मांगलिक वस्तुओं को देखे । तत्पश्चात् विष्णु, ब्रह्मा तथा इन्द्र आदि देवताओं एवं ग्रहपतियों का पूजन करके राजा को व्याघ्र के चर्म से युक्त आसन पर बैठना चाहिए । फिर पुरोहित मधुपर्क आदि प्रदान कर राजा के सिर पर मुकुट बाँधे ।। २८-२९ ।। पाँच प्रकार के चर्मों से युक्त आसन पर बैठकर राजा को मुकुट बाँधना चाहिए । 'ध्रुवाद्यैः०' इत्यादि मन्त्र से राजा उस आसन पर बैठे । उस आसन में, वृष, वृषभांश, वृक (भेड़िया) व्याघ्र तथा सिंह इन्हीं पाँच जानवरों के चर्म का उपयोग होना चाहिए । अभिषेक के पश्चात् प्रतिहार को चाहिए कि वह राजा को आमात्य और सचिव आदि को दिखावे ।। ३०-३१ ।। उसके पश्चात् राजा गौ, बकरी, भेंड तथा गृह आदि का दान देकर संवत्सर (ज्योतिषी) तथा पुरोहित का पूजन करे । तदनन्तर पृथिवी, अन्न तथा गौ आदि का दान देकर अन्य ब्राह्मणों का भी पूजन करे ।। ३२ ।। उसके पश्चात् राजा अग्नि की प्रदक्षिणा करके, पुरोहित को प्रणाम करे । पुनः वृषभ के पृष्ठ का स्पर्श करके सवत्सा गौ की पूजा करे । तदनन्तर अभिमन्त्रित अश्व पर सवार होकर उससे उतरकर हाथी की पूजा करे । पुनः हाथी पर बैठकर

नत्वाथ पृष्ठतः। वृषमालभ्य गां वत्सां पूजयित्वाथ मन्त्रितम् ॥ ३३ ॥ अश्वमारुह्य नागञ्च पूजयेत् तं समारुहेत् । परिभ्रमेद्राजमार्गे बलयुक्तः प्रदक्षिणम् । पुरं विशेच्च दानाद्यैः प्राच्र्यसर्वान् विसर्जयेत् ॥ ३४ ॥

इत्यादि महापुराण आग्नेये राज्याभिषेकवर्णनं नाम अष्टादशाधिकद्विशततमोऽध्यायः॥ २१८॥

## ऊनविंशाधिकद्विशततमोऽध्यायः

### अभिषेकमन्त्राः

पुष्कर उवाच– **राजदेवाद्यभिषेकमन्त्रान् वक्ष्येऽघमर्दनान् । कुम्भात् कुशोदकैःसिञ्चेत् तेन सर्वं हि सिध्यति ॥ १ ॥ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः । वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ॥ २॥ भवन्तु विजयायैते इन्द्राद्या दशदिग्गताः । रुद्रो धर्मो मनुर्दक्षो रुचिः श्रद्धा च सर्वदा ॥ ३॥ भृगुरत्रिर्वसिष्ठश्च सनकश्च सनन्दनः । सनत्कुमारोऽङ्गिराश्च पुलस्त्यः पुलहः क्रतुः॥ ४॥ मरीचिः कश्यपः पान्तु प्रजेशाः पृथिवीपतिः। प्रभासुरा वर्हिषद अग्निष्वात्ताश्च पान्तु ते ॥ ५ ॥ क्रव्यादाश्चोपहूताश्च आज्यपाश्च सुकालिनः । अग्निभिश्चाभिषिञ्चन्तु लक्ष्म्याद्या धर्मवल्लभाः॥६॥ आदित्याद्याः कश्यपस्य बहुपुत्रस्य वल्लभा । कृशाश्वस्याग्निपुत्रस्य भार्य्यायश्चारिष्टनेमिनः॥ ७॥ अश्विनाद्याश्च चन्द्रस्य पुलहस्य तथा प्रियाः । भूता च कपिशा दंष्ट्री सुरसा सरमा दनुः ॥ ८ ॥ श्येनी भासी तथा क्रौञ्ची धृतराष्ट्री शुकी तथा ॥ पत्न्यस्त्वामभिषिञ्चन्तु अरुणश्चार्कसारथिः ॥९॥ आयतिर्नियतीरात्रिर्निद्रा लोकस्थितौ स्थिताः। उमा मेना शची पान्तु धूमोर्न्नानिर्ऋतिर्जये ॥१०॥ गौरी शिवा च ऋद्धिश्च वेला या चैव नड्वला। अशिक्री च तथा ज्योत्स्ना देवपत्न्यो वनस्पतिः॥ ११ ॥ महाकल्पश्च कल्पश्च मन्वन्तरयुगानि च। संवत्सराणि वर्षाणि पान्तु त्वामयनद्वयम्॥१२॥ ऋतवश्च**

---

वह प्रदक्षिणक्रम से राजमार्ग पर सेना के साथ कुछ दूर तक यात्रा करे । फिर वह दान आदि के द्वारा सबको सम्मानित करके विदा कर दे और स्वयं राजधानी में प्रवेश करे।।३३-३४।।

**इस तरह से आदिमहापुराण अग्निपुराण के राज्याभिषेक वर्णन नामक दो सौ अठारहवाँ अध्याय सम्पूर्ण हुआ ॥ २१८ ॥**

**पुष्कर ने कहा–** अब मैं राजा और देवता आदि के अभिषेक सम्बन्धी सम्पूर्ण पापों को विनष्ट करने वाले मन्त्रों का वर्णन कर रहा हूँ । कलश से कुशोदक द्वारा राजा का अभिषेक करना चाहिए उससे उसके समस्त मनोरथों की सिद्धि होती है ।। १ ।। अभिषेक के समय इन मन्त्रों का पाठ करना चाहिए)- राजन् ! ब्रह्मा, विष्णु तथा महेश्वर आदि समस्त देवता आपका अभिषेक करें । भगवान् वासुदेव, संकर्षण, प्रद्युम्न तथा अनिरुद्ध इन्द्र आदि दस दिक्पाल, रुद्र, धर्म, मनु, दक्ष, रुचि तथा श्रद्धा आपको हमेशा विजय प्रदान करें ।। २-३ ।। पृथिवी के स्वामी इस राजा की रक्षा, भृगु, अत्रि, वसिष्ठ, सनक, सनन्दन, सनत्कुमार, अंगिरा, पुलस्त्य, पुलह, क्रतु, मरीचि तथा कश्यप ये प्रजेश करें । वर्हिषद् तथा अग्निष्वत्ता नामक पितृगण अपनी प्रभा से आपकी रक्षा करें ।। ४-५ ।। क्रव्याद (राक्षस) उपहूता (आवाहित) आज्यपा (घृतपान करने वाले देवता तथा पितृगण) तथा सुकाली (सुन्दर समय लाने वाले देवता) अग्नियाँ तथा धर्म प्रिया लक्ष्मी आदि आपकी अभिषेक करें ।। ६ ।। अनेक पुत्रों वाले महर्षि कश्यप के आदित्य आदि प्रिय पुत्रगण, अग्नि के पुत्र कृशाश्व तथा अरिष्टनेमि की पत्नियाँ भी आपका अभिषेक करें।।७।। चन्द्रमा की अश्विनी इत्यादि पत्नियाँ पुलह की प्रियपत्नियाँ, भूता, कपिशा, दंष्ट्री, सुरसा, सरमा, दनु, श्येनी, भासी, क्रौञ्ची, धृतराष्ट्री तथा शुकी ये पत्नियाँ आपका अभिषेक करें तथा सूर्य के सारथि भी ।। ८-९ ।। आयति, नियति, रात्रि, तथा निद्रा, लोक की व्यवस्था करने में सदा तत्पर रहने वाली, उमा, मेना, शची, धूमा, ऊर्णा, निर्ऋति, गया, गौरी, शिवा, ऋद्धि, वेला, नड्वला, अशिक्री, तथा ज्योत्स्ना आदि देव पत्नियाँ एवं वनस्पति आपकी रक्षा करें ।। १०-११ ।। महाकल्प, कल्प, मन्वन्तर, युग, संवत्सर, वर्षा तथा उत्तरायण एवं दक्षिणायन ये दोनों अयन

तथा मासापक्षारात्र्यहनी तथा । सन्ध्यातिथिमुहूर्त्तांश्च कालस्यावयवाकृतिः॥ १३॥ सूर्य्याद्याश्च ग्रहाः पान्तु मनुः स्वायम्भुवादिकः। स्वायम्भुवः स्वरोचिष औत्तमिस्तामसो मनुः ॥ १४॥ रैवतश्चाक्षुषःषष्ठो वैवस्वत इहेरितः । सावर्णी ब्रह्मपुत्रश्च धर्मपुत्रश्च रुद्रजः ॥ १५ ॥ दक्षजो रौच्यभौत्यौ च मनवस्तु चतुर्दश । विश्वभुक् च विपश्चिच्च सुचित्तिश्च शिखी विभुः॥ १६ ॥ मनोजवस्तथौजस्वी बलिरद्भुतशान्तयः । वृषश्च ऋतधामा च दिवस्पृक् कविरिन्द्रकः ॥ १७ ॥ रेवन्तश्च कुमारश्च तथा वत्सविनायकः । वीरभद्रश्च नन्दी च विश्वकर्मा पुरोजवः ॥ १८॥ एते त्वामभिषिञ्चतु सुरमुख्याः समागताः । नासत्यौदेवभिषजौ ध्रुवाद्या वसवोऽष्ट च ॥ १९॥ दश चाङ्गिरसो वेदास्त्वाभिषिञ्चन्तु सिद्धये । आत्मा ह्यायुर्मनो दक्षो मदः प्रणस्तथैव च ॥ २० ॥ हविष्मांश्च गरिष्ठश्च ऋतः सत्यश्च पान्तु वः। क्रतुर्दक्षो वसुः सत्यः कालकामो धुरिर्जये ॥ २१ ॥ पुरूरवा माद्रवाश्च विश्वेदेवाश्च रोचनः। अङ्गारकाद्याः सूर्यस्त्वान्निर्ऋतिश्च तथा यमः ॥ २२॥ अजैकपादहिर्बुध्नो धूमकेतुश्च रुद्रजाः। भरतश्च तथा मृत्युः कापालिरथ किङ्किणिः॥ २३॥ भवनो भावनः पान्तु स्वजन्यः स्वजनस्तथा । क्रतुश्राश्च मूर्द्धा च याजनोऽभ्युशनास्तथा ॥ २४ ॥ प्रसवश्चाव्ययश्चैव दक्षश्च भृगवः सुराः । मनोऽनुमन्ता प्राणश्च नयोपानश्चवीर्यवान् ॥ २५॥ वीतिहोत्रो नयःसाध्यो हंसो नारायणोऽवतु । विभुश्चैव प्रभुश्चैव देवश्रेष्ठा जगद्धिताः ॥ २६ ॥ धाता मित्रोऽर्यमा पूषा शक्रोऽथ वरुणो भगः । त्वष्टा विवस्वान् सविता विष्णुर्द्वादश भास्कराः ॥ २७ ॥ एक ज्योतिश्च द्विज्योतिस्त्रिःश्चतुर्ज्योतिरेव च । एकशक्रो द्विशक्रश्च त्रिशक्रश्च महाबलः॥ २८ ॥ इन्द्रश्च मेत्यादिशतु ततः प्रतिमकृत् तथा । मितश्च सम्मितश्चैव अमितश्च महाबलः॥ २९॥ ऋतजित्सत्यजिच्चैव सुषेणः सेनजित् तथा । अतिमित्रोऽनुमित्रश्च पुरुमित्रोऽपराजितः॥३०॥ ऋतश्च ऋतवाग् धाता विधाता धारणो ध्रुवः । विधारणो महातेजा वासवस्य परः सखा ॥ ३१ ॥ ईदृक्षश्चाप्यदृक्षश्च एतादृगमिताशनः । क्रीडितश्च सदृक्षश्च सरभश्च महातपाः॥३२॥ धर्त्ता धुर्य्यो धुरिभीम अभिमुक्तः क्षपात्सह। धृतिर्वसुरनाधृष्यो रामः कामो जयो विराट्॥३३॥ देवा एकोनञ्चाशन्मरुतस्त्वामवन्तु ते।

आपकी रक्षा करें ।। १२ ।। ऋतुएँ, मास, पक्ष, रात्रि.,ख दिन, सन्ध्या, तिथि और मुहूर्त ये काल के छोटे-छोटे अवयव आपकी रक्षा करें ।। १३ ।। सूर्य आदि ग्रह, स्वायँभुव आदि मनु, आपकी रक्षा करें । स्वायम्भुव, स्वरोचिष् , उत्तम, तामस, रैवत, चाक्षुष् , वैवश्वत, सावर्णि, ब्रह्मपुत्र धर्मपुत्र, रुद्रपुत्र., ब्रह्मपुत्र, रौच्य तथा भौत्य ये चतुर्दश मनु आपकी रक्षा करें ।।१४-१५।। विश्वभुक् , विपश्चित् , शिखी, विभु, मनोजव, ओजस्वी, बलि, अद्भुत, शान्तियाँ, वृष, ऋतधामा, दिवस्पृक्, कवि, इन्द्र, रैवन्त, कुमार (कार्तिकेय) वत्सविनायक, वीरभद्र, नन्दी, विश्वकर्मा,, पुरोजव, देवताओं के वैद्य अश्विनी कुमार तथा ध्रुव आदि आठ वसु ये यहाँ पर पधारे हुए मुख्य देवता आपकी रक्षा करें ।। १६-१९ ।। महीर्षि अंगिरा के कुल में उत्पन्न दस देवता तथा चारों वेद सिद्धि के लिए आपका अभिषेक करें । आत्मा, आयु, मन, दक्ष, मद, प्राण, हविष्मान्, गरिष्ठ, ऋत एवं सत्य, ये सभी तुम्हारी रक्षा करें ।! २०।। क्रतु, दक्ष, वसु, सत्य, काल, काम तथा धूरि ये तुम्हें विजय प्रदान करें ।। २१ ।। पुरूरवा, मार्द्रव, विश्वेदेव, रोचन, अङ्गारक (भौम) आदि ग्रह, सूर्य, निर्ऋति तथा यम ये सब तुम्हारी रक्षा करें ।। २२ ।। अजैकपाद, अहिर्बुध्न्य, धूम्रकेतु, रुद्र के पुत्र, भरत, मृत्यृ, कापालि, किंकिणि, भवन, भावन, स्वजन्य, स्वजन ये तुम्हारी रक्षा करें ।। २३ ।। क्रतुश्रवा, मूर्धा, याजन और उशना प्रसव, अव्यय, दक्ष, भृगुवंशी महर्षिगण, देवता, मनु, अनुमन्ता, प्राण, नव, बलवान् अपान, वीतिहोत्र, नय, साध्य, हंस तथा नारायण ये सब तुम्हारी रक्षा करें । ये सभी श्रेष्ठ देवता सम्पूर्ण जगत् में व्यापक, स्वामी तथा जगत् के कल्याणकारी हैं ।। २४-२६ ।। धाता, मित्र, अर्यमा, पूषा, शक्र, वरुण, भग, त्वष्टा, विवस्वान, सविता, विष्णु, बारहो सूर्य, एक ज्योति, द्विज्योति, त्रिज्योति तथा चतुर्ज्योति, एकशक्र, द्विशक्र तथा महाबलवान् त्रिशक्र, इन्द्र, प्रतिमकृत्, मित, सम्भित और महाबलवान् अमित, ऋतजित्, सत्यजित, सुषेण, सेनजित्, अतिमित्र, अनुमित्र, पुरुमित्र अपराजित ये सब तुम्हारी रक्षा करें ।। २७-३० ।। ऋत्, ऋतवाक्, धाता, विधाता, धारण, ध्रुव, महातेजस्वी विधारण, इदृक्ष, अदृक्ष, एतादृक्, अमिताशन, क्रीडित, सदृश, महातपा सरभ, धर्ता, धुर्य, धुरि, भीम, अभिमुक्त,

चित्राङ्गदश्चित्ररथः चित्रसेनश्च वै कलिः ॥ ३४॥ उर्णायुरुग्रसेनश्च धृतराष्ट्रश्च नन्दकः ॥ हाहा हूहूर्नारदश्च विश्वावसुश्च तुम्बरुः ॥ ३५॥ एते त्वामभिषिञ्चन्तु गन्धर्वा विजयाय ते । पान्तु ते कुरूपामुख्या दिव्याश्चाप्सरसाङ्गणाः ॥ ३६ ॥ अनवद्या सुवेशी च मेनकाः सह जन्यया । क्रतुस्थला घृताची च विश्वाची पुञ्जिकस्थला ॥ ३७॥ प्रम्लोचा चोर्वशी रम्भा पञ्चचूड़ा तिलोत्तमा । चित्रलेखा लक्ष्मणा च पुण्डरीका च वारुणी॥३८॥ प्रह्लादो विरोचनोऽथ बलिर्बाणोऽथ तत्सुताः । एते चान्येऽभिषिञ्चन्तु दानवा राक्षसास्तथा ॥ ३९ ॥ हेतिश्चैव प्रहेतिश्च विद्युत्स्फुर्जथुरग्रकाः। यक्षः सिद्धात्मकः पातु माणिभद्रश्चनन्दनः॥ ४०॥ पिङ्गाक्षो द्युतिमांश्चैव पुष्पवन्तो जयावहः । शङ्खःपद्मश्च मकरः कच्छपश्च निधिर्जये ॥ ४१॥ पिशाचा ऊर्ध्वकेशाद्या भूता भूम्यादिवासिनः । महाकालं पुरस्कृत्य नरसिंहश्च मातरः ॥ ४२ ॥ गुहः स्कन्दो विशाखस्त्वान्नैगमेयोऽभिषिञ्चतु। डाकिन्यो याश्च योगिन्यः खेचरा भूचराश्च याः ॥ ४३ ॥ गरुड़श्चारुणः पान्तु सम्पातिप्रमुखाः खगाः । अनन्ताद्या महानागाःशेषवासुकितक्षकाः॥४४॥ ऐरावतो महापद्मः कम्बलाश्वतरावुभौ । शङ्खःकर्कोटकश्चैव धृतराष्ट्रो धनञ्जयः॥ ४५॥ कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः। सुप्रतीकोऽञ्जनो नागाःपान्तुत्वां सर्वतः सदा ॥ ४६ ॥ पैतामहस्तथा हंसो वृषभः शङ्करस्य च । दुर्गासिंहश्च पान्तु त्वां यमस्य महिषस्तथा ॥ ४७॥ उच्चैःश्रवाश्चाश्वपतिस्तथा धन्वन्तरिः सदा । कौस्तुभः शङ्खराजश्च वज्रंशूलञ्चचक्रकम् ॥ ४८॥ नन्दकोऽस्त्राणि रक्षन्तु धर्मश्च व्यवसायकः । चित्रगुप्तश्चदण्डश्च पिङ्गलोमृत्युकालकौ बालखिल्यादिमुनयो व्यासवाल्मीकिमुख्यकाः। पृथुर्दिलीपो भरतो दुष्यन्तःशक्रजिद् बली ॥ ५० ॥ मल्लः ककुत्स्थश्चानेन युवनाश्वो जयद्रथः। मान्धातामुचुकुन्दश्च पान्तुत्वाञ्च पुरूरवाः॥ ५१॥ वास्तुदेवाः पञ्चविंशत् तत्त्वानि विजयायते । रुक्मभौमःशिलाभौमः पातालो नीलमूर्त्तिकः॥५२॥ पीतरक्तः क्षितिश्चैव श्वेतभौमो रसातलम्। भूर्ल्लोकोऽथ भुवर्मुख्या जम्बूद्वीपादयःश्रिये॥५३॥ उत्तराः कुरवः पान्तु रम्या हिरण्यकस्तथा। भद्राश्वः केतुमालश्च

---

अक्षपात्, सह, धृति, वसु, अनाधृष्य, राम, काम, जय तथा विराट् ये सब तुम्हारी रक्षा करें ।। ३१-३३ ।। उनचास मरुत् नामक देवता तुम्हारी रक्षा करें । चित्राङ्गद, चित्ररथ, चित्रसेन, कलि, उणायु, उग्रसेन, धृतराष्ट्र, नन्दक, हाहा, हूहू, नारद, विश्वावसु तथा तुम्बरु ये तुम्हारा अभिषेक करें तथा गन्धर्व आपको विजय प्रदान करें ।। ३४-३५।। प्रधान-प्रधान ऋषिगण तथा दिव्य अप्सराओं का समूह तुम्हारी रक्षा करे ।। ३६ ।। अनवद्या, सुकेशी, मेनका, जन्या, क्रतुस्थला, घृताची, विश्वाची, पुञ्जिका स्थला, प्रम्लोचा, उर्वशी, रम्भा, पञ्चचूड़ा, तिलोत्तमा, चित्रलेखा, लक्ष्मणा, पुण्डरीका, वारुणी, ये दिव्य अप्सराएँ आपकी रक्षा करें ।। ३७-३८ ।। प्रह्लाद, विरोचन, बलि, बाण, बाणपुत्र ये सभी तथा अन्य दानव एवं राक्षस आपका अभिषेक करें ।। ३९।। हेतु, प्रहेति, विद्युत् , स्फुर्जथु, उग्रक, यक्ष, सिद्ध, मणिभद्र और नन्दन ये सब तुम्हारी रक्षा करें ।। ४० ।। पिङ्गाक्ष, द्युतिमान् पुष्पवन्त, जयावह, शंख, पद्म, मकर और कच्छप ये निधियाँ तुम्हें विजय प्रदान करें ।। ४१ ।। पिशाच, भूमि आदि के निवासी भूत महाकाल एवं नरसिंह को आगे करके माताएँ, गुह, स्कन्द, विशाख तथा नैगमेय आपका अभिषेक करें ।। ४२।। पृथिवी एवं आकाश में विचरण करने वाली डाकिनियाँ एवं योगिनियाँ, गरुड, अरुण तथा सम्पाति आदि पक्षिगण आपकी रक्षा करें ।। ४३ ।। अनन्त आदि महानाग, शेष, वासुकि, तक्षक, ऐरावत, महापाल, कम्बल, अश्वतर, शंख, कर्कोटक, धृतराष्ट्र, धनञ्जय, कुमुद, ऐरावत, पद्म, पुष्पदन्त,वामन, सुप्रतीक तथा अञ्जन एवं समस्त नाग आपकी सदा सब ओर से रक्षा करते रहें ।।४४-४६।। ब्रह्मा जी का वाहन हंस, शंकर जी का वाहन वृषभ, दुर्गा जी का वाहन सिंह तथा यम का वाहन महिष आपकी रक्षा करे ।। ४७ ।। अश्वराज उच्चैःश्रवा, धन्वन्तरि वैद्य, कौस्तुभमणि, शंखराज पाञ्चजन्य, वज्र, शूल, चक्र एवं नन्दक खड्ग आदि अस्त्र आपकी रक्षा करें । दृढ़ निश्चय रखने वाले धर्म, चित्रगुप्त, दण्ड, पिङ्गल, मृत्यु, काल, बालखिल्य आदि मुनि, व्यास एवं बाल्मीकि आदि महर्षि पृथु, दिलीप, भरत, दुष्यन्त, बलवान् इन्द्रजित्, मनु, ककुत्स्थ, अनेना, युवनाश्व, जयद्रथ, मान्धाता, मुचुकुन्द और पृथिवीपति, पुरूरवा ये सब तुम्हारी रक्षा करें।।४८-५१।। वास्तुदेवता एवं पच्चीस तत्त्व आपको विजय प्रदान करें ।। ५१।। रुक्मभौम, शिलाभौम, पाताल, नीलमूर्ति, पीतरक्त, क्षिति, श्वेतभौम, रसातल, भूर्लोक, आदि लोक, तथा जम्बूद्वीप

वर्षश्चैव बलाहकः॥ ५४॥ हरिवर्षःकिम्पुरुष इन्द्रद्वीपः कशेरुमान् । ताम्रवर्णो गभस्तिमान् नागद्वीपश्च सौम्यकः ॥ ५५ ॥ गन्धर्वो वरुणोयश्च नवमः पान्तु राज्यदाः । हिमवान् हेमकूटश्च निषधो नील एव च ॥ ५६॥ श्वेतश्च शृङ्गवान् मेरुर्माल्यवान् गन्धमादनः । महेन्द्रो मलयःसह्यःशुक्तिमानृक्षवान्गिरिः ॥ ५७॥ विन्ध्यश्च पारियात्रश्च गिरयःशान्तिदास्तु मो । ऋग्वेदाद्याःषडङ्गानि इतिहासपुराणकम्॥ ५८॥ आयुर्वेदश्च गन्धर्वधनुर्वेदोपवेदकाः । शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः॥ ५९॥ छन्दोगानि च वेदाश्च मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणञ्च विद्याह्येताश्चतुर्दशः॥ ६०॥ सांख्यं योगः पाशुपतं वेदा वै पञ्चरात्रकम् । कृतान्तपञ्चकं ह्येतद् गायत्री च शिवा तथा ॥ ६१ ॥ दुर्गा विद्या च गान्धारी पान्तु त्वां शान्तिदाश्च ते । लवणेक्षुसुरासर्पिर्दधिदुग्धजलाब्धयः॥६२॥ चत्वारः सागराः पान्तु तीर्थानि विविधानि च । पुष्करश्च प्रयागश्च प्रभासो नैमिषः परः॥ ६३ ॥ गयाशीर्षो ब्रह्मशिरस्तीर्थमुत्तरमानसम् । कालोदको नन्दिकुण्डस्तीर्थं पञ्चनदस्तथा ॥ ६४॥ भृगुतीर्थं प्रभासञ्च तथा चामरकण्टकम् । जम्बुमार्कश्च विमलः कपिलस्य तथाश्रमः ॥ गङ्गाद्वारकुशावर्त्तौ विन्ध्यको नीलपर्वतः । वराहपर्वतश्चैव तीर्थङ्कनखलं तथा॥६६॥ कालञ्जरश्च केदारो रुद्रकोटिस्तथैव च । वाराणसी महातीर्थं बदर्य्याश्रम एव च॥ ६७॥ द्वारका श्रीगिरिस्तीर्थं तीर्थञ्च पुरुषोत्तमः । शालग्रामोऽथ वाराहः सिन्धुसागरसङ्गमः॥ ६८॥ फल्गुतीर्थं विन्दुसरः करवीराश्रमस्तथा । नद्यो गङ्गासरस्वत्यःशतद्रुर्गण्डकी तथा॥ ६९॥ अच्छोदा च विपाशा च वितस्ता देविका नदी । कावेरी वरुणा चैव निश्चिरा गोमती नदी ॥ ७० ॥ पारा चर्मण्वती रूपा मन्दाकिनी महानदी । तापी पयोष्णी वेणा च गौरी वैतरणी तथा ॥ ७१ ॥ गोदावरी भीमरथी तुङ्गभद्रा प्रणी तथा । चन्द्रभागा शिवा गौरी अभिषिञ्चन्तु पान्तु वः॥ ७२ ॥

इत्यादिमहापुराण आग्नेये अभिषेकमन्त्रवर्णनं नामोनविंशाधिकद्विशततमोऽध्यायः ॥ २१९॥

---

आदि आपको श्री प्रदान करें ।। ५२-५३ ।। उत्तर कुरु, रम्यक, हिरण्यक, भद्राश्व, केतुमाल, बलाहक, हरिवर्ष, किंपुरुष, इन्द्रद्वीप, कशेरुमान् , ताम्रवर्ण गभस्तिमान, मागद्वीप, सौम्यक, गन्धर्व, वरुण एवं नवम आदि राज्य देने वाले वर्ष तुम्हारी रक्षा करें ।। ५४-५५।। हिमवान्, हेमकूट, निषध, नील, श्वेत, शृंगवान्, मेरु, माल्यवान्, महेन्द्र, मलय, सह्य, शुक्तिमान्, ऋक्षवान् पर्वत, विन्ध्य तथा परिपात्र ये सभी तुम्हें शान्ति प्रदान करें ।। ५६-५८ ।। ऋग्वेद आदि चारो वेद, छहों वेदाङ्ग, इतिहास, पुराण, आयुर्वेद, गान्धर्व वेद और धनुर्वेद आदि उपवेद, शिक्षा, कल्प, व्याकरण, निरुक्त, ज्योतिष् छन्द, ये छह वेदाङ्ग, चार वेद, मीमांसा, न्याय, धर्मशास्त्र और पुराण ये चौदह विद्याएँ तुम्हारी रक्षा करें ।। ६० ।। सांख्य, योग, पाशुपत, वेद तथा पाञ्चरात्र ये सिद्धान्तपञ्चक हैं । इन पाञ्चों से भिन्न, गायत्री, शिवा, दुर्गा, विद्या तथा गान्धारी नामक देवियाँ तुम्हारी रक्षा करें और तुम्हें शान्ति प्रदान करें ।। ६१।। लवण, इक्षुरस, सुरा, घृत, दधि, दुग्ध तथा जल के समुद्र, चारों सागर तथा अनेक प्रकार के तीर्थ तुम्हारी रक्षा करें ।।६२।। पुष्कर, प्रयाग, प्रभास, नैमिष, गयाशीर्ष, ब्रह्मशिरः, उत्तर मानस, कालोदक, नन्दीकुण्ड, पञ्चनद तीर्थ, भृगुतीर्थ, अमरकण्टक, जम्बूमार्ग, विमल, कपिलाश्रम, गंगाद्वार, कुशावर्त, विन्ध्य, नीलगिरि, वराहपर्वत, कनखलतीर्थ, कालञ्जर, केदार, रुद्रकोटि, महातीर्थ, वाराणसी, बदरिकाश्रम, द्वारका, श्रीशैल, पुरुषोत्तमतीर्थ, शालग्राम, वाराह, सिंधु एवं समुद्र के संगमतीर्थ फल्गु तीर्थ, विन्दुसर, करवीराश्रम, गंगानदी, सरस्वती तथा गण्डकी नदी ये सभी नदियाँ तुम्हारा अभिषेक करें।।६३-६९।। अच्छोदा, विपाशा, वितस्ता देविका नदी, कावेरी, वरुणा, निश्चिरा, गोमती, पारा, चर्मण्वती, रूपा, महानदी, मन्दाकिनी, तापी, पयोष्णी, वेणा, वैतरणी, गोदावरी, भीमरथी, तुङ्गभद्रा, अरणी, चन्द्रभागा, शिवा तथा गौरी आदि पवित्र. नदियाँ तुम्हारा अभिषेक करें और रक्षा करें ।। ७०-७२।।

**इस तरह से आदिमहापुराण अग्निपुराण का अभिषेक सम्बन्धी मन्त्र वर्णन नामक दो सौ उन्नीसवाँ अध्याय सम्पूर्ण हुआ ॥ २१९ ॥**

## विंशत्यधिकद्विशततमोऽध्यायः

### सहायसम्पत्तिः

पुष्कर उवाच– **सोऽभिषिक्तःसहामात्यो जयेच्छत्रून् नृपोत्तमः। राज्ञा सेनापतिः कार्यो ब्राह्मणः क्षत्रियोऽथवा ॥ १ ॥ कुलीनो नीतिशास्त्रज्ञः प्रतीहारश्च नीतिवित् । दूतश्च प्रियवादी स्यादक्षीणोऽतिबलान्वितः ॥ २ ॥ ताम्बूलधारी ना स्त्री वा भक्तःक्लेशसहप्रियः । सान्धिविग्रहिकः कार्य्यःषाड्गुण्यादि विशारदः ॥ ३ ॥ खड्गधारी रक्षकः स्यात् सारथिःस्याद् बलादिवित् । सदाध्यक्षो हितो विज्ञो महानसगतो हि सः॥ ४ ॥ सभासदस्तु धर्मज्ञा लेखकोऽक्षरविद्धितः । आह्वाने कालविज्ञाःस्युर्हिता दौवारिकाजनाः॥ ५॥ रत्नादिज्ञो धनाध्यक्षः अनुद्वारे हितो नरः । स्यादायुर्वेदविद् वैद्यो गजाध्यक्षोऽथ हस्तिवित् ॥ ६ ॥ जितश्रमो गजारोहो हयाध्यक्षो हयादिवित् । दुर्गाध्यक्षो हितो धीमान् स्थपतिर्वास्तुवेदविद् ॥ ७ ॥ यन्त्रमुक्ते पाणिमुक्ते अमुक्ते मुक्तधारिते । अस्त्राचार्य्यो नियुद्धे च कुशलो नृपतेर्हितः॥ ८॥ वृद्धश्चान्तःपुराध्यक्षः पञ्चाशद्वार्षिकाः स्त्रियः । सप्तत्यब्दास्तु पुरुषाश्चरेयुःसर्वकर्मसु ॥ १०॥ जाग्रत्स्यादायुधागारे ज्ञात्वावृत्तिर्विधीयते । उत्तमाधममध्यानि बुध्वा कर्माणि पार्थिवः ॥ ११॥ उत्तमाधममध्यानि पुरुषाणि नियोजयेत्। जयेच्छुः पृथिवीं राजा सहायानानयेद्धितान् ॥ १२॥ धर्मिष्ठान् धर्मकार्य्येषु शूरान् सङ्ग्रामकर्मसु ।**

---

**पुष्कर जी ने कहा–** उत्तम राजा को चाहिए कि अभिषेक हो जाने पर वह अपने मन्त्री को साथ लेकर शत्रुओं पर विजय प्राप्त करे। राजा को ब्राह्मण अथवा क्षत्रिय सेनापति बनाना चाहिए।। १ ।। प्रतीहार को कुलीन, नीतिशास्त्र का ज्ञाता नीति को जानने वाला होना चाहिए । दूत को प्रिय बोलने वाला, कमजोर नहीं, अत्यन्त बलवान् होना चाहिए ।। २ ।। राजा को पान देने वाला स्त्री या पुरुष कोई भी हो सकता है । उसे राजभक्त क्लेश सहिष्णु और राजा का प्रिय होना चाहिए । सन्धिविग्रहिक (विदेश सचिव) उसे होना चाहिए जो सन्धि, विग्रह, यान, आसन,द्वैधीभाव तथा समाश्रय) इन छह गुणों का जानकार एवं इनका प्रयोग करने में समर्थ हो ।। ३ ।। रक्षक को खड्गधारण करने वाला तथा सारथि को सेना आदि की जानकारी रखने वाला होना चाहिए । रसोइया के अध्यक्ष को राजा का हितैषी और चतुर होने के साथ-साथ सदा महानस (रसोईघर) में उपस्थित रहना चाहिए ।। ४ ।। सभासद् को धर्म का ज्ञाता होना चाहिए और लेखक को हितकारी तथा कई प्रकार की लिपियों का ज्ञाता होना चाहिए । दौवारिक (द्वाररक्षा के कार्य में नियुक्त पुरुष को ऐसा होना चाहिए जो स्वामी के हित में संलग्न हो और इस बात को जाने कि राजा उसे कब-कब अपने पास बुलाते हैं ।। ५ ।। धनाध्यक्ष को रत्न आदि को पहचानने वाला तथा धन बढ़ाने के साधनों में तत्पर रहने वाला होना चाहिए । वैद्य को आयुर्वेद का जानकार होना चाहिए । गजाध्यक्ष को भी गजविद्या से परिचित होना चाहिए ।। ६ ।। हाथी सवार को परिश्रम से थकने वाला नहीं होना चाहिए । अश्वों के अध्यक्ष को अश्वविद्या का जानकार होना चाहिए । दुर्ग (किले) के अध्यक्ष को राजा का हितैषी और बुद्धिमान होना चाहिए । शिल्पी को वास्तुविद्या का जानकार होना चाहिए ।। ७ ।। अस्त्राचार्य को मशीन से हथियार चलाने, हाथ से शस्त्रों का प्रयोग करने, शस्त्र को न छोड़ने, छोड़े हुए शस्त्र को रोकने अथवा निवारण करने में निपुण, युद्ध की कला में कुशल, और राजा का हितैषी होना चाहिए ।। ८ ।। रनिवास का अध्यक्ष पचास वर्ष की स्त्री तथा सत्तरवर्ष के बूढ़े वृद्ध पुरुष को होना चाहिए । पचास वर्ष की स्त्रियों तथा सत्तरवर्ष के बूढ़े पुरुषों को रनिवास के समस्त कार्यों में नियुक्त किया जाना चाहिए।।९।। शस्त्रागार में ऐसे पुरुष को नियुक्त करना चाहिए जो सदा सावधान रहकर पहरा देता रहे । भृत्यों के कार्यों को जानकर उनके लिए तदनुकूल ही जीविका प्रदान करना चाहिए । राजा को चाहिए कि वह उत्तम मध्यम एवं अधम कार्यों का विचार करके उनके लिए वैसे ही पुरुषों की नियुक्त करे ।। १० ।। पृथिवी पर विजय चाहने वाले राजा को अपने हितैषी सहायकों का संग्रह करना चाहिए । धर्म के कार्यों में धर्मात्मा पुरुषों को, युद्ध में शूरवीरों को और धनोपार्जन के कार्यों में अर्थकुशल व्यक्तियों को लगाना चाहिए । राजा को इस बात का ध्यान रखना

निपुणानर्थकृत्येषु सर्वत्र च तथाशुचीन् ॥ १२॥ स्त्रीषु षण्डान् नियुञ्जीत तीक्ष्णान् दारुणकर्मसु । यो यत्र विदितो राज्ञा शुचित्वेन तु तत्रारम्॥१३॥ धर्मे चार्थे च कामे च नियुञ्जीताधमेऽधमान् । राजा यथार्हं कुर्य्याच्च उपधाभिः परीक्षितान् ॥ १४ ॥ समन्त्री च यथान्यायात् कुर्य्याद्धस्तिवनेचरान्। तत्पदान्वेषणे यत्तानध्यक्षांस्तत्र कारयेत्॥ १५॥ यस्मिन् कर्मणि कौशल्यं यस्य तस्मिन् नियोजयेत् । पितृपैतामहान् भृत्यान् सर्वकर्मसु योजयेत्॥१६॥ विना दायादकृत्येषु तत्र ते हि समागताः । परराजगृहान् प्राप्तान्जनान् संश्रयकाम्यया ॥ १७॥ दुष्टानप्यथ वाऽदुष्टान् संश्रयेत् प्रयत्नतः । दुष्टं ज्ञात्वा विश्वसेन्न तद्वृत्तिंवर्त्तयेद्वशे॥१८॥ देशान्तरागतान्पार्श्वे चारैर्ज्ञात्वा हि पूजयेत् । शत्रवोऽग्निर्विषं सर्पोनिस्त्रिंशमपि चैकतः॥ १९॥ भृत्यावशिष्टं विज्ञेयाः भृत्याश्च तथैकतः । चारचक्षुर्भवेद्राजा नियुञ्जीत सदाचरान्॥ २०॥ जनस्याविहितान् सौम्यांस्तथा ज्ञातान् परस्परम् । वणिजो मन्त्रकुशलान् सांवत्सर चिकित्सकान् ॥ २१ ॥ तथा प्रव्रजिताकारान् बलाबलविवेकिनः । नैकस्य राजा श्रद्दध्याच्छ्रद्दध्याद्बहुवाक्यतः॥२२॥ रागापरागौ भृत्यानां जनस्य च गुणागुणान् । शुभानामशुभानाञ्च ज्ञानं कुर्य्याद्वशाय च॥ २३॥ अनुरागकरं कर्म चरेज्जह्याद् विरागजम् । जनानुरागया लक्ष्म्या राजा स्याज्जनरञ्जनात् ॥ २४॥

इत्यादिमहापुराण आग्नेये सहायसम्पत्तिवर्णनं नाम विंशाधिकद्विशततमोऽध्यायः॥ २२०॥

---

चाहिये कि सभी कार्यों में नियुक्त पुरुष शुद्ध आचार-विचार वाले हों ।। १२ ।। राजा को चाहिए कि वह स्त्रियों के देखभाल में नपुंसकों को नियुक्त करे,कठोर कार्यों में तीक्ष्ण स्वभाव वाले पुरुषों को वह लगाये । राजा धर्म, अर्थ एवं काम के साधनों में उसी व्यक्ति को वहाँ नियुक्त करे जहाँ के लिए जिसे वह उपयोगी समझे ।। १३ ।। राजा के लिए यह उचित है कि वह तरह-तरह से अपने लिए उपयोगी पुरुषों की परीक्षा करके उन्हें यथायोग्य कार्यों में नियुक्त करे । निकृष्ट कार्यों में वह उसी श्रेणी के पुरुषों को नियुक्त करे ।। १४ ।। मन्त्री से सलाह लेकर कुछ व्यक्तियों को यथोचित वृत्ति देकर हाथियों के जंगल में नियुक्त करे और उनका पता लगाते रहने के लिए कई उत्साही अध्यक्षों को नियुक्त करे ।। १५ ।। जिसकी जिस कार्य में कुशलता हो, उसे उसी कार्य में नियुक्त करना चाहिए । पिता तथा पितामह के भृत्यों को सभी कार्यों में नियुक्त करना चाहिए ।। १६ ।। केवल उत्तराधिकारी के कार्यों में उनकी नियुक्ति नहीं करे क्योंकि उस कार्य में वे सबके सब एक समान हैं ।जो लोग दूसरे राजा के आश्रय को त्यागकर अपने पास शरण प्राप्त करने के लिए आएँ,वे दुष्ट हों या साधु उन्हें शरण अवश्य प्रदान करें ।यदि वेदुष्ट सिद्ध हो जायँ तो उनका विश्वास न करे और उनकी जीविका वृत्ति को अपने ही अधीन रखे ।। १७-१८ ।। जो लोग दूसरे देशों से अपने पास आए हों उनके विषय में गुप्तचरों द्वारा सारी बातें जानकर उनका यथोचित सत्कार करे ।। १८।। शत्रु, अग्नि, विष, सर्प और तलवार एक ओर तथा दुष्ट भृत्य एक ओर, इनमें दुष्ट भृत्यों को ही अधिक भयंकर समझना चाहिए।।१९।। राजा को सदा चारचक्षु होना चाहिए अर्थात् गुप्तचरों द्वारा ही सारी बातों का पता लगाना चाहिए । इसलिए उसे सदा गुप्तचर तैनात किए रहना चाहिए ।। २० ।। गुप्तचरों को ऐसा होना चाहिए जिन्हें लोग पहचानते न हों । वे परस्पर में एक दूसरे को भी नहीं पहचानते हों, उनका स्वभाव शान्त होना चाहिए । उनमें कोई वैश्य के रूप में हो तो कोई मन्त्र तन्त्र में कुशल हो, कोई ज्योतिषी हो तो कोई वैद्य हो ।। २१ ।। कोई संन्यासी वेषधारी हो तो कोई बलाबल का विचार करने वाला हो । राजा को किसीएक गुप्तचर की बात पर विश्वास नहीं करना चाहिए, जब वह बहुतों के मुँह से एक तरह की बात सुने तब ही उस पर विश्वास करे ।। २२ ।। राजा को यह जानना चाहिए कि किस भृत्य का उसके प्रति अनुराग है तथा किसकी उसके प्रति उदासीन भावना है। किस व्यक्ति में कौन सा गुण है और कौन सा दोष ? उसे लोगों को अपने वश में करने के लिए शुभ तथा अशुभ का ज्ञान रखना चाहिए ।। २३ ।। राजा को ऐसा ही काम करना चाहिए कि लोगों का उसके प्रति अनुराग बढ़े और विरागसमाप्त हो । लोगों के अनुराग प्राप्ति रूपी लक्ष्मी को प्राप्त कर राजा प्रजाओं का अनुरञ्जन करने वाला हो सकता है ।।२४।।

इस तरह से आदिमहापुराण अग्निपुराण का सहायकसम्पत्ति वर्णन नामक दो सौ बीसवाँ अध्याय सम्पूर्ण हुआ ॥ २२० ॥

## एकविंशत्यधिकद्विशततमोऽध्यायः

## अनुजीविवृत्तम्

पुष्कर उवाच– **भृत्यः कुर्य्यात् तु राजाज्ञां शिष्यवत्सच्छ्रियाः पतेः । न क्षिपेद् वचनं राज्ञो अनुकूलं प्रियं वदेत् ॥ १ ॥ रहोगतस्य वक्तव्यमप्रियं यद्धितं भवेत् । न नियुक्तो हरेद् वित्तं नोपेक्षेत् तस्य मानकम्॥ २॥ राज्ञश्च न तथाकार्य्यं वेशभाषाविचेष्टितम् । अन्तःपुरचराध्यक्षो वैरभूतैर्निराकृतैः॥३॥ संसर्गं न ब्रजेद्भृत्यो राज्ञो गुह्यञ्च गोपयेत् । प्रदर्श्य कौशलं किञ्चिद्राजानन्तु विशेषयेत्॥ ४॥ राज्ञा यच्छ्रावितं गुह्यं न तल्लोके प्रकाशयेत् । आज्ञाप्यमाने वान्यस्मिन् किङ्करोमीति वा वदेत् ॥ ५ ॥ वस्त्रं रत्नमलङ्कारं राज्ञा दत्तं च धारयेत् । नानिर्दिष्टो द्वारि विशेन्नायोग्ये भुवि राजदृक्॥६॥ जृम्भान्निष्ठीवनङ्कासं कोपं पर्य्यन्तिकाश्रयम् । भृकुटीं वातमुद्गारं तत्समीपे विवर्जयेत्॥ ७॥ स्वगुणख्यापने युक्त्या परानेव नियोजयेत् । शाठ्यं लौल्यं सपैशून्यं नास्तिक्यं क्षुद्रता तथा ॥ ८ ॥ चापल्यञ्च परित्याज्यं नित्यं राजानुजीविना । श्रुतेन विद्याशिल्पैश्च संयोज्यात्मानमात्मना ॥ ९ ॥ राजसेवां ततः कुर्य्याद् भूतये भूतिवर्द्धनः । नमस्कार्य्याः सदा चास्य पुत्रबल्लभमन्त्रिणः॥ १०॥ सचिवैर्नास्य विश्वासो राजचित्तप्रियञ्चरेत् । त्यजेद् विरक्तं रक्तात् तु वृत्तिमीहेत राजवित्॥११॥ अपृष्टश्चास्य न ब्रूयात् कामं कुर्य्यात् तथापदि । प्रसन्नो वाक्यसंग्रही रहस्ये न च शङ्कते॥१२॥**

---

**श्रीपुष्कर जी ने कहा**– भृत्यको राजा की आज्ञा का पालन उसी तरह करना चाहिए जैसे कोई शिष्य अपने गुरु की आज्ञा का पालन करता है तथा पतिव्रता अपने पति की आज्ञा का पालन करती है । राजा की बात की कभी उपेक्षा नहीं करना चाहिए और सदा उसके अनुकूल बचन बोलना चाहिए ।। १ ।। यदि कोई राजा को हित की बात बतानी हो और वह सुनने में अप्रिय लगे तो उसे एकान्त में ही कहना चाहिए । किसी काम में नियुक्त होने पर राजकीय धन का अपहरण नहीं करना चाहिए और न तो वह राजा के सम्मान की उपेक्षा ही करे ।।२।। राजा की बोलचाल और वेशभूषा की नकल नहीं करनी चाहिए । अन्तःपुर के सेवकों के अध्यक्ष का कर्तव्य है कि वह ऐसे लोगों के साथ न बैठे जिनका राजा के साथ बैर हो तथा जो लोग राज दरबार से अपमानपूर्वक निकाल दिए गए हों ।। ३ ।। भृत्य को राजा की गुप्त बातों को दूसरों के समक्ष प्रकट नहीं करना चाहिए । अपनी कोई भी कुशलता दिखाकर राजा को विशेष प्रसन्न एवं सम्मानित करना चाहिए ।। ४ ।। राजा जिस गुप्त बात को बतलाए उसे समाज में प्रकाशित न करे,यदि राजा कोई आज्ञा न दे तो यह पूछना चाहिए कि मैं आपकी कौन सी सेवा करूँ ।। ५ ।। राजा जिस वस्त्र, रत्न अथवा अलंकार को प्रदान करे, उसे धारण करना चाहिए । विना आज्ञा के दरवाजे पर अथवा अन्य किसी स्थान पर जहाँ राजा की दृष्टि पड़ती हो, नहीं बैठना चाहिए।। ६ ।। जम्भाई लेना, थूकना, खाँसना, क्रोध प्रकट करना, खाट पर बैठना, भौंहें टेढ़ी करना, अपान वायु छोड़ना तथा डकार लेना आदि कार्य राजा के सन्निकट नहीं करना चाहिए ।। ७ ।। अपने गुणों को राजा के समक्ष प्रकट करने के लिए युक्तिपूर्वक दूसरों को ही नियुक्त करना चाहिए ।। शठता, लोलुपता, चुगुली, नास्तिकता तथा क्षुद्रता, एवं चपलता- इन दोषों को राजसेवकों को त्याग देना चाहिए ।। ८ ।। पहले स्वयं प्रयत्न करके वेद विद्या अथवा शिल्पकला की योग्यता प्राप्त करनी चाहिए । उसके पश्चात् अपनी सम्पत्ति बढ़ाना चाहने वाले पुरुष को अभ्युदय के लिए राजा की सेवा में प्रवृत्त होना चाहिए । राजा के प्रिय पुत्रों तथा उनके मन्त्रियों को सदा नमस्कार करना चाहिए ।। ९-१० ।। केवल मन्त्रियों के साथ रहने से राजा का अपने ऊपर विश्वास नहीं होता है । अतएव उनके हार्दिक अभिप्राय के अनुकूल सदा प्रिय कार्य करना चाहिए । राजा के स्वभाव को समझने वाले पुरुष के लिए उचित है कि वह विरक्त राजा को त्याग दे और अनुरक्त राजा से ही वृत्ति प्राप्त करने की चेष्टा करे ।। ११ ।। विना पूछे राजा के समक्ष कोई बात न कहे, किन्तु आपत्ति काल में ऐसा किया जा सकता है । राजा प्रसन्न हो तो वह सेवक के विनययुक्त वचन को मानता है । प्रेमी सेवक को किसी रहस्य युक्त स्थान में देखकर भी वह उस पर संदेह नहीं करता है ।। १२ ।। उसके दरबार में आने पर राजा उससे

कुशलादिपरिप्रश्नं सम्प्रयच्छति चासनम् । तत्कथाश्रवणाद्धृष्टो अप्रियाण्यपि नन्दते॥ १३॥ अल्पं दत्तं प्रगृह्णाति स्मरेत् कथान्तरेष्वपि । इति रक्तस्य कर्त्तव्यं सेवामन्यस्य वर्जयेत् ॥ १४ ॥

इत्यादिमहापुराण आग्नेय अनुजीविवृत्तकथनं नामैकविंशत्यधिकद्विशततमोऽध्यायः॥ २२१॥

## द्वाविंशत्यधिकद्विशततमोऽध्यायः

## दुर्गसम्पत्तिः

दुर्गसम्पत्तिमाख्यास्ये दुर्गदेशे वसेन्नृपः । वैश्यशूद्रजनप्रायोऽह्यनाहार्य्यस्तथापरैः॥ १॥ किञ्चिद् ब्राह्मणसंयुक्तो बहुकर्मकरस्तथा । अदेवमातृको भक्तजलो देशः प्रशस्यते ॥ परैरपीडितः पुष्प फलधान्यसमन्वितः । अगम्यः परचक्राणां व्यालतस्करवर्जितः॥ षण्णामेकतमं दुर्गं तत्र कृत्वा वसेद् बली । धनुदुर्गं महीदुर्गं नरदुर्गं तथैव च ॥ ४ ॥ वार्क्षञ्चैवाम्बु दुर्गञ्च गिरिदुर्गञ्च भार्गव । सर्वोत्तमं शैलदुर्गमभेद्यं चान्यभेदनम् ॥ ५ ॥ पुरं तत्र च हट्टाद्य देवतायतनादिकम् । अनुयन्त्रायुधोपेतें सोदकं दुर्गमुत्तमम् ॥ ६ ॥ राजरक्षां प्रवक्ष्यामि रक्ष्यो भूपो विषादितः । पञ्चाङ्गस्तु शिरीषः स्यान्मूत्रपिष्टो विषार्दनः ॥ ७ ॥ शतावरी छिन्नरुहा विषघ्नी तण्डुलीयकम् ! कौषातकी च कह्लारी ब्राह्मी चित्रपटोलिका ॥ ८ ॥ मण्डकूपर्णी वाराही धात्र्यानन्दकमेव च । उन्मादिनी सोमराजी विषघ्नं रत्नमेव च ॥९॥ वास्तुलक्षणसंयुक्ते वसन् दुर्गे सुरान्यजेत् । प्रजाश्च पालयेद् दुष्टाञ्जयेद्

---

कुशल प्रश्न करता है, आसन निर्दिष्ट करता है, उसकी चर्चा सुनकर प्रसन्न होता है उसकी प्रिय बात सुनकर भी प्रसन्न होता है । बुरा नहीं मानता है ।। १३ ।। उसकी दी हुई छोटी सी भी वस्तु को स्वीकार करता है और बात-चीत में उसे याद रखता है । इन्हीं लक्षणों से यह जानकर कि राजा अनुरक्त है कि विरक्त, अनुरक्त राजा की सेवा करनी चाहिए ।। १४ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का अनुजीवियों के व्यवहार वर्णन नामक दो सौ इक्कीसवाँ अध्याय सम्पूर्ण हुआ ॥ २२१ ॥**

**श्रीपुष्करजी ने कहा–** अब मैं दुर्ग सम्पत्ति का वर्णन करता हूँ । राजा को दुर्ग देश में (किले के भीतर) रहना चाहिए । साथ में रहने वाले मनुष्यों में वैश्यों एवं शूद्रों की संख्या अधिक होनी चाहिए । दुर्ग ऐसे स्थान में होना चाहिए जहाँ शत्रुओं की जोर न चले ।। १ ।। दुर्ग में कुछ ब्राह्मणों को भी होना चाहिए । राजा का दुर्ग वहाँ होना चाहिए जहाँ बहुत अधिक काम करने वाले लोग रहते हों । वहाँ जल के लिए वर्षा के जल की प्रतीक्षा न करनी पड़े वही स्थान दुर्ग के लिए श्रेष्ठ होता है ।। २ ।। जहाँ शत्रु पीड़ा न दे सके, जो फल-फूल एवं धान्य-सम्पत्ति से सम्पन्न हो । जो शत्रु की सेना के लिए अगम्य हो तथा जो सर्प तथा चोरों से रहित हो ऐसा ही देश दुर्ग के लिए उत्तम होता है ।। ३ ।। हे भृगुनन्दन ! बली राजा को, धन दुर्ग, महीदुर्ग, नरदुर्ग, वृक्षदुर्ग, जलदुर्ग तथा गिरिदुर्ग इन छह प्रकार के दुर्गो में एक-एक प्रकार का दुर्ग बनाकर उसमें निवास करना चाहिए । इनमें सर्वोत्तम शैल दुर्ग होता है, जो दूसरों के लिए अभेद्य तथा शत्रुओं का भेदन करने वाला होता है ।। ४-५ ।। दुर्ग ही राजा का नगर होता है । वहाँ हाट-बाजार तथा देव मन्दिर को होना चाहिए । जिसके चारों ओर यन्त्र लगे होना चाहिए तथा उसे अस्त्र शस्त्रों से पूर्ण होना चाहिए । जिसके चारों ओर जल से भरी खाई होती है, वह दुर्ग उत्तम होता है ।। ६ ।। अब मैं तुम्हें राजा की रक्षा के विषय में बतलाता हूँ । राजा को विष खाने पर उसकी रक्षा करनी चाहिए । शिरीष वृक्ष की जड़, छाल, पत्ता, फूल और फल इन पाँचों अंगों को गोमूत्र में पीसकर सेवन करने से विष का निवारण होता है ।। ७ ।। शतावरि, गुडुचि और चौराई विष का नाश करने वाली है । कौषतकी, (कड़वी तरोई) कह्लारी (करियारी) ब्राह्मी, चित्रपटोलिका (कड़वी परोरी) मण्डूकपर्णी वाराहीकन्द, आँवला, आनन्दक,भाँग और सोमराजी

## द्विपञ्चाशदधिकद्विशततमोऽध्यायः

## धनुर्वेदकथनम्

अग्निरुवाच– भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं स्मृतम् । सम्पातं समुदीशञ्च श्येनपातमथाकुलम्॥ १॥ उद्धूतमवधूतञ्च सव्यं दक्षिणमेव च । अनालक्षितविस्फोटौ करालेन्द्रमहासखौ ॥ २॥ विकरालनिपातौ च विभीषणभयानकौ । समग्रार्द्ध तृतीयांश पादपादार्द्धवारिजाः॥ ३॥ प्रत्यालीढमथालीढं वराहं लुलितं तथा । इति द्वात्रिंशतो ज्ञेयाःखड्गचर्मविधौ रणे॥ ४॥ परावृत्तमपावृत्तं गृहीतं लघुसंज्ञितम् । ऊर्ध्वात् क्षिप्रमधःक्षिप्तं सन्धारितविधारितम् ॥ ५ ॥ श्येनपातं गजपातं ग्राहग्राह्यं तथैव च । एवमेकादशविधा ज्ञेयाः पाशविधा रणाः ॥ ६॥ ऋज्वायतं विशालञ्च तिर्य्यग्भ्रामितमेव च । पञ्चकर्म विनिर्दिष्टं व्यस्ते पाशे महात्मभिः॥ ७॥ छेदनं भेदनं पातो भ्रमणं शयनं तथा । विकर्त्तनं कर्त्तनञ्च चक्रकर्मेदमेव च ॥ ८ ॥ आस्फोटः क्ष्वेदनं भेदस्त्रासान्दोलितकौ तथा। शूलकर्माणि जानीहि षष्ठमाघातसञ्ज्ञितम् ॥ ९॥ दृष्टिघातं भुजाघातं पार्श्वघातं द्विजोत्तम!। ऋजुपक्षेषुणापातं तोमरस्य प्रकीर्त्तितम्॥ १०॥ आहतं विप्र ! गोमूत्रप्रभूतं कमलासनम् । ततोर्ध्वगात्रं नमितं वामदक्षिणमेव च ॥ ११ ॥ आवृत्तञ्च परावृत्तं पादोद्धूतमवप्लुतम् । हंसमर्दं विमर्दञ्च गदाकर्म प्रकीर्त्तितम् ॥ १२॥ करालमवघातञ्च दंशोपप्लुतमेव च। क्षिप्तहस्तं स्थितं शून्यं परशोस्तु विनिर्दिशेत् ॥ १३॥ ताडनं छेदनं विप्र ! तथा चूर्णनमेव च । मुद्गरस्य तु कर्माणि तथा प्लवनघातनम् ॥ १४॥ संश्रान्तमथ विश्रान्तं गोविसर्गं सुदुर्द्धरम् । भिन्दिपालस्य कर्माणि लगुडस्य च तान्यपि ॥ १५ ॥ अन्त्यं मध्यं परावृत्तं निदेशान्तं द्विजोत्तम । वज्रस्यैतानि कर्माणि पट्टिशस्य च तान्यपि ॥ १६ ॥ हरणं छेदनं घातो बलोद्धारणमायतम् । कृपाणकर्म निर्दिष्टं पातनं स्फोटनं तथा ॥ १७॥ त्रासनं रक्षणं घातो बलोद्धरणमायतम् । क्षेपणोकर्म निर्दिष्टं यन्त्रकर्मैतदेव तु॥ १८ ॥सन्त्यागमवदंशश्च वराहोद्धूतकं तथा । हस्तावहस्तमालीनमेकहस्तावहस्तके॥१९॥

---

**अग्निदेव ने कहा–** भ्रान्त, उद्भ्रन्त, आविद्ध, आप्लुत, विप्लुत, प्लुत, सम्पात,समुदीर्ण, श्येनपात, आकुल ।। १ ।। उद्धूत, अवधूत, सव्य, दक्षिण, अनालक्षित, विस्फोट, करालेन्द्र, महासख ।। २ ।। विकराल, निपात, विभीषण, भयानक, समग्र, अर्द्ध तृतीयांश, पाद, पादार्ध वारिज ।। ३ ।। प्रत्यालीढ, आलीढ, वाराह, और लुलित संग्राम में ढाल एवं तलवार चलाने के एक बत्तीसहाथों (प्रकार) को जानना चाहिए । परावृत, अपावृत, गृहीत, लघु, ऊर्ध्वक्षिप्त, अधःक्षिप्त, सन्धारित, विधारित ।। ४-५ ।। श्येनपात, गजपात एवं ग्रहग्राह्य युद्ध में ग्यारह प्रकार के पाश फेंकने के इन प्रकारों को जानना चाहिए ।। ६ ।। ऋजु, आयत, विशाल, तिर्यक्, भ्रामित व्यस्तपाश में इन पाँच कर्मों को महात्माओं ने बतलाया है ।। ७ ।। छेदन, भेदन, पात, भ्रमण, शयन, विकर्तन एवं कर्तन, ये सात कर्म चक्र के हैं ।। ८ ।। आस्फोट, स्वेदन, भेद, त्रास, आन्दोलितक, और आघात इन सूत्र के छह कर्मों को जानो ।। ९ ।। हे द्विजोत्तम! दृष्टिघात,भुजाघात, पार्श्वघात, ऋजुपात, पक्षपात एवं इषुपात ये तोमर के कर्म बतलाये गये हैं ।। १० ।। हे विप्र ! आहत,विहृत, प्रभूत, कमलासन, ऊर्ध्वगात्र, नमितगात्र, वाम, दक्षिण, आवृत, परावृत, पादोद्धूह, अवप्लुत, हंसमर्द और विमर्द ये गदा के कर्म कहे गये हैं ।। ११-१२ ।। कराल, अवघात,वंशोपप्लुत, क्षिप्तहस्त, स्थित और शून्य इन्हें परशु का कर्म जानना चाहिए।।१३।। हे विप्र ! ताडन, छेदन, चूर्णन, प्लवन एवं घातन ये मुद्गर के कर्म हैं ।। १४ ।। श्रान्त, विश्रान्त, गोविसर्ग और सुदुर्द्धर ये भिन्दिपाल एवं लाठी दोनों के कर्म बतलाये गये हैं ।। १५ ।। हे द्विजोत्तम ! अन्त्य, मध्य परावृत्त एवं निदेशान्त ये पट्टीश एवं वज्र के समान रूप से कर्म हैं ।। १६ ।। हरण, छेदन, घात, भेदन, रक्षण, पातन एवं स्फोटन ये कृपाण (तलवार) के काम हैं ।। १७ ।। त्रासन, रक्षण, घात, बलोद्धरण और आयत ये क्षेपणी (गोफलन) एवं यन्त्र के समान रूप से काम हैं ।। १८ ।। संत्याग, अवदंश, वराहोद्धूतक, हस्त, अवहस्त, आलीन,

द्विहस्तबाहुपाशे च कटिरेचितकोद्गते । उरोललाटघाते च भुजाविधमनन्तथा ॥ २० ॥ करोद्धूतं विमानञ्च पादाहति विपादिकम् । गात्रसंश्लेषणं शान्तं तथागात्रविपर्य्ययः॥ २१॥ ऊद्र्ध्वप्रहारं घातञ्च गोमूत्रं सव्यदक्षिणे । पारकं तारकं दण्डं करवीरन्धमाकुलम् ॥ २२॥ तीर्यग्बन्धमपामार्गं भीमवेगं सुदर्शनम् । सिंहाक्रान्तं गजाक्रान्तं गर्द्दभाक्रान्तमेव च ॥ २३ ॥ गदाकर्माणि जानीयान्नियुद्धस्याथ कर्म च । आकर्षणं विकर्षञ्च बाहूनां मूलमेव च ॥ २४॥ ग्रीवाविपरिवर्त्तञ्च पृष्टभङ्गं सुदारुणम्। पर्य्यासनविपर्य्यासौ पशुमारमजाविकम् ॥ २५॥ पादप्रहारमास्फोटं कटिरेचितकं तथा । गात्राश्लेषं स्कन्धगतं महीव्याजनमेव च ॥ २६॥ उरोललाटघातञ्च विस्पष्टतरणं तथा । उद्धूतमवधूतञ्च तिर्य्यङ्मार्गगतं तथा ॥ २७॥ गजस्कन्धमवक्षेपमपराङ्मुखमेव च । देवमार्गमधोमार्गममार्गगमनाकुलम् ॥ २८ ॥ यष्टिघातमवक्षेपो वसुधादारणं तथा । जानुबन्धं भुजाबन्धं गात्रबन्धं सुदारुणम् ॥ २९॥ विपृष्टं सोदकं शुभ्रं भुजावेष्टितमेव च । सन्नद्धैः संयुगे भाव्यं सशस्त्रैस्तैर्गजादिभिः॥ ३०॥ वराङ्कुशधरौ चोभौ एको ग्रीवागतोऽपरः । स्कन्धगौ द्वौ च धानुष्कौ द्वौ च खड्गधरौ गजे ॥ ३१ ॥ रथे रणे गजे चैव तुरङ्गाणां त्रयं भवेत् । धानुष्काणां त्रयं प्रोक्तं रक्षार्थे तुरगस्य च॥ ३१॥ धन्विनो रक्षणार्थाय चर्मिणन्तु नियोजयेत् । स्वमन्त्रैः शस्त्रमभ्यर्च्य शास्त्रं त्रैलोक्यमोहनम् । यो युद्धे याति स जयेदरीन् सम्पालयेद् भुवम् ॥ ३३ ॥

इत्यादिमहापुराण आग्नेये धनुर्वेदकथनं नाम द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥

---

एक हस्त अवहंस्तक ।। १९ ।। द्विहस्त, बाहुपाश कटिरेचितक, उद्गत, उरोघात, ललाटघात, भुजाविधमन ।। २० ।। करोद्धूत, विमान, पादाहति, विपादिक गात्र संश्लेषण शान्त एवं गात्र विपर्यय।।२१।। ऊर्ध्वप्रहार घाता गोमूत्र सव्य, दक्षिण, पारक, तारक, दण्ड, कबरी, बन्ध, आकुल ।। २२ ।। तिर्यग्बन्ध, अपामार्ग, भीमवेग, सुदर्शन, सिंहाक्रान्त, गजाक्रान्त और गर्दभाक्रान्त।।२३।। ये गदा युद्ध के प्रकार हैं । अब मल्लयुद्ध के प्रकार बतलाये जा रहे हैं । आकर्षण,विकर्षण, बाहुमूल, ग्रीवा विपरिवर्त, सुदारुण, पृष्ठभंग, पर्यासन, विपर्यास, पशुमार अजाविक ।। २५ ।। पादप्रहार, आस्फोट, कटिरेचितक, गात्रश्लेष,स्कन्धगत, महीव्याजन ।। २६ ।। उरोघात, ललाटघात,विस्पष्टकरण, उद्धूत, अवधूत, तिर्यङ् मार्गगत।।२७।। गजस्कन्ध,अवक्षेप, अपराङ्मुख, देवमार्गगमन, अधोमार्गगमन, अमार्गगमन, आकुल ।। २८ ।। यष्टिघात, अवक्षेप, वसुधादारण, जानुबन्ध, भुजाबन्ध, गात्रबन्ध, सुदारुण।।२९।। विपृष्ठ, सोदक, श्वभ्र, एवं भुजावेष्टित ।। २९ ।। युद्ध में कवच धारण करके शस्त्रास्त्रों से सज्जित होकर तथा हाथी आदि पर बैठकर उपस्थित होना चाहिए ।। ३०।। हाथी पर उत्तम अंकुश धारण किए हुए दो महावत होना चाहिए । उसमें से एक को हाथी के कन्धे पर और दूसरे को उसके कन्धे पर सवार होना चाहिए ।। इसके अतिरिक्त सवारों में दो धनुर्धारी तथा दो खड्गधारी होना चाहिए ।। ३१ ।। युद्ध में रथ एवं हाथी की रक्षा के लिए तीन-तीन घुड़सवार सैनिक होना चाहिए । घोड़े की रक्षा के लिए तीन-तीन धनुर्धर पैदल सैनिक होना चाहिए ।। ३२ ।। धनुर्धर की रक्षा के लिए चर्म या ढाल लिए हुए योद्धाओं की नियुक्ति करनी चाहिए ।। जो प्रत्येक शस्त्र का उनके अपने मन्त्र से पूजन करके 'त्रैलोक्य मोहन' कवच का पाठ करके युद्ध में जाता है, वह शत्रुओं पर विजय प्राप्त करके पृथिवी का पालन करता है ।। ३३ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का धनुर्वेद वर्णन नामक दो सौ बावनवाँ अध्याय सम्पूर्ण हुआ ॥ २५२ ॥**

## त्रिपञ्चाशदधिकद्विशततमोऽध्यायः

## व्यवहारकथनम्

अग्निरुवाच– **व्यवहारं प्रवक्ष्यामि नयानयविवेकदम् । चतुष्पाच्च चतुःस्थानश्चतुःसाधन उच्यते ॥ १॥ चतुर्हितश्चतुर्व्यापी चतुष्कारी च कीर्त्यते । अष्टाङ्गोऽष्टादशपदः शतशाखस्तथैव च ॥ २॥ त्रियोनिद्व्र्यभियोगश्च द्विद्वारो द्विगतिस्तथा । धर्मश्च व्यवहारश्च चरित्रं राजशासनम्॥३॥ चतुष्पाद् व्यवहाराणामुत्तरः पूर्वसाधकः । तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु॥ ४॥ चरित्रसंग्रहे पुंसां राजाज्ञायान्तु शासनम् । सामाद्युपायसाध्यत्वाच्चतुःसाधन उच्यते ॥ ५ ॥ चतुर्णामाश्रमाणाञ्च रक्षणात् स चतुर्हितः । कर्त्तारं साक्षिणश्चैव सत्यान्राजानमेव च॥ ६॥ व्याप्नोति पादगो यस्माच्चतुर्व्यापी ततःस्मृतः । धर्मस्यार्थस्य यशसो लोकपंक्तेस्तथैव च ॥ ७ ॥ चतुर्णाङ्करणादेष चतुष्कारी प्रकीर्त्तितः । राजा सपुरुषः सभ्याः शास्त्रं गणकलेखकौ॥ ८॥ हिरण्यमग्निरुदकमष्टाङ्गः समुदाहृतः । कामात् क्रोधाच्च लोभाच्च त्रिभ्यो यस्मात् प्रवर्तते ॥ ९॥ त्रियोनिः कीर्त्यते तेन त्रयमेतद् विवादकृत् । द्व्यभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः ॥ १० ॥ शङ्कासद्भिस्तु संसर्गात् तत्त्वषोढादि दर्शनात्। पक्षद्वयाभिसम्बन्धाद् द्विद्वारः समुदाहृतः ॥ ११ ॥ पूर्ववादस्तयोः पक्षः प्रतिपक्षस्त्वनन्तरः। भूतच्छलानुसारित्वाद् द्विगतिःसमुदाहृतः ॥ १२॥ ऋणं देयमदेयञ्च येन यत्र तथा च यत्। दानग्रहणधर्मश्च ऋणादानमिति स्मृतम्॥ १३॥ स्वद्रव्यं यत्र विश्रम्भान् निक्षिपत्यविशङ्कितः। निक्षेपन्नाम तत्**

---

**अग्निदेव ने कहा**– अब मैं व्यवहार का वर्णन करता हूँ जिससे कि न्याय एवं अन्याय का ठीक-ठीक ज्ञान होता है । उसके चार चरण चार साधन और चार स्थान कहे गये हैं ।। १।। वह चार का हितकारी, चार में व्याप्त और चार का कर्ता कहा जाता है । वह आठों अंगों, अठारह पद, सौ शाखाओं, तीन योनियों, दो अभियोगों, दो द्वारों तथा दो गतियों वाला है।।२।। धर्म,व्यवहार चरित्र और राजशासन ये व्यवहारशास्त्र के चार चरण हैं । इनमें पूर्व-पूर्व पाद उत्तरोत्तर पाद के साधक हैं ।। ३ ।। इनमें धर्म का आधार सत्य है,व्यवहार का आधार साक्षी है, चरित्र का आधार पुरुषों का संग्रह है और शासन राजा की आज्ञा पर आधारित होता है ।। ४ ।। व्यवहारशास्त्र को चतुस्साधन इसलिए कहा जाता है कि वह साम आदि (दान, दण्ड और भेद) चार उपायों से साध्य है ।। ५ ।। (ब्रह्मचर्य), गार्हस्थ्य, वानप्रस्थ और संन्यास) इन चारों आश्रमों का पालक होने के कारण वह चार का हितकारी कहा जाता है । अभियोक्ता, साक्षी, सभासद तथा राजा इन चारों में इसकी एक-एक चरण से स्थिति है ।। ६ ।। चूँकि वह इन सबों में पादशः स्थित है, अतएव वह चतुर्व्यापी कहा जाता है । धर्म, अर्थ, यश एवं लोकप्रियता की वृद्धि करवाने वाला होने के कारण इसे चतुष्कारी कहा जाता है ।। ७ ।। इसको अष्टाङ्ग इसलिए कहा जाता है कि अपने लोगों से युक्त (१) राजा, (२) सभ्य, (३) शास्त्र, (४) गणक, (५) लेखक, (६) सुवर्ण, (७) अग्नि और (८) जल इसके आठ अंग हैं ।। ८ ।। चूँकि व्यवहार की प्रवृत्ति काम, क्रोध एवं लोभ इन तीनों से होती है अतएव इसे त्रियोनि कहा जाता है । ये तीनों ही विवाद के जनक हैं ।। ९ ।। इसको दो अभियोग वाला इसलिए कहा जाता है कि अभियोग के दो भेद होते हैं- (१) शंकाभियोग एवं (२) तत्त्वाभियोग ।। १० ।। असत् पुरुषों के संसर्ग से शंका होती है और षोढा (चिह्न या प्रमाण) आदि के देखने से तत्त्वज्ञान होता है । दो पक्षों से सम्बन्ध होने के कारण इसे द्विद्वार कहते हैं।।११।। उन दोनों में पूर्वपाद को पक्ष तथा उत्तरपाद को प्रतिपक्ष कहते हैं ।भूत (वास्तविकता) तथा छल का अनुसरण करने के कारण इसे द्विगति कहा जाता है ।। १२ ।। ऋण की देयता, (२) अदेयता, (३) ऋण देने के अधिकारी, (४) ऋण के पात्र, (५) ऋण के प्रकार, (६) ऋण की देने की विधि तथा (७) ऋण वसूलने की विधि इन सबों को ऋणदान कहते हैं ।। १३ ।। जब कोई मनुष्य विश्वास करके विना किसी शंका के किसी के पास अपनी वस्तु धरोहर के रूप में रख देता है तब उसे विद्वान लोग निक्षेप नामक व्यवहारपद कहते हैं ।। १४ ।। जहाँ पर अनेक वणिक् मिलकर कार्य करते हैं तो उसे सम्भूयसमुत्थान

प्रोक्तं व्यवहारपदं बुधैः ॥ १४ ॥ वणिक्प्रभृतयो यत्र कर्म सम्भूय कुर्वते । तत् सम्भूयसमुत्थानं व्यवहारपदं विदुः॥ १५॥ दत्त्वा द्रव्यञ्च सम्यग् यः पुनरादातुमिच्छति । दत्ताप्रदानिकं नाम तद् विवादपदं स्मृतम् ॥ १६ ॥ अभ्युपेत्य च शुश्रूषां यस्तां न प्रतिपद्यते । अशुश्रूषाभ्युपेत्यैतद् विवादपदमुच्यते ॥ १७॥ भृत्यानां वेतनस्योक्ता दानादानविधिक्रिया। वेतनस्यानपाकर्म तद् विवादपदं स्मृतम्॥ १८॥ निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वा प्रहृत्य वा । विक्रीयते परोक्षं यत् स ज्ञेयोऽस्वामिविक्रयः ॥ १९ ॥ विक्रीय पण्यं मूल्येन क्रेत्रे यच्च न दीयते । विक्रीयासम्प्रदानं तद् विवादपदमुयते ॥ २०॥ क्रीत्वा मूल्येन यत् पण्यं क्रेता न बहुमन्यते । क्रीत्वा मूल्येन तत् पण्यं दुष्क्रीतं मन्यते क्रयी ॥ २१ ॥ पाषण्डनैगमादीनां स्थितिः समय उच्यते । समयस्यानपाकर्म तद् विवादपदं स्मृतम्॥ २२॥ सेतुकेदारमर्य्यादाविकृष्टाकृष्टनिश्चयाः । क्षेत्राधिकारे यत्र स्युर्विवादः क्षेत्रजस्तु सः ॥ २३॥ वैवाहिको विधिः स्त्रीणां यत्र पुंसाञ्च कीर्त्यते । स्त्रीपुंसंयोगसंज्ञन्तु तद् विवादपदं स्मृतम् ॥ २४ ॥ विभागोऽर्थस्य पैत्रस्य पुत्रैर्यस्तु प्रकल्प्यते । दायभागमिति प्रोक्तं तत् विवादपदं बुधैः ॥ २५॥ सहसा क्रियते कर्म यत् किञ्चित् बलदर्पितैः । तत् साहसमिति प्रोक्तं विवादपदमुच्यते ॥ २६ ॥ देशजातिकुलादीनां यत्क्रोशत्यङ्गसंयुतम्। यद् वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते॥ २७॥ परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः । अग्न्यादिभिश्चोपघातैर्दण्डपारुष्यमुच्यते ॥ २८॥ अक्षवर्जशलाकाद्यैर्देवनं द्यूतमुच्यते । पञ्चक्रीडावयोभिश्च प्राणिद्यूतसमाह्वयः॥२९॥ प्रकीर्णकः पुनर्ज्ञेयो व्यवहारो निराश्रयः । राज्ञामाज्ञाप्रतीघातस्तत्कर्माकरणं तथा॥ ३०॥ व्यवहारोऽष्टादशपदस्तेषां भेदोऽथ वै शतम् । क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते॥३१॥ व्यवहारान् नृपः पश्येज् ज्ञानिविप्रैरकोपनः । शत्रु मित्रसमाः सभ्या अलोभाः

संज्ञक व्यवहार पद कहते हैं ।। १५ ।।यदि कोई मनुष्य विधिपूर्वक किसी वस्तु का दान करने के बाद में उसे फिर ले लेना चाहता है तो उसे दत्ताप्रदानिक नामक व्यवहारपद कहते हैं । जो शुश्रूषा करने के लिए स्वीकार करके भी उसको नहीं सम्पादित करता है उसे 'अभ्युपेत्य-अशुश्रूषा' नामक व्यवहार पद कहते हैं ।। १७ ।। भृत्यों के वेतन देने तथा न देने से सम्बन्ध रखने वाले विवाद को वेतन-अनपाकर्म नामक व्यवहार पद कहते हैं ।। १८ ।। धरोहर के रूप में रखे गए अथवा दूसरे के द्रव्य को प्राप्त करे अथवा चुराकर धन स्वामी के परोक्ष में द्रव्य को बेचे जाने से सम्बद्ध विवाद अस्वामि विक्रय नामक विवाद पद कहा जाता है ।। १९ ।। यदि कोई व्यापारी किसी पण्य वस्तु का मूल्य लेकर पुनः उस वस्तु को क्रेता को नहीं देना चाहता है तो उससे सम्बद्ध विवाद को विक्रीयासम्पादन नामक विवाद कहते हैं ।। २० ।। यदि कोई क्रेता मूल्य देकर वस्तु को खरीद लेने के बाद यह समझता है कि यह खरीददारी ठीक नहीं हुई है तो फिर भी उसे यदि वह मूल्य देकर खरीद लेता है तो क्रेता उसे दुष्क्रीत मानता है ।। २१ ।। पाषण्डी एवं नैगम आदि की स्थिति को समय कहते हैं । इनसे सम्बद्ध विवाद को समयानपाकर्म कहते हैं ।। २२ ।। क्षेत्र (खेत) के अधिकार के विषय में सेतु, केदार (खेत के क्षेत्रफल) के घटने अथवा बढ़ने से सम्बद्ध विवाद को क्षेत्रज्ञ विवाद कहते हैं ।। २३ ।। जिस विवाद का सम्बन्ध स्त्री एवं पुरुष के विवाह से होता है उसे स्त्रीपुंसयोग कहते हैं ।। २४ ।। जब पुत्रगण पिता की सम्पत्ति को बाँटते हैं, उससे सम्बद्ध विवाद को दायभाग कहते हैं ।। २५ ।। अपने बल के अभिमान से लोग जिस काम को सहसा कर डालते हैं, उससे सम्बद्ध विवाद को साहस कहा जाता है ।। २६ ।। किसी के देश,काल एवं जाति पर दोषारोपण करके जो प्रतिकूल अर्थ से युक्त व्यंग्यपूर्ण वचन कहा जाता है उसे वाक्यारुष्य कहते हैं ।। २७ ।। किसी द्रोह के कारण दूसरे के अंगों पर हाथ पैर अथवा आयुध आदि से प्रहार करना अथवा अग्नि आदि से आघात करने को दण्डपारुष्य कहते हैं ।। २८ ।। पासे, वज्र (चमड़े की पट्टी) तथा शलाका (हाथी दाँत की गोटियों) से की जाने वाली क्रीड़ा को द्यूत कहते हैं तथा पशुओं एवं पक्षियों (बटेर) आदि से की जाने वाली क्रीड़ा को प्राणीद्युत् कहते हैं ।। २९ ।। राजा की आज्ञा का उल्लंघन करना अथवा उसका कार्य न करना निराश्रय 'प्रकीर्णक' नामक व्यवहार पद माना जाता है ।।३०।। व्यवहार अट्ठारह पदों वाला होता है तथा मनुष्यों के क्रियाभेद के कारण उसके सौ भेद हो जाते हैं ।। ३१ ।। क्रोध रहित राजा ज्ञानी ब्राह्मणों के साथ व्यवहार का विचार करे और ऐसे लोगों को सभासद बनाए जो निर्लोभ,

श्रुतिवेदिनः ॥ ३२ ॥ अपश्यता कार्य्यवशात् सभ्यैर्विप्रं नियोजयेत् । रागाल्लोभाद् भयाद् वापि स्मृत्यपेतादिकारिणः॥ ३३ ॥ सभ्याः पृथक् पृथक् दण्ड्या विवादाद् द्विगुणो दमः । स्मृत्याचारव्यपेतेन मार्गेण धर्षितःपरैः ॥ ३४ ॥ आवेदयति यद्राज्ञे व्यवहारपदं हि तत् । प्रत्यर्थिनोऽग्रतो लेख्यं यथा वेदितमर्थिना ॥ ३५॥ समामासतदर्द्धाहर्नामजात्यादिचिह्नितम् । श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ ॥ ३६॥ ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधनम् । तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा ॥ ३७ ॥ चतुष्पाद् व्यवहारोऽयं विवादेषूपदर्शितः । अभियोगमनिस्तीर्य्य नैनं प्रत्यभियोजयेत्॥ ३८॥ अभियुक्तश्च नान्येन त्यक्तं विप्रकृतिं नयेत् । कुर्य्यात् प्रत्यभियोगन्तु कलहे साहसेषु च ॥ ३९ ॥ उभयोः प्रतिभूर्ग्राह्याः समर्थः काम्यनिर्णये । निह्नवे भावितो दद्याद्धनं राज्ञे तु तत्समम्॥ ४०॥ मिथ्याभियोगाद् द्विगुणमभियोगाद्धनं हरेत् । साहसस्तेयपारुष्येष्वभिशापात्यये स्त्रियाः॥ ४१॥ विचारयेत्सद्य एवं कालोऽन्यत्रेच्छया स्मृतः । देशाद् देशान्तरं याति सृक्कणी परिलेढ़ि च॥४२॥ ललाटं खिद्यते चास्य मुखवैवर्ण्यमेव च। स्वभावाद् विकृतं गच्छेन्मनोवाक्कायकर्मभिः॥ ४३॥ अभियोगेऽथ वा साक्ष्ये वाग्दुष्टः परिकीर्त्तितः । सन्दिग्धार्थं स्वतन्त्रो यः साधयेद् यश्च निष्पतेत्॥ ४४ ॥ न चाहूतो वदेत् किञ्चिद्धीनो दण्ड्यश्च स स्मृतः। साक्षिषूभयतः सत्सु

---

तथा वेदज्ञ हों तथा शत्रु एवं मित्र को समान दृष्टि से देखने वाले हों ।। ३२ ।। यदि राजा कर्मवशात् स्वयं व्यवहार का विचार न कर सके तो वह इस कार्य के लिए सभासदों के साथ विद्वान् ब्राह्मण को नियुक्त करे । यदि सभासद राग, लोभ अथवा भय के कारण धर्मशास्त्र के विरुद्ध कार्य करें तो राजा प्रत्येक सभासद को पृथक् पृथक् विवाद पद के दुगने अर्थदण्ड से दण्डित करे।।३३।। यदि कोई मनुष्य दूसरों के द्वारा धर्मशास्त्र एवं समाचार के विरुद्ध धर्षित किए जाने पर राजा के पास आवेदन करता है तो उसे व्यवहार पद कहते हैं ।। ३४ ।। वादी जो निवेदन किया हो,उसे राजा वर्ष, मास, पक्ष, दिन, नाम तथा जाति आदि से चिह्नित करके प्रतिवादी के सामने लिख ले ।। ३५ ।। वादी के आवेदन को सुनकर प्रतिवादी को उसके समक्ष ही अपना उत्तर लिखना चाहिए ।। ३६ ।। तब वादी उसी समय अपने निवेदन का प्रमाण लिखाये । निवेदन के प्रमाणित हो जाने पर वादी जीत जाता है, अन्यथा वह हार जाता है ।। ३७ ।। विवादों में व्यवहार के चार पाद बतलाये गये हैं ।। जब तक अभियुक्त के वर्तमान अभियोग का निर्णय नहीं हो जाय तब तक उसके ऊपर दूसरा अभियोग न चलाये ।। ३८ ।। आवेदन के समय जो कुछ हो गया हो उसके विपरीत कुछ नही कहना चाहिए । कलह अथवा साहसिक कृत्य हो जाने पर पहले के आवेदन का निर्णय होने से पूर्व भी प्रतिवादी पर दूसरा अभियोगचलाया जा सकता है ।। ३९ ।। सभासदों को चाहिए कि वे दोनों (वादी एवं प्रतिवादी) के विवादों में समर्थ पुरुष को प्रतिभूः बनाये । निह्नव होने पर (अर्थी द्वारा लगाये गये अभियोग को यदि प्रत्यर्थी ने अस्वीकार कर दिया और अर्थी ने गवाही आदि देकर अपने दावे को पुनः उससे स्वीकार करा लिया) तो इस दशा में प्रत्यर्थी राजा को संभावित धन प्रदान करे।। ४० ।। यदि अर्थी द्वारा लगाया गया अभियोग मिथ्या सिद्ध हो जाय तो अर्थी अभियोग में कहे गये धन का दुगुना धन राजा को दे । साहस (हत्या) अस्तेय (चोरी-डकैती) वाक्पारुष्य अथवा दण्डपारुष्य, अभिशाप (पातक का अभियोग) अत्यय (प्राणघात) तथा स्त्रियों के चरित्र से संबद्ध विवाद होने पर उसका विचार शीघ्र करना चाहिए, इन सबों के अतिरिक्त प्रकार का विवाद होने पर विचार का समय सभासद आदि के विचारानुसार रखा जा सकता है ।। ४१ ।। जो व्यक्ति स्थिर न रहकर एक स्थान से दूसरे स्थान पर आता जाता है, जो अपने दोनों गलफरों को चाट्ता है, वाद के समय जिसके ललाट पर पसीना दिखायी देने लगता है, जिसका मुख सूखने लगता है, जिसका स्वभाव विकृत हो जाता है बातों का ठीक से उत्तर न देकर इधर-उधर की बातें करने लगता है इस तरह से अभियोग अथवा साक्ष्य (गवाही) के समय स्वभावतः मन, वाणी एवं क्रिया से विकृत पुरुष को उसको वाक् दुष्ट समझना चाहिए ।। ४३ ।। जिसे अधमर्ण ने अस्वीकार कर दिया, उस संदिग्ध अर्थ के जो स्वतंत्र रूप से सिद्ध करता है, जिसकी बातें झूंठी हो जायँ, जो राजा के द्वारा बुलाये जाने पर उसके समक्ष कुछ भी न बोल सके उसे भी हीन तथा दण्ड्य समझना चाहिए।।४४।। वादी एवं प्रतिवादी दोनों वादियों के साक्षी का प्राप्त होना जब सम्भव हो तो पूर्ववादी की ही गवाही लेनी चाहिए । जो वादी के उत्तर में यह कहे कि "मैंने बहुत पहले इस क्षेत्र

साक्षिणः पूर्ववादिनः॥ ४५॥ पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः। सगणश्चेद् विवादः स्यात् तत्र हीनन्तु दापयेत्॥ ४६॥ दत्तं पणं वसुञ्चैव धनिनो धनमेव च । छलं निरस्य दूतेन व्यवहारान् नयेन् नृपः॥ ४७ ॥ भूतमप्यर्थमन्यस्तं हीयते व्यवहारतः । निह्नते तु निखिलानेकमेकदेशविभावितम्॥४८॥ दाप्यः सर्वान् नृपेणार्थान् न ग्राह्यस्त्वनिवेदितः । स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः ॥ ४९ ॥ अर्थशास्त्राद्धि बलवद्धर्मशास्त्रमिति स्थितः । प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्त्तितम् ॥ ५० ॥ एषामन्यतमाभावे दिव्यान्यतममुच्यते । सर्वेष्वेव विवादेषु बलवत्युत्तरा क्रिया॥५१॥ आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा । पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी॥ ५२॥ परेण भुज्यमानस्य धनस्य दशवार्षिकी । आधिसीमोपनिःक्षेप जडबालधनैर्विना ॥ ५३॥ तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि । आध्यादीनां विहर्त्तारं धनिने दापयेद्धनम्॥ ५४॥ दण्डयञ्च तत्समं राज्ञे शक्त्यपेक्ष्यमथापि वा । आगमोऽप्यधिको भुक्तिं विना पूर्वक्रमागताम् ॥ ५५ ॥ आगमोऽपि

को दान में पाया था और उसी समय से यह क्षेत्र हमारे कब्जे में है । उसी को यहाँ पूर्ववादी कहा गया है । जिसने पहले अभियोग उपस्थापित किया उसे यहाँ पूर्ववादी नहीं कहा गया है । यदि कोई यह कहे कि इसे पहले सम्पत्ति दान में मिली थी और इसने इससम्पत्ति का उपयोग किया, यह ठीक है किन्तु अमुक व्यक्ति इस सम्पत्ति को इसके यहाँ से खरीद ली और उस सम्पत्ति को मुझे दे दिया तब पूर्व पक्ष असाध्य होने से दुर्बल हो जाता है । ऐसा होने पर उत्तरवादी ही द्रष्टव्य है । उसी की गवाही ली जानी चाहिए ।। ४५ ।।यदि विवाद किसी शर्त के साथ हो तो वादी के पराजित हो जाने पर पण (शर्त) के धन को राजा को दिलवाना चाहिए किन्तु जो अर्थी धनी है उसे राजा को विवाद के आस्पदभूत धन को ही दिलाना चाहिए ।। ४६ ।। राजा को चाहिए कि वह छल का परित्याग करके वास्तविकता का आश्रय ले और दूतों के माध्यम से व्यवहारों का निर्णय करे ।। ४७ ।। यदि यथार्थ वस्तु भी लेखबद्ध न हो तो वह व्यवहार में पराजय का कारण बनती है । अभियोग पत्र में लिखित एक बात को भी यदि प्रत्यर्थी स्वीकार कर लेता है, तो राजा को चाहिए कि उस अभियोग पत्र में लिखी सारी वस्तुओं को वह अर्थी को दिलवावे। किन्तु जिस वस्तु का उल्लेख पहले अभियोग पत्र में नहीं किया गया हो और बाद में उसको सूचीबद्ध किया गया हो तो राजा उसको नहीं दिलवावे ।। ४८ ।। जो दो धर्मशास्त्रीय वाक्यों में विरोध की प्रतीति हो तो वहाँ पर उत्सर्गापवाद न्याय के अनुसार ही प्रबलता एवं दुर्बलता का निर्णय करना चाहिए । नियम है कि उत्सर्ग अथवा सामान्य वाक्य कीअपेक्षा अपवाद अथवा विशेष वाक्य प्रबल होता है । इस उत्सर्गापवाद की प्रतीति व्यवहार के द्वारा होती है ।। ४९ ।। जहाँ पर अर्थशास्त्र एवं धर्मशास्त्र के वाक्यों में परस्पर में विरोध हो तो अर्थशास्त्र की अपेक्षा धर्मशास्त्रीय वाक्य ही बलवान् होता है ।। (मानुष प्रमाण) तीन प्रकार के होते हैं- (१) लिखत, (२) भुक्ति और (३) साक्षी ।। ५० ।। यदि इन तीनों प्रमाणों में से किसी भी प्रमाण की उपलब्धि न हो तो फिर व्यवहार में किसी दिव्य प्रमाण को अपनाना चाहिए । सभी प्रमाणों में उत्तरक्रिया बलवती मानी गयी हे । अर्थात् यदि उत्तरवादी अपनी बात सिद्ध कर ले जाय तो वह विजयी होता है और पूर्ववादी पराजित हो जाता है ।। ५१ ।। आधी (वस्तु को गिरवी रखने) प्रतिग्रह दान के विषय में तथा खरीदी हुई वस्तु के विषय में जो विवाद होता है, उसमें पूर्वक्रिया ही बलवती होती है । यदि भूमिस्वामी की आँखों के सामने ही कोई उसकी भूमि का उपयोग करता है और भूमिस्वामी उसे नहीं बोलता है तो बीस वर्ष के पश्चात् वह भूमि भूमिस्वामी की नहीं रह जाती है ।।५२।। इस तरह धनस्वामी के धनका का यदि दूसरा व्यक्ति उपभोग करता है और धन स्वामी उसे नहीं बोलता है,तो दस वर्षों के बाद वह धन स्वामी का नहीं रह जाता है । आधि,सीमा और निःक्षेप (धरोहर) सम्बन्धी धन को,जड़ और बालकों के धन को, उपनिधि, राजा, स्त्री तथा श्रोत्रिय ब्राह्मण के धन को छोड़कर ही यह नियम लागू होता है अर्थात् इससे धन का उपयोग करने पर भी कोई इनके धन का स्वामी नहीं हो सकता है । आधि से लेकर श्रोत्रिय पर्यन्त धन का चिरकाल से उपभोग के बल पर अपहरण करने वाले पुरुष से उस धन को लेकर धन के वास्तविक स्वामी को दिला दे ।। ५४ ।। और अपहरण कर्ता से उस धन के बराबर अथवा अपहरणकर्ता की शक्ति के अनुसार उससे कम अथवा अधिक धन राजा को दिलवाया जाय । स्वत्व के कारणभूत जो प्रतिग्रह तथा क्रय आदि है उन्हें आगम कहते हैं । वह आगम भोग (भुक्ति) की अपेक्षा प्रबल होता है । स्वत्व का बोध कराने के लिए आगम सापेक्ष भोग ही प्रमाण है । किन्तु पिता पितामह आदि के क्रमसे जिस धन का उपभोग होता चला आ रहा है, उसको छोड़कर अन्य प्रकार के उपभोग से आगम प्रबल होता है । पूर्व परम्परा प्राप्त भोग तो आगम से भी प्रबल होता है । जहाँ

बले नैव भुक्तिः स्तोकापि यत्र न । आगमेन विशुद्धेन भोगो याति प्रमाणताम् ॥ ५६ ॥ अविशुद्धागमो भोगः प्रामाण्यं नाधिगच्छति । आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत् ॥ ५७ ॥ न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी । योऽभियुक्तः परेतः स्यात् तस्य ऋक्थात् तमुद्धरेत् ॥ ५८॥ न तत्र कारणं भुक्तिरागमेन विना कृता । बलोपाधिविनिर्वृत्तान् व्यवहारन् निवर्त्तयेत्॥ ५९॥ स्त्रीनक्तमन्तरागारवहिःशत्रुकृतस्तथा । मत्तोन्मत्तार्त्तव्यसनिबालभीतप्रयोजितः ॥ ६० ॥ असम्बद्धकृतश्चैव व्यवहारो न सिध्यति । प्रनष्टाधिशतं देयं नृपेण धनिने धनम् ॥ ६१॥ विभावयेन्न चेल्लिङ्गैस्तत्समं दातुमर्हति । देयञ्चौरहृतं द्रव्यं राज्ञा जनपदाय तु ॥ ६२ ॥ अशीतिभागो वृद्धिः स्यान् मासि मासि सबन्धके । वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा ॥६३॥ सन्ततिस्तु पशुस्त्रीणां रसस्याष्टगुणा परा। वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा तथा॥ ६४॥ ग्रामान्तरात्

---

पर थोड़ा सा भी उपभोग नहीं होता वह आगम भी बलवान् नहीं होता है ।। ५५ ।। विशुद्धआगम से भोग प्रमाणित होता है । जहाँ विशुद्ध आगम नहीं है वह भोग प्रामाणिक नहीं हो सकता है ।। ५६।। जिस पुरुष ने आगम (अर्जन) किया है वही अभियुक्त है, उसे ही उस आगम की प्रामाणिकता सिद्ध करने की आवश्यकता होती है, उसके पुत्र अथवा पौत्र को उस आगम के उद्धार (प्रमाणिकता सिद्ध) करने की आवश्यकता नहीं है । उन्हें तो केवल भोग को ही प्रमाणित करना चाहिए ।। ५७ ।। जो अभियुक्त व्यवहार के निर्णयसे पहले ही मर जाता है तब उसका धन के उत्तराधिकारियों को ही लिखितादि प्रमाणों द्वारा उस धनागम की प्रामाणिकता सिद्ध करना चाहिए । क्योंकि आगम के अभाव में भोग की प्रामाणिकता नहीं स्वीकार की जा सकती है ।। ५८।। जो मामला बलप्रयोग अथवा भय आदि उत्पातों के कारण चलाये गये हों, उन पर विचार न करके उन्हें लौटा देना चाहिए । इसी तरह जिसे किसी स्त्री ने चलाया हो, जो रात्रि में प्रस्तुत किया गया हो, जिसका सम्बन्ध घर के भीतर घटी घटना से हो,अथवा जिसका सम्बन्ध गाँव के बाहर एकान्त में घटी घटना से हो अथवा जिसे किसी ने शत्रुता वश बनाकर चलाया हो ऐसे वादों को विचारे विना ही लौटा देना चाहिए ।। ५९ ।। जो मादक द्रव्यपीकर मदमत्त हो गया हो, जो भूत-प्रेत-पिशाच आदि के आवेश अथवा ग्रहावेश के कारण उन्मत्त हो गया हो, रोगी हो गया हो, इष्टजन विप्रयोग अथवा अनिष्टवस्तु संयोग के कारण व्यसनग्रस्त हो, नाबालिग हो, शत्रु आदि से भयभीत हो गया हो, ऐसे लोगों के द्वारा चलाया गया अभियोग सिद्ध नहीं होता है ।।६०।। जिनका अभियुक्त से कोई भी सम्बन्ध नहीं हो ऐसे लोगों के द्वारा भी चलाया हुआ अभियोग सिद्ध नहीं होता है । यदि किसी का चोरों द्वारा चुराया गया धन शौल्किक को प्राप्त हो जाय और वह राजा को समर्पित कर दिया जाय तो राजा को चाहिए कि वह उस धन को धनस्वामी को लौटा दे । यह तब करना चाहिए यदि जब वह उस धन के रूप रंग राशि आदि चिह्नों को बतला दे । यदि वह उसके रूप, रंग आदि चिह्नों को बतलाने में असमर्थ होता है और अपने को धन का स्वामी बतलाता हो तो उसे मिथ्यावादी समझकर उससे उतना ही सम्पत्ति वसूल करनी चाहिए।।६१।। चोरों द्वारा चुराये गये तथा राजा को प्राप्त धन को राजा को चाहिए कि वह जिस नागरिक का धन हो उसे लौटा दे ।। ६२ ।। यदि कोई वस्तु बन्धक रखकर ऋण लिया गया हो तो उस पर प्रतिमास १/८० भाग ब्याज धर्मसंगत होता है । बन्धक रहित ऋण लेने पर ब्राह्मणादि वर्णों के क्रम से दो भाग, तीन भाग, चार भाग एवं पाँच भाग अधिक ब्याज धर्मसंगत होता है ।। ६३।। मादा पशुओं के खरीदने के लिए लिए गये ऋण के ब्याज के रूप में उस पशु की सन्तान को ही लिया जा सकता है । तेल घी आदि रस द्रव्यों का चिरकाल तक बढ़कर ब्याज अधिक से अधिक अपने मूल के आठ गुना हो सकता है, इससे अधिक नहीं ।क्रमशः वस्त्र, अन्न तथा सुवर्ण का चिरकाल तक बढ़कर सर्वाधिक ब्याज क्रमशः चार गुना, तीन गुना और दो गुना होता है, इससे अधिक नहीं ।। ६४ ।। व्यापार करने के लिए दुर्गम वन प्रदेश को पार करके गावों में रहने वाले लोग ऋणदाता को दस प्रतिशत ब्याज दें और समुद्र पार करके व्यापार करने वाले लोग ऋणदाता को बीस प्रतिशत ब्याज दें । अथवा सभी लोगों को चाहिए कि सभी जाति ऋणदाताओं को अपनी पूर्व स्वीकृति के अनुसार धनवृद्धि (ब्याज) प्रदान करें ।। ६५ ।।

तु दशकं सामुद्रादपि विंशतिम् । दद्युर्वा स्वीकृतां वृद्धिं सर्वे सर्वासु जातिषु ॥ ६५ ॥ प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत् । साध्यमानो नृपं गच्छेद् दण्ड्यो दाप्यश्च तद्धनम् ॥ ६६ ॥

इत्यादिमहापुराण आग्नेये व्यवहारवर्णनं नाम त्रिपञ्चशदधिकद्विशततमोऽध्यायः ॥ २५३ ॥

## चतुःपञ्चाशदधिकद्विशततमोऽध्यायः

### व्यवहारकथनम्

अग्निरुवाच– **गृहीतार्थः क्रमाद् दाप्यो धनिनामधमर्णिकः । दत्त्वा तु ब्राह्मणायादौ नृपतेस्तदनन्तरम्॥ १॥ राज्ञा धमर्णिको दाप्यः साधिताद् दशकं स्मृतम् । पञ्चकन्तु शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः ॥ २ ॥ हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् । ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम्॥ ३॥ दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम् । मध्यस्थस्थापितं तत् स्याद् वर्द्धते न ततःपरम् ॥ ४ ॥ ऋक्थग्राह ऋणं दाप्यो योषिद्ग्रहस्तथैव च। पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य ऋक्थिनः ॥ ५ ॥ अविभक्तैः कुटुम्बार्थं यदृणन्तु कृतं भवेत् । दद्युस्तदृक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि॥६॥ न योषित् पतिपुत्राभ्यां न पुत्रेण कृतं पिता। दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा॥७॥ गोपशौण्डिकशैलूषरजकव्याधयोषिताम्।**

---

जो व्यक्ति पहले ऋण लिया हो और ऋणदाता उससे प्रामाणिक ऋण वसूल कर रहा हो तो राजा को उसे ऋण वसूलने से नहीं रोकना चाहिए । यदि न्यायसंगत ऋण की वसूली करने पर कोई उसकी शिकायत राजा के पास करता है तो राजा को उसे दण्डित करना चाहिए और उससे उस न्यायसंगत ऋण को लौटवाना चाहिए।। ६६ ।।

**इस प्रकार आदिमहापुराण अग्निपुराण का व्यवहार वर्णन नामक दो सौ तिरपनवाँ अध्याय सम्पूर्ण हुआ ॥ २५३ ॥**

**अग्निदेव ने कहा–** यदि ऋण देने वाले के ऋणदाता अनेक हों तो राजा उन्हें ग्रहण क्रम से ऋण लेने वाले से धन दिलवावे । (अर्थात् जो पहले ऋण दिया हो उसको पहले और जो बाद में दिया हो उसे बाद में धन दिलवाना चाहिए । यदि ऋणदाता अनेक जातियों के हों तो पहले ब्राह्मण को धन लौटाना चाहिए उसके पश्चात् क्षत्रिय आदि को ।। १ ।। अभियोग के सिद्ध हो जाने पर राजा को चाहिए कि ऋण लेने वाले से दस प्रतिशत दण्ड के रूप में वसूल करे और ऋणदाता से पाञ्च प्रतिशत धन वसूल करे और उस धन को न्यायालय के कर्मचारियों को दे दे ।। २ ।।यदि ऋणदाता की अपेक्षा ऋण लेने वाला हीन जाति का हो और निर्धन हो जाने के कारण ऋण लौटाने की स्थिति में न हो तो ऋणदाता को चाहिए कि वह उससे उसके स्वरूपानुरूप काम करवाकर ऋण वसूल कर ले और ऋण लेने वाला यदि ब्राह्मण हो और निर्धन होने के कारण ऋण नहीं लौटा पा रहा हो तो उसे ऋण लौटाने का अवसर देकर उसके शक्ति अनुसार धीरे-धीरे उससे ऋण वसूल कर ले ।। ३ ।। ऋण के रूप में दिये गये धन को दिए जाने पर भी जो नहीं लेता है, उसके धन को यदि मध्यस्थ व्यक्ति के यहाँ रख दिया जाय तो फिर उस पर ब्याज नहीं बढ़ता है ।। ४ ।। (दूसरे का धन जब खरीदे बिना भी अपने अधिकार में आता है तो उसे रिक्थ कहते हैं । ) विभाग द्वारा जो रिक्थ को ग्रहण करता है उसे रिक्थग्राही कहते हैं । जो जिसके द्रव्य को रिक्थ के रूप में लेता है, उसी से उसके ऋण को दिलवाना चाहिए । उसी तरह जो जिसकी स्त्री को ग्रहण करता है, वही उसके ऋण को चुकाता है । ऋक्थ धन का स्वामी यदि पुत्रहीन हो तो उसके ऋण को उस कृत्रिमपुत्र को चुकाना चाहिए जो उसी के धन पर अपना जीवन निर्वाह करता है ।। ५ ।। संयुक्त परिवार में परिवार के पालन-पोषण के लिए जो ऋण लिया जाता है, उस कुटुम्बी के मर जाने पर अथवा विदेश चले जाने पर उस ऋण को सभी रिक्थियों को चुकाना चाहिए ।। ६ ।। पति के किये हुए ऋण को स्त्री न चुकाए,

ऋणं दद्यात् पतिस्त्वासां यस्माद् वृत्तिस्तदाश्रया ॥ ८ ॥ प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत् कृतम् । स्वयं कृतं वा यदृणं नान्यस्त्री दातुमर्हति॥९॥ पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽथवा । पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम्॥ १०॥ सुराकामद्यूतकृतंदण्डशुल्कावशिष्टकम्। वृथा दानं तथैवेह पुत्रो दद्यान्न पैतृकम् ॥ ११ ॥ भ्रातृणामथ दम्पत्योः पितुः पुत्रस्य चैव हि । प्रतिभाव्यमृणं ग्राह्यमविभक्तं न च स्मृतम् ॥ १२॥ दर्शने प्रत्यये दाने प्रतिभाव्यं विधीयते । आधौ तु वितथे दाप्या वितथस्य सुता अपि॥ १३॥ दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा । न तत्पुत्रा धनं दद्युर्दद्युर्दानाय ये स्थिताः ॥ १४॥ बहवः स्युर्यदि स्वांशैर्दद्युःप्रतिभुवो धनम् । एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि॥ १५॥ प्रतिभूर्दापितो यत्र प्रकाशं धनिने धनम् । द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद् भवेत्॥ १६॥ स्वसन्तति स्त्रीपशव्यंधान्यं द्विगुणमेव च । वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणस्तथा ॥ १७॥ आधिः प्रणश्येत् द्विगुणे धने यदि न मोक्ष्यते । काले कालकृतं नश्येत् फलभोगे न नश्यति ॥ १८॥ गोप्याधिभोगे

---

पुत्र के किए हुए ऋण को माता न चुकाये और पिता भी न चुकाए । स्त्री के द्वारा किए हुए ऋण को पति न चुकाए,किन्तु यह नियम समूचे परिवार के भरण-पोषण के लिए किए गये ऋण पर लागू नहीं होता है ।। ७ ।। ग्वाले, शराब बनाने वाले, नट, धोबी तथा व्याधे की स्त्रियों द्वारा लिएगए ऋण को उनके पति अवश्य लौटायें । क्योंकि उनकी जीविका उनकी स्त्रियों के अधीन ही चलती है।। ८ ।। यदि ऋण लेकर मर जाय तो उस ऋण को उसकी पत्नी को ही चुकाना होगा,अथवा पति और पत्नी दोनों एक साथ मिलकर जो ऋण लिए हों उस ऋण को भी पति के मर जाने पर उसकी पत्नी को ही चुकाना होगा । अथवा पत्नी स्वयं जो ऋण लेती है, उसको भी वही चुकायेगी, इसके अतिरिक्त किसी दूसरे प्रकार के ऋण का देनदार स्त्री नहीं होती है ।।९।। यदि ऋण लेकर पिता परदेश चला जाय अथवा मर जाय तो उसके अभाव में उस ऋण को उसके पुत्र अथवा पौत्र चुकायें। यदि उसके पुत्रऔर पौत्र उसे न स्वीकार करें तो अर्थी न्यायालय में अभियोग ले जाकर साक्षी द्वारा उसे प्रमाणित कर दे ।। १० ।। जो ऋण शराब पीने के लिए अथवा परस्त्री गमन करने के लिए या जूआ खेलने के लिए लिया गया हो अथवा जो ऋण दण्ड याशुल्क का अवशिष्ट भाग हो अथवा जो व्यर्थदान के लिए (धूर्तों और नचनियों को देने के लिए) लिया गया ऋण हो उसे पिता के ऋण को पुत्र न चुकाए ।। ११ ।। भाइयों के, पति-पत्नी के तथा पिता-पुत्र के ऋण को प्रतिभाव्य रूप से लेना चाहिए उसे विभक्त नहीं माना गया है ।। १२ ।। विश्वास के लिए किसी दूसरे पुरुष के साथ जो समय, शर्त या मर्यादा निश्चित की जाती है, उसे प्रातिभाय कहते हैं । विषय के भेद के कारण उसके तीन भेद होते हैं दर्शन विषयक प्रातिभाव्य, प्रत्यय विषयक प्रातिभाव्य और दान विषयक प्रातिभाव्य इनमें से दो प्रकार के प्रातिभाव्य दर्शन प्रातिभाव्य एवं विश्वास प्रातिभाव्य की बात झूठी हो जाने पर स्वयं धनी को ऋण चुकाना चाहिए । अथवा उसके पुत्रों को ऋण चुकाना चाहिए ।। १३ ।। जब दर्शन प्रातिभाव्य (प्रतिभूः) अथवा विश्वास प्रतिभूः मर जायँ तो उसे पुत्रों को वह ऋण नहीं चुकाना चाहिए । किन्तु दानप्रतिभूः के मर जाने पर उसके पुत्रों को ऋण चुकाना चाहिए ।। १४ ।। यदि किसी ऋण लेने वाले के अनेक प्रतिभूः हों तो ऋण लेने वाले के मर जाने पर उन सभी प्रतिभू को अपने हिस्से के अनुसार उस ऋण को लौटाना चाहिए । यदि वे सबके सब एक ही आश्रय में रहते हों तो वे अपनी रुचि के अनुसार हिस्सा लगाकर ऋण धनिक को लौटा दें ।। १५ ।। ऋण देने वाले व्यक्ति के द्वारा स्त्री पर दबाव दिये जाने पर प्रतिभूः राजा के समक्ष जितना धन धनी को देता है, ऋणी को उसके दो गुना धन प्रतिभू को लौटाना चाहिए ।। १६ ।। मादा पशु के लिए दिए गये ऋण के ब्याज के रूप में उसकी सन्तति को लिया जा सकता है । अन्न का अधिक से अधिक ब्याज उसके दो गुना होता है। वस्त्र का अधिक से अधिक ब्याज चार गुना होता है और रस का अधिकसे अधिक ब्याज आठ गुना होता है ।। १७ ।। यदि कोई वस्तु बन्धक रखकर ऋण लिया गया हो उसका ब्याज बढ़ते-बढ़ते दो गुना हो गया हो। उस पर भी सारा धन चुकाकर उस वस्तु को छुड़ा नहीं लिया जाता है तो वह वस्तु नष्ट हो जाती है । जो धन समय विशेष पर लौटाने की शर्त पर लिया जाता है और उसके बदले में कोई वस्तु बन्धक रखी जाती है तो समय बीत जाने पर वह वस्तु धनदाता की हो जाती है । किन्तु जिस वस्तु का फल बन्धक रखने वाला भोगता है, वह वस्तु कभी भी नष्ट नहीं होती । उस पर उसके स्वामी का स्वत्व बना रहता है । जैसे बगीचा आदि के बन्धक रखने पर ।। १८ ।। यदि कोई गोपनीय आदि ऋणदाता

न वृद्धिः सोपकारेऽथ भाविते । नष्टो देयो विनष्टश्च देवराजकृतादृते॥ १९॥ आधेः स्वीकरणात् सिद्धीरक्ष्यमाणोऽप्यसारताम्। यातश्चेदन्य आधेयो धनभाग् वा धनी भवेत् ॥ २० ॥ चरित्रं बन्धककृतं सवृद्धिं दापयेद्धनम् । सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिदापयेत् ॥ २१॥ उपस्थितस्य मोक्तव्य आधिर्दण्डोऽन्यथा भवेत् । प्रयोजके सति धनं कुलेऽन्यस्याधिमाप्नुयात् ॥ २२ ॥ तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः। विना धारणकाद् वापि विक्रीणीते ससाक्षिकम् ॥ २३॥ यदा तु द्विगुणीभूतमृणमाधौ तथा खलु । मोच्यश्चाधिस्तदुत्पाद्य प्रविष्टे द्विगुणे धने॥ २४॥ व्यसनस्थमनाख्याय हस्तेऽन्यस्य यदर्पयेत् । द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् ॥ २५॥ न दाप्योऽपहृतं तत् तु राजदैवकतस्करैः । प्रेषश्चेन् मार्गिते दत्ते दाप्यो दण्डश्च तत्समम् ॥ २६ ॥ आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तच्चापि सोदयम् । याचितान्वाहितन्यासे निक्षेपेष्वप्ययं विधिः॥ २७ ॥

इत्यादिमहापुराण आग्नेये व्यवहारकथनं नाम चतुःपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५४ ॥

को उपयोग में तो उस पर दिये हुए धन पर ब्याज नहीं लगता है। यदि बन्धक में कोई उपकारी प्राणी हो तो उससे काम लेकर उसकी शक्ति क्षीण कर दी गयी हो तो उस पर दिये गये ऋण पर वृद्धि नहीं जोड़ी जा सकती है ।यदि देवता अथवा राजा के कोप के विना ही वह नष्ट अथवा विनष्ट हो गयी हो तो ऋणदाता को उस बन्धक वस्तु का मूल्य देना चाहिए ।। १९ ।। आधि चाहे गोप्य हो अथवा भोग्य उसके स्वीकार करने मात्र से आधिग्रहण की सिद्धि हो जाती है । उस आधि की प्रयत्नपूर्वक रक्षा करने पर भी वह यदि कालवश निस्सार हो जाय अर्थात् वृद्धिरहित मूलधन के लिए पर्याप्त न रह जाया तो ऋण लेने वाले को कोई दूसरी वस्तु बन्धक के रूप में रखना चाहिए अथवा ऋणदाता को धन लौटा देना चाहिए ।। २० ।। चरित्रको ही बन्धक बनाकर उसके द्वारा जो द्रव्य अपने अथवा दूसरे के अधीन किया जाता है उसको चरित्रबन्धक कृत कहते हैं । ऐसे धन को ब्याज सहित लौटा देना चाहिए ।अथवा राजा ऋण लेने वाले से वृद्धि सहित धन ऋणदाता को दिलवावे । यदि सत्य को बन्धक बनाकर कोई द्रव्य ऋणदाता से लिया गया हो तो ऋण लेनेवाले को उस धन को दो गुना करके ऋणदाता को लौटाना चाहिए ।। २१ ।। यदि ऋण लेने वाला व्यक्ति धन लौटाकर बन्धक लेने के लिए उपस्थित हो तो धनदाता को चाहिए कि वह धन लेकर उसके बन्धक को लौटा दे । यदि वह ऐसा नहीं करता है तो राजा के दण्ड का भागी होता है । यदि ऋण देने वाला कहीं दूर चला गया है तो उसके कुल के किसी विश्वसनीय व्यक्ति को ब्याज सहित ऋण देकर बन्धक की वस्तु को प्राप्त कर लेनी चाहिए ।।२२।। उस समय तक उस बन्धक को छुड़ाने का जो मूल्य हो उसे निश्चित करके उस बन्धक कोधनी के लौटने तक उस धनी के यहाँ ही रहने दे । किन्तु उस दशा में उसधन पर कोई ब्याज नहीं लगेगा। यदि ऋण लेने वाला व्यक्ति दूर चला गया हो और नियत समय तक न लौटे तो धनदाता को चाहिए कि वह ऋणी व्यक्ति के विश्वसनीय पुरुषों और गवाहों के समक्ष उस बन्धक की वस्तु को बेचकर अपना प्राप्तव्य धन प्राप्त कर ले ।। २३ ।। यदि लिया हुआ ऋण अपनी ब्याज वृद्धि के क्रम से दो गुना होकर बन्धक पर चढ़ जाय और ऋणदाता को बन्धक से दो गुना धन प्राप्त हो जाय तो ऋणदाता को चाहिए कि वह बन्धक ऋणग्राही को लौटा दे ।। २४ ।। यदि कोई व्यक्ति विपत्ति में पड़कर कोई वस्तु बन्धक रखता है और जब कभी भी वह उसे माँगता है तो ऋणदाता को उसे ज्यों का त्यों लौटा देना चाहिए । यदि उपनिधि की वस्तु राजा ने बलपूर्वक ले ली हो अथवा दैवी बाधा के कारण वह विनष्ट हो गयी हो तो जिसके यहाँ यह वस्तु रखी गयी हो उसको उस वस्तु को देने अथवा लौटाने के लिए बाध्य नहीं किया जा सकता है । उस दशा में उस धरोहर को रखने वाला व्यक्ति उस वस्तु के अनुसार उसका मूल्य लौटा सकता है और राजा को भी उतना ही द्रव्य लौटाया जा सकता है ।। २५-२६ ।। जो व्यक्ति माल धनी की अनुमति प्राप्त किए विना ही उपनिधि की वस्तु को भोगता है अथवा उससे व्यापार करता है, वह दण्ड का पात्र है । यदि उसने उस वस्तु का उपभोग किया है तो उसे उस वस्तु को ब्याज के साथ लौटाना चाहिए और उतना ही दण्ड राजा को भी देना चाहिए । अथवा यदि व्यापार करके उससे लाभ कमाया है तो उसे लाभ सहित माल धनी को लौटा देना चाहिए । सयाचित, अन्वाहित, न्यास और निक्षेप आदि के विषय में भी यही नियम लागू होता है।। २७ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का व्यवहार वर्णन नामक दो सौ चौवनवाँ अध्याय सम्पूर्ण हुआ ॥ २५४ ॥**

## पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः

## दिव्यप्रमाणकथनम्

अग्निरुवाच— **तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः । धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः॥ १ ॥ पञ्चयज्ञक्रियायुक्ताः साक्षिणः पञ्च वा त्रयः। यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः॥ २॥ स्त्रीवृद्धबालकितवमत्तोन्मत्ताभिशस्तकाः । रङ्गावतारिपाषण्डिकूटकृद्विकलेन्द्रियाः॥३॥ पतिताप्तार्थसम्बन्धिसहायरिपुतस्कराः । असाक्षिणः सर्वसाक्षी चौर्य्यपारुष्यसाहसे॥ ४॥ उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित् । अब्रुवन् हि नरःसाक्ष्यमृणंसदशबन्धकम्॥ ५॥ राज्ञा सर्वं प्रदाप्यः स्यात् षट् चत्वारिंशकेऽहनि । न ददाति हि यःसाक्ष्यं जानन्नपि नराधमः ॥ ६ ॥ स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि । साक्षिणः श्रावयेद्वादि प्रतिवादि समीपगान् ॥ ७ ॥ ये पातककृतां लोका महापातकिनां तथा । अग्निदानाञ्च ये लोका ये च स्त्रीबालघातिनाम् ॥ ८ ॥ तान् सर्वान् समवाप्नोति यःसाक्ष्यमनृतं वदेत् । सुकृतं यत् त्वया किञ्चिज्जन्मान्तरशतैः कृतम् ॥ ९ ॥ तत् सर्वं तस्य जानीहि यं पराजयसे मृषा । द्वैधे बहूनां वचनं समेषु गुणिनां तथा ॥ १० ॥ गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तराः। यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत्॥११॥ अन्यथा वादिनो यस्य ध्रुवस्तस्य पराजयः । उक्तेऽपि साक्षिभिः सक्ष्ये यद्यन्ये गुणवत्तराः॥१२॥**

---

**अग्निदेव ने कहा—** तपस्वी, दानशील, कुलीन, सत्यवादी, धर्म की प्रधानता देने वाले, मन, वाणी और कर्म से सरलता का व्यवहार करने वाले, पुत्रवान् धनिक, प्रतिदिन पञ्चयज्ञ करने वाले, इस प्रकार अपने जाति अथवा वर्ग के पाँच या तीन व्यक्ति साक्षी हो सकते हैं, अथवा अपनी जाति अथवा वर्ग के सभी लोग सबों के साक्षी हो सकते हैं ।। १-२ ।। किन्तु स्त्री, वृद्ध, बालक, कितव (धूर्त) मत्त (शराब पीकर मदमत्त बना रहने वाला) उन्मत्त (भूत-प्रेत अथवा ग्रह के आवेश के कारण पागल बने रहने वाला) अभिशस्त (पातकी) रङ्गमञ्च पर आकर नट का काम करने वाला, पाषण्डी, कूटकारी (जालसाजी करके झगड़ा लगाने वाला) विकलेन्द्रिय (अन्धा, लंगड़ा, काना आदि) ।। ३ ।। पतित, आप्त (सगे सम्बन्धी अथवा मित्र) अर्थ से सम्बन्ध रखने वाला,सहायक, शत्रु, चोर, चोरी, वाक्पारुष्य एवं साहसिक कार्यों में सबों में साक्षी बनने वाले, ये सभी साक्षी नहीं हो सकते हैं ।। ४ ।। जिसके वादी और प्रतिवादी दोनों साक्षी रूप से स्वीकार करें इस प्रकार का एक भी धार्मिक पुरुष साक्षी हो सकता है । जो व्यक्ति साक्षी बनने के लिए स्वीकार करके भी राजा अथवा न्यायालय में कुछ भी नहीं बोलता है, राजा को चाहिए कि वह उससे छियालिसवें दिन ऋण, ब्याज तथा अपना दशांश तथा बन्धक की वस्तु सबके सब वसूल करे ।। ५ ।। जो नराधम जानते हुए भी गवाही नहीं देता है, उसको वही पाप लगता है, जो कूटसाक्षी (झूठी गवाही देने वाले) होते हैं और उसको राजा वही दण्ड दे जो कूटसाक्षियों को दिया जाता है ।। ६ ।। न्यायाधिकारी को चाहिए कि वह वादी एवं प्रतिवादी के समीप में विद्यमान सभी साक्षियों को कहे कि- पातकियों,महापातकियों,आग लगाने वालों, स्त्रियों तथा बालकों का वध करने वालों को जो लोक प्राप्त होते हैं, वे ही लोक उन साक्षियों को प्राप्त होते हैं, जो साक्षी झूठी गवाही करते हैं ।। ८ ।। आप लोगों ने सैकड़ों जन्मों में जो कुछ भी पुण्य अर्जित किया है, वेसब के सब पुण्य उसी को प्राप्त होंगे, जिसको आप लोग झूठी गवाही देकर पराजित करोगे।।९।। जब साक्षियों के वचन परस्पर विरोधी हों तो बहुसंख्यक साक्षी जिस बात को कहें उसे ही स्वीकार करनी चाहिए । यदि समान संख्या वाले साक्षी परस्पर विरोधी बातों को कहें तो उस दशा में गुणवान् साक्षियों की बातों को स्वीकार करना चाहिए । यदि गुणवान् साक्षियों की भी परस्पर विरोधी बातें हों तो जो अधिक गुणवान् साक्षी हो उसकी ही बात स्वीकार करनी चाहिए ।। १० ।। जिसकी प्रतिज्ञा को साक्षी सत्य बतलायें वही विजयी होता है और जिसकी बातों को वे असत्य बतलायें उसका पराजय निश्चित होता है ।। ११ ।। साक्षियों के गवाही दे देने पर भी दूसरे गुणवान् पुरुष अथवा पूर्वसाक्षियों की अपेक्षा दुगनी संख्या वाले साक्षी पूर्वसाक्षियों की गवाही को असत्य बतलायें तो पूर्वसाक्षियों को कूट (झूठी गवाही करने वाले) साक्षी माना

द्विगुणा वान्यथा ब्रूयुः कुटाः स्युः पूर्वसाक्षिणः । पृथक् पृथग् दण्डनीयाः कूटकृत्साक्षिणस्तथा ॥ १३ ॥ विवादाद् द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः। यःसाक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत् तमोवृतः ॥ १४ ॥ स दाप्योऽष्टगुणं दण्डं ब्राह्मणन्तु विवासयेत् । वर्णिनां हि बधो यत्र तत्र साक्ष्येऽनृतं वदेत्॥१५॥ यः कश्चिदर्थोऽभिमतः स्वरुच्या तु परस्परम् । लेख्यं तु साक्षिमत् कार्य्यं तस्मिन् धनिकपूर्वकम् ॥ १६ ॥ समामासतदर्द्धाहर्नामजातिस्वगोत्रजैः । सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ॥ १७ ॥ समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् । मतं मेऽमुकपुत्रस्य यदत्रोपरिलेखितम्॥ १८॥ साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम् । अत्राहममुकः साक्षी लिखेयुरिति ते समाः॥ १९॥ अलिपिज्ञ ऋणीयः स्याल्लेखयेत् स्वमतन्तु सः । साक्षी वा साक्षिणान्येन सर्वसाक्षिसमीपतः ॥ २० ॥ उभयाभ्यर्थितेनैतन् मया ह्यमुकसूनुना । लिखितं ह्यमुकेनेति लेखकोऽर्थान् ततो लिखेत्॥ २१॥ विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितञ्च यत् । तत् प्रमाणं स्मृतं सर्वं बलोपाधिकृतादृते ॥ २२॥ ऋणं लेख्यकृतं देयं पुरुषैस्त्रिभिरेव तु । आधिस्तु भुज्यते तावद् यावत् तन्न प्रदीयते ॥ २३॥ देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा । भिन्ने छिन्ने तथा दग्धे लेख्यमन्यत् तु कारयेत् ॥२४॥ सन्दिग्धार्थविशुद्ध्यर्थं स्वहस्तलिखितन्तुयत्। युक्तिप्राप्तिक्रियाचिह्नसम्बन्धागमहेतुभिः॥ २५॥ लेख्यस्य पृष्ठेऽभिलिखेत् प्रविष्टिमधमर्णिनः । धनी चोपगतं दद्यात् स्वहस्तपरिचिह्नितम् ॥ २६ ॥ दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै चान्यत् तु

जाता है ।। १२ ।। झूठी गवाही देने वाले साक्षियों को राजा को अलग-अलग दण्ड देना चाहिए । विवाद में पराजित होने पर उसमें जो दण्ड बतलाया गया हो, उससे दो गुना दण्ड झूठी गवाही देने वाले को देना चाहिए । यदि दण्ड का भागी ब्राह्मण हो तो उसे देश से निकाल देना चाहिए ।। १३ ।। जो व्यक्ति अन्य व्यक्तियों के समान ही अपने साक्षित्व को स्वीकार करके पीछे चलकर किसी राग-द्वेष के कारण गवाही देनेसे इनकार कर देता है, न्यायाधिकारी को चाहिए कि विवाद में पराजित होने वाले को दिये जाने वाले दण्ड से आठ गुना दण्ड उस गवाही न देने वाले को दे । यदि दण्ड का पात्र ब्राह्मण हो तो उसे दण्ड न देकर देश से निकाल दे ।। १४ ।। ब्राह्मण, क्षत्रिय, वैश्य एवं शूद्र के प्राणदण्ड की सम्भावना हो तो उनके रक्षार्थ साक्षी को झूठ ही बोलना चाहिए सत्य नहीं बोलना चाहिए ।। १५ ।। धनी और अधर्मण के बीच जो सुवर्ण आदि द्रव्य परस्पर अपनी ही रुचि से, इस शर्त के साथ कि- 'इतने समय में इतना देना है और प्रतिमास इतना ब्याज है' इस व्यवस्थापूर्वक रखा जाता है उस अर्थ को लेकर कालान्तर में कोई मतभेद या विवाद उपस्थित होने पर कैसे निर्णय होगा ? इस बात के लिए ऋण लेते एवं देते समय ही एक लेखापत्र तैयार कर लेना चाहिए । उसमें पूर्वोक्त प्रकार के साक्षियों का तथा धनिक का भी उल्लेख होना चाहिए ।। १६ ।। उस लेखापत्र में वर्ष, मास, पक्ष, दिन, ऋण देने और लेने वाले के नाम, जाति तथा गोत्र का भी उल्लेख होना चाहिए । उसके साथ-साथ शाखा प्रयुक्त गौण नाम (उपाधि) तथा धनी एवं ऋणी के पिता आदि के नाम का भी उल्लेख होना चाहिए ।। १७ ।। लेखापत्र के विषय के लिख जाने के पश्चात् ऋणी भी अपने पिता के नाम के उल्लेखपूर्वक अपना नाम लिखे और यह भी लिखे कि मैं उपर्युक्त लेख के विषय से सहमत हूँ ।। १८ ।। इसके पश्चात् साक्षी भी अपने पिता के नाम का उल्लेख करते हुए यह लिखे कि अमुक का पुत्र अमुक मैं इस लेखापत्र के विषय का साक्षी हो रहा हूँ । साक्षियों की संख्या सम होनी चाहिए विषम नहीं ।। १९ ।। जो ऋणी पढ़ने में असमर्थ है वह अपने अभिमत अर्थ को सभी साक्षियों (गवाहों) के सामने ही किसी दूसरे साक्षी से लिखवाये अथवा उन्हीं साक्षियों में से कोई एक साक्षी उसके अभिमत अर्थ को लिख दे ।।२० ।। सबों के लिख लेने के पश्चात् लेखापत्र तैयार करने वाला लेखक भी उस पर लिखे कि ऋणी तथा ऋणदाता दोनों के कहने से अमुक का पुत्र अमुक मैंने इस लेखापत्र को लिखा है ।। २१ ।। साक्षियों के न होने पर भी ऋणी के हाथ का लिखा हुआ लेखापत्र पूर्ण प्रमाण माना जाता है । लेकिन उस लेखापत्र को बल अथवा छल के प्रयोग से लिखा हुआ नहीं होना चाहिए ।। २२ ।। लेखापत्र लिखकर लिया गया ऋण तीन पीढ़ियों तक ही देय होता है । किन्तु बन्धक की वस्तु तब तक धनी के उपभोग में रहती है जब तक कि ऋणी लिए हुए ऋण को लौटा न दे ।। २३ ।। यदि लेखापत्र देशान्तर में हो, उसकी लिखावट दोषपूर्ण हो, नष्ट हो गया हो अष्थवा उसके अक्षर घिस गये हों अथवा उसे किसी ने चुरा लिया हो, छिन्न-भिन्न अथवा दग्ध हो गया हो तो धनी को चाहिए कि ऋणी की अनुमति लेकर दूसरा लेखापत्र तैयार करवा ले।। २४ ।। संदिग्ध अर्थ की शुद्धि के लिए

कारयेत् । साक्षिमच्च भवेत् यत् तु तद् दातव्यं ससाक्षिकम् ॥ २७ ॥ तुलाग्न्यापो विषं कोषो दिव्यानीह विशुद्धये । महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥ २८ ॥ रुच्या वान्यतरः कुर्य्यादितरो वर्त्तयेच्छिरः । विनापि शीर्षकात् कुर्य्यान्नृपद्रोहेऽथ पातके ॥ २९ ॥ नासहस्राद्धरेत् फालं न तुलां न विषं तथा । नृपार्थेष्वभियोगेषु वहेयुः शुचयःसदा॥ ३०॥ सहस्रार्थे तुलादीनि कोषमल्पेऽपि दापयेत् । शतार्द्धं दापयेच्छुद्धमशुद्धो दण्डभाग् भवेत् ॥ ३१ ॥ सचेलस्नातमाहूय सूर्योदय उपोषितम्। कारयेत् सर्वदिव्यानि नृपब्राह्मणसन्निधौ॥ ३२॥ तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम् । अग्निर्जलं वा शूद्रस्य यवाःसप्त विषस्य वा ॥ ३३ ॥ तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः । प्रतिमानसमीभूतो रेखां कृत्वावतारितः ॥ ३४॥ आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्॥३५॥ त्वं तुले ! सत्यधामासि पुरा देवैर्विनिर्मिता । सत्यं वदस्व कल्याणि ! संशयान् मां विमोचय ॥ ३६ ॥ यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय। शुद्धश्चेद् गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥ ३७ ॥ करौ विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेत् । सप्ताश्वत्थस्य पत्राणि तावत्

---

स्वहस्तलिखित जो लेखापत्र होता है अर्थात् ऋणी अपने हाथ से दूसरा लेखापत्र तैयार कर देता है । उसकी प्रामाणिकता युक्ति प्राप्ति, क्रिया, असाधारण चिह्न, सम्बन्ध एवं आगम के द्वारा होती है ।। २५ ।। ऋणी जब जब धन धनी को लौटाये तब तब उस लेखापत्र पर अंकित करते जाय और धनी भी जितना धन पाये अपने हाथ से उस लेखापत्र के पृष्ठ पर अंकित करते जाय अपना हस्ताक्षर भी कर दे ।। २६ ।। ऋणी को चाहिये कि जब वह ऋण चुकता कर दे तो उस लेखापत्र को फाड़ डाले अथवा उस ऋण की चुकता की शुद्धि के लिए दूसरा पत्र लिखवा ले । यदि लेखापत्र में साक्षियों का उल्लेख हो तो ऋण साक्षियों के समक्ष ही चुकता करना चाहिए ।। २७ ।। तुला,अग्नि, जल, विष तथा कोष ये पाँच दिव्यप्रमाण विशेष रूप से शुद्धि करने वाले हैं। महाभियोग लगने पर और अभियोग करने वाला व्यवहार के जय-पराजय लक्षण चतुर्थपाद में पहुँच गया हो तभी इन दिव्य प्रमाणों का प्रयोग करना चाहिए ।।२८ ।। वादी और प्रतिवादी दोनों में से कोई अपनी रुचि के अनुसार किसी दिव्य प्रमाण के लिए प्रस्तुत हो और दूसरा शारीरिक अथवा आर्थिक दण्ड के लिये तैयार हो । राजद्रोह या महापातक का संदेह होने पर शीर्षक के विना भी तुला आदि दिव्य प्रमाणों को स्वीकार करना चाहिए ।। २९ ।। एक हजार पण से कम का अभियोग होने पर तुला, अग्नि (फाल) और विष इन तीन दिव्य प्रमाणों को नहीं स्वीकार करना चाहिए । किन्तु राजद्रोह और महापातक के अभियोग में सत्पुरुष को इन्हीं (तुला, अग्नि और विष) दिव्य प्रमाणों को स्वीकार करना चाहिए ।। ३० ।। एक हजार पण के अभियोग में तुला आदि तीन दिव्य प्रमाणों को ही स्वीकार करना चाहिए किन्तु अल्प अभियोग में भी कोष नामक दिव्य प्रमाण को उपस्थित करना चाहिए । शपथ ग्रहण करने वाले के शुद्ध सिद्ध हो जाने पर उसे पचास पण दिलाना चाहिए, यदि शपथकर्ता अशुद्ध सिद्ध हो जाय तो उसको दण्ड देना चाहिए ।। ३१ ।। न्यायाधिकारी को चाहिए कि दिव्य प्रमाण के लिए उद्यत पुरुष को पहले दिन उपवास कराये तथा दूसरे दिन सूर्योदय के समय वस्त्र सहित स्नान करने पर उसे बुलाये । फिर राजा और ब्राह्मण के समक्ष उससे सभी दिव्य प्रमाणों को ग्रहण कराये ।। ३२ ।। किसी भी जाति अथवा वय की स्त्री किसी भी जाति का सोलह वर्ष की अवस्था से कम अवस्था का बालक कम से कम अस्सी वर्ष की अवस्था का बूढ़ा, अन्धा, लंगड़ा, ब्राह्मण, रोगी इन सबों पर लगे अपराध का निवारण करने के लिए'तुला' नामक दिव्य प्रमाण ही ग्राह्य हैं । क्षत्रिय के लिए अग्नि, वैश्य के लिए जलमात्र तथा शूद्र के लिए सात जौ प्रमाण का विष इनकी शुद्धि के लिए आवश्यक है ।। ३३ ।। जो लोग तराजू उठाना या तौलना जानते हों ऐसे व्यक्त अभियुक्त को तुला के एक पलड़े में बैठाकर दूसरे पलड़े में मिट्टी अथवा पतीर का उतने ही वजन का टुकड़ा रखकर अभियुक्त को उससे ठीक-ठीक तौले । फिर अभियुक्त को पलड़े पर से उतार कर खड़िया से उसमें रेखा बना दे ।। ३४ ।। उतरने के पश्चात् वह अभियुक्त निम्नांकित मन्त्र को पढ़कर उस तुला को अभिमन्त्रित करे- सूर्य, चन्द्रमा, वायु,अग्नि, आकाश, भूमि, जल, हृदय, यम, दिन, रात, दोनों संध्यायें, तथा धर्म ये सब के सब मनुष्य के समस्त व्यापारों को जानते हैं ।। ३५ ।। हे तुले ! तुम सत्य का धाम हो, पूर्वकाल में देवताओं ने तुम्हारा निर्माण किया है, अतएव हे कल्याणि ! तुम सत्य को प्रकट करने और मुझे संशय से मुक्त कर दो ।। ३६।। हे माता ! यदि मैं पापी हूँ तो तुम मुझे नीचे की ओर ले जाओ, अब मैं शुद्ध हूँ तो तुम मुझे ऊपर की ओर उठा दो ।। ३७ ।। अग्नि का दिव्य प्रमाण ग्रहण करने वाले के हाथों में धान मसलकर,

कृष्णाष्टमीचतुर्दश्योर्ग्रहणादौ च साधकः । दस्रो यमोऽनलो धाता शशी रुद्रो गुरुर्दितिः ॥ ३२॥ सर्पाः पितरोऽथ भगोऽर्यमा शीतेतरद्युतिः । त्वष्टा मरुत इन्द्राग्नी मित्रेन्द्रौ निर्ऋतिर्जलम्॥३३॥ विश्वेदेवा हृषीकेशो वायवः सलिलाधिपः । अजैकपादहिर्बुध्नः पूषाश्विन्यादिदेवताः॥ ३४॥ अग्निदस्रावुमा निघ्नो नागस्स्कन्दो दिवाकरः । मातृदुर्गा दिशामीशः कृष्णो वैवस्वतः शिवः ॥ ३५ ॥ पञ्चदश्याः शशाङ्कस्तु पितरस्तिथिदेवताः । हरो दुर्गा गुरुर्विष्णुर्ब्रह्मा लक्ष्मीर्धनेश्वरः॥ ३६॥ एते सूर्य्यादिवारेशा लिपिन्यासोऽथ कथ्यते । केशान्तेषु च वृद्धेषु चक्षुषोः श्रवणद्वये॥ ३७॥ नासागण्डौष्ठदन्तानां द्वे द्वे मूर्द्धास्ययोः क्रमात्। वर्णान् पञ्चसुवर्गाणां बाहुचरणसन्धिषु॥३८॥ पार्श्वयोः पृष्ठतो नाभौ हृदये च क्रमान् न्यसेत् । यादींश्च हृदये न्यस्येदेषां स्युः सप्तधातवः ॥ ३९ ॥ त्वगसृङ्मांसकस्नायुमेदोमज्जाशुक्राणि धातवः । वसाः प्राणो वासको लिख्यन्ते चैव लिपीश्वराः ॥ ४० ॥ श्रीकण्ठोऽनन्तसूक्ष्मौ च त्रिमूर्त्तिरमरेश्वरः। अधीशो भारभूतिश्च तिथीशः स्थाणुको हरः ॥ ४१ ॥ झिण्टीशो भौतिकः सद्योजातश्चानुग्रहेश्वरः । अक्रूरश्च महासेनः स्वरस्था देवता अमूः॥ ४२॥ ततः क्रोधीशचण्डौ च पञ्चान्तकशिवोत्तमौ । तथैव रुद्रकूर्मौ त्रिनेत्रो चतुराननः॥ ४३॥ अजेशः सर्वसोमेशौ तथा लाङ्गलिदारुकौ । अर्द्धनारीश्वरश्चोमा कान्तश्चाषाढिदण्डिनौ॥ ४४॥ अत्रिमीनश्च मेषश्च लोहितश्च शिखी तथा। छगलाण्डद्विरण्डो

---

वार कृष्ण पक्ष की अष्टमी दोनों पक्षों की चतुर्दशी तथा ग्रहण आदि के अवसर पर मन्त्र के देवता की पूजा करे ।। ३१ ।। अश्विनी कुमार, यमराज, अग्नि, धाता, चन्द्रमा, रुद्र, बृहस्पति, अदिति, सर्प, पितृगण, भग, अर्यमा, सूर्य, त्वष्टा, वायु, इन्द्राग्नि, मित्र, इन्द्र, निऋति, जल ।। ३३ ।। विश्वेदेव, विष्णु, वसुगण, वरुण, अजैकपात्, अहिबुर्ध्न्य और पूषा ये क्रमशः अश्विनी आदि नक्षत्रों के देवता हैं ।। ३४ ।। अग्नि, अश्विनीकुमार, पार्वती, गणेश, नाग, स्कन्द, सूर्य, मातृगण, दुर्गा,दिगीश, विष्णु, यम तथा शिव ये प्रतिपदा से लेकर चतुर्दशी पर्यन्त तिथियों के देवता हैं ।। ३५ ।। पूर्णिमा के देवता चन्द्रमा हैं । अमावस्या के देवता पितृगण हैं । रविवार आदि दिनों के देवता क्रमशः शिव, दुर्गा, वृहस्पति, विष्णु, ब्रह्मा, लक्ष्मी और कुबेर हैं । अब मैं लिपिन्यास का वर्णन करता हूँ ।। ३६ ।। (ओं अं नमः केशान्तेषु) ओं आं नमः मुखे । ओं इं नमः दक्षिणानेत्रे ओं ईं नमः वामनेत्रे। ओं उं नमः दक्षिणकर्णे । ओं ऊं नमः वामकणे । ओं ऋं नमः दक्षिणनासायाम् । ओं ॠं नमः वाम नासायाम् । ऌं नमः दक्षिणकपोले । ओं ॡं नमः वामकपोले । ओं एं नमःऊर्ध्वोष्ठे । ओंऐं नमः अधरोष्ठे । ओं ओं नमः ऊर्ध्वदन्तपंक्तौ । ओं औं नमः अधोदन्तपंक्तौ । ओं अं नमः मूर्ध्नि । ओं अः नमः मुखवृत्ते ।। ३७ ।। ओं कं नमः, दक्षिणबाहुमूले । ओं खं नमः दक्षिण कूर्परे । ओं गं नमः दक्षिणमणिबन्धे । ओं घं नमःदक्षिणहस्तांगुलि मूले । ओं ङं नमःदक्षिण हस्ताङ्गुल्यग्रे । ओं चं नमः वाम बाहुमूले । ओं छं नमः वाम कूर्परे । ओं गं नमः वाममणिबन्धे । ओं झं नमः वामहस्ताङ्गुलिमूले । ओं ञं नमः वाम हस्ताङ्गुलग्रे । ओं टं नमःदक्षिणपादमूले । ओं ठं नमः दक्षिण जानुनि । ओं डं नमः दक्षिणगुल्फे । ओं ढं नमः दक्षिण पादाङ्गुलिमूले । ओं णं नमः दक्षिणपादाङ्गुल्यग्रे । ओं तं नमः वामपादमूले। ओं थं नमः वामपादजानुनि । ओं दं नमः वामगुल्फे । ओं धं नमः वामपादाङ्गुलिमूले । ओं नं नमः वामपादाङ्गुल्यग्रे । ओं पं नमः दक्षिणपार्श्वे। ओं फं नमः वामपार्श्वे । ओं बं नमः पृष्ठे । ओं भं नमः नाभौ। ओं मं नमः उदरे । ओं यं त्वगात्मने नमः वामासे। ओं रं असृगात्मने नमः दक्षांसे । ओं लं मांसात्मने नमः ककुदि । ओं वं मेदात्मने नमः वामांसे । ओं शं अस्थ्यात्मने नमः । हृदयादिदक्षहस्तान्तम् । ओं षं मज्जात्मने नमः हृदयादिवामहस्तान्तम् । ओं सं शुक्रात्मने नमः हृदयादिदक्षपादान्तम् । ओं हं परमात्मने नमः हृदयादिवामपादान्तम् । ओं लं प्राणात्मने नमः, जठरे। ओं क्षं वासात्मने नमः मुखे ।। ) अब लिपीश्वरों को लिखा जा रहा है ।। ४० ।। श्रीकण्ठ, अंनन्त, सूक्ष्म, त्रिमूर्ति,अमरेश्वर, अधीश, भारभूति, तिथीश, स्थाणुक, हर ।। ४१ ।। झिण्टीश, भौतिक, सद्योजात, अनुग्रहेश्वर, अक्रूर, महासेन ये स्वराधिष्ठातृ देवता हैं ।। ४२ ।। क्रोधीश, चण्डीश, पञ्चान्तक, शिवोत्तम, एकरुद्र, कूर्म, एकनेत्र,चतुरानन ।। ४३ ।। अजेश, सर्वेश, सोमेश, लाङ्गलि, दारुक, अर्द्धनारीश्वर, उमाकान्त, आषाढ़ी, दण्डी ।। ४३ ।। अत्रि, मीन, मेष, लोहित, शिखी, छागलाण्ड, द्विरण्ड, महाकाल, कपाली, भुजङ्गेश, पिनाकी, खड्गीश, बक, श्वेत, भृगु, लगुडीश, संवर्त्तक ये व्यञ्जन वर्णों के अधिष्ठातृ देवता हैं ।। ४४-४६ ।। श्रीकण्ठ आदि रुद्रों की शक्तियों को लिखकर तथा अन्त में नमः पद लगाकर उनका न्यास करना चाहिए

द्वौ महाकालकपालिनौ॥ ४५॥ भुजङ्गश्च पिनाकी च खड्गीशश्च वकः पुनः। श्वेतो भृगुर्लगुडीशाक्षश्च संवर्त्तक स्मृतः ॥ ४६॥ रुद्रात्मशक्तीन् लिख्यादीन् नमोऽन्तान् विन्यसेत् क्रमात्। अङ्गानि विन्यसेत् सर्वे मन्त्राः साङ्गास्तु सिद्धिदाः॥ ४७॥ हृल्लेखाव्योमपूर्वाण्येतान्यङ्गानि विन्यसेत्। हृदादीन्यङ्गमन्त्रान्तैर्यो जपेद्धृदये नमः ॥ ४८॥ स्वाहा शिरस्यथ वषट् शिखायां कवचे च हूम्। वौषट् नेत्रेऽस्त्राय फट् स्यात् पञ्चाङ्गं नेत्रवर्जितम्॥४९॥ निरङ्गस्यात्मना चाङ्गं न्यस्येमां नियुतं जपेत्। क्रमाभ्यां देवीं वागीशीं यथोक्तांस्तु तिलान् हुनेत् ॥ ५० ॥ लिपिदेवी साक्षसूत्रकुम्भपुस्तकपद्मधृक्। कवित्वादि प्रयच्छेत कर्मादौ सिद्धये न्यसेत्। निष्कविर्निर्मलः सर्वे मन्त्राः सिद्ध्यन्ति मातृभिः ॥ ५१ ॥

इत्यादिमहापुराण आग्नेये मन्त्रपरिभाषाकथनं नाम त्रिनवत्यधिकद्विशततमोऽध्यायः ॥ २९३ ॥

## चतुर्नवत्यधिकद्विशततमोऽध्यायः

## नागलक्षणानि

अग्निरुवाच– **नागोदयोऽथ भावादि दशस्थानानि मर्म च। सूतकं दष्टचेष्टेति सप्तलक्षणमुच्यते ॥ १ ॥ शेषवासुकितक्षाख्याः कर्कटोब्जो महाम्बुजः। शङ्खपालश्च कुलिक इत्यष्टौ नागवर्य्यकाः॥२॥ दशाष्टपञ्च त्रिगुण शतमूर्द्धान्वितौक्रमात्। विप्रौ नृपौ विशौ शूद्रौ द्वौ द्वौ नागेषु कीर्त्तितौ॥३॥**

(श्रीविधार्णव तन्त्र में स्वरों की तथा व्यञ्जनों की रुद्रशक्तियों का उल्लेख है। उसके अनुसार- पूर्णोदरी, विरजा, शाल्मली, लोलाक्षी, वर्तुलाक्षी, दीर्घघोणा, सुदीर्घमुखी, गोमुखी, दीर्घजिह्वा, कुण्डोदरी, ऊर्ध्वकेशी, विकृतमुखी, ज्वालामुखी, उल्कामुखी, श्रीमुखी तथा विद्यामुखी, ये रुद्रों की स्वरशक्तियाँ हैं। महाकाली, महासरस्वती, सर्वसिद्धि गौरी, त्रैलोक्य विद्या, मन्त्रशक्ति, आत्मशक्ति, भूतमाता लम्बोदरी, द्राविणी, नागरी, खेचरी, मञ्जरी, रूपिणी, वीरिणी, काकोदरी, पूतना, भद्रकाली, योगिनी, शंखिनी, गर्जिनी, कालरात्रि, कूर्दिनी, कपर्दिनी, वज्रिका, जया, रेवती, माधवी, वारुणी, वायवी, रक्षोविदारिणी, सहजा, लक्ष्मी, व्यापिनी और महामाया- ये व्यञ्जन स्वरूपा रुद्रशक्तियाँ हैं।) इनका न्यास इस प्रकार करना चाहिए- (ह्सौं अं श्रीकण्ठाय पूर्णोदर्यै नमः। ह्सौं आं अनन्ताय विरजाये नमः इत्यादि।) इन मन्त्रों का अङ्गन्यास भी करना चाहिए। सभी मन्त्र अंगन्यास करने से सिद्धिप्रद करते हैं।। ४७ ।। हृल्लेखा को व्योमबीज से युक्त करके हृदयादि न्यास करना चाहिए। अङ्ग मन्त्रों को अन्त में जोड़कर न्यास करना चाहिए। जैसे- ह्रां हृदयाय नमः, ह्रीं शिरसे स्वाहा, ह्रूं शिखायै वषट्, ह्रैं कवचाय हुम्, ह्रौं नेत्राभ्यां वौषट्, ह्रः अस्त्राय फट्। यह षडङ्गन्यास है। पञ्चाङ्गन्यास में नेत्र को छोड़ दिया जाता है।। ४७-४९ ।। निरङ्गमन्त्र का उसके स्वरूप से ही अंगन्यास करके वागीश्वरी देवी (ह्रीं) का एक लाख जप करना चाहिए। उसके पश्चात् दशांश तिलों की आहुति देनी चाहिए।। ५० ।। लिपियों की अधिष्ठात्री वागीश्वरी देवी अपने चारों हाथों में क्रमशः अक्षमाला, कलश, पुस्तक तथा कमल धारण किए हुई हैं। ये कवित्व आदि की शक्ति प्रदान करती हैं। सिद्धि प्राप्त करने के लिए इनका न्यास जप कर्म के आदि में करना चाहिए। इससे अकवि भी निर्मल कवि हो जाता है। मातृका न्यास से सभी मन्त्र सिद्ध होते हैं।। ५१।।

**इस तरह से आदिमहापुराण अग्निपुराण का मन्त्रपरिभाषा वर्णन नामक दो सौ तिरानबेवाँ अध्याय सम्पूर्ण हुआ ॥ २९३ ॥**

**अग्निदेव ने कहा–** वसिष्ठ अब मैं नागों की उत्पत्ति, सर्पदंश में अशुभ नक्षत्र आदि सर्पदंश के विविधभेद, सर्पदंश के स्थान, मर्मस्थल, सूतक सर्पदंष्टमनुष्य की चेष्टायें इन सात बातों

तदन्वयाः पञ्चशतं तेभ्यो जाता असंख्यकाः । फणिमण्डलिराजीलवातपित्तकफात्मकाः ॥ ४ ॥ व्यन्तरादोषमिश्रास्ते सर्पा दर्वीकराः स्मृताः । स्थाङ्गलाङ्गलच्छत्र स्वस्तिकाङ्कुशधारिणः ॥ ५ ॥ गोनसा मन्दगा दीर्घा मण्डलैर्विविधैश्चिताः । राजीलाश्चित्रिताः स्निग्धास्तिर्य्यगूर्ध्वञ्च राजिभिः॥६॥ व्यन्तरा मिश्रचिह्नाश्च भूवर्षाग्नेयवायवः । चतुर्विधास्ते षड्विंशभेदाः षोडश गोनसाः॥ ७॥ त्रयोदश च राजीला व्यन्तरा एकविंशतिः। येऽनुक्तकाले जायन्ते सर्पास्ते व्यन्तराः स्मृताः ॥ ८ ॥ आषाढ़ादित्रिमासैः स्याद् गर्भो मासचतुष्टये । अण्डकाना शते द्वे च चत्वारिंशत् प्रसूयते॥९॥ सर्पा ग्रसन्ति सूतौघान् विना स्त्रीपुन्नपुंसकान् । उन्मीलतेऽक्षि सप्ताहात् कृष्णो मासाद् भवेद् वहिः ॥ १० ॥ द्वादशाहात्सुबोधः स्यात् दन्ताः स्युः सूर्य्यदर्शनात्। द्वात्रिंशद्दिनविंशत्या चतस्रस्तेषु दंष्ट्रिकाः ॥ ११ ॥ कराली मकरी कालरात्री च यमदूतिका । एतास्ताः सविषा दंष्ट्रा वामदक्षिणपार्श्वगाः॥ १२॥ षण्मासान् मुच्यते कृत्तिं जीवेत् षष्टिसमाद्वयम् । नागाः सूर्य्यादिवारेशाः सप्त उक्ता दिवा निशि ॥ १३ ॥ स्वेषां षट् प्रतिवारेषु कुलिकः सर्वसन्धिषु। शङ्खेण वा महाब्जेन सह तस्योदयोऽथवा॥ १४॥ द्वयोर्वा नाड़िकामन्त्रमन्त्रकंकुलिकोदयः। दुष्टः स कालःसर्वत्र सर्पदंशे विशेषतः॥१५॥ कृत्तिका भरणी स्वाती मूलं पूर्वत्रयाश्विनी । विशाखार्द्रा मघाश्लेषा चित्रा श्रवणरोहिणी ॥ १६ ॥ हस्तो मन्दकुजौ वारौ पञ्चमी चाष्टमी तिथिः। षष्ठी रिक्ता शिवा निन्द्या पञ्चमी च चतुर्दशी ॥ १७ ॥ सन्ध्याचतुष्टयं दुष्टं दग्धयोगाश्च राशयः । एकद्विबहवो दंशा दष्टविद्धञ्च खण्डितम् ॥१८॥

---

का वर्णन करता हूँ।। १ ।। शेष, वासुकि, तक्षक, कर्कोटक, पद्म, महापद्म, शंखपाल तथा कुलिक ये आठ श्रेष्ठ नाग हैं ।। २ ।। इनमें क्रमशः दो-दो नाग ब्राह्मण, क्षत्रिय, वैश्य तथा शूद्र जाति के बतलाये गये हैं । ये क्रमशः एक हजार, आठ सौ, पाँच सौ तथा तीन सौ फणों वाले होते हैं ।। ३ ।। उनके वंशज पाँच सौ प्रकार के नाग हैं और उनसे असंख्य प्रकार के नाग हुए।। ये नाग आकारभेद से फणी, मण्डली, राजील नाम से अभिहित किए जाते हैं तथा ये क्रमशः वात, पित्त और कफप्रधान होते हैं ।। ४ ।। इनके अतिरिक्त व्यन्तर, दोषमिश्र और दर्वीकर नामक भी सर्प होते हैं । यह चक्र, हल, छत्र, स्वस्तिक तथा अंकुश के चिह्नों से चिह्नित होते हैं ।। ५ ।। गोनस सर्प, मन्दगामी लम्बा तथा अनेक प्रकार के मण्डलों से चित्रित होता है । रागिल सर्प स्निग्ध होता है तथा इसके ऊर्ध्वभाग तथा पार्श्वभाग-रेखाओंसे चित्रित होते हैं ।। ६ ।। व्यन्तर सर्प मिश्रित चिह्नों से युक्त होता है तथा इनके चार भेद होते हैं, पार्थिव, आप्य, आग्नेय और वायवीय। इनके छब्बीस अवान्तर भेद होते हैं । गोनस सर्पों के सोलह भेद होते हैं ।। ७ ।। राजील सर्पों के तेरह भेद होते हैं, और व्यन्तर सर्पो के इक्कीसभेद होते हैं । सर्पों की उत्पत्ति के जो काल बतलाये गये हैं उनसे भिन्न कालों में उत्पन्न होने वाले सर्प व्यन्तर कहलाते हैं ।। ८ ।। आषाढ़ से लेकर तीन महिनों तक सर्पों की गर्भ की स्थिति होती है । गर्भ स्थिति के पूरा होने पर सर्पिणी दो सौ चालीस अण्डे उत्पन्न करती है ।। ९ ।। सर्पशावकों के अण्डे से बाहर निकलते ही उनके स्त्री, पुरुष तथा नपुंसक चिह्नों के उत्पन्न होने से पूर्व ही सर्पगण अपने बच्चों को खा जाते हैं । कृष्णसर्प आँख खुलने पर एक सप्ताह पर अण्डे से बाहर निकलता है ।। १० ।। बारह दिन पर उसको ज्ञान होता है । बीस दिन पर सूर्य का दर्शन करने पर उसके बत्तीस दाँत निकल जाते हैं और उनमें चार दाढ़ होते हैं ।। ११ ।। सर्प की बायीं ओर दाहिनी ओर की दाढ़ें क्रमशः कराली, मकरी, कालरात्रि और यमदूतिका नाम की होती हैं और ये विषयुक्त होती हैं ।। १२।। सर्प छह मास में एक बार केंचुल छोड़ता है और एक सौ बीस वर्ष तक जीवित रहता है । शेष आदि सात नाग सूर्य आदि सात बारों के स्वामी होते हैं । जो नाग दिन का स्वामी होता है वह रात्रि का भी स्वामी होता है ।। १३ ।। शेष आदि सात नाग अपने-अपने वारों में उदित होते हैं किन्तु कुलिक सबों की सन्धि में उदित होता है । अथवा कुलिक का उदय शंखपाल अथवा महाब्ज के साथ माना जाता है ।। १४ ।। अथवा शंखपाल और महापद्म के बीच को दो घड़ियों में कुलिक का उदय होता है । यह सभय सभी प्रकारक सर्पदंश में विशेष रूप से दोषयुक्त माना जाता है ।।१५।। कृत्तिका, भरणी, स्वाती, मूल, तीनों पूर्वा (पूर्वा फाल्गुनी, पूर्वाषाढा और पूर्वाभाद्रपद) अश्विनी, विशाखा, आर्द्रा, मघा, श्लेषा, चित्रा, श्रवण, रोहिणी ।। १६ ।। तथा हस्त नक्षत्र शनिवार एवं मंगलवार, पञ्चमी, अष्टमी, षष्ठी तथा रिक्त (चतुर्थी नवमी एवं चतुर्दशी) ये तिथियाँ सर्पदंश में निन्द्य हैं ।। १७ ।। यदि सर्प चारो सन्ध्याओं, दो तथा तीन सर्पदंशों

अदंशमवगुप्तं स्याद् दंशमेवं चतुर्विधम् । त्रयो द्व्येकक्षता दंश वेदना रुधिरोल्वणा॥ १९॥ नक्तन्त्वेकांघ्रिकूर्माभा दंशाश्च यमचोदिताः । दाहीपिपीलिकास्पर्शी कण्ठशोथरुजान्वितः ॥ २० ॥ सतोदो ग्रन्थितो दंशःसविषोऽन्यस्तुनिर्विषः । देवालये शून्यगृहे वल्मीकोद्यानकोटरे ॥२१॥ रथ्यासन्धौ श्मशाने न नद्याञ्च सिन्धुसङ्गमे । द्वीपे चतुष्पथे सौधे गृहेऽब्जे पर्वताग्रतः॥ २२॥ विलद्वारे जीर्णकूपे जीर्णवेश्मनि कुड्यके । शिग्रुश्लेष्मातकाक्षेषु जम्बूदुम्बरणेषु च ॥ २३॥ वटे च जीर्णप्राकारे खास्यहृत् कक्षजत्रुणि । तालौशङ्खे गले मूर्ध्नि चिबुके नाभिपादयोः ॥ २४॥ दंशोऽशुभः शुभो दूतः पुष्पहस्तः सुवाक् सुधीः । लिङ्गवर्णसमानश्च शुक्लवस्त्रोऽमलः शुचिः ॥२५ ॥ अपद्वारगतःशस्त्री प्रमादी भूगतेक्षणः । विवर्णवासाः पाशादिहस्तो गद्गदवर्णवाक् ॥ २६॥ शुष्ककाष्ठाश्रितः खिन्नस्तिलाक्तककरांशुकः ॥ २७॥ आर्द्रवासाः कृष्णरक्तपुष्पयुक्तशिरोरुहः कुचमर्दी नखच्छेदी गुदस्पृक् पादलेखकः । केशलुञ्ची तृणच्छेदी दुष्टा दूतास्तथैकशः॥ २८॥ इडान्या वा वहेद् द्वेधा यदिदूतस्य चात्मनः । आभ्यां द्वाभ्यां पुष्टयास्मान् विद्यास्त्रीपुन्नपुंसकान् ॥ २९ ॥ दूतः स्पृशति यद्गात्रं तस्मिन् दंशमुदाहरेत् । दूताङ्घ्रिचलनं दुष्टमुत्थितिर्निश्चला शुभा॥ ३०॥ जीवपार्श्वे शुभो दूतो दुष्टोऽन्यत्र समागतः । जीवो गतागतैर्दुष्टः शुभो दूतनिवेदने ॥ ३१॥ दूतस्य वाक् प्रदुष्टा सा पूर्वामजार्द्धनिन्दिता । विभक्तैस्तस्य वाक्यान्तैर्विषनिर्विषकालता ॥ ३२ ॥ आद्यैः स्वरैश्च काद्यैश्च वर्गैर्भिन्नालिपिर्द्विधा । स्वरजो वसुमान् वर्गी इतिक्षेपा च मातृका॥३३॥ वाताग्नीन्द्रजलात्मानो वर्गेषु च चतुष्टयम् । नपुंसकाः पञ्चमाः स्युः स्वराः शक्राम्बु योनयः ॥ ३४ ॥ दुष्टौ दूतस्य वाक्यादौ वाताग्नी मध्यमो हरिः।

---

को क्रमशः दष्ट, विद्ध एवं खण्डित कहते हैं ।। १८ ।। जब सर्प का स्पर्शमात्र हो जाय किन्तु सर्प काटे नहीं तो उसे अदंश कहते हैं । इसमें मनुष्य सुरक्षित रहता है । सर्पदंश चार प्रकार का होता है। इनमें तीन, दो एक दंश वेदना जनक तथा रुधिर स्राव कराने वाले होते हैं ।। १९ ।। सर्प के द्वारा रात्रि में एक पैर के समान तथा कूर्म के आकार वाले दंश यम प्रेरित होते हैं। शरीर में दाह उत्पन्न करने वाले, जिसमें चींटियों के चलने जैसा अनुभव होता हो तथा कण्ठ शोथ नामक रोग उत्पन्न कर देने वाला एवं व्यथा जनक गाँठ वाला सर्पदंश विषयुक्त होता है । इससे भिन्न प्रकार कादंश निर्विष होता है ।। २० ।। देवमन्दिर, शून्यगृह, वल्मीक, उद्यान, वृक्ष के कोटर में । दो गलियाँ जहाँ मिलती हों या दो मार्ग जहाँ मिलते हों, श्मशान, नदी में, जहाँ पर नदी एवं समुद्र मिलते हों, द्वीप में, चौराहे पर, राजप्रासाद में, गृह में, कमलवन में, पर्वत के शिखर पर ।। २२ ।। विल के द्वार पर, पुराने कुएँ में, पुराने घर में, दीवालों में, शोभाञ्जन लिसोडा आदि के वृक्ष पर, जामुन, गूलर के वृक्ष पर, बँसवारि में ।। २३ ।। वटवृक्ष पर, चाहारदिवारी में, सर्प निवास करते हैं । इन्द्रिय द्वार, मुख, हृदय, कक्ष, जत्रु (ग्रीवामूल) तालु, ललाट तथा ग्रीवा, ग्मिर, चिबुक (ठुड्डी) नाभि और पैर ।। २४ ।। इन स्थानों में सर्प का दंश अशुभ होता है । विषचिकित्सक को सूचना देने वाला यदि हाथ में पुष्प लिए हो, सुन्दर वाणी बोलता हो, बुद्धिमान् हो, सर्पदंष्ट मनुष्य के समान जाति तथा लिङ्ग का हो, श्वेत वस्त्रधारी हो एवं पवित्र हो तो शुभ माना जाता है ।। २५ ।। जो दूत मुख्य द्वार से भिन्न द्वार से आया हो, शस्त्र धारण किए हो, प्रमादी हो, भूमि पर आँखें गड़ाये हो, फटा चिटा कपड़ा पहने हो, हाथ में पाश आदि लिए हो, गद्गद वाणी बोलता हो ।। २६ ।। सूखे हुए काष्ठ पर बैठा हो, उदास हो, हाथ में काला तिल लिए हो, अथवा उसके कपड़े पर लालरंग के धब्बे हों, भीगा हुआ कपड़ा पहने हो, जिसके मस्तक के बालों पर काल और लाल रंग के फूल पड़े हों ।। २७ ।। अपने स्तनों का मर्दन, नखों का छेदन अथवा गुदा का स्पर्श कर रहा हो, पैर के नखों से भूमि को खुरच रहा हो, केशों को खुजला रहा हो, तृण तोड़ रहा हो, इस प्रकार के दूत अशुभ एवं दोषयुक्त होते हैं।।२८।। अपनी अथवा दूत की इडा अथवा पिंगला या दोनों ही नाड़ियाँ चल रही हों, उन दोनों के इन चिह्नों से डँसने वाले सर्प को क्रमशः स्त्री, पुरुष अथवा नपुंसक जानना चाहिए ।। २९ ।। दूत अपने जिस अंग का स्पर्श करे रोगी के उसी अंग में सर्पदंश समझना चाहिए । यदि दूत के पैर चंचल हों तो अशुभ और स्थिर हों तो शुभ होते हैं ।। ३० ।। आया हुआ दूत यदि किसी जीव के बगल में स्थित हो तो शुभ होता है और अन्यत्र स्थित हो तो अशुभ होता है । दूत के निवेदन के समय किसी जीव का आना शुभ होता है और गमन अशुभ होता है ।। ३१ ।। यदि दूत की वाणी दोष युक्त अथवा सुस्पष्ट नहीं प्रतीत हो रही हो तो अशुभ माना जाता है और दूत के स्पष्ट एवं विभक्त वाणी के द्वारा यह ज्ञात होता है कि सर्प का दंश विषयुक्त है अथवा विषरहित।।३२।।

प्रशस्ता वारुणा वर्णा अतिदुष्टा नपुंसकाः ॥ ३५ ॥ प्रस्थाने मङ्गलं वाक्यं गर्जितं मेघहस्तिनोः । प्रदक्षिणं फलं वृक्षो वामस्य च रुतं जितम्॥ ३६॥ शुभा गीतादिशब्दाः स्युरीदृशं स्यादसिद्धये । अनर्थगीरथाक्रन्दो दक्षिणे विरुतं क्षुतम्॥ ३७॥ वेश्या विप्रो नृपः कन्या गौर्दन्ती मुरजध्वजौ । क्षीराज्यदधिशङ्खाम्बु छत्रं भेरी फलं सुराः ॥ ३८ ॥ तण्डुला हेम रूप्यञ्च सिद्धयेऽभिमुखा अमी। सकाष्ठःसानलः कारुर्मलिनाम्बरभारभृत्॥ ३९॥ गलस्थटङ्को गोमायुगृध्रोलूककपर्दिकाः । तैलं कपालकार्पासा निषेधे भस्म नष्टये ॥ ४०॥ विषरोगाश्च सप्तस्युर्धातोर्धात्वन्तराप्तितः । विषदंशो ललाटं यात्यतो नेत्रं नतो मुखम्। आस्याच्च वचनीनाड्यौ धातून् प्राप्नोति हि क्रमात् ॥ ४१ ॥

इत्यादिमहापुराण आग्नेये नागलक्षणादिकथनं नाम चतुर्नवत्यधिकद्विशततमोऽध्यायः ॥ २९४ ॥

## पञ्चनवत्यधिकद्विशततमोऽध्यायः

### दष्टचिकित्सा

अग्निरुवाच– **मन्त्रध्यानौषधैर्दष्ट चिकित्सां प्रवदामि ते । ओं नमो भगवते नीलकण्ठायेति। जपनाद् विषहानिः स्यादौषधं जीवरक्षणम् ॥ १॥ साज्यं शकृद्रसं पेयं द्विविधं विषमुच्यते। जङ्गमं सर्पमूषादि शृङ्गादि स्थावरं विषम् ॥२॥ शान्तस्वरान्वितो ब्रह्मा लोहितं तारकं शिवः । वियतेर्नाममन्त्रोऽयं**

वाक्य के आदि में स्वर वर्ण और कादि वर्ण के प्रयोग भेद से लिपि के दो भेद होते हैं । यदि वाक्य के आदि में दूत स्वर वर्ण का प्रयोग करे तो सर्पदष्ट मनुष्य की जीवन रक्षा और कादि वर्गों के प्रयुक्त होने पर अशुभ की आशंका होती है । यह मातृका विधान है ।। ३३ ।। कवर्गादि के प्रथम चार अक्षर क्रमशः वायु, अग्नि, इन्द्र और वरुण देवताक होते हैं । वर्गों के पंचम अक्षर नुपंसक होते हैं । ह्रस्व स्वर इन्द्रदेवताक होते हैं और दीर्घ स्वर वरुण देवताक होते हैं ।। ३४ ।। दूत के वाक्य के आदि में यदि बायु एवं अग्निदैवत्य अक्षर दूषित होते हैं, ऐन्द्र अक्षर मध्यम फलप्रद होते हैं, वरुणदैवत्य प्रशस्त तथा नपुंसक वर्ण अत्यन्त अशुभ होते हैं ।। ३५ ।। विषचिकित्सक के चलते समय यदि मंगलमय वचन, मेघ और गजराज की गर्जना सुनायी दे दक्षिण पार्श्व में फलयुक्त वृक्ष हों अथवा वाम पार्श्व में पक्षियों का कलरव हो रहा हो तो शुभ होता है । उससे उसकी सफलता की सूचना मिलती है ।। ३६ ।। उस समय गीत आदि के शब्द सुनायी दे तो शुभ होता है । यदि दाहिनी ओर अनर्थ भरी वाणी, चक्रवाक का रुदन तथा पक्षियों का कलरव तथा छींक सुनायी देना अनर्थकारी होता है ।। ३७ ।। यदि सामने से वेश्या, ब्राह्मण, राजा, कन्या, गौ, हाथी, ढोलक, ध्वजा, दुग्ध, घी, दधि, शंख, जल, छत्र, भेरी, फल, मदिरा, चावल, सोना और चाँदी आयें तो ये शुभ के सूचक होते हैं ।। ३८ ।। काष्ठ एवं आग से युक्त बढई, मलिन कपड़ा पहने बोझ ढोने वाला, गले में टंक लटकाये हुए पुरुष, शृगाल, गृध्र, उल्लू, कौड़ी, तेल, कपाल, कपास तथा निषिद्ध भस्म ये सर्पदष्ट की मृत्यु को सूचित करते हैं ।। ४० ।। विष के एक धातु सेदूसरे धातु में प्रवेश कर जाने से सात प्रकार के विष सम्बन्धी रोग होते हैं । विषदंश पहले ललाट में, ललाट से नेत्र में और नेत्र से मुख में चला जाता है । मुख से वह समस्त धमनियों में चला जाता है । इसके पश्चात् वह धातुओं में प्रवेश कर जाता है ।। ४१।।

**इस तरह से आदिमहापुराण अग्निपुराण का नाग के लक्षण आदि का वर्णन नामक दो सौ चौरानबेवाँ अध्याय सम्पूर्ण हुआ ॥ २९४ ॥**



**अग्निदेव ने कहा–** अब मैं मन्त्र, ध्यान तथा औषधियों के प्रयोग से सर्पदष्ट की चिकित्सा का वर्णन करता हूँ । ओम् नमो भगवते नीलकण्ठाय इस मन्त्र का जप करने से विष का नाश होता है । घी के साथ गोबर के रस को पीना सर्पदष्ट की जीवनरक्षक औषधि है । विष दो प्रकार का होता है, जंगम विष और स्थावर विष । सर्प और चूहा आदि में पाया जाने वाला

तार्क्ष्य शब्दमयः स्मृतः ॥ ३ ॥ ओं ज्वल महामते ! हृदयाय गरुड विडालशिरसे गरुडशिखायै गरुड ! विषभञ्जन ! प्रभेदन ! प्रभेदन ! वित्रासय वित्रासय विमर्दय विमर्दय कवचाय अप्रतिहतशासनं वं हूं फट् अस्त्राय उग्ररूपधारक ! सर्वभयङ्कर ! भीषय सर्वं दह दह भस्मीकुरु कुरु स्वाहा नेत्राय । सप्तवर्गान्तयुग्माष्टदिग्दलस्वरकेशरादिवर्णरुद्धं वह्नि राभूतकर्णिकं मातृकाग्बुजम् । कृत्वा हृदिस्थं तन्मन्त्री वामहस्ततले स्मरेत् । अङ्गुष्ठादौ न्यसेद् वर्णान् वियतेर्भेदिताः कलाः ॥ ४ ॥ पीतं वज्रचतुष्कोणं पार्थिवं शक्रदैवतम् । वृत्तार्द्धमाप्यपद्मार्द्धं शुक्लं वरुणदैवतम् ॥ ५॥ त्र्यस्रं स्वस्तिकयुक्तञ्च तैजसं वह्निदैवतम् । वृत्तं विन्दुवृतं वायुदैवतं कृष्णमालिनम्॥ ६॥ अङ्गुष्ठाद्यङ्गुलीमध्ये पर्य्यन्तेषु स्ववेश्मसु । सुवर्णनागवाहेन वेष्टितेषु न्यसेत् क्रमात्॥ ७॥ वियतेश्चतुरो वर्णान् सुमण्डलसमत्विषः । अरूपे रवतन्मात्रे आकाशे शिवदैवते ॥ ८॥ कनिष्ठामध्यपर्वस्थे न्यसेत् तस्याद्यमक्षरम् । नागानामादिवर्णांश्च स्वमण्डलगतान् न्यसेत् ॥ ९ ॥ भूतादिवर्णान् विन्यसेदङ्गुष्ठाद्यन्तपर्वसु । तन्मात्रादिगुणाभ्यर्णानङ्गुलीषु न्यसेद् बुधः॥१०॥ स्पर्शनादेव तार्क्ष्येण हस्ते हन्याद् विषद्वयम् । मण्डलादिषु तान् वर्णान् वियतेः कवयो जितान् ॥ ११ ॥ श्रेष्ठद्व्यङ्गुलिभिर्देह नाभिस्थानेषु पर्वसु। आजानुतः सुवर्णाभ मानाभेस्तु हिमप्रभम्॥१२॥ कुङ्कुमारुणमाकण्ठादाकेशान्तात् सितेतरम्। ब्रह्माण्डव्यापिनं तार्क्ष्यञ्चन्द्राख्यंनागभूषणम्॥१३॥

---

जंगम विष है । सिंगिया आदि में पाया जाने वाला स्थावर विष है ।। १-२ ।। शान्त स्वर से युक्त ब्रह्मा (क्षौं) लोहित (ह्रीं) तारक (ओम् ) और शिव (ह्रौं) यह चार अक्षरों का विपति सम्बन्धी नाम मन्त्र है । इसे शब्द मय तार्क्ष्य (गरुड) माना गया है ।। ३ ।। इस विपति मन्त्र का हृदयादि न्यास इस प्रकार करना चाहिए- ॐ ज्वल महामते हृदयाय नमः, गरुड विशाल शिरसे स्वाहा, गरुड शिखायै वषट्, गरुड विषभञ्जन प्रभेदन-प्रभेदन, वित्रासय, वित्रासय विमर्दय विमर्दय कवचाय हुम्, उग्ररूप धारक ! सर्वभयंकर ! भीषय सर्वं दह दह भस्मीकुरु कुरु स्वाहा नेत्रत्रयाय वौषट् अप्रतिहत शासनं वं हुं फट् अस्त्राय फट् । मातृकामय कमल बनाये । उसके आठों दिशाओं में आठ दल होना चाहिए । प्रत्येक दल में क्रमशः दो-दो स्वरवर्ण लिखना चाहिए । कवर्गादि सात वर्गों के अन्तिम दो-दो वर्णों को भी लिखना चाहिए । उस कमल केसर भाग को वर्ग के आदि अक्षरोंसे अवरुद्ध करना चाहिए । कर्णिका में अग्निबीज 'रं' लिखना चाहिए । मन्त्र का साधक उस कमल को हृदयस्थ करके बायें हाथ की हथेली पर उसका चिन्तन करना चाहिए । अंगुष्ठ आदि में विपति मन्त्र के वर्णों का न्यास करना चाहिए । साथ ही उनके द्वारा भेदित कलाओं का भी चिन्तन करना चाहिए ।। ४ ।। इसके पश्चात् चतुष्कोण भूपुर नामक मण्डल बनाना चाहिए । उसे पीतवर्ण का होना चाहिए तद्यथा चारों ओर से वज्र से चिह्नित होना चाहिए । अर्द्धचन्द्राकार वृत्त जल देवता सम्बन्धी होता है । कमल का आधा भाग शुक्ल वर्ण का होना चाहिए। उसके देवता वरुण हैं ।। ५ ।। फिर स्वस्तिक चिह्न से युक्त तेजोमय वह्निदेवता के मण्डल का चिन्तन करना चाहिए । वायु देवता का मण्डल विन्दुयुक्त एवं वृत्ताकार है । वह कृष्णमाला सेसुशोभित है ।। ६ ।। ये चार भूत अंगुष्ठ, तर्जनी मध्यमा और अनामिका इन चार अंगुलियों के मध्य पर्वों में विद्यमान अपने निवास स्थानों में विद्यमान हैं । इनके वास स्थान सुवर्णमय नागवाहन से वेष्टित हैं । इस प्रकार से ध्यान करते हुए पृथिवी आदि चार भूतों का अंगुष्ठ आदि के मध्य पूर्व में न्यास क्रमशः करना चाहिए ।। ७ ।। साथ ही विपत्ति मन्त्र के चार वर्णों का भी उन्हीं पर्वों में न्यास करना चाहिए और ध्यान करना चाहिए कि इन वर्णों की कान्ति इनके सुन्दर मण्डलों के समान है । इस प्रकार से न्यास करने के पश्चात् रूप रहित शब्दतन्मात्रा वाले शिवदैवत आकाश तत्त्व का कनिष्ठा के मध्य पर्व में न्यास करना चाहिए । चिन्तन करके वेद के आदि अक्षर ओं का न्यास करना चाहिए ।। ८ ।। फिर ऊपर बतलाये गये नागों के नाम के आदि वर्णों का भी अपने-अपने मण्डल में न्यास करना चाहिए । पृथिवी आदि भूतों के आदि वर्णों का अंगुष्ठ आदि अंगुलियों के अन्तिम पर्व में न्यास करना चाहिए । विद्वान् पुरुष गन्धादि तन्मात्राओं के गन्ध आदि गुणों के आदि वर्णों का भी अंगुष्ठ आदि अंगुलियों के अन्तिम पर्वों में न्यास करे ।। १०।। इस प्रकार तार्क्ष्यमन्त्र का न्यास ध्यान पूर्वक मन्त्रज्ञ विद्वान् रोगी के हाथ मात्र का केवल स्पर्श से ही दोनों प्रकार (स्थावर एवं जंगम) विषों का नाश कर देता है । मन्त्रज्ञ पुरुष पृथिवी आदि मण्डलों में विन्यस्त विपति मन्त्र के चारों वर्णों का अपनी श्रेष्ठ दो अंगुलियों द्वारा नाभिस्थानों तथा पर्वों में न्यास करे ।। ११ ।। इसके पश्चात् गरुड का इस प्रकार ध्यान करें- गरुड़ अपनी घुटनो तक

नीलोग्रनाशमात्मानं महापक्षं स्मरेद् बुधः । एवं तार्क्षात्मनो वाक्यान्मन्त्रः स्यान्मन्त्रिणो विषे ॥ १४ ॥ मुष्टिस्तार्क्षकरस्यान्तः स्थिताङ्गुष्ठविषापहा।
तार्क्ष्यं हस्तं समुद्यम्य तत्पञ्चाङ्गुलिचालनात् ॥ १५ ॥ कुर्य्याद् विषस्य स्तम्भादींस्तदुक्तमदवीक्षया । आकाशादेष भूवीजः पञ्चार्णाधिपतिर्मनुः॥१६॥
संस्तम्भयेतिविषतो भाषया स्तम्भयेद् विषम् । व्यत्यस्तभूषया वीजो मन्त्रोऽयं साधुसाधितः ॥ १७ ॥ संप्लवं प्लावय यमः शब्दाद्यः संहरेद्
विषम्। दण्डमुत्थापयेदेष सुजप्ताम्भोऽभिषेकतः॥ १८॥ सुजप्तशङ्खभेर्य्यादि निस्वनश्रवणेन वा । संदहत्येव संयुक्तो भूतेजोव्यत्ययात् स्थितः॥१९॥
भूवायुव्यत्ययान्मन्त्रो विषं संक्रामयत्यसौ। अन्तस्थो निजवेश्मस्थो वीजाग्नीन्दुजलात्मभिः ॥ २० ॥ एतत् कर्म नयेन्मन्त्री गरुडाकृतिविग्रहः ।
तार्क्षवरुणगेहस्थस्तज्जपान् नाशयेद् विषम्॥ २१॥ जानुदण्डीदमुदितंस्वधाश्रीवीज लाञ्छितम् । स्नानपानात् सर्वविषं ज्वरारोगापमृत्युजित्॥२२॥
पक्षि पक्षि महापक्षि महापक्षि विविस्वाहा । पक्षि पक्षि महापक्षि महापक्षि क्षि क्षि स्वाहा ॥ २३॥ द्वावेतौ पक्षिराड्मन्त्रौ विषघ्नावभिमन्त्रणात् ।
पक्षिराजाय विद्महे पक्षिदेवाय धीमहि तन्नो गरुड ! प्रचोदयात् । वह्निस्थौ पार्श्वं तत्पूर्वौ दन्तश्रीकौ च दण्डिनौ ॥ २३ ॥ सकालो लाङ्गली चेति
नीलकण्ठाद्यमीरितम् । वक्षःकण्ठशिखाश्वेतं न्यसेत् स्तम्भो सुसंस्कृतौ ॥ २४ ॥ हर हर स्वाहा हृदयाय नमः कपर्दिने च शिरसे नीलकण्ठाय वै

---

सुवर्ण की कान्ति से युक्त हैं । घुटनों से लेकर नाभिपर्यन्त हिम के समान श्वेत प्रभा से युक्त हैं । वहाँ से लेकर कण्ठ पर्यन्त वे कुंकुम के समान अरुणप्रभा से युक्त हैं । कण्ठ से लेकर केश पर्यन्त वे श्यामप्रभा से सुशोभित हैं ।। १२ ।। गरुड ब्रह्माण्ड में व्याप्त हैं । उनका नाम चन्द्र है । नाग के भूषणों से वे भूषित हैं । उनकी नासिका का अग्रभाग नीलवर्ण का है, उनके पंख विशाल हैं । इस प्रकार से मन्त्रज्ञ विद्वान् को गरुड का ध्यान करना चाहिए ।। १३ ।। इस तरह से गरुड़ स्वरूप मन्त्रज्ञ पुरुष का वाक्य ही रोगी के विष पर अपना प्रभाव डालता है । इस तरह गरुड़ स्वरूप मन्त्रज्ञ पुरुष की मुट्ठी यदि रोगी के हाथ में हो तो वह उसके अंगुष्ठ के विष को विनष्ट कर देती है ।। १४ ।। मन्त्रज्ञ पुरुष अपने गरुड़ स्वस्रूप हाथ को ऊपर उठाकर रोगी की पाँचों अंगुलियों के चालन मात्र से, विष से उत्पन्न होने वाले मद पर दृष्टि रखते हुए, उस विष का स्तम्भन आदि कर सकता है ।।१५।। आकाश से लेकर भू बीज पर्यन्त जो जो पाँच बीज हैं, वह पञ्चाक्षर मन्त्रराज कहलाता है । (उसका स्वरूप इस प्रकार है- (हं यं वं रं लं) अत्यन्त विष का स्तम्भन करना हो तो मन्त्रज्ञ पुरुष इस मन्त्र के द्वारा उस विष का स्तम्भन कर सकता है । यह व्यत्यस्त भूषण बीज मन्त्र है । अर्थात् इन बीज मन्त्रों का उलटफेर करके बोलना इसका भूषण स्वरूप है । इस मन्त्र को यदि अच्दी तरह से सिद्ध कर लिया जाय और इसकी आदि में यदि 'समलवं प्लावय प्लावय' यह वाक्य जोड़ दिया जाय तो मन्त्र प्रयोक्ता पुरुष इसके प्रयोग से विष का संहार कर देता है ।। १७।। इस मन्त्र के अच्छी तरह से जप के द्वारा अभिमन्त्रित जल से केवल अभिषेक करके मन्त्रज्ञ पुरुष रोगी से दण्डा उठवा सकता है । अथवा इस मन्त्र के जपपूर्वक की गयी भेरी आदि की ध्वनि को सुनाने मात्र से यह प्रयोग रोगी के विष को दग्ध कर देता है । यदि भूबीज (लं) तथा तेजोबीज (रं) को उलटकर मन्त्र का स्वरूप हं पं लं वं रं कर दिया जाय तो भी यह मन्त्र उक्त फल को ही देता है ।। १९ ।। भूबीज और वायु बीज का व्यत्यय करने से जो मन्त्र बनता है, वह ( हं लं वं रं यं) विष का संक्रामक होता है । अर्थात् वह विष का अत्यन्त संक्रमण करा देता है । मन्त्रज्ञ पुरुष चाहे रोगी के समीप बैठा हो अथवा अपने घर में बैठा हो, यदि गरुड़ के स्वरूप का चिन्तन तथा अपने आप में गरुड़ की भावना करके, (रं वं) इन दो ही बीजों का उच्चारण करे तो वह इस कर्म को सफल बना सकता है ।। २०।। यदि वह गरुड़ अथवा वरुण के मन्दिर में बैठकर मन्त्र का जप करे तो उससे वह विष के प्रभाव को नष्ट कर सकता है । स्वधा और श्री के बीजोंसे संयुक्त करके यदि इसे जपा जाय तो जानुदण्डी मन्त्र कहते हैं । इसके जपपूर्वक स्नान और जलपान करने वाला पुरुष सब प्रकार के विष, ज्वर, रोग तथा अपमृत्यु पर विजय प्राप्त कर लेता है ।। २२ ।। पक्षि पक्षि महापक्षि महापक्षि वि वि स्वाहा । पक्षि पक्षि महापक्षि महापक्षि क्षि क्षि स्वाहा । ये दो पक्षिराज गरुड़ के मन्त्र हैं । इनके द्वारा रोगी को झाड़ने से उसके विष दूर होते हैं । 'पक्षिराजाय विद्महे, पक्षिदेवाय धीमहि, तन्नो गरुड़ः प्रचोदयात् ।' यह गरुड़ गायत्री है । उपर्युक्त तीनों मन्त्रों को रं बीज से आवृत्त करके उनके पार्श्वभाग में भी रं बीज जोड़ दें । इसके पश्चात् दन्त, श्री, दण्डी, काल और लांगली से उन्हें

शिखां कालकूटविषभक्षणाय स्वाहा अथ वर्म च कण्ठेनेत्रं कृत्तिवासास्त्रिनेत्रं । पूर्वाद्यैराननैर्युक्तंश्वेतपीतारुणासितैः ॥ २४॥ अभयं वरदं चापं वासुकिञ्च दधद् भुजैः । यज्ञपीतपार्श्वस्थगौरीरुद्रोऽस्य देवता॥ २५॥ पादजानुगुहानाभि हृत्कण्ठाननमूर्द्धसु । मन्त्रार्णान् न्यस्य करयोरङ्गुष्ठाद्यङ्गुलीषु च॥ २६ ॥ तर्जन्यादितदन्तासु सर्वमङ्गुष्ठयोर्न्यसेत्। ध्यात्वैवं संहरेत् क्षिप्रं बद्धया शूलमुद्रया ॥ २७ ॥ कनिष्ठा ज्येष्ठया बद्धा तिस्रोऽन्याः प्रसृतेर्जवाः । विषनाशे वामहस्तमन्यस्मिन् दक्षिणं करम्॥२८॥ ओं नमो भगवते नीलकण्ठाय चिः अमलकण्ठाय चिः । सर्वज्ञकण्ठाय चिः क्षिप क्षिप ॐ स्वाहा । अमलनीलकण्ठायनैकसर्पविषापहाय। नमस्ते रुद्रमन्यवे । इतिसंमार्जनाद् विषं विनश्यति न सन्देहः । कर्णजाप्या उपानहा वा। यजेद्रुद्रविधानेन नीलग्रीवं महेश्वरं । विषव्याधिविनाशः स्यात् कृत्वा रुद्रविधानकम् ॥ २९ ॥

इत्यादिमहापुराण आग्नेये दष्टचिकित्साकथनं नाम पञ्चनवत्यधिकद्विशततमोऽध्यायः ॥ २९५ ॥

## षण्णवत्यधिकद्विशततमोऽध्यायः

## पञ्चाङ्गरुद्रविधानम्

अग्निरुवाच— **वक्ष्ये रुद्रविधानन्तु पञ्चाङ्गं सर्वदं परम्। हृदयं शिवसङ्कल्पः शिरः सूक्तन्तु पौरुषम्॥१॥ शिखाभ्यः सम्भृतं सूक्तमाशुः कवचमेव च । शतरुद्रीयसंज्ञस्य रुद्रस्याङ्गानि पञ्च हि ॥२॥ पञ्चाङ्गान् न्यस्य तं ध्यात्वा जपेद्रुद्रांस्ततः क्रमात् । यज्जाग्रतोऽस्य हृदयं षड्टचं मानसं विदुः॥३॥**

---

युक्त कर दें और आदि में नीलकण्ठ मन्त्र को जोड़ दें । इस प्रकार बतलाये गये मन्त्र का वक्षस्थल, कण्ठ और शिखा में न्यास करें । उक्त दोनों मन्त्रों का संस्कार करके उन्हें स्तम्भ में अंकित करें ।। २३-२४ ।। इसके पश्चात् इस प्रकार से न्यास करें- 'हर हृदयाय नमः । कपर्दिने स्वाहा, शिरसे स्वाहा । नीलकण्ठाय स्वाहा शिखायै वौषट् । कालकूट विषभक्षणाय हूँ फट् कवचाय हुम् । कृत्तिवाससे नेत्रत्रयाय वौषट्। अस्त्राय फट् । जिनके पूर्व आदि मुख क्रमशः, श्वेत, पीत, अरुण और श्याम हैं, अपने चारों हाथों में क्रमशः अभयमुद्रा, वरदमुद्रा, धनुष तथा वासुकि को धारण किए हुए हैं । जिनके गले में यज्ञोपवीत शोभा पाता है तथा बगल में पार्वती देवी विद्यमान् हैं ऐसे भगवान् रुद्र ही इस मन्त्र के देवता हैं ।। २५ ।। दोनों पैर, दोनों घुटनों, गुह्यभाग, नाभि, हृदय, कण्ठ और मस्तक इन अङ्गों में मन्त्र के वर्णों का न्यास करके दोनों हाथों में तथा अंगुष्ठ आदि अंगुलियों में अर्थात् तर्जनी से लेकर दोनों हाथों में तथा अंगुष्ठ आदि अंगुलियों अर्थात् तर्जनी से लेकर तर्जनी पर्यन्त की अंगुलियों में मन्त्र के अक्षरों का न्यास करे सम्पूर्ण मन्त्र का अंगुष्ठ में न्यास करना चाहिए ।। २६ ।। इस प्रकार ध्यान और न्यास करके बँधी हुई शूलमुद्रा के द्वारा विष का नाश करना चाहिए ।। २७ ।। कनिष्ठा अंगुलि ज्येष्ठा से बँध जाये और अन्य तीन अंगुलियाँ फैल जायें तो शूल मुद्रा होती है । विष का नाश करने में बायें हाथ का प्रयोग करना चाहिये और अन्य कार्यों में दाहिने हाथ का प्रयोग करना चाहिए ।। २८ ।। 'ओं नमो भगवते नीलकण्ठाय चिः । अमलकण्ठाय चिः । सर्वज्ञकण्ठाय चिः । क्षिप क्षिप ओं स्वाहा । अमलनीलकण्ठाय नैकसर्पविषापहाय नमस्ते रुद्र मन्यवे ।।' इस मन्त्र को पढ़कर झाड़ने से विष नष्ट हो जाता है, इसमें सन्देह नहीं है । रोगी के कान में इस मन्त्र का जप करने से अथवा जूते से रोगी के पास की भूमि को पीटने से विष उतर जाता है । रुद्रविधान के द्वारा नीलग्रीव महेश्वर की पूजा करनी चाहिए । रुद्र विधान करने से विष व्याधि का विनाश होता है ।। २९ ।।

**इस प्रकार आदिमहापुराण अग्निपुराण का दष्टचिकित्सा वर्णन नामक दो सौ पचानबेवाँ अध्याय सम्पूर्ण हुआ ॥ २९५ ॥**

**अग्निदेव ने कहा—** अब मैं पञ्चाङ्ग रुद्र विधान का वर्णन कर रहा हूँ जो परम उत्तम और सब कुछ देने वाला है । शिवसंकल्प सूक्त ही इसका हृदय है, पुरुषसूक्त इसका शिरोभाग है।।१।।

ऋषिः स्याच्छिवसङ्कल्पञ्छन्दस्त्रिष्टुवुदाहृतम् । शिरः सहस्रशीर्षेति तस्य नारायणोऽप्यृषिः ॥ ४ ॥ देवता पुरुषोऽनुष्टुपच्छन्दो ज्ञेयञ्च त्रैष्टुभम् । अद्भ्यः सम्भृतं सूक्तमृषिरुत्तरगो नरः ॥ आद्यानां तिसृणां त्रिष्टुप्च्छन्दोऽनुष्टुब्द्वयोरपि । छन्दःस्त्रैष्टुभमन्त्यायाः पुरुषोऽस्यापि देवता ॥ ६ ॥ आशुरिन्द्रो द्वादशानां छन्दस्त्रिष्टुबुदाहृतम् । ऋषिः प्रोक्तः प्रतिरथः सूक्ते सप्तदशार्चिके॥ ७॥ पृथक् पृथक् देवताः स्युः पुरुविदङ्गदेवता । अवशिष्ट दैवतेषु छन्दोऽनुष्टुवुदाहृतम् ॥ ८॥ असौ यमो भविवित्विन्द्रः पुरुलिङ्गोक्तदेवताः । पङ्क्तिच्छन्दोऽथ मर्माणि त्वथलिङ्गोक्तदेवताः ॥ ९ ॥ रौद्राध्याये च सर्वस्मिन्नार्षं स्यात् परमेष्ठ्यपि । प्रजापतिर्वै देवानां कुत्सस्य तिसृणां पुनः ॥ १० ॥ मनोद्वयोरुमैका स्याद्रुद्रो रुद्राश्च देवताः । आद्योनुवाकोऽथ पूर्व एकरुद्राख्यदैवतः ॥ ११॥ छन्दो गायत्र्यामाद्याया अनुष्टुप् तिसृणामृचाम् । तिसृणाञ्च तथा पङ्क्तिरनुष्टुबथ संस्मृतम् ॥ १२ ॥ द्वयोश्च जगतीच्छन्दो रुद्राणामप्यशीतयः । हिरण्यवाहवस्तिस्रो नमो वः किरिकाय च॥ १३॥ पञ्चर्चो रुद्रदेवाः स्युर्मन्त्रे रुद्रानुवाककः । विंशके रुद्रदेवास्ताः प्रथमा बृहती स्मृता ॥ १४॥ ऋग्द्वितीया त्रिजगती तृतीया त्रिष्टुबेव च। अनुष्टुभो यजुस्तिस्र आर्य्यादिज्ञः सुसिद्धिभाक् ॥ १५ ॥ त्रैलोक्यमोहनेनापि विषव्याध्यरिमर्दनम्। इं श्रीं ह्रीं हूं त्रैलोक्यमोहनाय विष्णवे नमः । अनुष्टुभं नृसिंहेन विषव्याधिविनाशनम् ॥ १६ ॥ ओं इं इं उग्रंवीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम्। नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ॥ १७॥ अयमेव तु पञ्चाङ्गो मन्त्रः सर्वार्थ साधकः । द्वादशाष्टाक्षरौ मन्त्रौ विषव्याधिविमर्दिनौ॥ १८॥ कुब्जिका त्रिपुरा गौरी चन्द्रिका विषहारिणी । प्रसादमन्त्रो विषहृदायुरारोग्यवर्धनः । सौरो

---

'अब्दाःसंभृतः' इत्यादि सूक्त इसकी शिखा है । 'आशुः शिशानः' इत्यादि अध्याय इसका कवच है । शतरुद्रिय संज्ञक रुद्र के पाँच ही अंग हैं ।। २ ।। रुद्रदेव का ध्यान करके क्रमशः पञ्चाङ्ग रुद्रों का जप करना चाहिए । यज्जाग्रतो इत्यादि छह ऋचाओं का सूक्त इसका अन्तःकरण हृदय है । इससूक्त के ऋषि शिवसंकल्प हैं तथा इसका छन्द अनुष्टुप् है । इसका (शतरुद्रिय संज्ञक रुद्रक) सहस्रशीर्षा० मन्त्र से प्रारम्भ होने वाला सूक्त शिरोभाग है । इसके ऋषि नारायण, देवता पुरुष एवं छन्द अनुष्टुप् एवं त्रिष्टुप् हैं ।। ३-४ ।। 'अद्भ्यः सम्भृतः' सूक्त केऋषि उत्तरगामी नर हैं । इसके प्रथम तीन मन्त्रों के छन्द त्रिष्टुप् और फिर दो मन्त्रों के छन्द अनुष्टुप् हैं । इस सूक्त के अन्तिम मन्त्र का छन्द त्रिष्टुप् है और इस सूक्त के देवता पुरुष हैं ।। ६ ।। आशुः शिशानो० आदि अध्याय के प्रथम बारह मन्त्रों के देवता इन्द्र हैं और छन्द त्रिष्टुप् हैं । सत्रह ऋचाओं वाले इससूक्त के ऋषि प्रतिरथ हैं ।। ७ ।। किन्तु इसके मन्त्रों के देवता भिन्न भिन्न हैं । इसके अङ्ग देवता पुरुवित् हैं । अवशिष्ट देवताओं सम्बन्धी मन्त्रों का छन्द अनुष्टुप् है ।। ८ ।। असौ यस्ताम्रो० इत्यादि मन्त्र केदेवता पुरुलिङ्ग हैं और इसका पंक्ति छन्द है । मर्माणि० इत्यादि मन्त्र के लिङ्गोक्त देवता हैं ।। ९ ।। सम्पूर्ण रुद्राध्याय के ऋषि परमेष्ठी हैं । देवानाम् इत्यादि मन्त्र के प्रजापति ऋषि हैं । इसके पश्चात् तीन ऋचाओं के ऋषि कुत्स हैं ।। १० ।। मानो महान्त इत्यादि तथा मानस्तो० इत्यादि दो मन्त्रों के देवता उमा और अन्य मन्त्रों के देवता रुद्र एवं रुद्रगण हैं । आद्य अनुवाक् के देवता रुद्र हैं ।। ११ ।। इसके प्रथम मन्त्र का छन्द गायत्री है, फिर तीन ऋचाओं के छन्द त्रिष्टुप्, फिर तीन ऋचाओं के त्रिष्टुप, फिर सात ऋचाओं के अनुष्टुप् और दो ऋचाओं के जगती छन्द हैं । नमो हिरण्य वाहवे० से लेकर 'किरिकेभ्यः' पर्यन्त रुद्रगण की तीन अशीतियाँ हैं ।। १२-१३ ।। रुद्राध्याय के पाँच ऋचाओं के देवता रुद्र हैं । बीसवीं ऋचा के भी देवता रुद्र हैं । पहली ऋचा का छन्द त्रिष्टुप् शेष तीन का अनुष्टुप् छन्द है । श्रेष्ठ पुरुष इनका ज्ञान प्राप्त करके सुसिद्धि को प्राप्त करता है ।। १५ ।। त्रैलोक्य मोहन मन्त्र से भी विष व्याधि तथा शत्रु का नाश होता है । ईं श्रीं ह्रीं, हूं त्रैलोक्यमोहनाय विष्णवे नमः ।' यह त्रैलोक्यमोहन मन्त्र है । अनुष्टुप् नृसिंह मन्त्र से भी विष व्याधि का विनाश होता है । 'ओं इं इं उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् । नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् । यह अनुष्टुप् नृसिंह मन्त्र है ।। १७।। हृदयादि पञ्चाङ्ग न्यास से युक्त यह मन्त्र समस्त अर्थों को सिद्ध करने वाला होता है । भगवान् विष्णु के (ओं नमो भगवते वासुदेवाय) (ओं नमो नारायणाय) विष तथा व्याधि को विनष्ट करने

विनायकस्तद्वद्रुद्रमन्त्राःसदाखिलाः ॥ १९ ॥

इत्यादिमहापुराण आग्नेये पञ्चाङ्गरुद्रविधानकथनं नाम षण्णवत्यधिकद्विशततमोऽध्यायः ॥ २९६ ॥

## सप्तनवत्यधिकद्विशततमोऽध्यायः

### विषहृन्मन्त्रौषधम्

अग्निरुवाच— **ओं नमो भगवते रुद्राय छिन्द छिन्द विष ज्वलितपरशुपाणये च । नमो भगवते पक्षिरुद्राय दष्टकम् उत्थापय २ दष्टकं कम्पय २ जल्पय २ सर्पदष्टमुत्थापय लल २ बन्ध २ मोचय २ वररुद्र ! गच्छ २ बध २ त्रुट २ बुक २ भीषय २ मुष्टिना विष संहर विषं ठ ठ । पक्षिरुद्रेण हि विषं नाशमायाति मन्त्रणात् ॥ १ ॥ ओं नमो भगवते रुद्र ! नाशयविषं स्थावरजङ्गमं कृत्रिमाकृत्रिमं विषमुपविषं नाशय नानाविषं दष्टकविषं नाशय धम २ दम २ वम २ मेघान्धकारधारावर्षकं निर्विषीभव संहर २ गच्छ गच्छ आवेशय २ विषोत्थापनरूपं मन्त्राद् विषधारणम्। ओं क्षिप ओं क्षिप स्वाहा । ओं ह्रां ह्रीं खीं सः ठन्द्रौं ह्रीं ठः । जपादिना साधितस्तुसर्पान् बध्नाति नित्यशः ॥ २ ॥ एक द्वित्रिचतुर्वीजः कृष्णाचक्राङ्गपञ्चकः ! गोपीजनवल्लभाय स्वाहा सर्वार्थसाधकः॥३॥ ओं नमो भगवते रुद्राय प्रेताधिपतये हुलु हुलु २ गर्ज २ भ्रामय २ मुञ्च २ मोहय २ कट्ट २ आविश २ सुवर्णपतङ्ग! रुद्रो ज्ञापयति स्वाहा। पातालक्षोभमन्त्रोऽयं मन्त्रणाद् विषनाशनः। दंशकाहिदंशे सद्योदष्टः काष्ठशिलादिना॥४॥**

---

वाले हैं ।। १८ ।। 'कुब्जिका त्रिपुरा गौरी चन्द्रिका विषहारिणी ।' यह प्रसाद मन्त्र विष को विनष्ट करने वाला तथा आयु एवं आरोग्य को बढ़ाने वाला है । सूर्य एवं विनायक के मन्त्र भी विष का हरण करने वाले हैं । इसी तरह रुद्र के भी समस्त मन्त्र सदा विष को विनष्ट करते हैं ।। १९ ।।

**इस तरह आदिमहापुराण अग्निपुराण का पञ्चाङ्ग रुद्रविधान वर्णन नामक दो सौ छानबेवाँ अध्याय सम्पूर्ण हुआ ॥ २९६ ॥**

**अग्निदेव ने कहा—** 'ओं नमो भगवते रुद्राय च्छिन्द-छिन्द विषं ज्वलित परशुपाणये ।' इस मन्त्र से तथा- 'नमो भगवते पक्षिरुद्राय दष्टकम् उत्थापय- उत्थापय, दष्टकं कम्पय कम्पय, जल्पय जल्पय, सर्पदष्टमुत्थापयोत्थापय लल-लल बन्ध-बन्ध, मोचय-मोचय, वरदरुद्र ! गच्छ-गच्छ, बन्ध-बन्ध, त्रुट-त्रुट, बुक-बुक, भीषय-भीषय, मुष्टिना विषः संहर-संहर, ठः ठः ।' इस पक्षिरुद्र मन्त्र से अभिमन्त्रित करने से विष का नाश हो जाता है ।। १ ।। ओं नमो भगवते रुद्र ! नाशयविषं स्थावरजङ्गमं कृत्रिमाकृत्रिमं विषमुपविषं नाशय, नानाविषं दष्टकविषं नाशय धम-धम, दम-दम, वम-वम, मेघान्धकारधारा वर्षकं निर्विषीभव संहर-संहर गच्छ-गच्छ, आवेशय-आवेशय, विषोत्थापनरूपं मन्त्राद् विषधारणम् । ओं क्षिप-क्षिप स्वाहा । ओं ह्रां ह्रीं खीं सः छ द्रौं ह्रीं ठः।।' जप आदि के द्वारा सिद्ध हो जाने पर यह मंत्र सर्पो को सदा बाँध लेता है ।। २ ।। 'गोपीजन बल्लभाय स्वाहा' यह मन्त्र सम्पूर्ण अभीष्ट अर्थों को सिद्ध करने वाला है । इसके प्रथम, द्वितीय, तृतीय एवं चतुर्थ अर्थ बीज के रूप में प्रयुक्त होते हैं । इनसे, हृदय, सिर शिखा और कवच का न्यास होता है । कृष्णचक्राय अस्त्राम् फट् इस मन्त्र के द्वारा इस मन्त्र का पञ्चाङ्ग न्यास पूरा होता है । 'ओं नमो भगवते रुद्राय, प्रेताधिपतये, हुल-हुलु, गर्ज-गर्ज नागान् भ्रामय-भ्रामय,मुञ्च-मुञ्च, मोहय-मोहय, कट्ट-कट्ट आविश-आविश, सुवर्णपतङ्ग ! रुद्रो ज्ञापयति स्वाहा । यह पातालक्षोभ मन्त्र है । इसके द्वारा अभिममन्त्रित करने से विष का नाश होता है । दंशक सर्प के डँस लेने पर शीघ्र ही डंसे हुए स्थान को विष की शान्ति के लिए जलती हुई लकड़ी, जलते

विषशान्त्यै दहेद् दंशं ज्वालकोकनदादिना । शिरीषबीजपुष्पार्क क्षीरवीज कटुत्रयम् ॥ ५ ॥ विषं विनाशयेत् पानलेपनेनाञ्जनादिना । शिरीषपुष्पस्य रसभावितं मरिचं सितम् ॥ ६ ॥ पाननस्याञ्जनाद्यैश्च विषं हन्यान्न संशयः । कोषातकी वचाहिङ्गु शिरीसार्कपयोयुतम् ॥ ७ ॥ कटुत्रयं समेषाम्भो हरेन् नस्यादिना विषम् । रामठेक्ष्वाकुसर्वाङ्ग चूर्णं नस्याद् विषापहम् ॥ ७ ॥ इन्द्रबलाग्निकं द्रोणं तुलसी देविका सहा । तद्रसात्तं त्रिकटुकं चूर्णं भक्ष्य विषापहम् । पञ्चाङ्गं कृष्णपञ्चम्यां शिरीषस्य विषापहम् ॥ ९ ॥

इत्यादिमहापुराण आग्नेये विषहृन्मन्त्रौषधकथनं नाम सप्तनवत्यधिकद्विशततमोऽध्यायः ॥ २९७ ॥

## अष्टनवत्यधिकद्विशततमोऽध्यायः

### गोनसादिचिकित्सा

अग्निरुवाच– **गोनसादि चिकित्साञ्च वसिष्ठ ! शृणु वच्मि ते । ह्रीं ह्रीं अमलपक्षि स्वाहा । ताम्बूलखादनान् मन्त्री हरेन्मण्डलिनो विषम् ॥ १॥ लशुनं रामठफलं कुष्ठाग्निव्योषकं विषे । स्नुहीक्षीरं गव्यघृतं पक्वं पीत्वाऽहिजे विषे ॥ २॥ अथ राजिलदष्टे च पेया कृष्णा ससैन्धवा । आज्याक्षौद्रशकृत्तोयं पुरीतत्या विषापहम् ॥ ३॥ सकृष्णाखण्डदुग्धाज्यं पातव्यं तेन माक्षिकम् । व्योषं पिच्छं विड़ालास्थि नकुलाङ्गरुहैःसमैः॥४॥ चूर्णितैर्मेषदुग्धाक्तैर्धूपः सर्वविषापहः। रोमनिर्गुण्डिकाकोल पर्णैर्वा लशुनं समम् ॥ ५ ॥ मुनिपत्रैः कृतस्वेदं दष्टं काञ्जिकपाचितैः । मुषिकाः षोडश**

पत्थर, गर्म कोकनद (कमल) आदि के द्वारा जला देना चाहिए ।। ४ ।। शिरीष के बीज तथा पुष्प, आक के दूध तथा बीज तथा सोंठ,मिर्च एवं पिप्पल इनके पान लेप से विष की शान्ति होती है ।। ५ ।। शिरीष के पुष्प के रस से भावित उजली मिर्च का पान, नस्य तथा अञ्जन करने से निश्चय ही विष का नाश होता है, इसमें कोई संशय नहीं ।। ६ ।। कड़वी तरोई, वचा, हिंग शिरीष आक का दूध तथा सोंठ मिर्च एवं पिप्पल तथा बकरे के मूत्र का नश आदि देने से विष की शान्ति ही जाती है ।। ७ ।। अंकोल तथा कड़वी तुम्बी के सर्वाङ्ग चूर्ण के नस्य से विष दूर होता है ।। ८ ।। इन्द्रायण, चित्रक, द्रोण (गूमा) तुलसी, धतूरा और सहा, इनके रस में त्रिकटु (सोंठ, मिर्च एवं पिप्पल) के चूर्ण को भिंगोकर खाने से विष का नाश होता है । कृष्णपक्ष की पञ्चमी को लाया हुआ शिरीष का पञ्चाङ्ग विषहारी होता है ।। ९ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का विषहारी मन्त्रौषध वर्णन नामक दो सौ सत्तानबेवाँ अध्याय सम्पूर्ण हुआ ॥ २९७ ॥**

**अग्निदेव ने कहा–** हे वसिष्ठ ! सुनों अब मैं आपको गोनसादि की चिकित्सा को बतलाता हूँ । ह्रीं ह्रीं अमलयक्षि. ! स्वाहा' इस मन्त्र से अभिमन्त्रित ताम्बूल को खिलाकर मन्त्रवेत्ता मण्डली (गोनस) सर्प के विष को दूर कर सकता है ।। १ ।। लहशुन, अंकोल,त्रिफिला, कूठ, वच तथा व्योष (त्रिकटु) इनको सर्पविष में पीना चाहिए । सर्पविष में स्नूही दुग्ध, गोदुग्ध, गोदधि एवं गोमूत्र में पकाया गया घृत पीना चाहिए ।। २ ।। राजिल जातीय सर्प के काट लेने पर सैन्धव लवण, पिप्पल, घृत, मधु, गोबर का रस और साही की आँत का भक्षण करने से विष दूर हो जाता है ।। ३ ।। सर्पदष्ट मनुष्य को पिप्पल, शर्करा, दुग्ध, घी और मधु का पान कराना चाहिए । त्रिकटु (सोंठ, मिर्च, पिप्पल) मयूर पिच्छ, विडाल की हड्डी तथा नेवले के रोम इन सबों को समान मात्रा में लेकर चूर्ण बनायें और उसे भेंड़ के दुग्ध में भिंगोकर धूप दें तो सभी प्रकार के विष विनष्ट हो जाते हैं ।। ४ ।। पाठा, निर्गुण्डी और अंकोल के पत्ते को समान मात्रा में लेकर, उन सबों के बराबर लहसून लेकर चूर्ण बनाकर धूप दें तो विष का नाश होता है । अगस्त्य वृक्ष के पत्तों को काजी में पकाकर उसके भाप से डँसे हुए स्थान को यदि सेंका जाय तो विष दूर

प्रोक्ता रसं कार्पासजं पिबेत् ॥ ६ ॥ सतैलं मूषिकार्त्तिघ्नं फलिनीकुसुमं तथा । सनागरगुड़ं भक्ष्यं तद्विषारोचकापहम् ॥ ७ ॥ चिकित्सा विंशतिर्भूता लूताविषहरो गणः। पद्मकं पाटली कुष्ठं नेत्रमूशीरचन्दनम् ॥ ८ ॥ निर्गुण्डी शारिवा शेलु लूतार्त्तं सेचयेज्जलैः । गुञ्जानिर्गुण्डिकङ्कोलपर्णं शुण्ठी निशाद्वयम्॥९॥ करञ्जास्थि च तत्पङ्कैः वृश्चिकार्तिहरं शृणु । मञ्जिष्ठा चन्दनं व्योष पुष्पं शिरीषकौमुदम्॥ १०॥ संयोज्याश्चतुरो योगा लेपादौ वृश्चिकापहाः । ओं नमो भगवते रुद्राय चिवि २ छिन्द २ किरि २ भिन्द २ खड्गेन छेदय २ शूलेन भेदय २ चक्रेण दारय २ ओं हूं फट् । मन्त्रेण मन्त्रितोदेयो गर्धभादीन् निकृन्तति ॥ ११ ॥ त्रिफलोशीरमुस्ताम्बु मांसीपद्मकचन्दनम् । अजाक्षीरेण पानादेर्गर्धभादेर्विषं हरेत्॥१२॥ हरेत् शिरीषपञ्चाङ्गं व्योषं शतपदीविषम्। सकन्धरं शिरीषास्थि हरेदुन्दूरजं विषम् ॥ १३॥ व्योषं ससर्पिः पिण्डीत मूलमत्स्य विषं हरेत् । क्षारव्योषवचाहिङ्गु विडङ्गं सैन्धवं नतम् ॥ १४ ॥ अम्बष्ठातिबलाकुष्ठं सर्वकीटविषं हरेत् । यष्टिव्योष गुडक्षीर योगः शूनो विषापहः ॥ १५॥ ओं सुभद्रायै नमः ओं सुप्रभायै नमः । यान्यौषधानि गृह्यन्ते विधानेन विना जनैः ॥ १६॥ तेषां बीजं त्वया ग्राह्यमिति ब्रह्माऽब्रवीच्च ताम् । तां प्रणम्यौषधीं पश्चात् यवान् प्रक्षिप्य मुष्टिना ॥ १७ ॥ दश जप्त्वा मन्त्रमिदं नमस्कुर्य्यात् तदौषधम् । त्वामुद्धराम्यूर्ध्वनेत्रामनेनैव च भक्षयेत्॥ १८॥ नमः पुरुषसिंहाय नमो गोपालकाय च । आत्मनैवाभिजानाति रणे कृष्णपराजयम्॥ १९॥ एतेन सत्यवाक्येन अगदो मेऽस्तु सिद्धयतु। नमोवैदूर्य्यमात्रे

---

हो जाता है ।। ५ ।। मूषक सोलह प्रकार के होते हैं । कपास का रस तेल के साथ पीने से चूहे का विष दूर होता है । फलिहारी के फूलों को गुड़ एवं सोंठ के साथ खाना चाहिए इससे चूहे का विष दूर होता है ।। ७ ।। लूता (मकड़ी) बीस प्रकार की बतलायी गयी हैं । इनके विष की चिकित्सा सावधानी से करनी चाहिए । पद्म, पाटल, कूट, नेत्रबाल, खश, चन्दन, निर्गुण्डी, शाखि, ये लूताविषहारी गण हैं । इनके जल से मकड़ी के विष को धोना चाहिए ।। ८ ।। गुञ्जानिर्गुण्डी और अंकोल के पत्र, सोंठ, हल्दी, दारुहल्दी तथा करञ्ज की छाल इनको पीसकर पूर्वोक्त औषधियों के जल में मिलाकर लेप करने से लूता का विष दूर होता है । अब वृश्चिक के विष को दूर करने वाली औषधियों को सुनो ।। ९ ।। मञ्जिष्ठ, चन्दन, व्योष (त्रिकटु) एवं शिरीष तथा कुमुद के पुष्प । इन चारों चीजों को मिलाकर चूर्ण करके इनका लेप करने से वृश्चिक का विष दूर हो जाता है ।। १० ।। ओं नमो भगवते रुद्राय, चिचि- चिचि,छिदि-छिदि, किरि, किरि, भिन्द-भिन्द, खड्गेन छेदय-छेदय, शूलेन भेदय-भेदय, चक्रेण दारय-दारय, ओं हूँ फट् इस मंत्र से अभिमंत्रित औषध विषार्त को देना चाहिये । इससे गर्दभ आदि के विष विनष्ट होते हैं ।। ११ ।। त्रिफला, खश, नागरमोथा, नेत्रबाला, जटामांसी और पद्मक तथा चन्दन, इन सबों के चूर्ण को बकरी के दुग्ध के साथ पीने से गधे आदि के विष विनष्ट होते हैं ।। १२ ।। शिरीष का पञ्चाङ्ग तथा त्रिकटु के चूर्ण का लेप गोजर के विष को दूर करता है । स्नूही दुग्ध के साथ शिरीष के छाल के चूर्ण का लेप उन्दूरज (मेढ़क) के विष को दूर करता है ।। १३ ।। त्रिकटु तथा तगर मूल का घृत के साथ प्रयोग करने पर मत्स्य विष का नाश होता है । यवक्षार, त्रिकटु, वच और हींग वायविडङ्ग, सैन्धव लवण, तगर, पाठा, अतिबला तथा कूट ये सभी प्रकार के कीड़ों के विष को विनष्ट कर देते हैं ।। १४ ।। मुलहठी, त्रिकटु, गुड तथा दुग्ध का योग पागल कुत्ते के विष को विनष्ट करता है ।। १५ ।। ओंसुभद्रायै नमः, ओं सुप्रभायै नमः, यह औषधियों को उखाड़ने का मन्त्र है । भगवान् ब्रह्माजी ने सुप्रभा देवी को आदेश दे रखा है कि जो मनुष्य विना विधि विधान के औषधियों को उखाड़ते हैं, उनके प्रभाव को तुम स्वयं ले लिया करो ।। १६।। इसलिए पहले औषधि को प्रणाम करके औषधि के चारों ओर मुट्ठी से जौ विखेर दे, फिर उपर्युक्त मन्त्र का दस बार जप करें और औषधि को नमस्कार करे और कहे- तुम ऊर्ध्वनेत्रा हो मैं तुम्हें उखाड़ता हूँ । इस प्रकार से औषधि को उखाड़ें और औषधि खाते समय- नमः पुरुष सिंहाय० इत्यादि मन्त्र को पढ़ें ।। १८ ।। मन्त्र का अर्थ है-पुरुषसिंह भगवान् गोपाल को बारम्बार नमस्कार है । भगवान् श्रीकृष्ण युद्ध में अपनी पराजय की बात स्वयं जानते हैं । इस सत्यवाम्य से यह औषधि मुझे सिद्धि प्रदान करे।। १९ ।। स्थावर विष के प्रयोग में औषधि खाते समय- नमो वैदुर्यमात्रे

तन्त्र रक्ष २ मां सर्व विषेभ्यो गौरि! गान्धारि! चाण्डालि ! मातङ्गिनी! स्वाहा हरिमाये ! । औषधादौ प्रयोक्तव्यो मन्त्रोऽयं स्थावरे विषे ॥ २० ॥ भुक्तमात्रे स्थितेज्वाले जनं शीताम्बुसेचितम् । पाययेत् सघृतं क्षौद्रं विरेचयेत् तदनन्तरम् ॥ २१ ॥

इत्यादिमहापुराण आग्नेये गोनसादिचिकित्सावर्णनं नामाष्टनवत्यधिकद्विशततमोऽध्यायः ॥ २९८ ॥

## नवनवत्यधिकद्विशततमोऽध्यायः

## बालग्रहहरबालतन्त्रम्

अग्निरुवाच— **बालतन्त्रं प्रवक्ष्यामि बालादिग्रहमर्दनम् । अथ जात दिने वत्सं ग्रही गृह्णाति पापिनी॥ १॥ गात्रोद्वेगो निराहारो लालाग्रीवाविवर्त्तनम्॥ तच्चेष्टितमिदं तत् स्यान् मातृणाञ्च बलिं हरेत् ॥ २ ॥ मत्स्यमांस सुराभक्ष्य गन्धस्त्रग्धूपदीपकैः । लिम्पेच्च धातकीलोध्र मञ्जिष्ठा तालचन्दनैः॥३॥ महिषाक्षेण धूपश्च द्विरात्रे भीषणी ग्रही । तच्चेष्टा कासनिश्वासो गात्रसङ्कोचनं मुहुः॥ ४॥ आजमूत्रैर्लिपेत् कृष्णासेव्यापामार्गचन्दनैः । गोशृङ्गदन्तकेशैश्च धूपयेत् पूर्ववद् बलिः ॥ ५॥ ग्रही त्रिरात्रे घण्टाली तच्चेष्टा क्रन्दनं मुहुः । जृम्भणं स्वनितं त्रासो गात्रोद्वेगमरोचनम् ॥ ६ ॥ केशराञ्जनगोहस्ति दन्तं साजपयो लिपेत् । नखराजीविल्वदलै धूपयेच्च बलिं हरेत् ॥ ७ ॥ ग्रही चतुर्थी काकोली गात्रोद्वेगप्ररोचनम् । फेनोद्गारो दिशो दृष्टिः कुल्माषैः सासवैर्बलिः ॥ ८ ॥ गजदन्ताहिनिर्मोकबाजिमूत्रप्रलेपनम् । सराजीनिम्बपत्रेण धूतकेशेन धूपयेत् ॥ ९ ॥ हंसाधिका पञ्चमी स्याज्जृम्भाश्वासोर्ध्वधारिणी।**

---

तन्त्र रक्ष-रक्ष मे सर्वविषेभ्यो गौरि ! गान्धारि ! चाण्डालि ! मातङ्गिनी ! स्वाहा हरिमाये !।। २० ।। विष का भक्षण कर लेने पर पहले वमन कराकर विषार्त मनुष्य को पहले शीतल जल से खूब स्नान करायें फिर उसे घी तथा मधु पिलाकर अन्त में विरेचन कराये ।। २१ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का गोनसादि चिकित्सा वर्णन नामक दो सौ अठानबेवाँ अध्याय सम्पूर्ण हुआ ॥ २९८ ॥**

**अग्निदेव ने कहा—** अब मैं बालादि ग्रहों को विनष्ट करने वाले बालतन्त्र का वर्णन करता हूँ । जिस दिन बच्चा उत्पन्न होता है, उस दिन उसे पापिनी नामक ग्रही, गृहीत कर लेती है।।१।। उस ग्रही से गृहीत बालक के शरीर में उद्वेग होता है, वह दूध नहीं पीता । लार टपकाता है फिर बार-बार अपनी गर्दन घुमाता है । यह सारी चेष्टा पापिनी ग्रही के कारण होती है । उसके निवारण के लिए मातृकाओं को बलि देना चाहिए ।। २ ।। फिर उस ग्रही के लिए मछली का मांस, मदिरा आदि भक्ष्य पदार्थ तथा चन्दन, माला, धूप एवं दीप निवेदित करे । बच्चे के शरीर में धातकी, लोध, मञ्जीठ, तलीसपत्र एवं चन्दन का लेप करें ।। ३ ।। गुग्गुल का धूप दें । जन्म की दूसरी रात्रि में बच्चे को भीषणी नामक ग्रही गृहीत करती है । ऐसा बालक खाँसी तथा श्वास से पीड़ित होता है । वह बार-बार अपने शरीर को सिकोड़ता है ।। ४ ।। ऐसे बालक के शरीर में बकरी के मूत्र में पिपली, अप्राभार्ग और चन्दन को पीसकर लेप करना चाहिए । गोशृङ्ग, गोदन्त तथा गोकेश की धूप दें एवं पूर्ववत् उस ग्रही को बलि प्रदान करे ।। ५ ।। जन्म के तीसरे दिन घाण्टाली नाम की ग्रही आक्रान्त करती है । उस ग्रही से गृहीत बालक बार-बार रोता है । जम्भाई लेता है, सिसकता है, डरता है गात्रोद्रेग और अरुचि युक्त होता है ।। ६ ।। ऐसे बालक को केसरञ्जन, गोदन्त तथा हस्तीदन्त को बकरी के दुग्ध में पीसकर लेप लगाना चाहिए । नख, राई तथा विल्वपत्र का धूप और पूर्वोक्त बलि देना चाहिए ।। ७ ।। चौथी ग्रही काकोली कही गयी है । इससे गृहीत बालक के शरीर में उद्वेग होता है । वह जोर-जोर से रोता है, मुँह से फेन निकालता

तथा । सर्वभूतदमनि च नवमी च मनोन्मनी ॥ २१ ॥ श्वेता रक्ता सिता पीता श्यामा वह्निनिभासिता। कृष्णारुणाश्चताः शक्तीर्ज्वालारूपाः स्मरेत् क्रमात् ॥ २२ ॥ अनन्तयोगपीठाय आवाह्याथ हृदब्जतः । स्फटिकाभं चतुर्बाहुं फलशूलधरं शिवम् ॥ २३ ॥ साभयं वरदं पञ्चवदनञ्च त्रिलोचनम् । पत्रेषु मूर्त्तयः पञ्च स्थाप्यास्तत्पुरुषादयः ॥ २४ ॥ पूर्वे तत्पुरुषः श्वेतो अघोरोऽष्टभुजोऽसितः । चतुर्बाहुमुखः पीतः सद्योजातश्च पश्चिमे ॥ २५ ॥ वामदेवः स्त्रीविलासी चतुर्वक्त्रभुजोऽरुणः । सौम्ये पञ्चास्य ईशाने ईशानः सर्वदः सितः ॥ २६ ॥ इष्टाङ्गानि यथान्यायमनन्तं सूक्ष्ममर्चयेत् । सिद्धेश्वरं त्वेकनेत्रं पूर्वादौ दिशि पूजयेत्॥ २७॥ एकरुद्रं त्रिनेत्रञ्च श्रीकण्ठञ्च शिखण्डिनम् । ऐशान्यादि विदिक्ष्वेते विद्येशाः कमलासनाः ॥ २८ ॥ श्वेतः पीतः सितो रक्तो धूम्रो रक्तोऽरुणः सितः । शूलाशनिशरेष्वासबाहवश्चतुराननाः॥ २९॥ उमा चण्डेशनन्दीशौ महाकालो गणेश्वरः । वृषो भृङ्गरिटिस्कन्दानुत्तरादौ प्रपूजयेत् ॥ ३०॥ कुलिशं शक्तिदण्डौ च खड्गपाशध्वजौ गदाम् । शूलं चक्रं यजेत् पद्मं पूर्वादौ देवमर्च्य च ॥ ३१ ॥ ततोऽधिवासितं शिष्यं पाययेद् गव्यपञ्चकम् । आचान्तं प्रोक्ष्य नेत्रान्तैर्नेत्रे नेत्रेण बन्धयेत् ॥ ३२ ॥ द्वारं प्रवेशयेच्छिष्यं मण्डपस्याथ दक्षिणे । सासनादि कुशासीनं तत्र संशोधयेद् गुरुः॥ ३३॥ आदितत्त्वानि संहृत्य परमार्थे लयः क्रमात् । पुनरुत्पादयेच्छिष्यं सृष्टिमार्गेण देशिकः॥ ३४॥ न्यासं शिष्ये ततः कृत्वा तंप्रदक्षिणमानयेत् । पश्चिमद्वारमानीय क्षेपयेत् कुसुमाञ्जलिम्॥ ३५॥ यस्मिन् पतन्ति पुष्पाणि तन्नामाद्यं विनिर्दिशेत्। पार्श्वे यागभुवः खाते कुण्डे सन्नाभिमेखले ॥ ३६ ॥शिवाग्निं जनयित्वेष्ट्वा पुनः शिष्येण चार्चयेत् । ध्यानेनात्मनिभं

---

कालविकारिणी, बलविकारिणी, बल प्रमथिनी, सर्वभूत दमनी तथा मनोन्मनी । ये शक्तियाँ ज्वाला स्वरूप हैं । इनके वर्ण क्रमशः- श्वेत, रक्त, सित, पीत, श्याम, अग्नि के समान, कृष्ण तथा अरुण हैं। इसी रूप से इन शक्तियों का चिन्तन क्रमशः करना चाहिए ।। २०-२२ ।। अनन्त योग पीठाय नमः इस मन्त्र से योगपीठ का पूजन करके हृदयकमल में जिनकी कान्ति स्फटिक मणि के समान श्वेत है, जिनकी चार भुजायें हैं, जो फल एवं शूल धारण करने वाले हैं, एवं जिनके हाथ अभय एवं वरद मुद्रा से सुशोभित हैं ।जिनके तीन नेत्र तथा पाँच मुख हैं ऐसे शिव का आवाहन करना चाहिए ।। २३ ।। इसके पश्चात् कमल के दलों में शिव की तत्पुरुष आदि पाँच मूर्तियों की स्थापना करनी चाहिए । (तत्पुरुष आदि के स्थापना के मन्त्र हैं- नं तत्पुरुषाय नमः (पूर्वे) मं अघोराय नमः (दक्षिणे) शिं सद्योजाताय नमः (पश्चिमे) वां वामदेवाय नमः (उत्तरे) यं ईशानाय नमः (ईशाने) तत्पुरुष का वर्ण श्वेत है, इनका स्थान पूर्व में है, अघोर का वर्ण श्याम है और उनकी आठ भुजायें हैं । इनका स्थान दक्षिण दिशा में है । सद्योजात की चार भुजाएँ और चार मुख हैं । इनका वर्ण पीत है और स्थान पश्चिम में है ।। २५ ।। वामदेव का विग्रह पार्वतीजी के साथ है । इनकी चार भुजाएँ और चार मुख हैं । ईशान के पाञ्चमुख हैं । वे श्वेत वर्ण के हैं । सब कुछ प्रदान करने वाले हैं तथा उनका स्थान ईशानकोण के दल में है ।। २६ ।। इसके पश्चात् इष्ट अंगों की यथोचित पूजा करे । फिर अनन्त, सूक्ष्म, सिद्धेश्वर तथा एकनेत्र का पूर्वादि दिशाओं में पूजन करना चाहिए ।। २७ ।। तदनन्तर ईशान आदि कोणों में कमल के आसन पर बैठे हुए त्रिनेत्र, श्रीकण्ठ तथा शिखण्डी की पूजा करनी चाहिए । ये चारो विद्येश हैं ।। २८ ।। इन सबों का वर्ण क्रमशः- श्वेत, पीत, सित, रक्त, धूम्र, रक्त, अरुण एवं सित है। इन सबों की चार भुजाएँ तथा चार मुख हैं । ये अपनी भुजाओं में त्रिशूल, वज्र, बाण एवं धनुष् धारण करते हैं ।। २९ ।। उसके पश्चात् उमा, चण्डीश, नन्दीश, महाकाल, गणेश्वर, वृष, भृंग, रिटि, स्कन्द तथा अनुत्तर की पूजा अच्छी तरह से करनी चाहिए ।। ३० ।। तदनंतर पूर्वादि दिशाओं में भगवान् शिव की पूजा करने के पश्चात् कुलिश, शक्ति, दण्ड, खड्ग, पाश, ध्वजा, गदा, शूल, चक्र तथा पद्म की पूजा करनी चाहिए ।। ३१ ।। उसके पश्चात् आचार्य अधिवासित शिष्य को पाञ्चगव्य पिलाकर आचमन करायें । फिर उसका प्रोक्षण करके उजले वस्त्र की पट्टी से नेत्र मन्त्र को पढ़ते हुए शिष्य के नेत्रों को बाँध दे ।। ३२ ।। उसके पश्चात् आचार्य दक्षिण द्वार से शिष्य को मण्डप में प्रवेश करायें । वहाँ आसन अथवा कुश पर बैठे हुए शिष्य का गुरु संशोधन करे ।। ३३ ।। इसके पश्चात् शिष्य के पहले के पाञ्च भौतिक तत्त्वों का संहार करके क्रमशः उसका परमात्मा में लय कराये । फिर ध्यान के द्वारा आचार्य शिष्य का सृष्टिमार्ग से उत्पादन करे।।३४।। पुनः उस शिष्य के दिव्य शरीर में न्यास करके उसको प्रदक्षिण क्रम से मण्डप के पश्चिम द्वार पर लाये वहाँ उससे आचार्य पुष्पाञ्जलि प्रदान कराये ।। ३५ ।। पुष्पाञ्जलि का पुष्प

शिष्यं संहृत्य प्रलयः क्रमात् ॥ ३७ ॥ पुनरुत्पाद्य तद्धस्तं दद्याद् दर्भांश्च मन्त्रितान्। पृथिव्यादीनि तत्त्वानि जुहुयाद्धृदयादिभिः ॥ ३८ ॥ एकैकस्य शतं हुत्वा व्योममूलेन होमयेत् । हुत्वा पूर्णाहुतिं कुर्य्यादस्त्रेणाष्टाहुतीर्हुनेत्॥ ३९॥ प्रायश्चित्तं विशुद्ध्यर्थं ततः शेषं समापयेत् । कुम्भं समन्त्रितं प्रार्च्य शिशुं पीठेऽभिषेचयेत् ॥ ४० ॥ शिष्ये तु समयं दत्त्वा स्वर्णाद्यैः स्वगुरुंयजेत् । दीक्षापञ्चाक्षरस्योक्ता विष्ण्वादेरेवमेव हि ॥ ४१॥

इत्यादिमहापुराण आग्नेये पञ्चाक्षरादिपूजामन्त्रकथनं नाम चतुरधिकद्वित्रिशततमोऽध्यायः ॥ ३०४ ॥

## पञ्चाधिकत्रिशततमोऽध्यायः

## पञ्चपञ्चाशद् विष्णुनामानि

अग्निरुवाच- जपन् वै पञ्चपञ्चाशद् विष्णुनामानि यो नरः । मन्त्रजप्यादिफलभाक् तीर्थेष्वर्चादिचाक्षयम् ॥ १ ॥ पुष्करे पुण्डरीकाक्षं गयायाञ्च गदाधरम् । राघवञ्चित्रकूटे तु प्रभासे दैत्यसूदनम् ॥ २ ॥ जयं जयन्त्यां तद्वच्च जयन्तं हस्तिनापुरे । वाराहं वर्द्धमाने च काश्मीरे चक्रपाणिनम्॥ ३॥ जनार्दनञ्च कुब्जाम्रे मथुरायाञ्च केशवम् । कुब्जाम्रके हृषीकेशं गङ्गाद्वारे जटाधरम् ॥ ४॥ शालग्रामे महायोगं हरिं गोवर्धनाचले। पिण्डारके चतुर्बाहुं शङ्खद्वारे च शङ्खिनम्॥ ५॥ वामनञ्च कुरुक्षेत्रे यमुनायां त्रिविक्रमम् । विश्वेश्वरं तथाशोणे कपिलं पूर्वसागरे ॥ ६॥ विष्णुं महोदधौ विद्याद् गङ्गासागरसङ्गमे । वनमालञ्च किष्किन्ध्यां देवं रैवतकं विदुः ॥ ७ ॥ काशीतटे महायोगं विरजायां रिपुञ्जयम् । विशाखयूपे

---

जिस देवता पर गिरे उस देवता का नाम आदि में रखकर शिष्य का आचार्य नया नाम रखे । यज्ञभूमि के बगल में बने नाभि तथा मेखला से युक्त कुण्ड में शिवाग्नि को प्रकट करके आचार्य स्वयं उसका पूजन करे फिर उसका शिष्य से भी पूजन कराये । फिर आचार्य ध्यान के द्वारा अपने ही समान शिष्य को भी प्रलय से संहार करके उसको सृष्टिक्रमसे पुनः उत्पन्न करके उसके हाथ में अभिमंत्रित कुश को प्रदान करे । फिर हृदयादि न्यास करके पृथिवी आदि तत्त्वों के लिए आहुति प्रदान करे ।। ३६-३८ ।। पृथिवी, जल, तेज एवं वायु के इनमें से प्रत्येक के लिए सौ-सौ आहुति देकर आकाश तत्त्व के लिए मूलमन्त्र (ओं नमः शिवाय) इस मंत्र से सौ आहुति दे । इसके पश्चात् आहुति देकर अस्त्र मन्त्र (फट्) का उच्चारण करके आठ आहुति दे ।। ३९।। फिर विशेष शुद्धि के लिए प्रायश्चित्त (होम या गोदान) करे । इसके पश्चात् शेष कार्य को पूरा करें । फिर अभिमन्त्रित कलश की पूजा करके शिष्य का पीठ पर अभिषेक करना चाहिए ।। ४०।। इसके पश्चात् आचार्य शिष्य को शिष्टाचार की शिक्षा दे । शिष्य भी सुवर्ण आदि के द्वारा गुरु की पूजा करे । इस तरह से मैंने आपको पञ्चाक्षर मन्त्र की दीक्षा विधान को बतलाया इसी तरह से विष्णु आदि की भी दीक्षा का विधान है ।। ४१ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का पञ्चाक्षरादि पूजामन्त्र का विधानवर्णन नामक तीन सौ चारवाँ अध्याय सम्पूर्ण हुआ ॥ ३०४ ॥**

**अग्निदेव ने कहा**— जो मनुष्य विष्णु के पचपन नामों का जप करता है, वह मन्त्रों के जप करने के फल का भागी होता है तथा तीर्थों में अर्चना करने का अक्षय फल प्राप्त करता है।।१।। पुष्कर में पुण्डरीकाक्ष, गया में गदाधर, चित्रकूट में राघव प्रभास में दैत्य सूदन, ।। २ ।। जयन्ती में जय, हस्तिनापुर में जयन्त, वर्द्धमान में वाराह, काश्मीर में चक्रपाषि ।। ३ ।। कुब्जाम्र में जनार्दन, मथुरा में केशवदेव, कुब्जाम्रक में हृषीकेश, गंगाद्वार में जटाधर ।। ४ ।। शालग्राम में महायोग, गोवर्धनाचल में श्रीहरि, पिण्डारक क्षेत्र में चतुर्भुज, शंखद्वार में शंखी ।। ५ ।। कुरुक्षेत्र में वामन, यमुना में त्रिविक्रम, शोण क्षेत्र में विश्वेश्वर, पूर्व समुद्र में कपिल ।। ६ ।। महासागर में विष्णु, गंगासागर में संगम में वनमाला तथा किष्किन्धा में रैवतक देव को बतलाया

ह्यजितं नेपाले लोकभावनम् ॥ ८ ॥ द्वारकायां विद्धिकृष्णं मन्दरे मधुसूदनम् !! लोकाकुले रिपुहरं शालग्रामे हरिं स्मरेत्॥ ९॥ पुरुषं पूरुषवटे विमले च जगत्प्रभुम् । अनन्तं सैन्धवारण्ये दण्डके शार्ङ्गधारिणम् ॥ १०॥ उत्पलावर्तके शौरिं नर्मदायां श्रियः पतिम् । दामोदरं रैवतके नन्दायां जलशायिनम् ॥ ११ ॥ गोपीश्वरञ्च सिन्ध्वब्धौ माहेन्द्रे चाच्युतं विदुः । सह्याद्रौ देवदेवेशं वैकुण्ठं मागधे वने ॥ १२ ॥ सर्वपापहरं विन्ध्ये औड्रे तु पुरुषोत्तमम् । आत्मानं हृदये विद्धि जपतां भुक्तिमुक्तिदम् ॥ १३ ॥ वटे वटे वैश्रवणं चत्वरे चत्वरे शिवम् । पर्वते पर्वते रामं सर्वत्र मधुसूदनम्॥१४॥ नरं भूमौ तथा व्योम्नि वसिष्ठे गरुडध्वजम् । वासुदेवञ्च सर्वत्र संस्मरन् भुक्तिमुक्तिभाक् ॥ १५ ॥ नामान्येतानि विष्णोश्च जप्त्वा सर्वमवाप्नुयात् । क्षेत्रेष्वेतेषु यत् श्राद्धं दानं जप्यञ्च तर्पणम् ॥ १६ ॥ तत् सर्वं कोटि गुणितं मृतो ब्रह्ममयो भवेत् । यः पठेत् शृणुयाद् वापि निर्मलः स्वर्गमाप्नुयात् ॥ १७॥

इत्यादिमहापुराण आग्नेये पञ्चपञ्चाशदविष्णुनामकथनं नाम पञ्चाधिकत्रिशततमोऽध्यायः ॥ ३०५ ॥

## षडधिकत्रिशततमोऽध्यायः

### नारसिंहादिमन्त्राः

अग्निरुवाच– **स्तम्भो विद्वेषणोच्चाट उत्सादो भ्रममारणे । व्याधिश्चेति स्मृतं क्षुद्रं तन्मोक्षो वक्ष्यते शृणु ॥ १ ॥ ओं नमो भगवते उन्मत्तरुद्राय भ्रम भ्रम भ्रामय भ्रामय अमुकं वित्रासय वित्रासय उद्भ्रामय उद्भ्रामय रुद्र रौद्रेण रूपेण हूं फट् ठ ठ । श्मशाने निशि जप्तेन त्रिलक्षं मधुना हुनेत्।**

---

गया है ।। ७ ।। काशीतट में महायोग, विरजा में रिपुञ्जय, विशाखयूप में अर्जित तन्य नेपाल में लोकभावन भगवान् को जानना चाहिए ।। ८ ।। द्वारका में श्रीकृष्ण, मन्दराचल में श्रीहरि का स्मरण करना चाहिए ।। ९ ।। पूरुषवट में पुरुष, विमलक्षेत्र में जगत्प्रभु को, सैन्धवारण्य में अनन्त को तथा दण्डकारण्य में शार्ङ्गधारी भगवान् को जानना चाहिए ।। १० ।। उत्पलावर्तक में शौरी, नर्मदा में श्रीपति, रैवतक क्षेत्र में दामोदर तथा नन्दाक्षेत्र में जलशायी भगवान् को जानें ।। ११ ।। सिन्धु सागर में गोपीश्वर को, माहेन्द्र क्षेत्र में अच्युत को सह्याद्रि पर देवदेवेश को तथा मागध वन में वैकुण्ठ भगवान् का स्मरण करें ।। १२ ।। विन्ध्य क्षेत्र में सर्वपापहर को, औड्र में पुरुषोत्तम भगवान् का स्मरण करें । अपने हृदय में आत्मा स्वस्प परमात्मा को जानें इनका जप करने वाला भोग तथा मोक्ष को प्राप्त करता है ।। १३ ।। प्रत्येक वट पर कुबेरात्मा भगवान् को प्रत्येक चत्वर (चौराहे) पर शिव को, प्रत्येक पर्वत पर राम को तथा सर्वत्र मधुसूदन को जानना चाहिए ।। १४ ।। पृथिवी तथा आकाश में नर को, वसिष्ठ तीर्थ में गरुडध्वज को तथा सर्वत्र वासुदेव को स्मरण करने वाला मनुष्य भोग तथा मोक्ष को प्राप्त करता है ।। १५ ।। भगवान् विष्णु के इन नामों का जप करके मनुष्य सब कुछ प्राप्त कर लेता है । इन क्षेत्रों में जो जप, दान, श्राद्ध तथा तर्पण किया जाता है, वह सब कुछ करोड़ गुना फल देता है तथा साधक मृत्यु के पश्चात् ब्रह्मस्वरूप हो जाता है ।। १६ ।। जो मनुष्य भगवान् के इन नामों को पढ़ता अथवा सुनता है, वह निष्पाप होकर स्वर्ग को प्राप्त करता है ।। १७ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का विष्णु के पचपन नाम वर्णन नाम तीन सौ पाचवाँ अध्याय सम्पूर्ण हुआ ॥ ३०५ ॥**

**अध्याय ३०६**

**अग्निदेव ने कहा**– मुने ! स्तम्भन, विद्वेषण, उच्चाटन, उत्सादन, भ्रामण, मारण एवं व्याधिकरण ये छह क्षुद्र कर्म हैं । इनसे मुक्ति पाने के उपायों को मैं बतला रहा हूँ आप सुनें ।।१।। ओं नमापे भगवते उन्मत्तरुद्राय, भ्रम-भ्रम, भ्रामय-भ्रामय, अमुकं वित्रासय-वित्रासय, उद्भ्रामय-उद्भ्रामय, रुद्र, रौद्रेण रूपेण, हूं फट् स्वाहा ।। श्मशान में जाकर इस मंत्र का रात में तीन लाख जप करें । इसके पश्चात् चिता की आग में धत्तूरे कीसमिधा का हवन करें । ऐसा करने से शत्रु सदा चक्कर में पड़ा रहता है । सुनेहरे गुरु से शत्रु की प्रतिमा बनाकर उक्त मन्त्र का जप करें ।

चिताग्नौ धूर्त्त समिद्भिर्भ्राम्यते सततं रिपुः ॥ २ ॥ हेमगैरिकया कृत्वा प्रतिमा हैमसूचिभिः । जप्त्वा विध्येच्चतत्कण्ठे हृदि वा म्रियतेरिपुः ॥ ३॥ खरबालचिताभस्म ब्रह्मदण्डी च मर्कटी । गृहे वा मूर्ध्नि तच्चूर्णं जप्तमुत्सादकृत् क्षिपेत्॥ ४॥ भृग्वाकाशौ सदीप्ताग्निर्भृगुर्वह्निश्च वर्म फट् । एवं सहस्त्रारे हूं फट् आचक्राय स्वाहा हृदयं विचक्राय शिरः । शिखाचक्रायाथ कवचं विचक्राय च नेत्रकम् ॥ ५ ॥ सुचक्रायास्त्रमुद्दिष्टं ज्वालाचक्राय पूर्ववत्। साङ्गं सुदर्शनं क्षुद्रग्रहहृत्सर्वसाधनम्॥ ६॥ मूर्द्धाक्षिमुखहृद्गुह्य पादे ह्यस्याक्षरान् न्यसेत् । चक्राब्जासनमग्न्याभं दंष्ट्रिणञ्च चतुर्भुजम् ॥ ७॥ शङ्खचक्रगदापद्मपाशाङ्कुशपाणिनम्। चापिनं पिङ्गकेशारक्तंव्याप्तत्रिविष्टपम् ॥ ८ ॥ नाभिस्तेनाग्निना विद्धा नश्यन्ते व्याधयो ग्रहाः । पीतचक्रं सदा रक्ता स्वराः श्याममवान्तरम् ॥ ९ ॥ नेमिः श्वेता वहिः कृष्णवर्णरेखा च पार्थिवी । मध्येतरैमरेवर्णानेवं चक्रद्वयं लिखेत्॥ १०॥ आदावानीय कुम्भोदं गोचरे सन्निधाय च । दत्त्वा सुदर्शनं तत्र याम्ये चक्रे हुनेत् क्रमात् ॥ ११ ॥ आज्यापामार्गसमिधो ह्यक्षतं तिलसर्षपौ । पायसं गव्यमाज्यञ्च सहस्राष्टकसंख्यया॥ १२॥ हुतशेषं क्षिपेत् कुम्भे प्रतिद्रव्यं विधानवित् । प्रस्थानेन कृतपिण्डं कुम्भे तस्मिन् निवेशयेत् ॥ १३ ॥ विष्णवादि सर्वं तत्रैव न्यसेत् तत्रैव दक्षिणे । नमो विष्णुजनेभ्यः सर्वशान्तिकरेभ्यः प्रतिगृह्णन्तु शान्तये नमः। दद्यादनेन मन्त्रेण हुतशेषाम्भसा बलिम्॥१४॥ फलके कल्पिते पात्रे कलशे क्षीरशाखिनः। दधिपूर्णे निवेश्यैव दिक्ष्वेवं होमयेद्द्विजैः॥१५॥ सदक्षिणमिदं होम द्वयं भूतादिनाशनम्। गव्याक्तिपत्रलिखितैर्निष्पर्णैः

---

इसके बाद उपर्युक्त मन्त्र से अभिमन्त्रित सोने की सूई से प्रतिमा के गले को अथवा हृदय में बिंधे । ऐसा करने से शत्रु की मृत्यु हो जाती है ।। ३ ।। गधे के बाल, चिता का भस्म, ब्रह्मदण्डी या तूत की लकड़ी तथा मर्करी (एक प्रकार का करंज) इन सबों को जलाकर भस्म बना लें । उस भस्म को उत्सादन करने वाला पुरुष अपने शत्रु के घर पर अथवा उसके मस्तक पर फेंक दें।।४।। भृगु (स) आकाश, (ह) दीप्त (दीर्घ आकार युक्त) तथा अग्नि (र) युक्त भृगु (स) और अग्नि (र) और वर्म (हुम्) फट् अर्थात् (सहस्रार हुं फट्) इस सुदर्शन मन्त्र का अंगन्यास इस प्रकार है- आचक्राय हुं स्वाहा हृदयाय नमः, विचक्राय स्वाहा शिरसे स्वाहा सुचक्राय स्वाहा स्वाहा नेत्राभ्यां वौषट्, ज्वालाचक्राय स्वाहा, अस्त्राय फट् ।। ये अंगन्यास पूर्ववत् कहे गये हैं ।। ५ ।। अङ्गन्यासपूर्वक जपा हुआ यह सुदर्शन मन्त्र क्षुद्रकर्मों और ग्रहबाधा को दूर करने वाला तथा सब कुछ प्रदान करने वाला है ।। ६ ।। इस सुदर्शन मन्त्र के छह अक्षरों का क्रमशः मूर्धा, नेत्र, मुख, हृदय, गुह्य तथा पैर में न्यास करना चाहिए । इसके पश्चात् ध्यान करना चाहिए कि चक्र स्वरूप भगवानृ विष्णु कमलासन पर विराजमान हैं । उनकी अंगकान्ति अग्नि के समान है । उसके मुख में दाढ़ें हैं और वे चार भुजाओं वाले होने के साथ-साथ आठ भुजाओं वाले हैं । वे शंख, चक्र, गदा, पद्म, पाश, अंकुश तथा धनुष् अपने हाथों में धारण किए हुए हैं । उनके केश पीले हैं और नेत्र लाल है । वे अपने अरोंसे त्रिलोक को व्याप्त किए हुए हैं ।। ८ ।। चक्र की नाभि उस अग्नि से व्याप्त है जिसके चिन्तन मात्र से व्याधियाँ तथा ग्रह विनष्ट हो जाते हैं । सम्पूर्ण चक्र पीतवर्ण का है । उसके अर सुन्दर और रक्त वर्ण के हैं । अरों को अवान्तर भाग श्याम वर्ण के हैं ।। ९ ।। चक्र की नेमि श्वेतवर्ण की है । उसमें बाहर से कृष्णवर्ण की पार्थिवी रेखा है । अरों से युक्त जो मध्यभाग है उसमें समस्त अकारादि वर्ण हैं । इस प्रकार के दो चक्र चिह्नों को अंकित करना चाहिए ।। १० ।। उत्तरवर्ती चक्र चिह्न पर अपने सन्निकट में ही जलपूर्ण कलश स्थापित करें । दक्षिणवर्ती चिह्न पर सुदर्शन की पूजा करके वहाँ क्रमशः घी, अपामार्ग की समिधा, अक्षत, तिल, सरसों, खीर और गोघृत इन सबों की अष्टोत्तर सहस्र आहुति देनी चाहिए।।१२।। विधान वेत्ता पुरुष हुतशेष द्रव्य को कलश में डालता जाय । उसके पश्चात् एक प्रस्थ (सेर) अन्न के बनाये हुए पिण्ड को उस कलशम` डालें ।। १३ ।। इसके पश्चात् विष्णु आदि देवों के लिए देश समस्त वस्तुओं को वहीं दक्षिण चक्रचिह्न पर रखें । इसके पश्चात् 'नमो विष्णुजनेभ्यः सर्वशान्तिकरेभ्यः ।' इस मन्त्र से बलि देकर कहें कि सब प्रकार की शान्ति करने वाले विष्णु भगवान् के जनों को नमस्कार है, आप सभी बलिग्रहण करें और मुझे शान्ति प्रदान करें । बलि हुतशेष जल से देनी चाहिए ।। १४ ।। फलक पर अथवा कलश में अथवा दूध वाले काष्ठ निर्मित दधिपूर्ण काष्ठ पात्र में रखकर ही बलि प्रत्येक दिशाओं में देनी चाहिए ।। १५ ।। यह हम ब्राह्मणों को दक्षिणा देकर उनसे ही करवाना चाहिए । इस प्रकार का दो बार होम

क्षुद्रमुद्धुतम् ॥ १६॥ दूर्वाभिरायुषे पद्मैः श्रियै पुत्रा उडुम्बरैः । गोसिद्ध्यै सर्पिषा गोष्ठे मेधायै सर्वशाखिना॥ १७॥ ओं क्ष्रौं नमो भगवते नारसिंहाय ज्वालामालिने दीप्तदंष्ट्रायाग्निनेत्राय सर्वरक्षोघ्नाय सर्वभूतविनाशाय सर्वज्वरविनाशाय दह दह पच पच रक्ष रक्ष हुं फट्। मन्त्रोऽयं नारसिंहस्य सकलाघनिवारणः । जप्यादिना हरेत् क्षुद्रं ग्रहमारी विषामयान् चूर्णमण्डूकवयसा। जलाग्निस्तम्भकृद् भवेत् ॥ १८ ॥

इत्यादिमहापुराण आग्नेये नारसिंहादिमन्त्रकथनं नाम षड़धिकत्रिशततमोऽध्यायः ॥ ३०६ ॥

## सप्ताधिकत्रिशततमोऽध्यायः

### त्रैलोक्यमोहनमन्त्राः

अग्निरुवाच– **वक्ष्ये मन्त्रं चतुर्वर्ग सिद्धौ त्रैलोक्यमोहनम् । ओं श्रीं ह्रीं हूं ओं नमः पुरुषोत्तम ! पुरुषोत्तमप्रतिरूप ! लक्ष्मीनिवास ! सकलजगत्क्षोभण ! सर्वस्त्रीहृदयदारण ! त्रिभुवनमदोन्मादकर ! सुरमनुजसुन्दरीजनमनांसि तापय तापय दीपय दीपय शोषय शोषय मारय मारय स्तम्भय स्तम्भय द्रावय द्रावय आकर्षय आकर्षय परमसुभग ! सर्वसौभाग्यकर ! कामप्रद ! अमुकं हन हन चक्रेण गदया खड्गेन सर्वबाणैर्भिन्द भिन्द पाशेन हट्ट हट्ट अङ्कुशेन ताड़य ताड़य त्वर त्वर किं तिष्ठसि यावत् तावत् समीहितं मे सिद्धं भवति हूं फट् नमः ॥ २ ॥ ओं पुरुषोत्तम ! त्रिभुवनमदोन्मादकर ! हूं फट् हृद्याय नमः। कर्षयमहाबल ! हूं फट् अस्त्राय त्रिभुवनेश्वरसर्वजनमनांसि हन हन दारय दारय मम**

---

करने से सभी भूतों का विनाश हो जाता है । दही लगे हुए पत्तों पर लिखित मन्त्राक्षरों द्वारा किया गया होम क्षुत्र रोगों का नाशक होता है ।। १६ ।। दुर्वा से होम करने से आयु की वृद्धि होती है, कमलसे होम करने से श्री की वृद्धि होती है, तथा गूलर के काष्ठ से हवन किया जाय तो पुत्र की प्राप्ति होती है । गोशाला में घी से होम करने से गायों की वृद्धि होती है । सभी प्रकार की समिधाओं से होम करने से मेघा की वृद्धि होती है ।। १७ ।। ओं क्ष्रौं नमो भगवते नारसिंहाय ज्वालामालिने दीप्तदंष्ट्राय अग्निनेत्राय, सर्वरक्षोघ्नाय, सर्वभूतविनाशाय, सर्वज्वरविनाशाय दह-दह, पच-पच, रक्ष्र-रक्ष, हुं फट् । यह नारसिंह भगवान् का मन्त्र है, सभी पापों का नाश करने वाला है । जप आदि करने से यह मन्त्र क्षुद्रकर्म, ग्रह, महामारी, विष तथा रोगों का विनाश कर देता है । यदि चूर्ण करके मण्डूकवयस्से हवन किया जाय तो इससे जल स्तम्भन और अग्नि स्तम्भन होता है ।। १९ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का नारसिंहादि मन्त्र वर्णन नामक तीन सौ छठा अध्याय सम्पूर्ण हुआ ॥ ३०६ ॥**

**अग्निदेव ने कहा–** अब मैं चतुर्वर्ग की सिद्धि प्रदान करने वाले त्रैलोक्य मोहन मन्त्र का वर्णन करता हूँ । 'ओं श्रीं ह्रीं हूँ ओं नमः पुरुषोत्तम ! पुरुषोत्तम ! अप्रतिरूप ! लक्ष्मीनिवास! सकल जगत् क्षोभण ! सर्वस्त्रीहृदयदारण । त्रिभुवन्मदोन्मादकर ! सुरमनुजसुन्दरीजनमनांसि तापय-तापय, दीपय-दीपय, शोषय-षोषय, मारय-मारय, स्तम्भय स्तम्भय, द्रावण-द्रावण, आकर्षय-आकर्षय, परमसुभग ! सर्वसौभाग्यकर ! कामप्रद ! अमुकं हन-हन, चक्रेण, गदया, खड्गेन, सर्वबाणैर्भिन्द-भिन्द, पाशेन कट्ट-कट्ट, अंकुशेन ताडय-ताडय, त्वर-त्वर, किं तिष्ठसि यावत् तावत, समीहितं मे सिद्धं भवति, हुँ फट् नमः ।' इस मन्त्र का अर्थ है कि- ओं श्रीं ह्रीं हूं सच्चिदानन्दस्वरूप, पुरुषोत्तम ! पुरुषोत्तम, अपने सदृश से रहित है, हे लक्ष्मी निवास ! सम्पूर्ण जगत् को क्षुब्ध कर देने में समर्थ, सभी स्त्रियों के हृदय को विदीर्ण करने में समर्थ, त्रिभुवन के मद को उन्मत्त करने वाले, देवताओं तथा मनुष्यों की सुन्दरियों के मन को संतप्त करें, सन्तप्त करे ।दीप्त करें दीप्त करें । शोषित करें शोषित करें । मारें-मारें । स्तम्भित करें-स्तम्भित करें । द्रावित करें-द्रावित करें । आकर्षित करें-आकर्षित करें । परमसौभाग्य सम्पन्न सभी प्रकार के सौभाग्य को आप

वशमानय आनय मम वशमानय हूं फट्। नेत्राय त्रैलोक्यमोहन ! हृषीकेशाप्रतिरूप ! सर्वस्त्रीहृदयाकर्षण ! आगच्छ आगच्छ नमः ॥ ३ ॥ सङ्गाक्षिण्यायकेन न्यासं मूलवदीरितम् । इष्ट्वा सञ्जप्य पञ्चाशत्सहस्रमभिषिच्य च । कुण्डेऽग्नौ दैविके वह्नौ चरुं कृत्वा शतं हुनेत्॥४॥ पृथग् दधि घृतं क्षीरं चरुं साज्यं पयः शृतम् । द्वादशाहुतिमूलेन सहस्रञ्चाक्षतांस्तिलान् ॥ ५ ॥ यवं मधुत्रयं पुष्पं फलं सदधि मिच्छतम् । हुत्वा पूर्णाहुतिं शिष्टं प्राशयेत् सघृतं चरुम् ॥ ६ ॥ सम्भोज्य विप्रानाचार्य्यं तोषयेत् सिध्यते मनुः । स्नात्वा यथावदाचम्य वाग्यतो यागमन्दिरम् ॥ ७॥ गत्वा पद्मासनं बद्ध्वा शोधयेद् विधिना वपुः । रक्षोघ्न विघ्नकृद् दिक्षु न्यसेदादौ सुदर्शनम् ॥ ८ ॥ पञ्चवीजं नाभिमध्यस्थं धूम्रं चण्डानिलात्मकम् । अशेषं कल्मषं देहाद् विश्लेषयदनुस्मरेत् ॥ ९॥ र वीजं हृदयाब्जस्थं स्मृत्वा ज्वालाभिरादहेत् । ऊर्ध्वाधस्तिर्य्यगाभिस्तु मूर्ध्नि संप्लावयेद् वपुः॥१०॥ ध्यात्वामृतैर्वहिश्चान्तःसुषुम्णामार्गगामिभिः ।एवं शुद्धवपुः प्राणानायम्य मनुना त्रिधा॥ ११॥ विन्यसेन्न्यस्तहस्तान्तः शक्तिं मस्तकवक्त्रयोः। गुह्ये गले दिक्षु हृदि कुक्षौ देहे च सर्वतः ॥ १२ ॥ आवाह्य ब्रह्मरन्ध्रेण हृत्पद्मे सूर्य्यमण्डलात् । तारेण सम्परात्मानं स्मरेत् तं सर्वलक्षणम् ॥ १३॥ त्रैलोक्यमोहनाय विद्महे स्मराय धीमहि तन्नो विष्णुः प्रचोदयात् ॥ १४ ॥ आत्मार्चनात् क्रतुद्रव्यं प्रोक्षयेच्छुद्धपात्रकम् । कृत्वात्मपूजां विधिना

प्रदान करने वाले हैं, सभी कामनाओं को पूर्ण करने वाले हैं । अमुक को मारिये-मारिये । चक्र, गदा, खड्ग तथा सभी बाणों से भेदन करें- भेदन करें । पाश से आवृत्त करें आवृत्त करें । अंकुश से मारें-मारें । शीघ्रता करें, शीघ्रता करें । जब तक मेरे अभिलषित अर्थ की सिद्धि नहीं हो जाती है तब तक आप क्यों रुकते हैं ? हुं फट् नमः ।। २ ।। इस मन्त्र का न्यास इस प्रकार है । ओं पुरुषोत्तम ! त्रिभुवनमदोन्मादकर हुं फट् हृदयाय नमः । सुरमनुजसुन्दरी मनांसि तापय तापय शिरसे स्वाहा । दीपय-दीपय शोषय-शोषय, मारय-मारय, स्तम्भय-स्तम्भय, द्रावय-द्रावय कवचाय हुम् । आकर्षय-आकर्षय महाबल हुँ फट् नेत्रत्रयाय वौषट् । त्रिभुवनेश्वर सर्वजनमनामंसि हन-हन, दारय ओं मम वशमानय हुं फट्, अस्त्राय फट् । त्रैलोक्य मोहन हृषीकेशा प्रतिरूप सर्वस्त्री हृदयाकर्षण आगच्छ-आगच्छ नमः । इति सर्वाङ्गे ।। ३ ।। इस तरह से मन्त्र के साथ अङ्गन्यास तथा व्यापक न्यास बतलाया गया । इस प्रकार से पूजन करके पच्चास हजार मूल मन्त्र का जप करके अभिषेक करना चाहिए ।। ४ ।। कुण्ड में दैव अग्नि को प्रकट करके इस मन्त्र से एक सौ आहुति देनी चाहिए । अलग से दधि, घी, दूध, चरु, एवं घृत मिश्रित गर्म दूध से अलग-अलग बारह-बारह आहुति मूल मन्त्र से देनी चाहिए । फिर अक्षत तिल, यव, त्रिमधु, पुष्प, फल तथा दधि से एक हजार आहुति कल्याणकामियों को देनी चाहिए । पुनः पूर्णाहुति देकर घी के साथ अवशिष्ट चरु का प्राशन करें । ब्राह्मणों को अच्छी तरह से भोजन कराकर आचार्य को सन्तुष्ट करना चाहिए । ऐसा करने से ही मन्त्र सिद्ध होता है । इसके पश्चात् साधक, स्नान करके विधिवत् स्नान करे और मौन होकर यज्ञशाला में प्रवेश करे । वहाँ पर पद्मासन से बैठकर विधिपूर्वक अपने शरीर का संशोधन करे। सर्वप्रथम दिशाओं में राक्षसों तथा विघ्नों का विनाश करने वाले सुदर्शन मन्त्र का न्यास करना चाहिए । इसके पश्चात् ऐसा ध्यान करे कि पंचक्लेशों के बीज स्वरूप, नाभि के मध्य में रहने वाला, धूम्र वर्ण वाले तथा चण्डवायु स्वरूप सम्पूर्ण पापों को मेरे शरीर से अलग कर रहा है ।। ९ ।। इसके पश्चात् हृदयकमल में रहने वाले रं बीज का स्मरण करना चाहिए । फिर भावना करनी चाहिए कि शरीर के ऊपर नीचे तथा बगल में फैली हुई अग्नि में पाप पुञ्ज को जलाकर भस्म कर दें । फिर मूर्धा (ब्रह्मरन्ध्र) में अमृत का चिन्तन करके, सुषुम्णा नाड़ी के मार्ग से आती हुई अमृत की धारा से अपने शरीर को भीतर एवं बाहर से आप्लावित कर दे । इस प्रकार से शुद्ध शरीर वाला होकर मूल मन्त्र से तीन बार प्राणायाम करे ।। १०-११ ।। इसके पश्चात् मस्तक, मुख, गुह्यभाग, गला, दिशाओं, हृदय, कुक्षि तथा सम्पूर्ण शरीर पर हाथ रखकर शक्ति का न्यास करना चाहिए ।। १२ ।। इसके पश्चात् सम्परात्मा का ध्यान करके उन्हें सूर्यमण्डल से लाकर हृदय कमल में प्रतिष्ठित करे । ये परात्मा समस्त शुभ लक्षणों से युक्त है । ओम् का उच्चारण करते हुए परात्मा का स्मरण करना चाहिए ।। १३ ।। त्रैलोकय मोहनाय विद्महे स्मराय धीमहि, तन्नोविष्णुः प्रचोदयात् ।' यह परात्मगायत्री है ।। १४ ।। परात्मा की अर्चना करने के पश्चात् यज्ञ सम्बन्धी द्रव्यों तथा शुद्ध पात्र का प्रोक्षण करना चाहिए । विधिपूर्वक आत्मपूजा करके वेदी पर उनकी अर्चना करनी चाहिए ।। १५ ।। कूर्म आदि के रूप में

स्थण्डिले तं समर्चयेत् ॥ १५ ॥ कर्मादिकल्पिते पीठे पद्मस्थं गरुड़ोपरि । सर्वाङ्गसुन्दरं प्राप्त वयोलावण्ययौवनम् ॥ १६ ॥ मदाघूर्णितताम्राक्षमुदारं स्मरविह्वलम् । दिव्यमाल्याम्बरलेप भूषितं सस्मिताननम् ॥ १७ ॥ विष्णुं नानाविधानेक परिवारपरिच्छदम् । लोकानुग्रहणं सौम्यं सहस्त्रादित्यतेजसम्॥१८॥ पञ्चावाणधरं प्राप्तकामैक्षं द्विचतुर्भुजम् । देवस्त्रीभिर्वृतं देवी मुखासक्तेक्षणं जपेत् ॥ १९ ॥ चक्रं शङ्खं धनुः खड्गं गदां मुसलमङ्कुशम् । पाशञ्च विभ्रतं चार्चेदावाहादि विसर्गतः ॥ २० ॥ श्रियं वामोरुजङ्घास्थां शिलष्यन्तं पाणिना पतिम् । साब्जचामरकरां पीनां श्रीवत्सकौस्तुभान्वितम् ॥ २१ ॥ मालिनं पीतवस्त्रञ्च चक्राद्याढ्यं हरिं यजेत् । ओंसुदर्शन ! महाचक्रराज ! दुष्टभयङ्कर दुष्टभयङ्कर छिन्द छिन्द विदारय विदारय परममन्त्रान् ग्रस ग्रस भक्षय भक्षय भूतानि त्रासय त्रासय हूं फट् ओं जलचराय हुं फट् । ओं महत् खड्गतीक्ष्ण ! छिन्द हुं फट् स्वाहा खड्गाय नमः । शार्ङ्गाय सशराय हूं फट् । भूतग्रामाय विद्महे चतुर्विधाय धीमहि तन्नो ब्रह्म प्रचोदयात्। संवर्त्तक! श्वसन् ! पोथय पोथय हूं फट् स्वाहा । पाश ! बन्ध २ आकर्षय आकर्षय हूं फट् । अङ्कुशेन कट्ट हुं फट् ॥ २२ ॥ क्रमाद् भुजेषु मन्त्रैः स्वैरेभिरस्त्राणि पूजयेत्॥२३॥ ओं पक्षिराजाय हूं फट् । तार्क्ष्यं यजेत् कर्णिकायामङ्गदेवान् यथाविधि । शक्तिरिन्द्रादि यन्त्रेषु तार्क्ष्याद्या धृतचामराः ॥ २४ ॥ शक्तयोऽन्ते प्रयोज्यादौ सुरेशाद्याश्च दण्डिना । पीते लक्ष्मीसरस्वत्यौ रतिप्रीतिजयाः सिताः ॥ २५ ॥ कीर्त्तिकान्त्यौ सिते श्यामे तुष्टिपुष्ट्यौ स्मरोदिते । लोकेशान्तं यजेद् देवं विष्णुमिष्टार्थसिद्धये ॥ २६ ॥ ध्यायेन् मन्त्रं जपित्वैनं जुहुयात् त्वभिषेचयेत् । ओं श्रीं क्रीं ह्रीं हूं त्रैलोक्यमोहनाय विष्णवे नमः । एतत्पूजादिना सर्वान् कामानाप्नोति पूर्ववत् ॥ २७ ॥ तोयैःसम्मोहनी पुष्पैर्नित्यं तेन च तर्पयेत्! । ब्रह्मा सशक्रश्रीदण्डी बीजं

---

कल्पित पीठ पर कमल एवं गरुड के ऊपर विराजमान त्रैलोक्य मोहन भगवान् विष्णु सर्वाङ्ग सुन्दर हैं, और अवस्था के अनुरूप सौन्दर्य एवं यौवन से सम्पन्न हैं ।। १६ ।। उनकी लाल-लाल आँखें मद से घूर्णित हो रही हैं, वे परम उदार हैं और काम से विह्वल हैं । वे दिव्य माला, वस्त्र तथा लेप से समलंकृत हैं । मुख पर मुसुकानि की शोभा झलक रही है ।। १७ ।। उनके परिवार एवं परिकर अनेक हैं । वे लोकों पर अनुग्रह करने वाले हैं । सौम्य स्वभाव के हैं । उनमें हजारों आदित्य का तेज विद्यमान है ।। १८ ।। वे पाँच बाणों को धारण करते हैं । उनकी समस्त इन्द्रियाँ पूर्णकाम हैं । उनकी दो और चार भुजाएँ हैं । उनको देवताओं की स्त्रियाँ घेरे हुई हैं और उनकी दृष्टि श्रीलक्ष्मीजी के मुख पर लगी हुई है । इस प्रकार के भगवान् का स्मरण करना चाहिए ।। १९ ।। श्रीभगवान् चक्र, शंख, धनुष्, खड्ग, गदा, मुसल, अंकुश तथा पाश को धारण किए हुए हैं । इस प्रकार के त्रैलोक्यमोहन श्रीभगवान् का आवाहन से लेकर विसर्जन पर्यन्त पूजा करना चाहिए ।। २० ।। ध्यान करना चाहिए कि श्रीभगवान् के जंघे तथा उरुभाग पर श्रीदेवी जी बैठी हुई हैं । वे अपने हाथ से श्रीभगवान् का आलिंगन कर रही हैं । वे अपने हाथ में कमल तथा चमर धारण किए हुयी हैं । उनका शरीर मांसल है । श्रीवत्सचिह्न तथा कौस्तुभमणि से समलंकृत है ।। २१ ।। श्रीभगवान् के गले में माला है । उनका वस्त्र पीतवर्ण का है तथा चक्र धारण किए हुए हैं । इस प्रकार के श्रीहरि का पूजन करना चाहिए ।। २१ ।। इसके बाद निम्नांकित मंत्र से चक्रराज सुदर्शन का पूजन करना चाहिए- 'ओं सुदर्शन ! महाचक्रराज दह-दह सर्वदुष्टभयं कुरु-कुरु, छिन्द-छिन्द, विदारय-विदारय, परममन्त्रान् ग्रस-ग्रस, भक्षय-भक्षय, भूतानि त्रासय-त्रासय, हुं फट् स्वाहा । ओं महानलचराय हुं फट् स्वाहा, पाञ्चजन्यानमः इस मंत्र से पाञ्च जन्य शंख की पूजा करनी चाहिए । ओं महाखड्गतीक्ष्ण ! छिन्द हूँ फट् स्वाहा, खड्गाय नमः, इस मन्त्र से नन्दक खड्ग की पूजा करनी चाहिए । ओं शार्ङ्गाय शराय हुं फट् इस मन्त्र से धनुष् एवं बाण की पूजा करनी चाहिए । ओं भूत ग्रामाय विद्महे, चतुर्विधाय धीमहि, तन्नो ब्रह्म प्रचोदयात् यह चतुर्विध भूत ग्राम गायत्री है । इससे गदा का पूजन करना चाहिए ।) संवर्तक मुशल ! पोथय-पोथय हुं फट् स्वाहा । इस मन्त्र से मुशल की पूजा करनी चाहिए । पाश बन्ध-बन्ध आकर्षय-आकर्षय हुं फट् । इस मन्त्र से पाश का पूजन करना चाहिए । अंकुश फट् हुं

त्रैलोक्यमोहनम् ॥ २८ ॥ जप्वा त्रिलक्षं हुत्वा च लक्षं विल्वैश्च साज्यकैः । तण्डुलैः फलगन्धाद्यैःदूर्वाभिस्त्वायुराप्नुयात्॥२९॥ तयाभिषेकहोमादि क्रियातुष्टो ह्यभीष्टदः । ओं नमो भगवते वराहाय भुर्भुवः स्वःपतये भूपतित्वं मे देहि दापय स्वाहा । पञ्चाङ्गं नित्यमयुतं जप्वायूराज्यमाप्नुयात्॥३०॥

इत्यादिमहापुराण आग्नेये त्रैलोक्यमोहनमन्त्रवर्णनं नाम सप्ताधिकत्रिशततमोऽध्यायः ॥ ३०७ ॥

## अष्टाधिकत्रिशततमोऽध्यायः

## त्रैलोक्यमोहनीलक्ष्म्यादिपूजा

अग्निरुवाच– **वान्त सवह्निर्वामाक्षि दण्डी श्रीः सर्वसिद्धिदा । महाश्रिये महासिद्धे ! महाविद्युत्प्रभे ! नमः ॥ १ ॥ श्रियै देवि ! विजये नमः! गौरि महाबले बन्ध बन्ध नमः । महाकाये ! पद्महस्ते ! हुं फट् श्रियै नमः । श्रीयै फट् श्रीं नमः । श्रीयै प्रसीद ! नमः । स्वाहा श्रींफट् ॥ अस्याङ्गानि नवोक्तानि तेष्वेकञ्च समाश्रयेत् । त्रिलक्षमेकलक्षं वा जप्वाक्षाब्जैश्च भूतिदः ॥ ३ ॥ श्रीगेहे विष्णुगेहे वा श्रियं पूज्य धनं लभेत् । आज्याक्तैस्तण्डुलैर्लक्षं**

---

फट् । इस मन्त्र से अंकुश की पूजा करनी चाहिए ।। २५ ।। श्रीभगवान् की भुजाओं में विद्यमान अस्त्रों की इन्हीं मन्त्रों से पूजा करनी चाहिए ।। २३ ।। ओं पक्षिराजाय हुं फट् । इस मन्त्र से पक्षिराज गरुड़ की पूजा करनी चाहिए । इसके पश्चात् कमल की कर्णिका में अङ्गदेवताओं की विधिपूर्वक पूजा करनी चाहिए । पूर्वादि दलों में लक्ष्मी आदि शक्तियों की तथा चामरधारी ताक्ष्र्य आदि की पूजा करनी चाहिए ।। २४ ।। पहले दण्डी के साथ इन्द्र आदि की पूजा करके अन्त में शक्तियों की पूजा करनी चाहिए । लक्ष्मी तथा सरस्वती की अङ्गकान्ति पीली हैं, रति-प्रीति तथा जया नामक शक्तियों की अंगकान्ति श्वेत है ।। २५ ।। कीर्ति और कान्ति की भी अंगकान्ति श्वेत है एवं तुष्टि तथा पुष्टि की अंगकान्ति श्याम है । इनमें स्मरणभाव हमेशा उदित रहता है । लोकेश पर्यन्त (ब्रह्माजी तथा दिक्पालों पर्यन्त) की पूजा करके अपने अभीष्ट अर्थ की सिद्धि के लिए भगवान् विष्णु की पूजा करनी चाहिए ।। २६ ।। ओं श्रीं क्रीं ह्रीं हूँ त्रैलोक्यमोहनाय विष्णवे नमः । इस मन्त्र से ध्यान एवं जपपूर्वक श्रीभगवान् विष्णु की पूजा करनी चाहिए । इस मन्त्र से पूजा आदि करके साधक पहले के ही समान अपनी सम्पूर्ण कामनाओं को पूर्ण कर लेता है ।। २७ ।। जल तथा सम्मोहनी वृक्ष के पुष्प से उक्त मन्त्र से नित्य तर्पण करना चाहिए । ब्रह्मा, इन्द्र, श्रीदेवी, दण्डी, बीजमन्त्र तथा त्रैलोक्य मोहन मन्त्र का तीन लाख जप करके तथा घी, बिल्व, चावल, फल, चन्दन आदि तथा दूर्वा से एक लाख होम करके मनुष्य अपनी लम्बी आयु को प्राप्त करता है ।। २९ ।। अभिषेक तथा होम आदि से प्रसन्न होकर भगवान् विष्णु साधक को अभीष्ट फल प्रदान करते हैं । 'ओं नमो भगवते वराहाय भुर्भुवः स्वः पतये भूपतित्वं मे देहि दापय स्वाहा ।' इसका पञ्चाङ्ग न्यास पूर्वक प्रतिदिन बारह हजार जप करने वाला मनुष्य दीर्घ आयु तथा राज्य प्राप्त करता है ।। ३० ।। इसका पञ्चाङ्ग न्यास है- ओं नमो हृदयाय नमः पतये कवचाय हुम् । भूपतित्वं मे देहि दापय स्वाहा । अस्त्राय फट् ।)

**इस प्रकार आदि महापुराण अग्निपुराण का त्रैलोक्यमोहन मन्त्र वर्णन नामक, तीन सौ सातवाँ अध्याय सम्पूर्ण हुआ ॥ ३०७ ॥**

**अग्निदेव ने कहा**– वान्त (श) वह्नि (र) वामाक्षि (ई) तथा दण्डी (अनुस्वार) इन सबों के मेल से श्रीं बीज मन्त्र बनता है । यह समस्त सिद्धियों को प्रदान करने वाला साक्षात् श्री स्वरूप है । इस प्रकार से इस मन्त्र का अंगन्यास करना चाहिए- 'महाश्रिये, महासिद्धे महाविद्युत्प्रभे स्वाहा, हृदयाय नमः, श्रियै देवि विजये स्वाहा, शिरसे स्वाहा, गौरि महाबले बन्ध-बन्ध स्वाहा। शिखायै वषट्। धृतिः स्वाहा कवचाय हुम् । महाकाये, पद्महस्ते हुं फट् अस्त्राय फट् । अथवा- श्रियै स्वाहा हृदयाय नमः श्रीं फट् शिरसे स्वाहा । श्रीं नमः शिखायै वषट् श्रियै प्रसीद नमः कवचाय हुम्। श्रीं फट् स्वाहा अस्त्राय फट् ।। २ ।। इस तरह इस मन्त्र शास्त्र के नव प्रकार से अंगन्यास बतलाये गये हैं । उनमें से किसी एक को अपनाना चाहिए । पद्माक्ष की माला से इस मंत्र का तीन

जुहुयात् खादिरानले ॥ ४ ॥ राजा वश्यो भवेद् वृद्धिः श्रीश्च स्यादुत्तरोत्तरम् । सर्षपाम्भोऽभिषेकेण नश्यन्ते सकला ग्रहाः ॥ ५ ॥ विल्वलक्षहुतालक्ष्मीर्वित्तवृद्धिश्च जायते । शक्रवेश्म चतुर्द्वारं हृदये चिन्तयेदथ ॥ ६ ॥ बलाकीं वामनां श्यामां श्वेतपंकजधारिणिम् । ऊर्ध्वबाहुद्वयं ध्यायेत् क्रीड़न्तीं द्वारि पूर्ववत् ॥ ७ ॥ ऊर्ध्वीकृतेन हस्तेन रक्तपङ्कजधारिणीम् । श्वेताङ्गीं दक्षिणे द्वारि चिन्तयेद् वनमालिनीम् ॥ ८॥ हरितां दोर्द्वयेनोर्ध्वमुद्वहन्तीं सिताम्बुजम् । ध्यायेद् विभीषिकां नाम श्रीदूतीं द्वारि पश्चिमे ॥ ९ ॥ शाङ्करीमुत्तरे द्वारि तन्मध्येऽष्टदलपङ्कजम् । वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ॥ १० ॥ ध्येयास्ते पद्मपत्रेषु शङ्खचक्रगदाधराः । अञ्जनक्षीरकाश्मीर हेमाभास्ते सुवाससः ॥ ११ ॥ आग्नेयादिषु पत्रेषु गुग्गुलुश्च कुरुण्टकः । दमकः सलिलश्चेति हस्तिनो रजतप्रभाः ॥ १२ ॥ हेमकुम्भधराश्चैते कर्णिकायां श्रियं स्मरेत् । चतुर्भुजां सुवर्णाभां सपद्मोर्ध्व भुजद्वयाम् ॥ १३ ॥ दक्षिणाभयहस्ताभ्यां वामहस्तवरप्रदाम् । श्वेतगन्धांशुकामेक रौप्यमालास्त्रधारिणीम् ॥ १४॥ ध्यात्वा सपरिवारां तामभ्यर्च्य सकलं लभेत् । द्रोणाब्जपुष्पश्रीवृक्षपर्णं मूर्ध्नि न धारयेत् ॥ १५ ॥ लवणामलकं वर्ज्यं नागादित्यतिथौ क्रमात् । पायसाशी जपेत् सूक्तं श्रियस्तेनाभिषेचयेत् ॥ १६ ॥ आवाहादिविसर्गान्तां मूर्ध्नि ध्यात्वार्चयेत् श्रियम् । विल्वाज्याब्जपायसेन पृथग् योगः श्रियै भवेत् ॥ १७ ॥ विषँ हिमज्जा कालाग्नि रत्रि निष्ठानि स्वाहा । ओं ह्रीं महामहिषमर्दिनि ! स्वाहा। मूलमन्त्रं महिषसिंहके नमः । महिषशत्रुं भ्रामय भ्रामय हूं फट् स्वाहा। महिषं भीषय भीषय हूं फट् महिषं हन हन देवि ! हूं फट् महिषनिसूदनि ! हुं फट् ॥ १८ ॥ दुर्गाहृदयमित्युक्तं साङ्गं सर्वार्थसाधकम् ॥ १९ ॥ यजेद्

---

लाख अथवा एक लाख जप करने से ऐश्वर्य की प्राप्ति होती है ।। ३ ।। लक्ष्मीजी के मन्दिर में अथवा श्रीभगवान् के मन्दिर में उनका पूजन करके मानव धन की प्राप्ति करता है । खैर की लकड़ी की आग में घृत मिश्रित चावल का एक लाख हवन करना चाहिए ।। ४ ।। ऐसा करने से राजा वश में हो जाता है और उत्तरोत्तर लक्ष्मी की वृद्धि होती है । सरसों के जल से अभिषेक करने से सभी ग्रहों का नाश हो जाता है ।। ५ ।। विल्वफल की एक लाख आहुति इस मंत्र से देने से लक्ष्मी की वृद्धि होती है तथा धन की वृद्धि होती है । साधक को चाहिए कि वह अपने हृदय में शक्रवेश्म की कल्पना करे । उसके चार द्वार हों ।। ६ ।। उसके पूर्वद्वार पर क्रीड़ा में तत्पर, अपनी दोनों भुजाओं को ऊपर उठाये हुयी श्यामवर्ण तथा वामन कद की वलाकी देवी का ध्यान करे जो अपने दोनों हाथ में श्वेत कमल धारण किये हुयी हैं ।। ७ ।। दक्षिण द्वार पर वनमालिनी का ध्यान करना चाहिए जो अपने ऊपर उठाये हुए एक हाथ में लाल कमल धारण करती हैं । उनकी अङ्गकान्ति श्वेत वर्ण की है ।। ८ ।। पश्चिम द्वार पर विभीषिका नाम की श्रीदूती का ध्यान करना चाहिये । उनकी अंगकान्ति हरित वर्ण की है । वे अपने दोनों हाथों को ऊपर उठाये हुयी हैं और श्वेतकमल धारण किए हुयी हैं ।। ९ ।। उत्तर द्वार शाङ्करी देवी का ध्यान करना चाहिए । इन्द्र वेश्म के बीच में अष्टदल कमल विद्यमान है । उस कमल के दलों में शंख, चक्र एवं गदा धारण करने वाले वासुदेव, संकर्षण, प्रद्युम्न एवं अनिरुद्ध का ध्यान करना चाहिए । वे सब के सब सुन्दर वस्त्र धारण करने वाले हैं । उनकी अंग कान्ति क्रमशः अञ्जन, दुग्ध, केसर तथा सुवर्ण के समान है ।। १०-११ ।। पद्म के आग्नेय कोणों में गुग्गुल, कुरण्टक, दमक तथा सलिल नामक गजों का चिन्तन करें । वे सब के सब चाँदी के समान सफेद वर्ण के हैं । ये सब के सब सुवर्ण कलश को धारण किये हुए और कर्णिका में श्रीदेवी का ध्यान करना चाहिए । इनकी अंग कान्ति सुवर्ण के समान है । इनकी चार भुजायें हैं । अपने ऊपर की दो भुजाओं में ये कमल धारण किए हुयी हैं ।। १३ ।। इनके दाहिने हाथ में अभय मुद्रा है तथा बायें हाथ में वरद मुद्रा है । वे श्वेत एवं सुगन्धित वस्त्र धारण करती हैं । अपने गले में वे चाँदी की माला धारण करती हैं तथा अस्त्रों को धारण किए हुयी हैं ।। १४ ।। सपरिवार लक्ष्मीदेवी का ध्यान करके तथा उनकी पूजा करके मनुष्य सब कुछ प्राप्त कर लेने में समर्थ होता है। उस उपासना के समय सिर पर द्रोण पुष्प, कमल तथा विल्वपत्र को धारण नहीं करना चाहिए ।। १५ ।। पञ्चमी तिथ को नमक नहीं खायें तथा सप्तमी तिथि को आँवला नहीं खाना चाहिए। उपासना के समय साधक को खीर का ही भोजन करना चाहिए और श्रीसूक्त का जप करना चाहिए और उसी से अभिषेक करना चाहिए ।। १६ ।। आवाहन से लेकर विसर्जन पर्यन्त सम्पूर्ण उपचारों

यथोक्तं तां देवीं पीठञ्चैवाब्जमध्यगम् । ओं ह्रीं दुर्गे ! दुर्गे ! रक्षणि ! स्वाहा चेति दुर्गायै नमः । वरणण्यै नमः । आर्य्यायै कनकप्रभायै कृत्तिकायै अभयप्रदायै कन्यकायै सुरूपायै ॥ २० ॥ पत्रस्थाः पूजयेदेता मूर्त्तीराद्यैः स्वरैः क्रमात् ॥ २१ ॥ चक्राय शङ्खाय गदायै खड्गाय धनुषबाणाय । अष्टम्याद्यैरिमां दुर्गां लोकेशान्तां यजेदिति ॥ २२ ॥ दुर्गायोगः समायुःश्रीस्वात्मरक्षाजयादिकृत् ॥ ससाध्येशानमन्त्रेण तिलहोमो वशीकरः । जयः पद्मैस्तु दूर्वाभिः शान्तिः कामः पलाशजैः ॥ २३ ॥ पुष्टिः स्यात् काकपक्षेण मृतिद्वेषादिकं भवेत् । ग्रहक्षुद्रभयापत्तिं सर्वमेव मनुर्हरेत् ॥ २४॥ ओं दुर्गे दुर्गे ! रक्षणि ! स्वाहा । रक्षाकरीयमुदिता जयदुर्गाङ्गसंयुता ॥ २५ ॥ श्यामां त्रिलोचनां देवीं ध्यात्वात्मानं चतुर्भुजम्॥२६॥ शङ्खचक्राब्जशूलादित्रिशूलां रौद्ररूपिणीम् । युद्धादौ सञ्जयेदेतां यजेत् खड्गादिके जये ॥ २७॥

इत्यादिमहापुराण आग्नेये त्रैलोक्यमोहनीलक्ष्म्यादिपूजाकथनं नाम अष्टाधिकत्रिशततमोऽध्यायः ॥ ३०८ ॥

## नवाधिकत्रिशततमोऽध्यायः

## त्वरितापूजा

अग्निरुवाच– **त्वरिताङ्गान् समाख्यास्ये भुक्तिमुक्तिप्रदायकान् । ओं आधारशक्त्यै नमः । ओं ह्रीं पुरु पुरु महासिंहाय नमः । ओं पद्माय नमः। ओं ह्रीं हूं च्छेक्षः । स्त्रीं हूं क्षें ह्रीं फट् त्वरितायै नमः । खे च हृदयाय नमः । च छे शिरसे नमः । छेशः शिखायै नमः । क्षस्त्री कवचाय नमः। स्त्रीं**

पर्यन्त सम्पूर्ण उपचारों का श्रीसूक्त के मन्त्रों से अर्पण करके ध्यानपूर्वक श्रीदेवी का पूजन करना चामिहए । विल्व, घृत, कमल तथा खीर इन सभी वस्तुओं से श्रीदेवी का दूसरा योग बनता है।।१७।। विषं (म) हि, मज्जा (ष) काल (म) अग्नि (र) अत्रि (द) निष्ठ (इ) नि, स्वाहा, (महिषमर्दिनी स्वाहा) यह भगवती महिष मर्दिनी (महालक्ष्मी) का अष्टाक्षर मन्त्र है। इसका पञ्चङ्ग न्यास इस प्रकार है। महिष मर्दिन हूं फट् हृदयाय नमः, महिष शत्रू त्सादिनी हूं फट् शिर से स्वाहा। महिषं भीषय हूं फट शिखयै वषटू। महिषं हन हन द्रेवि हुं फट् कवचाय हुम्। महिष सूदिनी हुं फट् स्वाहा अस्त्राय फट् ।। १८ ।। यह दुर्गाहृदय मन्त्र है । इसकी साङ्गसाधना करने से समस्त अभीष्ट अर्थों की सिद्धि होती है ।। १९ ।। दुर्गादेवी, का निम्नांकित प्रकार से पीठ तथा कमल पर पूजन करना चाहिए । ओं ह्रीं दुर्गे रक्षिणि शरक्षिणि स्वाहा । यह दुर्गादेवी का मन्त्र है । अष्टदल कमल पर- दुर्गा, वरवर्णिनी, आर्या, कनकप्रभा, कृत्तिका, अभयप्रदा, कन्यका, तथा सुरूपा इन आठ मूर्तियों के आदि अक्षरों को बीज मंत्र बनाकर पूजन करना चाहिए ।। २०-२१ ।। इसके साथ ही चक्र, शंख, गदा, खड्ग, धनुष् बाण खेट तथा पाश की भी पूजा करनी चाहिए । अष्टमी आदि तिथियों पर लोकेश्वरी दुर्गा की पूजा करनी चाहिए । २२ ।। दुर्गा की यह पूजा पूर्णायु, श्री आत्मरक्षा तथा विजय प्रदान करने वाली है । मन्त्र में साध्य का नाम जोड़कर तिल से होम करने पर वशीकरण होता है । कमल से होम करने पर विजय की प्राप्ति होती है, दुर्वा से होम करने से शान्ति की प्राप्ति होती है, पलाश की समिधाओं से होम करने से पुष्टि, काकपक्ष से हवन करने से साध्य का मारण एवं विद्वेषण होता है । यह सभी प्रकार की ग्रहबाधा एवं भय को दूर करता है ।। २२-२४ ।। ओं दुर्गे, दुर्गे ! रक्षिणि स्वाहा ! यह जयदुर्गा मन्त्र रक्षा करने वाला बतलाया गया है। ।। २६ ।। श्यामवर्ण वाली तथा तीन नेत्रों वाली एवं चार भुजाओं वाली देवी का ध्यान करके, शंख, चक्र, पद्म, शूल तथा त्रिशूल धारण करने वाली रौद्रस्वरूपिणी दुर्गा देवी का ध्यान करके उनका पूजन खड्ग आदि में करें तो युद्ध आदि में विजय की प्राप्ति होती है ।। २७ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का त्रैलोक्य मोहिनी लक्ष्मी आदि की पूजा का वर्णन नामक तीन सौ आठवाँ अध्याय सम्पूर्ण हुआ ॥ ३०८ ॥**

**अग्निदेव ने कहा–** अब मैं त्वरिता पूजा के अंगों का वर्णन कर रहा हूँ जिसका ज्ञान भोग तथा मोक्ष को प्रदान करने वाला है ।। १ ।। ओं आधारशक्त्यै नमः । इस मन्त्र से आधार

हूं नेत्राय नमः । हूं खे अस्त्राय फट् नमः । ओं त्वरिताविद्यां विद्महे । तूर्णविद्याञ्च धीमहि तन्नो देवी प्रचोदयात् । श्रीप्रणीतायै नमः । हूं कार्यै नमः। खेचर्य्यै नमः । ओं चण्डायै नमः । छेदिन्यै नमः । क्षेपिण्यै नमः । स्त्रियै हूंकार्य्यै नमः । हूंकार्यै नमः । जयायै नमः । किङ्कराय नमः । ओं किंकर रक्ष रक्ष त्वरिताज्ञया स्थिरो भव वषट् ॥ २ ॥ तोतला त्वरिता तूर्णेत्येवं विद्येयमीरिता । शिरोभ्रूमस्तके कण्ठे हृदि नाभौ च गुह्यके ॥ ३॥ उर्वोश्च जानुजङ्घोरुद्वये चरणयोः क्रमात्। न्यस्ताङ्गो न्यस्तमन्त्रस्तु समस्तं व्यापकं न्यसेत् ॥ ४ ॥ पार्वती शवरी चेशा वरदाभयहस्तिका ॥ मयूरबलया पिच्छमौलिः किसलयांशुका । सिंहासनस्था मायूरवर्हच्छत्रसमन्विता ॥ ५ ॥ त्रिनेत्र श्यामला देवी वनमालाविभूषणा । विप्राहिकर्णाभरणा क्षत्रकेयूरभूषणा ॥ ६ ॥ वैश्यनागकटीबन्धा बृषलाहिकृतनूपुरा । एवं रूपात्मिका भूत्वा तन्मन्त्रं नियुतं जपेत् ॥ ७ ॥ ईशः किरातरूपोऽभूत् पुरा गौरी च तादृशी । जपेद् ध्यायेत् पूजयेत् तां सर्वसिद्ध्यै विषादिहृत् ॥ ८ ॥ अष्टसिंहासने पूज्या दले पूर्वादिके क्रमात् । अङ्गगायत्री प्रणीता हूङ्काराद्यादलाग्रके ॥ ९ ॥ फट्कारी चाग्रतो देव्याः श्रीवीजेनार्चयेदिमाः । लोकेशायुधवर्णास्ताः फट्कारी तु धनुर्धरा ॥ १० ॥ जया च विजया

---

शक्ति का स्मरण एवं पूजन करना चाहिए । ओं पुरु पुरु महासिंहाय नमः । इस मन्त्र से महासिंह स्वरूप सिंहासन की पूजा करे । ओं पद्माय नमः । इस मन्त्र से कमलस्वरूप आसन का पूजन करें । ओं ह्रीं हूं खे च च्छेक्षः स्त्रीं हूं क्षें ह्रीं फट् त्वरितायै नमः । यह त्वरितादेवी का मूल मन्त्र है । इससे त्वरिता देवी का पूजन करना चाहिए । इसका अङ्गन्यास इस प्रकार है । खे च हृदयाय नमः । च च्छे शिरसे नमः (शिरसे स्वाहा) छे क्षः शिखायै नमः (शिखायै वषट्) । क्षः स्त्री कवचाय नमः (कवचाय हुम्) स्त्री हूं नेत्राय नमः (नेत्रत्राय वौषट्) हूं खे अस्त्राय फट् नमः । (अस्त्राय फट्) इसी प्रकार करन्यास भी करना चाहिए । इसके बाद त्वरिता गायत्री का जप करे । त्वरिता विद्यां विद्महे । तूर्णविद्यां च धीमहि । तन्नोदेवी प्रचोदयात् । यह त्वरिता गायत्री है । उत्तर दिशा में श्री प्रणीतायै नमः । इस मन्त्र से श्री प्रणीता का पूजन करे । इसके पश्चात् कमल के पूर्वादि दलों में हूंकारी आदि अन्य शक्तियों की पूजा करें । उनके मन्त्र हैं, हूंकार्यै नमः । खेचर्यै नमः। ओं चण्डायै नमः । छेदिन्यै नमः । क्षेपिण्यै नमः। स्त्रीकार्यै नमः । हूंकार्यै नमः । क्षेमं कर्यै नमः । इसके पश्चात् पार्श्वभाग में जपायै नमः । विजयायै नमः । इन दो मन्त्रों से जया एवं विजया की पूजा करें । इसके पश्चात् किंकर की पूजा 'किंकराय नमः ।' इस मन्त्र से करके कहे- किंकर रक्ष-रक्ष त्वरिताज्ञया स्थिरो भव ।। २ ।। यह त्वरिता विद्या तोतला, त्वरिता एवं तूर्णा इन तीन नामों से अभिहित की जाती है ।। ३ ।। इस विद्या के अक्षरों का सिर, भौंहा, मस्तक, कण्ठ, हृदय, नाभि, गुह्य, उरूद्वय, जानु, जंघाद्वय, ऊरुद्वय तथा पादद्वय इन अंगों में क्रमशः न्यास करके, सम्पूर्ण मन्त्र से व्यापक न्यास करना चाहिए ।। ४ ।। त्वरिता देवी साक्षात् पार्वती स्वरूपा हैं । किराती का वेष धारण करने के कारण ये शबरी कही जाती हैं । सब पर शासन करने के कारण ये ईशा कही जाती हैं । इनके हाथ में वरद मुद्रा अभय मुद्रा से सुशोभित होती हैं । ये अपने हाथों में मयुरपिच्छ का कंगन धारण करती हैं । वे मयुरपिच्छ का ही मुकुट धारण करती हैं । उनके कोमल पत्तों के वस्त्र हैं । वे सिंहासन पर बैठी हुई हैं । उनका छत्र मयूरवर्ह का ही बना है ।। ५ ।। उनके तीन नेत्र हैं तथा उनकी अंगकान्ति श्यामवर्ण की है । वनमाला का आभूषण धारण किए हुयी हैं । ब्राह्मण जातीय दो नाग (अनन्त और कुलिक) उनके कर्णाभूषण का काम करते हैं । क्षत्रिय जाति के दो नाग (वासुकि एवं शंखपाल) उनके केयूर (बाजूबन्द) का काम करते हैं ।। ६ ।। वैश्यजातीय दो नाग (तक्षक एवं महापद्म) उनके कटि प्रदेश में करधनी का काम करते हैं, शूद्रजातीय दो नाग (पद्म तथा कर्कोटक) उनके पैरों के नूपुर का काम करते हैं । साधक स्वयं भी देवीस्वरूप होकर उनके मन्त्र का एक लाख जप करे ।। ७ ।। प्राचीनकाल में अर्जुन को वरदान देने के लिए जब भगवान् शंकर ने किरात का रूप धारण किया तो भगवती पार्वती ने भी किराती का रूप बना लिया । सब प्रकार की सिद्धियों को प्राप्त करने के लिए तथा विष आदि को दूर करने के लिए उस त्वरिता देवी का ही जप, ध्यान एवं पूजन करनरा चाहिए।।८।। पूर्व वर्णन के अनुसार कमल के पूर्वादि दल के भीतर कर्णिका में आठ सिंहासनों पर आठ देवियों की पूजा करें । (अर्थात् हृदयादि छह अंगों एवं श्रीप्रणीता तथा गाय की भी पूजा करें ।। ९ ।। ) दलाग्र में त्वरिता देवी के समक्ष फट्कारी देवी की पूजा करनी चाहिए । इन देवियों के नाममन्त्रों में श्रीबीज लगाकर इनकी पूजा करनी चाहिये । हूंकारी आदि देवियों के

द्वास्थे पूज्ये सौवर्णयष्टिके । किङ्करो वर्वरो मुण्डी लगुडीच तयोर्वहि ॥ ११ ॥ इष्ट्वैवं सिद्धयेद् द्रव्यैः कुण्डे योन्याकृतौ हुनेत् । हेमलाभोऽर्जुनैर्द्धान्यैर्गोधूमैः पुष्टिसम्पदः ॥ १२ ॥ यवैर्धान्यैस्तिलैः सर्वसिद्धिरीति विनाशनम् । अक्षैरुन्मत्तता शत्रोः शाल्मलीभिश्च मारणम् ॥ १३ ॥ जम्बुभिर्धनधान्याप्तिस्तुष्टिर्नीलोत्पलैरपि । रक्तोत्पलैर्महापुष्टिः कुन्दपुष्पैर्महोदयः ॥ १४ ॥ मल्लिकाभिः पुरक्षोभः कुमुदैर्जनवल्लभः । अशोकैः पुत्रलाभः स्यात् पाटलाभिः शुभाङ्गना ॥ १५ ॥ आम्रैरायुस्तिलैर्लक्ष्मीर्विल्वैः श्रीश्चम्पकैर्धनम् । इष्टं मधुकपुष्पैश्च विल्वैः सर्वज्ञतां लभेत् ॥ १६॥ त्रिलक्षजप्यात् सर्वाप्तिर्होमाद् ध्यानात् तथेज्यया। मण्डलेऽभ्यर्च्य गायत्र्या आहुतीः पञ्चविंशतिम् ॥ १७ ॥ दद्याच्छतत्रयं मूलात् पल्लवैर्दीक्षितो भवेत् । पञ्चगव्यं पुरा पीत्वा चरुकं प्राशयेत् सदा ॥ १८ ॥

इत्यादिमहापुराण आग्नेये त्वरितापूजाकथनं नाम नवाधिकत्रिशततमोऽध्यायः ॥ ३०९ ॥

## दशाधिकत्रिशततमोऽध्यायः

### त्वरितामन्त्रादिः

अग्निरुवाच– **अपरां त्वरिताविद्यां वक्ष्येऽहं भुक्तिमुक्तिदाम् । पुरे ब्रजाकुले देवीं रजोभिर्लिखिते यजेत् ॥ १ ॥ पद्मगर्भे दिग्विदिक्षु चाष्टौ**

---

आयुध और वर्ण उस दिशा के दिक्पालों के आयुध एवं वर्ण के ही समान हैं, किन्तु फट्कारी देवी धनुष् धारण करती हैं ।। १० ।। मण्डल के द्वारभाग में जया एवं विजया की पूजा करनी चाहिए । ये दोनों सुवर्ण की छड़ी धारण करती हैं । उन दोनों से बाहर किंकर की पूजा करनी चाहिए । उसका नाम बर्बर है । उसका सिर मुण्डित है तथा वेद लगुड (लाठी) धारण करते हैं।।११।। इस प्रकार से पूजन करके सिद्धि प्राप्त करने के लिए योन्याकार कुण्ड में हवनीय द्रव्यों से होम करना चाहिए । उजले धान से हवन करने से सुवर्ण का लाभ होता है । गेहूँ से होम करने से पुष्टि एवं सम्पत्ति की प्राप्ति होती है ।। १२ ।। यव धान्य तथा तिल इन सबों को मिलाकर हवन करने से सब प्रकार की सिद्धियाँ होती हैं । ईतियों का विनाश होता है । बहेड़े का हवन करने से शत्रु का उन्माद हो जाता है । सेमर से हवन करने पर शत्रु का मारण होता है ।। १३ ।। जामुन के फल का हवन करने से धन-धान्य की प्राप्ति होती है । नीलकमल से हवन करने से तुष्टि होती है । लालकमल से हवन करने पर महापुष्टि होती है । कुन्द के पुष्प का हवन करने से महान अभ्युदय होता है ।। १४ ।। मल्लिका पुष्पों से होम करने पर नगर या ग्राम में क्षोभ होता है । कुमुद पुष्पों का हवन करके उपासक सब लोगों का प्रिय बन जाता है । अशोक पुष्पों से होम करने पर पुत्र की प्राप्ति होती है और पाटल पुष्पों से होम करने से उत्तम अंजना की प्राप्ति होती है । आम्र फल की आहुति से आयु, तिलों की आहुति से लक्ष्मी, विल्वफल की आहुति से श्री की प्राप्ति तथा चम्पक पुष्पों से आहुति देने पर धन की प्राप्ति होती है । महुआ के फूल तथा विल्व को मिलाकर एक साथ हवन करनेसे अभीष्ट सर्वज्ञता की प्राप्ति होती है ।। १६ ।। मूलमन्त्र का तीन लाख जप होम तथा ध्यान एवं पूजन करने से सभी अर्थों की प्राप्ति होती है । मण्डल में त्वरिता देवी की पूजा करके त्वरिता गायत्री से पच्चीस आहुति देनी चाहिए ।। १७ ।। इसके पश्चात् पल्लवों से तीन सौ आहुति देकर दीक्षा ग्रहण करनी चाहिए । दीक्षा से पहले पंचगव्य पीना चाहिए और दीक्षाकाल में चरु (हविष्य) का भोजन करना चाहिए ।। १८ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का त्वरितापूजा वर्णन नामक तीन सौ नवाँ अध्याय सम्पूर्ण हुआ ॥ ३०९ ॥**

**अग्निदेव ने कहा**– अब मैं भोग एवं मोक्ष प्रदान करने वाली अपरा त्वरिता विद्या का वर्णन करता हूँ । धूलि से लिखित, वज्र के चिह्न से चिह्नित तथा चौकोर भूपुर मण्डल में त्वरिता

वज्राणि वीथिकाम् । द्वारशोभोपशोभाञ्च लिखेच्छीघ्रं स्मरेन्नरः ॥ २ ॥ अष्टादशभुजां सिंहे वामजङ्घा प्रतिष्ठिताः । दक्षिणा द्विगुणा तस्याः पादपीठे समर्पिता॥ ३॥ नागभूषां वज्रदण्डे खड्गं चक्रं गदां क्रमात् । शूलं शरं तथा शक्तिं वरदं दक्षिणैःकरैः॥ ४॥ धनुः पाशं शरं घण्टां तर्जनीं शङ्खमङ्कुशम् । अभयञ्च तथावज्रं वामपार्श्वे धृतायुधम् ॥ ५ ॥ पूजनाच्छत्रुनाशः स्याद्राष्ट्रं जयति लीलया । दीर्घायूराष्ट्रभूतिः स्याद् दिव्या दिव्यादि सिद्धिभाक् ॥ ६ ॥ तलेति सप्तपातालाः कालाग्निभुवनान्तकाः । ओंकारादिस्वरारभ्य यावद् ब्रह्माण्डवाचकम् ॥ ७ ॥ ओंकाराद् भ्रामयेत् तोयन्तोतला त्वरिता ततः। प्रस्तावं सम्प्रवक्ष्यामि स्वरवर्गं लिखेद् भुवि ॥ ८ ॥ तालुर्वर्गः कवर्गः स्यात् तृतीयो जिह्वतालुकः । चतुर्थस्तालु जिह्वाग्रो जिह्वादन्तस्तु पञ्चमः॥९॥ षष्ठोऽष्टपुटसम्पन्नो मिश्रवर्गस्तु सप्तमः । ऊष्माणः स्याच्छवर्गस्तु उद्धरेज्च मनुं ततः॥ १०॥ षष्ठस्वरसमारूढम् ऊष्मणान्तं सविन्दुकम् । तालुवर्गद्वितीयान्तो स्वरैकादशयाजितम्॥ ११॥ जिह्वातालुसमायोगः प्रथमं केवलं भवेत् । तदेव च द्वितीयन्तु अधस्ताद् विनियोजयेत् ॥ १२ ॥ एकादशस्वरैर्युक्तं प्रथमं तालुवर्गतः । ऊष्माणस्य द्वितीयन्तु अधस्ताद् दृश्य योजयेत् ॥ १३ ॥ षोड़शस्वरसंयुक्तमूष्माणस्य तृतीयकम् । जिह्वादन्तसमायोगे प्रथमं योजयेदधः ॥ १४॥ मिश्रवर्गाद् द्वितीयन्तु अधस्तात् पुनरेव तु । चतुर्थस्वरसम्भिन्न तालुवर्गादिसंयुतम्॥१५॥ ऊष्मणश्च द्वितीयन्तु अधस्ताद् विनियोजयेत्। स्वरैकादशभिन्नन्तु ऊष्मणान्तं सविन्दुकम्॥१६॥ पञ्चस्वरसमारूढम् ओष्ठसम्पुटयोगतः। द्वितीयमक्षरञ्चान्यज्जिह्वाग्रे

देवी की पूजा करनी चाहिए ।। १ ।। उस मण्डल के भीतर पद्म का भी निर्माण करना चाहिए । उस मण्डल के दिशाओं तथा कोणों में आठ वज्रों का निर्माण करना चाहिए । उसमें वीथिका, द्वार, शोभा, उपशोभा आदि को बनाकर मनुष्य त्वरिता देवी का ध्यान करे ।। २ ।। त्वरिता देवी की अठारह भुजायें हैं । उनकी बायीं जंघा सिंह के ऊपर स्थित है । दाहिनी जंघा आकृति में उसकी दो गुनी है और पादपीठ पर स्थित है ।। ३ ।। नागों के ही उनके आभूषण हैं । वे अपनी दाहिनी भुजाओं में क्रमशः वज्र, दण्ड, खड्ग, चक्र, गदा, शूल, बाण, शक्ति तथा अभयमुद्रा को धारण करती हैं ।। ४ ।। वे अपने बायीं भुजाओं में क्रमशः इन आयुधों को धारण करती हैं- धनुष, पाश, बाण, घण्टा, तर्जनी, शंख, अंकुश, अभयमुद्रा तथा वज्र ।। ५ ।। त्वरितादेवी की पूजा करने से शत्रु का नाश हो जाता है तथा उपासक आसानी से राष्ट्र पर विजय प्राप्त कर लेता है । वह साधक दीर्घ आयु को प्राप्त करता है । वह राष्ट्र का ऐश्वर्य बन जाता है । उसको दिव्य तथा अदिव्य (लौकिक तथा अतिलौकिक) सिद्धियाँ प्राप्त हो जाती हैं ।। ६ ।। त्वरिता देवी के तोतला नाम की व्युत्पत्ति इस प्रकार है- तल शब्द सातों पाताल, काल, अग्नि तथा सभी भुवनों को सूचित करता है । ओंकार समस्त स्वरों से लेकर सम्पूर्ण ब्रह्माण्ड का वाचक है ।। ७ ।। चूँकि त्वरिता देवी ओंकार के द्वारा तल पर्यन्त सम्पूर्ण जल का प्रक्षेपण करती हैं, इसीलिए वे तोतला कहलाती हैं ।। ७ ।। अब मैं त्वरिता देवी के मन्त्र का उद्धार बतलाता हूँ । स्वर वर्ग को भूमि पर लिखें । स्वरों की संख्या सोलह है- अ, आ, इ, ई, उ, ऊ, ऋ, ॠ, ऌ, ॡ, ऐ, ऐ, ओ, औ, अं, अः ।) कवर्ग का सांकेतिक नाम तालुवर्ग है, दूसरे वर्ग चवर्ग का सांकेतिक नाम जिह्वा तालक है । चौथे वर्ग स्वर्ग को तालु जिह्वाग्र कहते हैं । पाञ्चवें वर्ग को जिह्वादन्त वर्ग कहते हैं ।। ८-९ ।। छठें वर्ग पवर्ग को ओष्ठपुट वर्ग कहते हैं । सातवें वर्ग यवर्ग को मिश्रवर्ग कहते हैं और सातवें शवर्ग को उष्मा वर्ग कहते हैं । इसके बाद त्वरिता मन्त्र का उद्धार इस प्रकार करना चाहिए ।। १० ।। छठें स्वर (ऊ) पर आरूढ़ उष्मा वर्ग के अन्तिम अक्षर हकार विन्दु (अनुस्वार) से युक्त हो (हूं) तालुवर्ग का द्वितीय अक्षर (ख) स्वरवर्ग के ग्यारहवें अक्षर (ए) से युक्त हो (खे) ।। ११ ।। जिह्वातालु समायोग वर्ग का केवल पहला अक्षर (च्) हो । उसी वर्ग का दूसरा अक्षर (छ) को ग्यारहवें स्वर (ए) से युक्त कर दे । अर्थात् (च्छे) । तालुवर्ग के प्रथम अक्षर (क्) के नीचे उष्मावर्ण के द्वितीय अक्षर ष् को जोड़कर और उसे सोलहवें स्वर (अः) से संयुक्त करें । अर्थात् (क्षः) ।। १३ ।। उष्मा वर्ग के तृतीय अक्षर (स्) जिह्वादन्तसमायोग वर्ग के प्रथम अक्षर (त्) को उसके नीचे जोड़ दें ।। १४ ।। उसके नीचे मिश्र वर्ग के द्वितीय अक्षर (र्) को उसके नीचे जोड़कर चतुर्थ स्वर (ई) से संयुक्त करें । अर्थात् (स्त्री) तदनंतर तालुवर्ग के आदि अक्षर (क्) के नीचे उष्मा वर्ग के द्वितीय अक्षर को जोड़ दें और उसको ग्यारहवें स्वर से जोड़ दें । अर्थात् (क्षे) उसके पश्चात् उष्मा वर्ग के अन्तिम अक्षर (ह) को अनुस्वार से युक्त

श्रीमति कुब्जिकाविद्या सर्वकरा स्मृता । भूयः स्कन्दाय यानाह मन्त्रानीशश्च तान् वदे ॥ ७ ॥

इत्यादिमहापुराण आग्नेये नानामन्त्रकथनं नाम षोड़शाधिकत्रिशततमोऽध्यायः ॥ ३१६ ॥

## सप्तदशाधिकत्रिशततमोऽध्यायः

## सकलादिमन्त्रोद्धारः

ईश्वर उवाच– **सकलं निष्कलं शून्यं कालाढ्यं स्वमलङ्कृतम् । क्षपणं क्षयमन्तस्थं कण्ठोष्ठं चाष्टमं शिवम् ॥ १ ॥ प्रासादस्य पराख्यस्य स्मृतं रूपं गुहाष्टधा । सदाशिवस्य शब्दस्य रूपस्याखिलसिद्धये॥ २॥ अमृतश्चांशुभांश्चेन्दुश्चेश्वरश्चोग्र ऊहकः । एकपादेन ओजाख्य औषधश्चांशुमान् वशी ॥ ३॥ अकारादेः वाचकश्च ककारादेः क्रमादिमे । कामदेवः शिखण्डी च गणेशः कालशङ्करौ॥ ४॥ एकनेत्रो द्विनेत्रश्च त्रिशिखो दीर्घबाहुकः। एकपादार्द्धचन्द्रश्च बलयो योगिनीप्रियः ॥ ५॥ शक्तीश्वरी महाग्रन्थिस्तर्पकः स्थाणुदन्तुरौ । निधीशो नन्दी पद्मश्च तथान्यः शाकिनीप्रियः ॥ ६ ॥ मुखविम्बो भीषणश्च कृतान्तः प्राणसंज्ञकः । तेजस्वीशक्र उदधिः श्रीकण्ठः सिंह एव च ॥ ७ ॥ शशाङ्को विश्वरूपश्चाक्षश्च स्यान् नरसिंहकः । सूर्य्यमात्रा समाक्रान्तं विश्वरूपन्तु कारयेत् ॥ ८ ॥ अंशुमत्संयुतं कृत्वा शशिबीजं विनायुतम् । ईशानमोजसाक्रान्तं प्रथमन्तु समुद्धरेत् ॥ ९ ॥ तृतीयं पुरुषं विद्धि दक्षिणं पञ्चमं तथा । सप्तमं वामदेवन्तु सद्योजातं ततःपरम् ॥ १० ॥ रसयुक्तन्तु नवमं ब्रह्मपञ्चकमीरितम् । ओंकाराद्याश्चतुर्थ्यन्ता नमोऽन्ताः सर्वमन्त्रकाः॥ ११॥ सद्योदेवा द्वितीयन्तु हृदयञ्चाङ्गसंयुतम् । चतुर्थन्तु शिरो विद्धि ईश्वरं नाम नामतः ॥ १२ ॥ ऊहकन्तु शिखा ज्ञेया**

---

ह्स्ख्फ्रें श्रीं ह्रीं ऐं । यह श्रीमति कुब्जिका विद्या समस्त कार्यों को सिद्ध करने वाली है । अब मैं उन मन्त्रों को बतला रहा हूँ जिन मन्त्रों का उपदेश भगवान् शंकर ने स्कन्द जी को दिया था ।। ७।।

**इस तरह से आदिमहापुराण अग्निपुराण का अनेक मन्त्र वर्णन नामक तीन सौ सोलहवाँ अध्याय सम्पूर्ण हुआ ॥ ३१६ ॥**

**भगवान् शंकर ने कहा–** हे स्कन्द प्रासाद परा संज्ञक मन्त्रों के स्वरूप आठ प्रकार के बतलाये गये हैं- सकल, निष्कल, शून्य, स्वयमलंकृत कलाढ्य, क्षपण क्षय, अन्तस्थ एवं कण्ठोष्ठ तथा आठवाँ शिव। ये सभी कल्याणकारी हैं ।। १।। ये शब्दस्वरूप मन्त्र सदाशिव स्वरूप हैं । इनके जप से सभी प्रकार की सिद्धियाँ प्राप्त होती हैं ।। २ ।। अकार आदि बारह (अ, आ, इ, ई, उ, ऊ, ऐ, ओ औ, अं अः) स्वरों के वाचक हैं । क्रमशः अमृत, अंशुमान् , इन्द्र, ईश्वर, उग्र, ऊहक, एकपाद, ऐल, ओज, औषध, अंशुमान् और वशी । ककार आदि व्यंजनों के सूचक हैं ।। ३।। कामदेव, शिखण्डी, गणेश, काल, शंकर, एकनेत्र, द्विनेत्र, त्रिशिख, दीर्घबाहुक, एकपाद, अर्द्धचन्द्र, वलय, योगिनीप्रिय ।। ५ ।। शक्तीश्वर, महाग्रन्थि, तर्पक, स्थाणु, दन्तुर, निधीश, नन्दी, पद्म, शाकिनीप्रिय, ।। ६ ।। मुखविम्ब, भीषण, कृतान्त, प्राण, तेजस्वी, शक्र, उदधि, श्रीकण्ठ, सिंह, शशांक, विश्वरूप तथा नारसिंह (ह) को बारह मात्राओं से युक्त करके लिखो ।। ८।। विश्वरूप (ह) को अंशुमान् (अनुस्वार) तथा ओज (ओ) से युक्त करके रखा जाय और उसमें शशिबीज (स) का योग न किया जाय तार हों) यह प्रथम बीज उद्धृत होता है । जो ईशान से सम्बद्ध है। तृतीय बीज है उसे तत्पुरुष संबन्धी जानो । पाँचवाँ बीज (हुं) है जो दक्षिण दिशावर्ती मुख अघोर का बीज है । सातवाँ बीज हिं है उसे वामदेव बीज जानना चाहिए । नवाँ (हं) बीज सद्योजात से सम्बद्ध है । इस प्रकार उक्त पाँच बीजों से युक्त ईशान आदि मुखों को ब्रह्मपंचक कहा गया है ।। १०।। इन सबों के आदि में और अन्त में नमः पद जोड़ देना चाहिए । ईशान आदि नामों का यदि चतुर्थ्यन्त प्रयोग किया जाय तो सभी पूजोपयोगी मन्त्र बन जाते हैं ।। ११ ।। ओं हं सद्योजाताय नमः यह सद्योजात मन्त्र है । द्वितीय, चतुर्थ आदि मात्राएँ दीर्घ हैं, अतः उनका हृदयादि अङ्गन्यास किया जाता

विश्वरूपसमन्विता । कवचमष्टमं ख्यातं नेत्रन्तु दशमं मतम् ॥ १३ ॥ अस्त्रं वशी समाख्यातं शिवसंज्ञं शिखिध्वजः । नमः स्वाहा तथा वौषट् हूं च फट्क्रमेण तु ॥ १४ ॥ जातिषट्कं हृदादीनां प्रासादं मन्त्रमावदे । ईशानाद्रुद्रसंख्यातं प्रोद्धरेच्चांशुरञ्जितम् ॥ १५ ॥ औषधाक्रान्तशिरसमूहकस्योपरिस्थितम्। अर्द्धचन्द्रोर्ध्वनादश्च विन्दुद्वितयमध्यगम्॥१६॥ तदन्ते विश्वरूपन्तु कुटिलन्तु त्रिधा ततः । एवं प्रासादमन्त्रश्च सर्वकर्म करो मनुः ॥ १७ ॥ शिखाबीजं समुद्धृत्य फट्कारान्तन्तु चैव फट् । अर्द्धचन्द्रासनं ज्ञेयं कामदेवं ससर्पकम् ॥ १८ ॥ महापाशुपतास्त्रन्तु सर्वदुष्टप्रमर्दनम् । प्रासादः सकलः प्रोक्तो निष्कलः प्रोच्यतेऽधुना ॥ १९ ॥ औषधं विश्वरूपन्तु रुद्राख्यं सूर्य्यमण्डलम् । चन्द्रार्द्धं नादसंयोगं विसंज्ञं कुटिलन्ततः ॥ २० ॥ निष्कलो भुक्तिमुक्तौ स्यात् पञ्चाङ्गोऽयं सदाशिवः। अंशुमान् विश्वरूपञ्च आवृतं शून्यरञ्जितम् ॥ २१ ॥ ब्रह्माङ्गरहितः शून्यस्तस्य मूर्त्ति रसस्तरुः। विघ्ननाशाय भवति पूजितो बालबालिशैः ॥ २२॥ अंशुमान् विश्वरूपाख्यमूहकस्योपरि स्थितम् । कलाढ्यं सकलस्यैव पूजाङ्गादि च सर्वतः॥२३॥ नरसिंहं कृतान्तस्थं तेजस्विप्राणमूर्ध्वगम् । अंशुमानूहकाक्रान्तमधोर्ध्वं स्वमलंकृतम् ॥ २४ ॥ चन्द्रार्द्धनादनादान्तं ब्रह्मविणुविभूषितम् । उदधिं नरसिंहञ्च सूर्य्यमात्राविभेदितम् ॥ २५ ॥ यदा कृतं तदा तस्य ब्रह्माण्यङ्गानि पूर्ववत् । ओजाख्यमंशुमद्युक्तं प्रथमं वर्णमुद्धरेत् ॥ २६॥ अंशुमच्चांशुनाक्रान्तं द्वितीयं वर्णनायकम् । अंशुमानीश्वरन्तद्वत् तृतीयं मुक्तिदायकम् ॥ २७ ॥ ऊहकाञ्चांशुनाक्रान्त वरुणप्राणतैजसम् । पञ्चमन्तु समाख्यातं

है । द्वितीय बीज, हृदय तथा अङ्गमन्त्र (नमः) बोलकर हृदय में न्यास करना चाहिए । जैसे- हां हृदयाय नमः हृदि, । चतुर्थ बीज (ई) का संबन्ध सिर से है । जो हकार में ईश्वर तथा अंशुमान् के जोड़ने से बनता है । (ह्रीं) जैसे- ह्रीं शिरसे स्वाहा, बनने वाला बीज हूं है । इसका सम्बन्ध शिखा से है । जैसे- हूं शिखायै वषट्, शिखायाम् । आठवाँ बीजमन्त्र हैं का संबन्ध कवच से है । जैसे हैं कवचाय हुम् , इति बाहुमूलयोः । दसवां बीजमन्त्र हौं का संबन्ध नेत्र से है । जैसे- हौंनेत्रत्रयाय वौषट् । इतिनेत्रयोः ।। १३ ।। हे शिखिध्वज अस्त्रमन्त्र वशी (विसर्ग) युक्त हकार (हः) है । जैसे- हः अस्त्राय फट् । यह शिवसंज्ञक है । इन अंगन्यास मन्त्रों के अन्त में क्रमशः नमः, स्वाहा, वषट्, हुम् तथा वौषट् फट् जोड़ना चाहिए ।। १४ ।। ये हृदयादि मन्त्रों की क्रमशः नमः आदि छह जातियाँ हैं । अब मैं प्रासाद मन्त्रों को बतलाता हूँ । ईशान (ई) से युक्त रुद्र (अनुस्वार) तथा अंशुमान् से बीजमंत्र बनता है । (ह्रीं) उसका उद्धार करना चाहिए ।। १५ ।। औषध (औ) के ऊपर विद्यमान् अनुस्वार (हौं) । अर्धचन्द्र अनुस्वार तथा ऊर्ध्वनाद तथा विन्दु से युक्त बनने हीं हीं हूं। ये प्रासाद मन्त्र हैं ।। १६ ।। ये तीनों मन्त्र विश्वरूप को मिलाकर बनते हैं । इस तरह ये तीन कुटिलसंज्ञक मन्त्र हैं । ये तीनों प्रासाद मन्त्र सभी कार्यों को सिद्ध करने वाले हैं ।। १७ ।। इस तरह शिखाबीज हूं फट्कार जिसके अन्त में आता है, वह हौं बीज तथा फट्बीज हः का इन तीनों मन्त्रों का उद्धार करना चाहिए । इसके पश्चात् ध्यान करना चाहिए कि भगवान् शंकर का आसन अर्द्धचन्द्राकार है तथा सर्पों के आभूषण से वे भूषित हैं ।। १८ ।। इसके पश्चात् महापाशुपतास्त्र मन्त्र का जप करना चाहिए। यहसमस्त शत्रुओं का मर्दन करने वाला है । इस तरह सकल (कलासहित) प्रासाद मन्त्र का वर्णन किया गया । अब मैं निष्कल मन्त्र को बतला रहा हूँ ।। १९ ।। औषध (ओ) विश्वरूप (ह) ग्यारहवीं मात्रा सूर्यमण्डल (अनुस्वार) हौं इनसे युक्त अर्द्धचन्द्र (अनुनासिक) एवं नाद से युक्त जो हौं मन्त्र है, वह निष्कल प्रासाद मन्त्र है । इसे संज्ञारहित कुटिल भी कहते हैं ।। २० ।। निष्कल प्रासादमन्त्र भोग एवं मोक्ष प्रदान करने वाला है । सदाशिव स्वरूप प्रासादमन्त्र ईशानादि पाँच ब्रह्ममूर्तियों से युक्त होता है । अतः यह पञ्चाङ्ग या साङ्ग कहलाता है । अंशुमान् (अनुस्वार) विश्वरूप (ह) तथा अमृत (अ) इन तीनों के योग से व्यक्त हं बीज शून्यनाम से अभिहित किया जाता है ।। २१ ।। ईशानकोण आदि ब्रह्मात्मक अङ्गों (मुखों) से रहित होने पर उसकी शून्य संज्ञा होती है । ईशानकोण आदि मूर्तियाँ इन बीजों के अमृततरु हैं । बालकों तथा मूर्खों से भी पूजित होने पर विघ्न विनाशक होते है ।। २२ ।। ऊहक (अ) के ऊपर स्थित यदि अंशुमान (अनुस्वार) और विश्वरूप (ह) कलाढ्य कहा गया है । वह सकल के ही अन्तर्गत है । इसमें सदा सकल के ही पूजा तथा अंगन्यास आदि होते हैं ।। २३ ।। यदि नरसिंह (क्ष) कृतान्त (म) के ऊपर चढ़े हों साथ ही तेजस्वी (र) तथा प्राण (य) का भी योग हो नीचे ऊहक (ऊ) हो और ऊपर अंशुमान (अनुस्वार) हो तो (क्ष्म्र्यूं) यह बीजमंत्र बनता है । इसकी समलंकृत संज्ञा है ।। २४ ।। चन्द्रार्द्धकार विन्दु एवं नाद से युक्त ब्रह्मा एवं विष्णु के नामों से विभूषित क्रमशः उदधि (व) एवं नरसिंह (क्ष) को बारह मात्राओं से युक्त करें ।। २५ ।। ऐसा करने पर पहले के ही समान ह्रस्व स्वरों से युक्त बीज ईशानादि

कृतान्तन्तु ततः परम् ॥ २८ ॥ अंशुमानुदकप्राणः सप्तमं वर्णमुद्धृतम् । पद्ममिन्दुसमाक्रान्तं नन्दीशमेकपादधृक् ॥ २९ ॥ प्रथमञ्चान्ततो योज्यं क्षपणं दशबीजकम् । अस्याद्यं तृतीयञ्चैव पञ्चमं सप्तमं तथा ॥ ३० ॥ सद्योजातन्तु नवमं द्वितीयाद्धृदयादिकम् । दशार्णप्रणवं यत्तु फडन्तञ्चास्त्रमुद्धरेत्॥३१॥ नमस्कारयुतान्यत्र ब्रह्माङ्गानि तु नान्यथा। द्वितीयानवमं यावदष्टौ विद्येश्वरा मताः ॥ ३२ ॥ अनन्तेशश्च सूक्ष्मश्च तृतीयश्च शिवोत्तमः । एकमूर्त्त्येकरूपस्तु त्रिमूर्त्तिरपरस्तथा ॥ ३३ ॥ श्रीकण्ठश्च शिखण्डी च अष्टौ विद्येश्वराः स्मृताः । शिखण्डिनोऽप्यनन्तान्तं मन्त्रान्तं मूर्त्तिरीरिताः ॥ ३४ ॥

इत्यादिमहापुराण आग्नेये सकलादिमन्त्रोद्धारकथनं नाम सप्तदशाधिकत्रिशततमोऽध्यायः ॥ ३१७॥

## अष्टादशाधिकत्रिशततमोऽध्यायः

### गणपूजा

ईश्वर उवाच— **विश्वरूपं समुद्धृत्य तेजस्युपरि संस्थितम् । नरसिंहं ततोऽधस्तात् कृतान्तं तदधो न्यसेत् ॥ १ ॥ प्रणवं तदधः कृत्वा ऊहकं तदधः पुनः । अंशुमान् विश्वमन्तस्थं कण्ठोष्ठप्रणवादिकम् ॥ २ ॥ नमोऽन्तःस्याच्चतुर्वर्णो विश्वरूपञ्चकारणम् । सूर्य्यमात्राहतं ब्रह्मण्यङ्गानीहि तु पूर्ववत्॥३॥**

---

ब्रह्म अंग होंगे । एवं दीर्घ स्वरों से युक्त बीजों वाले मन्त्रों का हृदयादि अंगों में न्यास होगा । ओज को अंशुमान (अनुस्वार) से युक्त करके ओम् इस प्रथम वर्ण का उद्धार करना चाहिए ।। २६ ।। अंशुमान और अंशु का योग (आं) यह द्वितीय वर्ण नामक स्वरूप है । अंशुमान (अ) और ईश्वर के योग से बना (ई) यह तृतीय वर्ण उसी के समान है तथा मुक्तिप्रदान करने वाला है ।। २७ ।। अंशु (अनुराग) के द्वारा आक्रान्त ऊहक (ऊं) यह चतुर्थ वर्ण है । अनुस्वार वरुण (व) प्राण (य) और तेजस् (र) इनके योग से बना (व्र्यं) पाँचवाँ बीजाक्षर है । अनुस्वार से युक्त कृतान्त (म्) के योग से बना (मं) यह छठा बीजाक्षर है ।। २८ ।। अंशुमान् (अनुस्वार) उरक (व) तथा प्राण (य) के योग से बनने वाला (व्यं) बीज सातवां उद्धृत बीजाक्षर है । इन्दु से युक्त पद्म (पं) आठवां बीजाक्षर है। एक पाद से युक्त नन्दीश अर्थात् (नं) यह नवाँ बीजाक्षर है ।। २९ ।। अन्त में प्रथम बीज ओं को जोड़ देना चाहिए । इस तरह दस बीजों से युक्त जो मन्त्र है, उसे क्षपण कहा जाता है । इसका पहला तीसरा पाँचवाँ तथा सातवाँ तथा नवाँ बीज क्रमशः ईशान, तत्पुरुष अघोर, वामदेव तथा सद्योजात स्वरूप है। शेष द्वितीया आदि (चतुर्थ, षष्ठ, अष्टम तथा दशम) बीजों का उपयोग हृदयादि अंगन्यास में होता है । प्रणवात्मक दसों बीजों को एक साथ बोलकर अन्त में अस्त्राय फट् कहकर अस्त्र न्यास करना चाहिए ।। ३०-३१ ।। ईशानादि मूर्तियों के अन्त में तो नमः पद लगाकर बोलना चाहिए ऐसे नहीं । द्वितीय से लेकर नवें पर्यन्त आठ बीज मन्त्र आठ विद्येश्वर स्वरूप हैं । ये विद्येश्वर निम्नांकित हैं ।। ३२ ।। अनन्तेश, सूक्ष्म, शिवोत्तम, एकमूर्ति, एकरूप, त्रिमूर्ति, श्रीकण्ठ एवं शिखण्डी ये आठ विद्येश्वर कहे गये हैं । शिखण्डी से लेकर अनन्तेश पर्यन्त विलोमक्रम से बीजमन्त्रों का संबन्ध जोड़ना चाहिए । यह प्रासाद मन्त्र का क्षयनामक भेद है । इस तरह यहाँ मन्त्रमूर्तियों का वर्णन किया गया ।। ३३-३४ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का सकल आदि मन्त्रों के उद्धार वर्णन नामक तीन सौ सत्रहवाँ अध्याय सम्पूर्ण हुआ ॥ ३१७ ॥**

अध्याय ३१८

**भगवान् शंकर ने कहा—** स्कन्द ! जिसके ऊपर तेज (र) विद्यमान हो उस प्रकार के विश्वरूप (ह) को उद्धृत करके नरसिंह (क्ष्) के नीचे कृतान्त (म्) को रखना चाहिए ।। १ ।। और उसके अन्त में प्रणव (ओम्) को लगाना चाहिए । इन सबों के योग से (र् ह् क्ष् मो) बनेगा । उसके पश्चात् ऊहक (ऊ) अंशुमान् (अनुस्वार) विश्व (ह) को संयुक्त करके (हूं) इस बीजमन्त्र को बनायें।

उद्धरेत् प्रणवं पूर्वं प्रस्फुरद्वयमुच्चरेत् । घोरघोरतरं पश्चात् तनु रूपमतः स्मरेत् ॥ ४ ॥ चटशब्दं द्विधा कृत्वा ततः प्रचटमुच्चरेत् । कहेति च द्विधा कार्य्यं वमेति च द्विधा मतम् ॥ ५ ॥ घातयेति द्विधाकृत्य हूं फडन्तं समुच्चरेत् । अघोरास्त्रन्तु नेत्रं स्याद् गायत्री चोच्यतेऽधुना ॥ ६ ॥ तन्महेशाय विद्महे महादेवाय धीमहि तन्नः शिवः प्रचोदयात् । गायत्री सर्वसाधनी ॥ ७ ॥ यात्रायां विजयादौ च यजेत् पूर्वङ्गणं श्रिये । तुर्यांशे तु पुरा क्षेत्रे समन्तादर्कभोजिते॥ ८॥ चतुष्पदं त्रिकोणे तु त्रिदलं कमलं लिखेत् । तत्पृष्ठे पदिकावीथिभागि त्रिदलमश्वयुक्॥ ९॥ वसुदेवसुतैः साब्जैस्त्रिदलैः पादपट्टिका । तदूर्ध्वे वेदिका देया भागमात्रप्रमाणतः ॥ १०॥ द्वारं पद्ममितं कोष्ठादुपद्वारं विवर्णितम् । द्वारोपद्वाररचितं मण्डलं विघ्नसूदनम् ॥ ११॥ आरक्तं कमलं मध्ये बाह्यपद्मानि तद् बहिः। सिता तु वीथिका कार्य्या द्वाराणि तु यथेच्छया ॥ १२ ॥ कर्णिका पीतवर्णा स्यात् केशराणि तथा पुनः। मण्डलं विघ्नमर्दाख्यं मध्ये गणपतिं यजेत् ॥ १३ ॥ नामाद्यं सवराकं स्यादेवाच्छक्रसमन्वितम्। शिरो हतं तत्पुरुषेण ओमाद्यञ्च नमोऽन्तकम् ॥१३॥ गजाख्यं गजशीर्षञ्च गाङ्गेयं गणनायकम् । त्रिरावर्त्तङ्गगनगंङ्गोपतिं पूर्वपङ्क्तिगम् ॥ १४ ॥ विचित्रांशं महाकायं लम्बोष्ठं लम्बकर्णकम् । लम्बोदरं महाभागं विकृतं पार्वतीप्रियम् ॥ १५ ॥ भयावहञ्च भद्रञ्च भगणं भयसूदनम् । द्वादशैते दशपङ्क्तौ देवत्रासञ्च पश्चिमे ॥ १६ ॥ महानादं भास्वरञ्च

---

ये दोनों क्रमशः अन्तस्थ तथा कण्ठोष्ठ कहलाते हैं । इन मन्त्रों रु आदि में प्रणव तथा अन्त में नमः लगाना चाहिए । ऐसा कर देने से ये दोनों मन्त्र चार-चार अक्षरों के बन जाते हैं । जैसे- ओं रहक्ष्मों नमः तथा ओं हूं नमः । इनमें विश्वरूप को कारण माना गया है । उसको बारह मात्राओं (स्वरों) से युक्त करना चाहिए । ये पहले के ही समान पाँच हू स्वार से युक्त मन्त्रों से ईशानादि पाँच मूत्रियों की पूजा करनी चाहिए और दीर्घ स्वर से युक्त मन्त्रों से हृदयादि अंगन्यास करना चाहिए ।। २-३ ।। सर्वप्रथम प्रणव (ह्रीं) लिखकर फिर दो बार स्फुर-स्फुर लिखें । फिर प्रणव जोड़कर सेवा प्रस्फुर-प्रस्फुर लिखें । इसके बाद घोर घोरतरं लिखकर उसके पश्चात् तनुरूप लिखे ।। ४ ।। फिर दो बार चट लिखें फिर दो बार प्रचट लिखें । इसके बाद दो बार कह लिखें उसके बाद दो बार बम लिखें । फिर दो बार बन्ध लिखें ।। ५ ।। उसके बाद दो बार घातय पद लिखकर अन्त में हुं फट् का उच्चारण करे । इसे ही अघोरास्त्र कहते हैं । इसका सम्पूर्ण रूप इस प्रकार है- ह्रीं स्फुर-स्फुर प्रस्फुर-प्रस्फुर घोर-घोरतर तनुरूप चट-चट, प्रचट-प्रचट, कह-कह, बम-बम, बन्ध-बन्ध, घातय-घातय हूं फट् । यह इक्यावन अक्षरों का अघोरास्त्र मन्त्र है ।। ५ ।। इसको नेत्र कहते हैं । अब शिव गायत्री कही जा रही है । महेशाय विद्महे, महादेवाय धीमहि, तन्नः शिवः प्रचोदयात् । यह शिव गायत्री समस्त कार्यों को सिद्ध करने वाली हैं ।। ६-७ ।। यात्रा में तथा विजय आदि की प्राप्ति के कार्य में श्री प्राप्ति के लिए पहले गणों की पूजा करनी चाहिए । सर्वप्रथम चौकोर क्षेत्र को सब ओर से बारह-बारह कोष्ठों में विभाजित करें ।। ८ ।। जब एक सौ चौवालिस पदों का चौकोर मण्डल बन जाए तो उसके बीच के चार पदों में त्रिकोण बनाकर उसके ऊपर तीन दलों का कमल बनाये । उस त्रिदल कमल को अश्व से युक्त होना चाहिए ।। ९ ।। उसके पश्चात् वसुदेव के तीन पुत्रों (वासुदेव, संकर्षण और गद) से समलंकृत तीन दल वाले कमल दलों से पादपट्टिका बनायें । उसके ऊपर भागमात्र प्रमाण से एक वेदी बनायें ।। १० ।। उसके पूर्व आदि दिशाओं में द्वार तथा कोणों में उपद्वार से उसे सुशोभित करें । इस तरह द्वारों एवं उपद्वारों से सुशोभित मण्डल विघ्नों का विनाशक होता है ।। ११ ।। उसके मध्य कमल तथा बाह्य कमलों को रक्त वर्ण का होना चाहिए । मण्डल की विधि को वर्ण का बनाना चाहिए और द्वारों का वर्ण अपनी इच्छा के अनुसार करना चाहिए ।। १२ ।। उषा कमलों की कर्णिका तथा केसर का रंग पीला होना चाहिए। यह विघ्नमर्दन नामक मण्डल है इसके मध्य में गणपति की पूजा करनी चाहिए ।। १३ ।। नाम के आदि अक्षर में अनुस्वार लगाकर उसके आदि में ओम् तथा अन्त में नमः पद लगाकर जैसे- ओं गं गणपतये नमः । ह्रस्वान्त बीजमन्त्रों से युक्त ईशान तत्पुरुषादि मन्त्रों से पूजन करके दीर्घान्त वीज मन्त्रों से न्यास करना चाहिए ।। १३ ।। इस मण्डल की पूर्व दिशा में दस दलों में गज, गजशीर्ष, गांगेय, गणनायक, गगनग तथा गोपति इन नामों को लिखें, इनमें से अन्तिम दो नामों की तीन आवृत्तियाँ होंगी ।। १४ ।। इस तरह से ये दस नाम से दस कोष्ठ भर जायेंगे । दो कोष्ठ खाली रहेंगे जो उत्तर तथा दक्षिण के कोष्ठ के नामों से भरेंगे ।।) इसके पश्चात् मण्डल की दक्षिण दिशा की पंक्तियों में इन बारह नामों को लिखें- वे नाम हैं- विचित्रांश, महाकाय, लम्बोष्ठ, लम्बकर्ण, लम्बोदर,

विघ्नराजं गणाधिपम् । उद्धटस्वानभक्ष्णडौ महाशुण्डञ्च भीमकम् ॥ १७॥ मन्मथं मधुसूदञ्च सुन्दरं भावपुष्टकम् । सौम्ये ब्रह्मेश्वरं मनोवृत्तिञ्च संलयम् ॥ १८॥ लयं नृत्यप्रियं लौल्यं विकर्णं वत्सलं तथा । कृतान्तं कालदण्डञ्च यजेत् कुम्भञ्च पूर्ववत् ॥ १९ ॥ अयुतञ्च जपेन् मन्त्रं होमयेत् तु दशांशतः। शेषाणान्तु दशाहुत्या जपाद्धोमन्तुकारयेत्॥२०॥ पूर्णां दत्त्वाभिषेकन्तु कुर्य्यात् सर्वन्तु सिध्यति। भूगोऽश्वगजवस्त्राद्यैर्गुरुपूजाञ्चरेन् नरः॥२१॥

इत्यादिमहापुराण आग्नेये गणपूजाकथनं नामाष्टादशाधिकत्रिशततमोऽध्यायः ॥ ३१८॥

## ऊनविंशत्यधिकत्रिशततमोऽध्यायः

## वागीश्वरीपूजा

ईश्वर उवाच– वागीश्वरीपूजनञ्च प्रवदामि समण्डलम्। ऊहकं कालसंयुक्तं चन्द्रं वर्णसमायुतम् ॥ १ ॥ निषाद ईश्वरं कार्य्यं मनुमाचन्द्रसूर्य्यवत्। अक्षरत्र हि देयं स्यात ध्यायेत् कुन्देन्दुसन्निभाम् ॥ २ ॥ पञ्चाशद् वर्णमालान्तु मुक्तास्त्रग्दामभूषिताम् । वरदाभयाक्षसूत्र पुस्तकाढ्यां त्रिलोचनाम्॥३॥ लक्षं जपेन् मस्तकान्तं स्कन्धान्तं वर्णमालिकाम् । अकारादिक्षकरान्तां विशन्तीं मानवत् स्मरेत् ॥ ४ ॥ कुर्य्याद् गुरुश्च दीक्षार्थं मन्त्रग्राहे तु मण्डलम्। सूर्य्याग्रमिन्दुभक्तन्तु भागाभ्यां कमलं हितम् ॥ ५ ॥ वीथिका पदिका कार्य्या पद्मान्यष्टौ चतुष्पदे । वीथिका पदिका बाह्ये द्वाराणि द्विपदानि तु ॥६॥

---

महाभाग, विकृत, पार्वतीप्रिय, भयावह, भद्र, भगण तथा भयसूदन। इसके पश्चात् पश्चिम दिशा में इन नामों को लिखें- देवत्रास, महानाद, भास्वर, विघ्नराज, गणाधिप, उद्धटस्वरन, उद्धटस्वन, महाशुण्ड, भीम, मन्मथ, मधुसूदन, सुन्दर तथा भावपुष्ट ।। १५-१७।। इसके पश्चात् उत्तर दिशा में- ब्रह्मेश्वर, ब्राह्मनोवृत्ति, संलय, लय, नृत्यप्रिय, लोल, विकर्ण, वत्सल, कृतान्त, कालदण्ड तथा कुम्भ का उल्लेख करके पहले के ही समान उनका पूजन करना चाहिए ।। १८-१९ ।। इसके पश्चात् उपर्युक्त मन्त्र का दस हजार जप करें और उसका दशांश होम करना चाहिए । शेष नाममन्त्रों का दस-दस बार जप करके उसके लिए एक-एक बार आहुति देनी चाहिए ।। २० ।। इसके पश्चात् पूर्णाहुति देकर अभिषेक करना चाहिए ऐसा करने वालों के समस्त मनोरथ सिद्ध होते हैं । इसके पश्चात् साधक भूमि, गौ, अश्व, गज तथा वस्त्र प्रदान करके गुरु की पूजा करें ।। २१ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का गण पूजा वर्णन नामक तीन सौ अठारहवाँ अध्याय सम्पूर्ण हुआ ॥ ३१८ ॥**

**भगवान् शंकर ने कहा–** अब मैं मण्डल के साथ वागीश्वरी पूजन का वर्णन करता हूँ । ऊहक (ऊ) को काल (घ) से संयुक्त करके उसका चन्द्रमार्ग (अनुस्वार) से संयोग करने पर (घूं) यह मन्त्र बनता है ।। १ ।। निषाद पर ईश्वर (ई) का योग करके उसे विन्दु तथा विसर्ग से युक्त करें । (ईः) इस तरह ये दोनों मन्त्र चन्द्रसूर्य के तुल्य हैं । इन मन्त्रों को सब को नहीं बतलाना चाहिए। इसके बाद वागीश्वरी देवी का ध्यान करना चाहिए । देवी कुन्दपुष्प तथा चन्द्रमा के समान श्वेतवर्ण की हैं ।। २ ।। वे पचास वर्णों रूपी मोती की माला से समलंकृत हैं । वे वरदमुद्रा, अभयमुद्रा से अक्षमाला तथा पुस्तक को धारण करती हैं । उनके तीन नेत्र हैं ।। ३ ।। इस प्रकार से ध्यान के पश्चात् देवी के एकाक्षर मन्त्र का जप करना चाहिए । वे पैर से लेकर मस्तक पर्यन्त अथवा स्कन्ध पर्यन्त ककार से लेकर क्षकार पर्यन्त वर्णों की माला को धारण करती हैं ।। ४ ।। मन्त्र का उपदेश देने के लिए आचार्य एक मण्डल का निर्माण करे । उसे सूर्याग्र होना चाहिए तथा इन्दु शोभित होना चाहिए । दो भागों में कमल बनाना चाहिए ।। ५ ।। वह कमल साधक के लिए हितकारी होता है फिर वीथी और पापों का निर्माण करना चाहिए । चतुष्पद में आठ कमलों का निर्माण करना चाहिए । उनके बाहरी भाग में वीथिका और पदिका का निर्माण करना चाहिए । दो दो पायों से द्वारों को बनाना चाहिए ।। ६ ।। इसी तरह उपद्वारों को भी बनाना चाहिए कोणों पर दो पट्टिका

उपद्वाराणि तद्वच्च कोणबन्धं द्विपट्टिकम् । सितानि नव पद्मानि कर्णिका कनकप्रभा॥ ७॥ केशराणि विचित्राणि कोणान् रक्तेन पूरयेत् । व्योमरेखान्तरं कृष्णं द्वाराणीन्द्रेभमानतः ॥ ८ ॥ मध्ये सरस्वती पद्मे वागीशी पूर्वपद्मके । हृल्लेखा चित्रवागीशी गायत्री विश्वरूपया ॥ ९॥ शाङ्करी मतिधृतिश्च पूर्वाद्या ह्रीं स्वबीजकाः । ध्येया सरस्वतीवच्च कपिलाज्येन होमकः । संस्कृतप्राकृतकविः काव्यशास्त्रादिविद् भवेत् ॥ १० ॥

इत्यादिमहापुराण आग्नेये वागीश्वरीपूजाकथनं नामोनविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३१९ ॥

## विंशत्यधिकत्रिशततमोऽध्यायः

### मण्डलानि

ईश्वर उवाच– **सर्वतो भद्रकान्यष्टमण्डलानि वदे गुह ! । शंकुना साधयेत् प्राचीमिष्टां विषुवे सुधीः ॥ १ ॥ चित्रास्वात्यन्तरेणाऽथ दृष्टसूत्रेण वा पुनः । पूर्वापरायतं सूत्रमास्फाल्य मध्यतोऽङ्कयेत् ॥ २ ॥ कोटिद्वयन्तु तन्मध्यादङ्कयेद् दक्षिणोत्तरम् । मत्स्यद्वयं प्रकर्त्तव्यं स्फालयेद् दक्षिणोत्तरम्॥३॥ शतक्षेत्रार्द्धमानेन कोणसम्पातमादिशेत् । एवं सूत्रचतुष्कस्य फालनाच्चतुरस्रकम् ॥ ४ ॥ जायते तत्र कर्त्तव्यं भद्रस्वेदकरं शुभम् । वसुभक्तेन्दु द्विपदे क्षेत्रवीथी च भागिका ॥ ५ ॥ द्वारं द्विपदिकं पद्मामानाद् वै सकपोलकम् । कोणबन्धविचित्रन्तु द्विपदं तत्र वर्त्तयेत् ॥ ६ ॥ शुक्लं पद्मं कर्णिका तु पीता चित्रन्तु केसरम् । रक्ता वीथी तत्र कल्प्या द्वारं लोकेशरूपकम् ॥ ७ ॥ रक्तकोणं विधौ नित्ये नैमित्तिकेऽब्जकं शृणु । असंसक्तन्तु संसक्तं**

---

को बनाना चाहिए । नव उजले कमलों को बनाना चाहिए, कर्णिका को सुवर्ण के समान पीला बनाना चाहिए ।। ७ ।। केसरों को अनेक रंगों से रंगकर कोणों को लाल रंग से रंगना चाहिए । व्योम रेखान्तर को काला बनाना चाहिए । द्वारों का मान इन्द्र के हाथी के मान के बराबर रखना चाहिए ।। ८ ।। कमल के मध्य सरस्वती की, पूर्वकमल में वागीश्वरी की, फिर अग्नि आदि कोणों के क्रम से हृल्लेखा, चित्रवागीश्वरी, गायत्री, विश्वरूपा, शांकरी, मति और धृति की स्थापना करके उनका पूजन करें । सबों के अपने वीजमन्त्रों से पहले ही जोड़ना चाहिए ।। ९।। उनका सरस्वती के ही समान ध्यान करना चाहिए और कपिला गौ के घी से होम करना चाहिए । ऐसा करने वाला संस्कृत तथा प्राकृत भाषाओं का कवि तथा काव्यों खं शास्त्रों का वेत्ता हो जाता है ।। १० ।।

**इस तरह से आदिमहापुराण अग्निपुराण का वागीश्वरीपूजन वर्णन नामक तीन सौ उन्नीसवाँ अध्याय सम्पूर्ण हुआ ॥ ३१९ ॥**

**भगवान् शंकर ने कहा–** हे गुह ! मैं अब सर्वतोभद्र आदि आठ मण्डलों का वर्णन करता हूँ । पहले शंकु (कील) से प्राची दिशा का साधन करें प्राची के सिद्ध हो जाने पर विद्वान् पुरुष विषुव काल में चित्रा और स्वाती नक्षत्र के अन्तर से अथवा प्रत्यक्ष सूत को लेकर पूर्व से पश्चिम तक उसे फैलाकर मध्य में दो कोटियों को अंकित करें । उसके बीच से उत्तर से दक्षिण की ओर दो रेखाओं को खींचे ।। २ ।। दो मत्स्यों का निर्माण कर उन्हें दक्षिण से उत्तर की ओर आस्फालित करे ।। ३ ।। शतपद क्षेत्र के आधे मान से कोण सम्पात करें । इस तरह चार बार सूत्र के आस्फालन करने से एक चौकोर रेखा बन जाती है ।। ४ ।। उसमें चार हाथ का शुभ भद्रमण्डल बनाना चाहिए । आठ पदों में सब ओर से विभक्त होने से चौसठ पदों में से बीस पद वाले क्षेत्र में बाहर की ओर एक वीथी का निर्माण करना चाहिए ।। ५ ।। कमल के मान से दो पदों का द्वार बनाना चाहिए । द्वार कपोल युक्त होना चाहिए । कोण बन्ध के कारण उसकी शोभा विचित्र हो, ऐसा द्विपद का द्वार निर्माण में उपयोग करना चाहिए ।। ६ ।। कमल शुक्ल वर्ण का होना चाहिए, कर्णिका पीतवर्ण की होनी चाहिए, केसर चित्रवर्ण का होना चाहिए । वीथी को रक्तवर्ण का बनाना चाहिए, द्वारलोकपाल स्वरूप होता है ।। ७ ।। नित्य-नैमित्तिक विधियों में कोणों का रंग लाल होना चाहिए । अब कमल का वर्णन सुनो । कमल के दो-दो भेद होते हैं संसक्त तथा असंसक्त । ये दोनों प्रकार

द्विधाब्जं भुक्तिमुक्तिकृत् ॥ ८॥ असंसक्तं मुमुक्षूणां संसक्तं तत् त्रिधा पृथक् । बालो युवा च वृद्धश्च नामतः फलसिद्धिदाः ॥ ९ ॥ पद्मक्षेत्रे तु सूत्राणि दिग्विदिक्षु विनिक्षिपेत् । वृत्तानि पञ्चकल्पानि पद्मक्षेत्रसमानि तु ॥ १० ॥ प्रथमे कर्णिका तत्र पुष्करैर्नवभिर्युता । केसराणि चतुर्विंश द्वितीयेऽथ तृतीयके ॥ ११ ॥ दलसन्धिर्गजकुम्भ निभान्तर्यद् दलाग्रकम् । पञ्चमे व्योमरूपन्तु संसक्तं कमलं स्मृतम् ॥ १२ ॥ असंसक्ते दलाग्रे तु दिग्भागैर्विस्तराद् भजेत् । भागद्वयपरित्यागाद् वस्वंशैर्वर्त्तयेद्दलम्॥ १३॥ सन्धिविस्तारसूत्रेण तन्मानादङ्कयेद् दलम् । सव्यासव्यक्रमेणैव वृद्धमेतद् भवेत् तथा ॥ १४॥ अथ वा सन्धिमध्यात् तु भ्रामयेदर्द्धचन्द्रवत् । सन्धिद्वयाग्रसूत्रं वा बालपद्मं तथा भवेत् ॥ १५ ॥ सन्धिसूत्रार्द्धमानेन पृष्ठतः परिवर्त्तयेत् । तीक्ष्णाग्रन्तु सुवातेन कमलं भुक्तिमुक्तिदम् ॥ १६ ॥ मुक्तौ वृद्धं च वश्यादौ बालं पद्मं समानकम् । नवनाभं नवहस्तं भागैर्मन्त्रात्मकैश्च तत् ॥ १७॥ मध्येऽब्जे पट्टिकाबीथी द्वारेणाब्जस्य मानतः । कण्ठोपकण्ठमुक्तानि तद् बाह्ये वीथिका मता ॥ १८ ॥ पञ्चभागान्विता सा तु समन्ताद् दशभागिका। दिग्विदिक्ष्वष्ट पद्मानि द्वारपदनं सवीथिकम् ॥ १९ ॥ तद् बाह्ये पञ्च पदिका वीथिका यत्र भूषिता । पद्मवद् द्वारकण्ठन्तु पदिकञ्चौष्ठकण्ठकम् ॥ २० ॥ कपोलं पदिकं कार्य्यं दिक्षु द्वारत्रयं स्फुटम् । कोणबन्धं त्रिपट्टन्तु द्विपट्टं वज्रवद् भवेत् ॥ २१ ॥ मध्यन्तु कमलं शुक्लं पीतं रक्तञ्च नीलकम् । पीतशुक्लञ्च धूम्रञ्च रक्तं पीतञ्च मुक्तिदम् ॥ २२ ॥ पूर्वादौ कमलान्यष्ट शिवविष्ण्वादिकं यजेत् । प्रासादमध्यतोऽभ्यर्च्च्य शक्रादीनब्जकादिषु॥ २३॥ अस्त्राणि बाह्यवीथ्यान्तु विष्ण्वादीनश्वमेधभाक् । पवित्रारोपणादौ च महामण्डलमालिखेत् ॥ २४ ॥ अष्टहस्तं पुरा क्षेत्रं

---

के कमल भोग तथा मोक्ष प्रदान करने वाले होते हैं ।। ८ ।। मुमुक्षु जीवों के लिए असंसक्त कमल उपयोगी होता है । संसक्त कमल तीन तरह का होता है । बाल, युवा तथा वृद्ध । वे अपने नाम के अनुसार फल सिद्धि प्रदान करने वाले होते हैं ।। ९ ।। कमल के क्षेत्र में दिशा तथा कोणदिशा की ओर सूत चालन करें तथा कमल के समान पाँच वृत्त का निर्माण करे । इन सबों का क्षेत्र एक समान होगा ।। १० ।। प्रथम वृत्त में नव पुष्करों से युक्त कर्णिका होगी, द्वितीय वृत्त में चौबीस केसर होंगे, तीसरे दलों की सन्धि होगी जिसका आकार हाथियों के कुम्भसील के समान होगा । चौथे वृत्त में दलों के अग्रभाग होंगे । पाँचवें वृत्त में आकाश मात्र शून्य होगा । इसे ही संसक्त कमल कहा गया है ।। ११-१२ ।। असंसक्त कमल में दलाग्रभाग पर जो दिशाओं का भाग है उनके विस्तार के अनुसार दो भागों को छोड़कर आठ भागों से दल बनाना चाहिए ।। १३ ।। सन्धि विस्तार सूत्र से उसके मान के अनुसार दल की रचना करनी चाहिए । इसमें बायें से दाहिनी ओर के क्रम से बनाने के काम में लगाना चाहिए । इस तरह से यह वृद्ध कमल बनता है ।। १४ ।। अथवा संधि के मध्य से सूत को अर्द्धचन्द्राकार घुमायें अथवा दो सन्धियों के अग्रवर्ती सूत को घुमाना चाहिए। ऐसा करने से बालपद्म बनता है ।। १५ ।। सन्धिसूत्र के अग्रभाग से पृष्ठ भाग की ओर सूत को घुमाना चाहिए ऐसा करने से तीक्ष्ण बल, अग्रभाग वाला युवा पद्म बनता है । यह पद्म भोग तथा मोक्ष प्रदान करने वाला है ।। १६ ।। हे सम (छह) मुख वाले स्कन्द मुक्ति के कार्य में वृद्ध कमल का प्रयोग होता है । वशीकरण आदि के कार्यों में बालपद्म का प्रयोग करना चाहिए । नवनाभ कमल चक्र नव हाथ का होता है। इसमें मन्त्रात्मक नव भाग होते हैं ।। १७ ।। इस चक्र के मध्य में कमल होता है । उस कमल के ही प्रमाण तथा द्वार तथा कण्ठ एवं उपकण्ठ बतलाये गये हैं। उसके बाहर के भाग में वीथी बतलायी गयी है ।। १८ ।। पाँच भाग में तो वीथी होती है और अपने चारों ओर दस भाग का स्थान लिए रहता है । उसकी दिशाओं और कोनों में आठ कमल होते हैं द्वारपद्म वीथी के साथ होता है ।। १९ ।। उसके बाहर पाँच भागों वाली वीथी होती है । वह लता आदि से विभूषित होती है । द्वार का कण्ठ कमल के समान होता है द्वार के ओष्ठ एवं कण्ठ एक भाग में होते हैं ।। २० ।। कपोल एक भाग में बनाना चाहिए दिशाओं में तीन द्वारों को स्पष्ट रूप से होना चाहिए । कोणबन्ध तीन पट्टियों, दो पट्टों वाला एवं एक वज्र से युक्त होना चाहिए।।२१।। मध्य कमल श्वेत वर्ण का होता है और श्वेत कमल पूर्वादि दिशाओं में क्रम से क्रमशः पीला, रक्त एवं नील पीत, शुक्ल, धूम्र, रक्त तथा पीत वर्ण का होना चाहिए । यह कमल चक्र भोग तथा मोक्ष प्रदान करने वाला होता है ।। २२ ।। पूर्व आदि दिशाओं में आठ कमलों की तथा शिव विष्णु आदि की अर्चना करनी चाहिए । विष्णु आदि का पूजन प्रासाद के मध्यवर्ती कमल में करने के पश्चात्

रसपक्षैर्विवर्त्तयेत् । द्विपदं कमलं मध्ये वीथिका पदिका ततः ॥ २५ ॥ दिग्विदिक्षु ततोऽष्टौ च नीलाब्जानि विवर्त्तयेत् । मध्यपद्मप्रमाणेन त्रिंशत् पद्मानि तानि तु ॥ २६ ॥ दलसन्धिविहीनानि नीलेन्दीवराणि च । तत् पृष्ठे पदिका वीथी स्वस्तिकानि तदूर्ध्वतः ॥ २७ ॥ द्विपदानि तथा चाष्टौ कृतिभागकृतानि तु । वर्त्तयेत् स्वस्तिकांस्तत्र वीथिका पूर्ववद् बहिः ॥ २८ ॥ द्वाराणि कमलं यद्वदुपकण्ठयुतानि तु । रक्तं कोणं पीतवीथी नीलं पद्मञ्च मण्डले ॥ २९ ॥ स्वस्तिकादि विचित्रञ्च सर्वकामप्रदं गुह ! । पञ्चाब्जं पञ्चहस्तं स्यात् समन्ताद् दशभाजितम् ॥ ३० ॥ द्विपदं कमलं वीथी पट्टिका दिक्षु पङ्कजम् । चतुष्कं पृष्ठतो वीथी पदिका द्विपदान्यथ ॥ ३१ ॥ कण्ठौपकण्ठयुक्तानि द्वाराण्यब्जन्तु मध्यतः । पञ्चाब्जमण्डले ह्यस्मिन् सितं पीतञ्च पूर्वकम्॥३२॥ वैदूर्य्याभं दक्षिणाब्जं कुन्दाभं वारुणं कजम। उत्तराब्जन्तु शङ्खाभमन्यत् सर्वं विचित्रकम् ॥ ३३ ॥ सर्वकामप्रदं वक्ष्ये दशहस्तन्तु मण्डलम् । विकारभक्तन्तुर्य्यास्त्रं द्वारन्तु द्विपदं भवेत् ॥ ३४ ॥ मध्ये पद्मं पूर्ववच्च विघ्नध्वंसं वदाम्यथ । चतुर्हस्तं पुरं कृत्वा वृत्तञ्चैव करद्वयम् ॥ ३५ ॥ वीथिका हस्तमात्रन्तु स्वस्तिकैर्बहुभिर्वृता । हस्तमात्राणि द्वाराणि दिक्षु वृत्तं सपद्मकम् ॥ ३६ ॥ पद्मानि पञ्च शुक्लानि मध्ये पूज्यश्च निष्कलः । हृदयादीनि पूर्वादौ विदिक्ष्वस्त्राणि वै यजेत् ॥ ३७ ॥ प्राग्वच्च पञ्च ब्रह्माणि बुद्ध्याधारमतो वदे । शतभागे तिथिभागे पद्मं लिङ्गाष्टकं दिशि ॥ ३८ ॥ मेखलाभागसंयुक्तं कण्ठं द्विपदिकं भवेत् । आचार्य्यो बुद्धिमाश्रित्य कल्पयेच्च लतादिकम् ॥ ३९ ॥ चतुःषट्पञ्चमाष्टादि

पूर्वादि दिशाओं के कमलों में इन्द्र आदि की पूजा करनी चाहिए ।। २३ ।। अस्त्रों की पूजा बाह्य वीथी में करनी चाहिए । वहाँ पर विष्णु आदि की पूजा करके पुरुष अश्वमेध आदि यज्ञों का फल प्राप्त करता है । पवित्रारोपण आदि कर्मों में महामण्डल की रचना करनी चाहिए ।। २४ ।। आठ लम्बे क्षेत्र का छब्बीस से विभाजन करना चाहिए । मध्यवर्ती दो पदों में कमल का निर्माण करना चाहिए । उसके बाद एक पद की वीथी होनी चाहिए ।। २५ ।। उसके पश्चात् दिशाओं तथा विदिशाओं में आठ नील कमलों का निर्माण करना चाहिए । मध्यवर्ती कमल के प्रमाण वाले तीस कमलों को उसके मध्य में होना चाहिए ।। २६ ।। इन सभी कमलों को दल तथा सन्धि से रहित तथा नील इन्दीवर संज्ञक होना चाहिए । उसके पीछे एक पद में वीथी होना चाहिए, उसके ऊपर स्वस्तिक चिह्नों को होना चाहिए ।। २७ ।। वीथी के ऊपरी भाग या बाह्य भाग में दो-दो पदों के विभक्त स्थान में सब मिलाकर आठ स्वस्तिकों को लिखना चाहिए । उसके पहले के ही समान वीथी होनी चाहिए ।। २८ ।। द्वार, कमल तथा उपकण्ठ सब कुछ पूर्ववत् होना चाहिए । मण्डल के कोण का रंग लाल, वीथी का पीला तथा मध्य कमल का वर्ण नीला होना चाहिए ।। २९ ।। हे गुह ! विचित्र रंगों से युक्त स्वस्ति कादि मण्डल सम्पूर्ण कामनाओं को पूर्ण करने वाले हैं ।। २९ ।। पञ्चाब्ज मण्डल पाँच हाथ के क्षेत्र को सब ओर से दस भागों में विभाजित करके बनाया जाता है ।।३०।। इसमें दो पदों का कमल, उसके बाह्यभाग में वीथी, उसके पश्चात् पट्टिका तदनन्तर चारों दिशाओं में चार कमल होते हैं । उन चारों कमलों के पीछे एक पद अथवा दो पदों में बीथी बनानी चाहिए।।३१।। द्वारों को कण्ठ तथा उपकण्ठ से युक्त होना चाहिए । बीच में कमल का निर्माण कराना चाहिए । इस पञ्चाब्ज मण्डल में पूर्ववर्ती कमल उजला और पीला होना चाहिए ।। ३२।। दक्षिण दिग्वर्ती कमल वैदूर्यमणि के रंग का होना चाहिए । पश्चिम दिग्वर्ती कमल कुन्द के समान श्वेत वर्ण का तथा उत्तरदिग्वर्ती कमल शंख के समान उज्ज्वल वर्ण का होना चाहिए । अवशिष्ट समस्त कमलों को विचित्र वर्ण का होना चाहिए ।। ३३ ।। अब मैं समस्त कामनाओं को पूर्ण करने वाले दस हाथ के मण्डल का वर्णन करता हूँ । दस हाथ के क्षेत्र को चारों ओर से चौबीस से विभक्त करके चौकोर क्षेत्र बना लेना चाहिए । इसमें द्वार दो पदों का होता है ।। ३४ ।। इसमें भी पूर्ववर्ती चक्रों के समान मध्यवर्ती पद्म का निर्माण करना चाहिए । अब मैं विघ्नविध्वंस चक्र का वर्णन करता हूँ । इसमें चार हाथ का पुट बनाकर उसके मध्य भाग में दो हाथ के घेरे में वृत्त बनाना चाहिए ।। ३५ ।। एक हाथ की वीथी होनी चाहिए जो अनेक स्वस्तिक चिह्नों से घिरा हुआ हो। एक-एक हाथ के चारों दिशाओं में घिरे होंगे । चारों दिशाओं में वृत्त होंगे जिनमें कमल अंकित होगा ।। ३६ ।। इस प्रकार चक्र में पाँच कमल होंगे उनका वर्णशुक्ल होगा । मध्य के कमल में निष्कल परमात्मा का पूजन होगा। पूर्वादि दिशाओं में हृदय आदि अंगों की तथा विदिशाओं में अस्त्रों की पूजा करनी चाहिए ।। ३७ ।। पहले के ही समान इस चक्र में सद्योजात आदि पाँच ब्रह्ममय मुखों का पूजन करना चाहिए ।

खाछिखाद्यादि मण्डलम्। खाक्षीन्दुसूर्य्यगं सर्वं खाक्षि क्षैवेन्दुवर्णनात् ॥ ४० ॥ चत्वारिंशदधिकानि चतुर्दशशतानि हि । मण्डलानि हरेः शम्भोर्देव्याः सूर्य्यस्य सन्ति च ॥ ४१ ॥ दशसप्तविभक्ते तु लतालिङ्गोद्भवं शृणु । दिक्षु पञ्चत्रयञ्चैकं त्रयं पञ्च च लोमयेत् ॥ ४२ ॥ ऊर्ध्वगे द्विपदे लिङ्गमन्दिरं पार्श्वकोष्ठयोः । मध्येन द्विपदं पद्ममथ चैकञ्च पङ्कजम् ॥ ४३ ॥ लिङ्गस्य पार्श्वयोर्भद्रे पदद्वारमलोपनात् । तत्पार्श्वशोभाः षड् लोप्यलताः शेषास्तथा हरेः ॥ ४४ ॥ ऊर्ध्वं द्विपदिकं लोप्य हरेर्भद्राष्टकं स्मृतम् । रश्मिमालासमायुक्तं वेदलोपाच्च शोभिकम् ॥ ४५ ॥ पञ्चविंशतिकं पद्मं ततः पीङ्गमपीङ्गकम् । द्वयं द्वयं रक्षयित्वा उपशोभास्तथाष्ट च ॥ ४६ ॥ देव्यादिख्यापकं भद्रं बृहन्मध्ये परं लघु । मध्ये नवपदं पद्मं कोणे भद्रचतुष्टयम्॥४७॥ त्रयोदशपदं शेषं बुद्ध्यधारन्तु मण्डलम् । शतपदं षष्ट्यधिकं बुद्ध्याधारं हरादिषु ॥ ४८ ॥

इत्यादिमहापुराण आग्नेये मण्डलकथनं नाम विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२० ॥

## एकविंशत्यधिकत्रिशततमोऽध्यायः

## अघोरास्त्रादिशान्तिकल्पः

ईश्वर उवाच– **अस्त्रयागः पुरा कार्य्यः सर्वकर्मसु सिद्धिदः । मध्ये पूज्यं शिवाद्यस्त्रं वज्रादीन् पूर्वतः क्रमात् ॥ १ ॥ पञ्चमुखं दशकरं रणादौ**

अब मैं बुद्ध्याधार चक्र का वर्णन करता हूँ । सौ पदों के क्षेत्र में से मध्यवर्ती पन्द्रह पदों में एक कमल बनाना चाहिए । इसके पश्चात् आठ दिशाओं में आठ कमल बनाना चाहिए ।। ३८ ।। मेखलाभाग युक्त कण्ठ की रचना दो पदों में करनी चाहिए । आचार्य को चाहिए कि वे अपनी बुद्धि के अनुसार लता आदि का निर्माण करें ।। ३९ ।। चार, छह, पाँच तथा आठ आदि कमलों से युक्त मण्डल होते हैं । बीस तीस आदि कमलों से युक्त मण्डल होते हैं। सम्पूर्ण मण्डल ख (०) अक्षि (२) इन्दु (९) सूर्य (१२) अर्थात् १२१२० कमलों से युक्त होते हैं। १२० कमलों के भी मण्डल का वर्णन किया गया है ।। ४० ।। श्रीहरि, भगवान् शंकर, देवी तथा सूर्य के १४४० मण्डल होते हैं ।। ४१।। सत्रह पदों का सत्रह से विभाग करने पर २९ पदों का बनने वाले मण्डल में जिस प्रकार से लतालिङ्ग आदि का अभाव होता है उसे आप सुनें । प्रत्येक दिशा में पाँच, एक, तीन, तथा पाँच पदों को मिटा देना चाहिए ।। ४२ ।। ऊपर के दो पदों से लिङ्ग तथा पार्श्ववर्ती दो-दो कोष्ठकों से मन्दिर बनेगा । मध्यवर्ती दो पदों का कमल होगा । उसके पश्चात् फिर एक कमल होगा ।। ४३ ।। लिङ्ग के पार्श्व भाग में दो भद्र बनेंगे । इसके पश्चात् एक पद का द्वार होगा उसको मिटाया नहीं जायेगा । उस द्वार के दोनों पार्श्वभाग में छह पदों को मिटाने से द्वार शोभा बनेगी । शेष पदों में लता श्रीहरि के लिए बनेगी ।। ४४ ।। ऊपर के दो पदों को मिटाने से श्रीहरि के लिए भद्राष्टक बनेंगे । फिर चार पदों को मिटाने से रश्मि मालाओं से युक्त शोभा स्थान का निर्माण होगा ।। ४५ ।। पच्चीस पदों से कमल, फिर पीङ्ग, अपीङ्ग, फिर दो-दो पदों को मिलाकर आठ उपशोभाएँ बनेंगी ।। ४६ ।। देवी आदि का सूचक मण्डल बीच में विस्तृत तथा प्रान्त भाग में लघु बनता है । बीच में नव पदों का कमल बनता है तथा चार कोणों में चार भद्रमण्डल बनते हैं ।। ४७ ।। शेष तेरह पदों का बुद्ध्याधार मण्डल होता है। इसमें एक सौ साठ पद होते हैं । बुद्ध्याधार मण्डल भगवान् शिव आदि की आराधना के लिए बनाया जाता है ।। ४८ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का मण्डल वर्णन नामक तीन सौ बीसवाँ अध्याय सम्पूर्ण हुआ ॥ ३२० ॥**



**भगवान् शंकर ने कहा–** स्कन्द ! पहले समस्त कर्मों में अस्त्र याग करना चाहिए । इससे सिद्धि की प्राप्ति होती है । मध्य में शिव आदि के अस्त्रों की पूजा करनी चाहिए । फिर पूर्वादि

पूजितं जये। ग्रहपूजा रविर्मध्ये पूर्वाद्याः सोमकादयः ॥ २ ॥ सर्व एकादशस्थास्तु ग्रहाः स्युः ग्रहपूजनात् । अस्त्रशान्तिं प्रवक्ष्यामि सर्वोत्पातविनाशिनीम्॥३॥ ग्रहरोगादिशमनीं मारीशत्रुविमर्दनीम् । विनायकोपतप्तिघ्नमघोरास्त्रं जपेन्नरः ॥ ४ ॥ लक्षं ग्रहादिनाशः स्यादुत्पाते तिलहोमनम् । दिव्ये लक्षं तदर्द्धेन व्योमजोत्पातनाशनम्॥ ५॥ घृतेन लक्षपातेन उत्पाते भूमिजे हितम् । घृतगुग्गुलुहोमे च सर्वोत्पातादि मर्दनम् ॥ ६॥ दूर्वाक्षताज्यहोमेन व्याधयोऽथ घृतेन च । सहस्रेण तु दुःस्वप्ना विनश्यन्ति न संशयः॥ ७॥ अयुताद् ग्रहदोषघ्नो यवघृतविमिश्रितात् । विनायकार्त्तिशमनमयुतेन घृतस्य च ॥ ८॥ भूतवेतालशान्तिस्तु गुग्गुलोरयुतेन च । महावृक्षस्य भङ्गे तु व्यालकङ्के गृहे स्थिते ॥ ९॥ आरण्यानां प्रवेशे च पूर्वाज्याक्षतहावनात् । उल्कापाते भूमिकम्पे तिलाज्येनाहुताच्छिवम्॥१०॥ रक्तस्रावे तु वृक्षाणामयुताद् गुग्गुलोः शिवम् । अकाले फलपुष्पाणां राष्ट्रभङ्गे च मारणे ॥ ११ ॥ द्विपदादेर्यदा मारी लक्षार्द्धाच्च तिलाज्यतः । हस्तिमारी प्रशान्त्यर्थं करिणीदन्तवर्धने ॥ १२ ॥ हस्तिन्यां मददृष्टौ च अयुताच्छान्तिरिष्यते । अकाले गर्भपाते तु जातं यत्र विनश्यति॥१३॥ विकृता यत्र जायन्ते यात्राकालेऽयुतं हुनेत् । तिलाज्यलक्षहोमन्तु उत्तमा सिद्धिसाधने ॥ १४ ॥ मध्यमायां तदर्द्धेन

---

दिशाओं में क्रमशः इन्द्र आदि दिक्पालों के वज्र आदि अस्त्रों की पूजा करनी चाहिए ।। १ ।। पाञ्चमुख वाले तथा दस हाथ वाले भगवान् शिव की पूजा करके संग्राम आदि में जाने पर विजय की प्राप्ति होती है। ग्रहों की पूजा करते समय सूर्य की पूजा बीच में करनी चाहिये तथा पूर्व आदि दिशाओं में सोम आदि ग्रहों की पूजा करनी चाहिये ।। २ ।। ग्रहों की पूजा करने से सभी ग्रह एकादश स्थान में स्थित हो जाते हैं और उसी के अनुसार फल प्रदान करते हैं । अब मैं समस्त उत्पातों का विनाश करने वाली अस्त्रशान्ति का वर्णन कर रहा हूँ ।। ३ ।। यह शान्ति ग्रहों तथा रोगों को शान्त करती है तथा महामारी एवं शत्रुओं का विनाश करती है । साधक को चाहिए कि वह विघ्न करने वाले गणों के द्वारा उत्पादित उत्पात को विनष्ट करने से ग्रह आदि का नाश करे ।। ४ ।। इसका एक लाख जप करने से ग्रह आदि का नाश हो जाता है तिल से दशांश होम करने पर उत्पातों का नाश होता है । एक लाख जप तथा होम करने से आकाशज दिव्य उत्पात का नाश होता है । आधा लाख जप तथा होम करने से आकाश उत्पात का नाश होता है ।। ५ ।। एक लाख घी की आहुति देने से उत्पात की शान्ति में सफलता मिलती है । घी तथा गुग्गुल मिलाकर होम करने से समस्त प्रकार के उत्पातों आदि का शमन होता है ।। ६ ।। दूर्वा, अक्षत तथा घी की आहुति देने से व्याधियों का विनाश होता है । घी की एक हजार आहुति देने से दुःस्वप्नों का नाश होता है, इसमें कोई भी संशय नहीं है ।। ७ ।। घी मिलाकर यव की दस हजार आहुति देने से ग्रह दोष का विनाश होता है । घी की दस हजार आहुति देने से विनायक यव जनित पीड़ा का नाश होता है ।। ८ ।। गुग्गुल की दस हजार आहुति देने से भूत तथा वेताल आदि की शान्ति होती है । किसी महावृक्ष के टूट जाने अथवा आँधी आदि से उखड़ जाने पर अथवा घर में सर्प का कंकाल मिलने पर ।।८।। अथवा यदि जंगल में जाना हो तो विघ्न की शान्ति के लिए पात होने अथवा भूकम्प आने पर तिल एवं घी से होम करने पर कल्याण होता है ।। १० ।। जब वृक्ष से रक्तस्राव होने लगे, बिना समय के वृक्षों में फल एवं पुष्प निकल आएँ, राष्ट्र का मान भंग हो, मारण कर्म किया गया हो, महामारी आयी हो तो गुग्गुल की दस हजार आहुति देने से मंगल होता है ।। ११ ।। जब मनुष्य तथा पशुओं की महामारी आयी हो तो तिल एवं घी की आधा लाख आहुति देनी चाहिए । यदि हाथी की महामारी आयी हो, या हस्तिनी के दाँत बढ़ जायँ ।। १२ ।। अथवा हस्तिनी के गाल से मदवारी चूने लग जाय तो दस हजार आहुति देने से शान्ति होती है ।। १२।। जिस घर में असमय में ही गर्भपात हो जाता हो अथवा जिस घर में उत्पन्न होते ही बच्चे मर जाते हों, जहाँ पर विकृत अंग वाले बच्चे उत्पन्न होते हों जहाँ पर यात्राकाल में विघ्न होते हों, वहाँ पर दस हजार आहुति देनी चाहिए ।। १३।। उत्तम कोटि की सिद्धि की प्राप्ति करने के लिए एक लाख होम करना चाहिए । मध्यम कोटि की सिद्धि के लिए आधा लाख आहुति देनी चाहिए । अधम कोटि की सिद्धि की प्राप्ति के लिए पच्चीस हजार आहुति देनी चाहिए ।। १४ ।। जप तथा होम बराबर बराबर करने से संग्राम में विजय

तत्पादादधमासु च । तथा जपस्तथा होमः संग्रामे विजयी भवेत् ॥ १५ ॥ अघोरास्त्रं जपेन् न्यस्य ध्यात्वा पञ्चास्यमूर्जितम् ॥ १६ ॥

इत्यादिमहापुराणे आग्नेये अघोरास्त्रादिशान्तिकल्पकथनं नामैकविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२१॥

## द्वाविंशत्यधिकत्रिशततमोऽध्यायः

## पाशुपतशान्तिः

ईश्वर उवाच– वक्ष्ये पाशुपतास्त्रेण शान्तिजापादि पूर्वतः । पादतः पुण्यनाशो हि फडन्तं चापदादिनुत् ॥ १ ॥ ओं नमो भगवते ! महापाशुपताय अतुलबलवीर्य्यपराक्रमाय त्रिपञ्चनयनाय नानारूपाय नानाप्रहारणोद्यताय सर्वाङ्गरक्ताय भिन्नाञ्जनचयप्रख्याय श्मशानवेतालप्रियाय सर्वविघ्ननिकृन्तनाय सर्वसिद्धिप्रदाय भक्तानुकम्पिने असंख्यवक्त्रभुजापादाय तस्मिन् सिद्धाय वेतालवित्रासिने शाकिनीक्षोभजनकाय व्याधिनिग्रहकारिणे पापभञ्जनाय सूर्य्यसोमाग्निनेत्राय विष्णुकवचाय खड्गवज्रहस्ताय यमदण्डवरुणपाशाय रुद्रशूलाय ज्वलज्जिह्वाय सर्वरोगविद्रावणाय ग्रहनिग्रहकारिणे दुष्टनागक्षयकारिणे ओं कृष्णपिङ्गलाय फट् । हूंकारास्त्राय फट् । वज्रहस्ताय फट् । शक्तये फट् । दण्डाय फट् । यमाय फट् । खड्गाय फट् । नैर्ऋत्याय फट् । वरुणाय फट् । पाशाय फट् । ध्वजाय फट् । अङ्कुशाय फट् । गदायै फट् । कुबेराय फट् । त्रिशूलाय फट् । मुद्गरायफट् । चक्राय फट् । पद्माय फट् । नागास्त्राय फट् । ईशानाय फट् । खेटकास्त्राय फट् । मुण्डास्त्राय फट् । कङ्कालास्त्राय फट् । पिच्छिकास्त्राय फट् । क्षुरिकास्त्राय फट् । ब्रह्मास्त्राय फट् । शक्त्यस्त्राय फट् । गणास्त्राय फट् । पिलिपिच्छास्त्राय फट् । गन्धर्वास्त्राय फट् । मूर्वास्त्राय फट् । दक्षिणास्त्राय फट्। वामास्त्राय फट्। पश्चिमास्त्राय फट्। मन्त्रास्त्राय फट् । शाकिन्यस्त्राय फट् । योगिन्यस्त्राय फट् । दण्डास्त्राय फट् । महादण्डास्त्राय फट् । नागास्त्राय फट् । शिवास्त्राय फट् । ईशानास्त्राय फट् । पुरुषास्त्राय फट् । अघोरास्त्राय फट् । सद्योजातास्त्राय फट् । हृदयास्त्राय फट् । महास्त्राय फट् । गरुडास्त्राय फट् । राक्षसास्त्राय फट् । दानवास्त्राय फट् । क्षौं नरसिंहास्त्राय फट् । त्वाष्ट्रास्त्राय फट् । सर्वास्त्राय फट् । नः फट् । वः फट् । पः फट् । मः फट्। श्रीः फट् । फेः फट् । भूःफट् । भुवः फट् । स्वः फट् । महः फट् । जनः फट् । तपः फट् । सर्वलो कफट् । सर्वपाताल फट् । सर्वतत्त्व फट् । सर्वप्राण फट् । सर्वनाड़ी फट् । सर्वकारण फट् । सर्वदेव फट् । ह्रीं फट् । श्रीं फट् । हूं फट् । स्त्रुं फट् । स्वां फट् । लां फट् । वैराग्याय फट् । मायास्त्राय

की प्राप्ति होती है । अघोरास्त्र का जप तेजस्वी पञ्चमुख भगवान् शंकर के ध्याननपपूर्वक न्यास करके करना चाहिए ।। १६ ।।

इस तरह से आदिमहापुराण अग्निपुराण का मण्डल वर्णन नामक तीन सौ एक्कीसवाँ अध्याय सम्पूर्ण हुआ ॥ ३२१ ॥



**भगवान् शंकर ने कहा–** स्कन्द ! अब मैं पाशुपत मन्त्र के जप आदि से होने वाली शान्ति का वर्णन करता हूँ । इस मन्त्र के आंशिक जप अथवा पाठ से पूर्वकृत् पुण्य का नाश हो जाता है । इस मंत्र का फडन्त सम्पूर्ण मन्त्र जप से आपत्ति आदि का नाश होता है ।। १ ।। सम्पूर्ण मन्त्र मूल के- ओं नमो भगवते ....................सर्वदुरितं नाशय फट् । पर्यन्त है । इस मन्त्र की एक

फट्। कामास्त्राय फट्। क्षेत्रपालास्त्राय फट्। हूंकारास्त्राय फट्। भास्करास्त्राय फट्। चन्द्रास्त्राय फट्। विघ्नेश्वरास्त्राय फट्। ख्रों ख्रौं फट्। ह्रौं ह्रों फट्। भ्रामय भ्रामय फट्। छादय छादय फट्। उन्मूलय उन्मूलय फट्। त्रासय त्रासय फट्। सञ्जीवय सञ्जीवय फट्। विद्रावय विद्रावय फट्। सर्वदुरितं नाशय नाशय फट्। सकृदावर्त्तनादेव सर्वविघ्नान् विनाशयेत्। शतावर्त्तेन चोत्पातान् रणादौ विजयी भवेत्॥ २॥ घृतगुग्गुलहोमाच्च आसाध्यानपि साधयेत्! पठनात् सर्वशान्तिः स्याच्छस्त्रपाशुपतस्य च॥ ३॥

इत्यादिमहापुराण आग्नेये पाशुपतशान्तिकथनं नाम द्वाविंशत्यधिकत्रिशततमोऽध्यायः॥ ३२२॥

## त्रयोविंशत्यधिकत्रिशततमोऽध्यायः

## षडङ्गान्यघोरास्त्राणि

ईश्वर उवाच– **ओं हूं हंस इति मन्त्रेण मृत्युरोगादि शाम्यति। लक्षाहुतिभिर्दूर्वाभिः शान्तिं पुष्टिं प्रसाधयेत्॥ १॥ अथवा प्रणवेनैव मायया वा षडानन!। दिव्यान्तरीक्षभौमानां शान्तिरुत्पातवृक्षके॥ २॥ ओं नमो भगवति! गङ्गे! कालि कालि! महाकालि महाकालि! मांसशोणितभोजने! रक्तकृष्णामुखि! वशमानय मानुषान् स्वाहा। ओम् लक्षं जप्त्वा दशांशेन हुत्वा स्यात् सर्वकर्मकृत्। वशं नयति शक्रादीन् मानुषेष्वेषु का कथा॥३॥ अन्तर्धानकरी विद्या मोहिनी जृम्भणी तथा। वशं नयति शत्रूणां शत्रुबुद्धिप्रमोहिनी॥ ४॥ कामधेनुरियं विद्या सप्तधा परिकीर्त्तिता। मन्त्रराजं प्रवक्ष्यामि शत्रुचौरादिमोहनम्॥ ५॥ महाभयेषु सर्वेषु स्मर्तव्यं हरपूजितम्। लक्षं जप्त्वा तिलैर्होमः सिद्ध्येदुद्धारकं शृणु॥ ६॥ ओं हले शूले एहि**

---

बार ही आवृत्ति करने से सम्पूर्ण विघ्नों का विनाश हो जाता है। साधक इसकी एक सौ आवृत्ति करके सम्पूर्ण विघ्नों का नाश कर सकता है और संग्राम आदि में विजयी हो सकता है॥ २॥ वह इस मन्त्र से घी तथा गुग्गुल का होम करके असाध्य कार्यों को भी सिद्ध कर सकता है। पाशुपतास्त्र का पाठ मात्र करने से सभी प्रकार की शान्ति हो जाती है॥ ३॥

**इस तरह से आदिमहापुराण अग्निपुराण का पाशुपतशान्ति वर्णन नामक तीन सौ बाईसवाँ अध्याय सम्पूर्ण हुआ॥ ३२२॥**

**भगवान् शंकर ने कहा–** ओं हूं हंसः इस मन्त्र से मृत्यु रोग आदि की शान्ति होती है। इस मन्त्र से दूर्वा तथा घी से एक लाख आहुति देने से साधक शान्ति तथा पुष्टि की सिद्धि करने में सफल होता है॥ १॥ अथवा हे षडानन! केवल प्रणव (ओम्) तथा माया (ह्रीं) के जप से दिव्य, अन्तरिक्षजन्य तथा भूमिजन्य वृक्षों की शान्ति होती है। उत्पात वृक्ष की शान्ति के लिए भी यह उपाय है॥ २॥ ओं नमो भगवति गङ्गे! कालि! कालि! कहाकालि! कहाकालि मांसशोणितभोजने! रक्तकृष्णमुखि! वशमानय मानुषान् स्वाहा। ओम्। इस मंत्र का एक लाख जप करके उसका दशांश भाग होम करने से साधक समस्त कर्मों में सिद्धि प्राप्त करता है। वह इन्द्र आदि को भी अपने वश में कर लेता है, मनुष्यों आदि का क्या कहना है॥ ३॥ यह विद्या अन्तर्धान करने वाली, मोहिनी, जृम्भणी, शत्रुओं को अपने वश में करने वाली तथा शत्रुओं की बुद्धि को मोहित करने वाली है॥ ३॥ यह कामधेनु विद्या सात प्रकार की बतलायी गयी है। अब मैं शत्रुओं तथा चोरों आदि को मोहित करने वाले मन्त्रराज का वर्णन करता हूँ॥ ४॥ इस मन्त्र की पूजा भगवान् शंकर ने की है। महान भय उपस्थित होने पर इस मन्त्र का स्मरण करना चाहिए। इस मन्त्र का एक लाख जप करके तिल से होम करना चाहिए। ऐसा करने से इस मन्त्र की सिद्धि हो जाती है। अब इस मंत्र का उद्धार सुनो॥ ५॥ ओं हले शूले एहि ब्रह्मसत्येन विष्णुसत्येन

ब्रह्मसत्येन विष्णुसत्येन रुद्रसत्येन रक्ष मां वाचेश्वराय स्वाहा ॥ ६ ॥ दुर्गात् तारयते यस्मात् तेन दुर्गा शिवा मता ओं चण्डकपालिनि ! दन्तान् किट किट क्षिट क्षिट गुह्ये फट् ह्रीम्। अनेन मन्त्रराजेन क्षालयित्वा तु तण्डुलान् ॥ ७ ॥ त्रिंशद्वाराणि जप्तानि तच्चौरेषु प्रदापयेत् । दन्तैश्चूर्णानि शुक्लानि पतितानि हि शुद्धये ॥ ८ ॥ ओं ज्वलल्लोचन ! कपिलजटाभारभास्वर ! विद्रावण ! त्रैलोक्यडामर दर दर भ्रम भ्रम आकट्ट आकट्ट तोटय तोटय मोटय मोटय दह दह पच पच एवं सिद्धिरुद्रो ज्ञापयति यदि ग्रहोपगतः स्वर्गलोकं देवलोकं वा आरामविहाराचलं तथापि तमावर्त्तयिष्यामि बलिं गृह्ण गृह्ण ददामि ते स्वाहेति ॥ ९ ॥ क्षेत्रपालबलिं दत्त्वा ग्रहो न्यासाद् वशं व्रजेत् । शत्रवो नाशमायान्ति रणे वैरिगणक्षयः॥१०॥ हंसबीजन्तु विन्यस्य विषन्तु त्रिविधं हरेत । माक्षिकेण समायुक्तो देहवस्त्रादिधूपनात् ॥ १२ ॥ नखं वै देवदारुश्च समं कृत्वाऽथ धूपकः । माक्षिकेण समायुक्तो देहवस्त्रादिधूपनात् ॥ १२ ॥ विवादे मोहने स्त्रीणां मण्डने कलहे शुभः । कन्याया वरणे भाग्ये मायामन्त्रेण मन्त्रितः ॥ १३ ॥ ह्रीं रोचना नागपुष्पाणि कुङ्कुमञ्च मनःशिला । ललाटे तिलकं कृत्वा यं पश्येत् स वशी भवेत् ॥ १४ ॥ शतावर्य्यास्तु चूर्णन्तु दुग्धपीतञ्च पुत्रकृत् । नागकेशरचूर्णन्तु घृतपक्वन्तु पुत्रकृत् ॥ १५ ॥ पालाशवीजपानेन लभेत पुत्रकं तथा । ओं उत्तिष्ठ चामुण्डे ! जम्भय जम्भय मोहय मोहय अमुकं वशमानय वशमानय स्वाहा । षड्विंशा सिद्धविद्या सा नदीतीरमृदा स्त्रियम् ॥ १६ ॥ कृत्वोन्मत्तरसेनैव नामालिख्यार्कपत्रके। मूत्रोत्सर्गं ततः कृत्वा जपेत् तामानयेत् स्त्रियम् ॥ १७ ॥ ओं जूं सः वषट् । महामृत्युञ्जयो मन्त्रो जप्याद्धोमाच्च पुष्टिकृत् । ओं हंसः हूं हूं स ह्रः सौ मृतसञ्जीवनीविद्या अष्टार्णा जयकृद्रणे ॥ १८ ॥ मन्त्रा ईशानमुख्याश्च धर्मकामादिदायकाः । ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् ॥ १९ ॥ ब्रह्मणश्चाधिपतिर्ब्रह्मा

---

रुद्रसत्येन रक्ष मां वाचेश्वराय स्वाहा ।' चूँकि भगवती शिवा दुर्गम संकट से पार करती हैं इसीलिए वे दुर्गा कहलाती हैं ।। ६।। 'ओं चण्डकपालिनि ! दन्तान् किट किट क्षिट क्षिट गुह्ये फट् ह्रीं।' इस मन्त्रराज के द्वारा चावल को धोकर ।। ७ ।। इस चावल को इसी मन्त्र को तीस बार पढ़कर अभिमन्त्रित करें । इसके पश्चात् उस चावल को चोरों में बँटवा दें । उन चावलों को दाँतों से चबाने पर उजले दाँत गिर जाते हैं । ऐसा करने से वह मनुष्य चोरी के पाप से मुक्त होकर शुद्ध हो जाता है ।। ८ ।। 'ओं ज्वलल्लोचन कपिलजटाभारभास्वर विद्रावण त्रैलोक्य डामर डामर दर दर भ्रम भ्रम आकट्ट आकट्ट तोटय तोटय मोटय मोटय दह दह पच-पच एवं सिद्धिरुद्रो ज्ञापयति, यदि ग्रहोपगतः स्वर्गलोकं देवलोकं वा आरामविहाराचलं तथापि तमावर्त्तयिष्यामि बलिं गृह्ण गृह्ण ददामि ते स्वाहा।' इस मन्त्र से क्षेत्रपालाबलि देकर न्यास करने से ग्रह वशवर्ती हो जाता है । साधक के शत्रुओं का नाश हो जाता है और संग्राम में वैरी समूह का क्षय हो जाता है ।। १० ।। साधक हंस बीज का न्यास करके तीन प्रकार के विषों को दूर कर देता है । अगरु, चन्दन, कूट, कुंकुम, नाग केसर ।। ११ ।। नख तथा देवदारु इन सबों को बराबर मात्रा में लेकर धूप बनावें । फिर उसमें मधुमक्खी का शहद मिलावें उसकी सुगन्ध से देह तथा वस्त्र आदि को सुगन्धित करें ।। १२ ।। ऐसा करने वाला मनुष्य विवाद, स्त्री सम्मोहन, शृंगार तथा कलह आदि के अवसर पर शुभ फल को प्राप्त करता है । कन्या के वरण तथा भाग्योदय से सम्बद्ध कार्यों में भी सफलता मिलती है ।। १३ ।। माया मन्त्र (ह्रीं) से अभिमन्त्रित करके यदि रोचना, नागकेसर, कुंकुम तथा मैनशिल को मिलाकर तिलक अपने ललाट पर लगाकर किसी को देखता है तो उसे अपने वशवर्ती बना लेता है ।। १४ ।। यदि शतावरी के चूर्ण को दुग्ध के साथ मिलाकर पिया जाय तो उससे पुत्र की प्राप्ति होती है । घी में पकाया गया नागकेसर का चूर्ण पुत्र की प्राप्ति कराने वाला होता है ।। १५ ।। इसी तरह पलाश बीज का पान करने वाला मनुष्य पुत्र को प्राप्त करता है । ओं उत्तिष्ठ चामुण्डे ! जम्भय जम्भ्य मोहय मोहय अमुकं वशमानय वशमानय स्वाहा ।' यह छब्बीस अक्षरों वाली सिद्ध विद्या है । यदि किसी स्त्री को वश में करना हो तो नदी के तीर की मिट्टी से उस स्त्री की मूर्ति बनाकर, धतूर के रस से मदार के पत्ते पर उस स्त्री का नाम लिखें । इसके पश्चात् मूत्रोत्सर्ग करके, फिर शुद्ध होकर इस मन्त्र का जप करें तो वह स्त्री उस साधक के वश में हो जाती है ।। १७ ।। 'ओं जूंसः वषट्।' यह

शिवो मेऽस्तु सदाशिवः। ओं तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ॥ २० ॥ ओं अघोरेभ्योऽथ घोरेभ्यो घोरघोरेभ्यस्तु सर्वतः। सर्वेभ्यो नमस्ते रूद्ररूपेभ्यः ॥ २१ ॥ ओं वामदेवाय नमो ज्येष्ठाय नमः रुद्राय नमः । कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलप्रमथनाय नमः । सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ २२ ॥ ओं सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः । भवे भवेऽनादिभवे भजस्व मां भवोद्भवाय नमः ॥ २३ ॥ पञ्चब्रह्माङ्ग षट्कञ्च वक्ष्येऽहं भुक्तिमुक्तिदम् ॥ २४ ॥ ओं नमः परमात्मने पराय कामदाय परमेश्वराय योगाय योगसम्भवाय सर्वकराय कुरु कुरु सद्यः सद्यः भव भव भवोद्भव ! वामदेव ! सर्वकार्य्यकर ! पापप्रशमन ! सदाशिव ! प्रसन्न! नमोऽस्तु ते स्वाहा॥२५॥ हृदयं सर्वार्थदन्तु सप्तत्यक्षरसंयुतम् ॥ २६ ॥ ओं शिवः शिवाय नमः शिवः । ओं शिव हृदये ज्वालिनी स्वाहा शिखा॥ २७ ॥ ओं शिवात्मक ! महातेजः ! सर्वज्ञ ! प्रभोसंवर्त्तय महाघोर ! कवचपिङ्गल ! आयाहि पिङ्गल नमो महाकवच ! शिवाज्ञया हृदयं बन्ध बन्ध घूर्णय घूर्णय चूर्णय चूर्णय सूक्ष्मवज्रधर ! वज्रपाश ! धनुर्वज्राशनिवज्रशरीर ! पिच्छरीरमनुप्रविश्य सर्वदुष्टान् स्तम्भय स्तम्भय हुम्॥ २८ ॥ अक्षराणान्तु कवचं शतं पञ्चाक्षराधिकम् ॥ २९ ॥ ओं ओजसे नेत्रं ओम् ह्रीं प्रस्फुर प्रस्फुर घोरघोरतर तनुरूप चट चट प्रचट प्रचट कह कह वम वम बन्ध

---

यह महामृत्यंजय मन्त्र है । इसका जप तथा होम करने से पुष्टि की प्राप्ति होती है । 'ओं हं सः हुं हूं सः हः सौः ।' यह आठ अक्षरों वाली मृतसंजीवनी विद्या है । यह संग्राम में विजय दिलाने वाली है ।। १८ ।। ईशान आदि मन्त्र भी धर्म तथा काम आदि को प्रदान करने वाले हैं । ईशानः सर्वविद्यानाम् ..........................मेऽस्तु सदाशिवः । ओम् । यह ईशानमन्त्र है । इसका अर्थ है कि जो सम्पूर्ण विद्याओं के ईश्वर हैं, समस्त भूतों के अधीश्वर हैं, वेदों तथा ब्रह्मा के अधिपति हैं, जो साक्षात्, ब्रह्म तथा जो शिवस्वरूप हैं, वे सदा मेरे लिए कल्याणस्वरूप बने रहें ।। १९।। 'ओं तत्पुरुषाय ................रुद्रः प्रचोदयात् ।' यह रुद्र गायत्री है । इसका अर्थ है कि- तत् पद के अर्थ स्वरूप जो अन्तर्यामी पुरुष हैं, उनको हम जानें । उन महादेव का हम चिन्तन करें । वे भगवान् रुद्र हमें सत्कार्यों को करने के लिए प्रेरित करते रहें ।। २० ।।'ओम् अघोरेभ्यो ...................नमस्ते रुद्ररूपेभ्यः ।' यह अघोरमन्त्र है । इसका अर्थ है कि- जो सर्वव्यापक हैं, सम्पूर्ण जगत् का संहार करने वाले जो रुद्रस्वरूप हैं, उनको मैं नमस्कार करता हूँ । ओं वामदेवाय नमो ज्येष्ठाय ............... मनोन्मनाय नमः ।। यह वामदेव मन्त्र है । इसका अर्थ है कि- हे भगवान् शिव ! आपही वामदेव हैं, आपको नमस्कार है, आपही ज्येष्ठ हैं आपको नमस्कार है, आप ही श्रेष्ठ हैं आपको नमस्कार है । रुद्रस्वरूप आपको नमस्कार है, कालस्वरूप आपको नमस्कार है, कालविकरण स्वरूप आपको नमस्कार है बलविकरण स्वरूप आपको नमस्कार है, बल स्वरूप आपको नमस्कार है, बलप्रमथन स्वरूप आपको नमस्कार है, सर्वभूतदमनस्वरूप आपको नमस्कार है सर्वभूतदमनस्वरूप आपको नमस्कार है तथा मनोन्मन स्वरूप आपको मेरा नमस्कार है । (ओं) सद्योजातम् ............... भवोदभवाय नमः ।' यह सद्योजातमन्त्र है । इसका अर्थ है कि- मैं सद्योजात के शरण में जाता हूँ । सद्योजात को मेरा नमस्कार है । मैं किसी भी जन्म अथवा जगत् में किसी से पराजित न होऊँ । आप भवोद्भव को मेरा नमस्कार है ।। २३ ।। अब मैं पञ्च ब्रह्म के अङ्ग षट्क का वर्णन कर रहा हूँ जो भोग तथा मोक्ष को प्रदान करने वाला है ।। २४ ।। (ओं) नमः परमात्मने पराय ...............नमोऽस्तु ते (स्वाहा)। यह हृदयमन्त्र है । इसका अर्थ है कि- 'परंब्रह्म परमात्मस्वरूप, कामनाओं को पूर्ण करने वाले, योगस्वरूप, परमेश्वर, योग से उद्भूत होने वाले, सब कुछ प्रदान करने वाले, भगवान् शंकर को नमस्कार है । हे जगत् स्वरूप भवोद्भव, समस्त कार्यों को करने वाले, पापों को विनष्ट करने वाले, सदाशिव, सदा प्रसन्न रहने वाले भगवन् । आप मेरे अभिलषित अर्थ को सद्यः सम्पन्न करें आपको मेरा नमस्कार है ।। २५ ।। यह सत्तर अक्षरों वाला हृदयमन्त्र है । यह सम्पूर्ण अर्थों को प्रदान करने वाला है ।। २५ ।। षडङ्गन्यास बतलाया जा रहा है । 'ओं शिवाय नम शिरसे स्वाहा । यह शिरोमन्त्र है । ओं शिवहृदये ज्वालिनी स्वाहा शिखायै वषट् । यह शिखामन्त्र है ।।२७।। ओं शिवात्मक ! महातेजः ! सर्वज्ञ ! प्रभो ! संवर्तय महाघोर ! कवचपिङ्गल, आयाहि पिङ्गल ! नमो महाकवच ! शिवाज्ञया हृदयं बन्ध बन्ध घूर्णय घूर्णय, चूर्णय चूर्णय, सूक्ष्म, सूक्ष्मवज्रधर ! वज्रपाश! धनुर्वज्राशनि, वज्रशरीर, मच्छरीरमनु प्रविश्य, सर्वदुष्टान् स्तम्भय स्तद्यम्भय हुम् ।। २८ ।। (कवचाय हुम्) यह एक सौ पाँच अक्षरों का कवच मन्त्र है ।। २९ ।। ओं ओजसे नेत्रत्रयाय वौषट् ।

सर्ववृत्तिप्रवृत्तञ्च सर्वभावप्रभावितम् ॥ ३१ ॥ सर्वरीतिरसैः पुष्टं पुष्टं गुणविभूषणैः । अतएव महाकाव्यं तत् कर्त्ता च महाकविः ॥ ३२॥ वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् । पृथक्प्रयत्नानिर्वर्त्यं वाग्वक्रिम्णि रसाद् वपुः ॥ ३३ ॥ चतुर्वर्गफलं विश्वग्व्याख्यातं नायकाख्यया । समानवृत्तिनिर्व्यूढः कौशिकीवृत्तिकोमलः ॥ ३४ ॥ कलापोऽत्र प्रवासः प्रागनुरागाह्वयो रसः । सविशेषकञ्च प्राप्त्यादि संस्कृतेनेतरेण च॥ ३५॥ श्लोकैरनेकैः कुलकं स्यात् सन्दानितकानि तत् । मुक्तकं श्लोक एकैकश्चमत्कारक्षमः सताम् ॥ ३६ ॥ सूक्तिभिः कविसिंहानां सुन्दरीभिः समन्वितः। कोषो ब्रह्मापरिच्छिन्नः स विदग्धाय रोचते ॥ ३७ ॥ आभासोपमशक्तिश्च सर्गे यद्भिन्नवृत्तता । मिश्रं वपुरिति ख्यातं प्रकीर्णमिति च द्विधा श्राव्यञ्चैवाभिनेयञ्च प्रकीर्णं सकलोक्तिभिः ॥ ३८ ॥

इत्यादिमहापुराण आग्नेये काव्यादिलक्षणकथनं नाम सप्तत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३७ ॥

## अष्टत्रिंशदधिकत्रिशततमोऽध्यायः

## नाटकनिरूपणम्

अग्निरुवाच— **नाटकं सप्रकरणं डिम ईहामृगोऽपि वा । ज्ञेयः समवकारश्च भवेत् प्रहसनं तथा ॥ १ ॥ व्यायोगभाणवीथ्यङ्कत्रोटकान्यथ नाटिका। सट्टकं शिल्पकः कर्णा एको दुर्मल्लिका तथा ॥ २ ॥ प्रस्थानं भाणिका भाणी गोष्ठी हल्लीशकानि च । काव्यं श्रीगदितं नाट्यरासकं रासकं तथा॥३॥**

---

है महाकाव्य ।। २९-३० ।। अन्धकार, वायु तथा रति को उद्दीप्त करने वाले अन्य विभावों से महाकाव्य युक्त होता है । उसमें समस्त प्रकार की वृत्तियाँ होती हैं । वह सब प्रकार के भावों से प्रभावित होता है तथा सब प्रकार की रीतियों तथा समस्त रसों से उसका संस्पर्श होता है । समस्त गुणों तथा अलंकारों से उसे परिपुष्ट किया जाता है । इन समस्त विशेषताओं के ही कारण इस रचना को महाकाव्य तथा उसके प्रणेता को महाकवि कहा जाता है ।। ३१-३२ ।। महाकाव्य में वाणी की विचित्रता की प्रधानता होने पर भी रस ही उसका जीवन होता है । उसके स्वरूप की सिद्धि सहजभाव से साध्य वक्रोक्तिविषयक रस से होती है ।। ३३ ।। महाकाव्य का फल चारों प्रकार के पुरुषार्थों की प्राप्ति है । वह नायक के ही नाम से विख्यात होता है । महाकाव्य का निर्वाह समान छन्दों अथवा वृत्तियों से किया जाता है । कैशिकी वृत्ति की प्रधानता होने से काव्य में कोमलता होती है ।। ३४ ।। कलाप उस रचना को कहते हैं जिसमें प्रवास का वर्णन होता है । उसमें पूर्वानुराग नामक शृङ्गार रस की प्रधानता होती है । संस्कृत अथवा प्राकृत के द्वारा प्राप्ति आदि का वर्णन विशेषक कहलाता है ।। ३५ ।। जहाँ अनेक श्लोकों का एक साथ अन्वय होता है उसे कुलक अथवा सन्दानितक कहते हैं। एक-एक श्लोक की स्वतंत्र रचना को मुक्तक कहते हैं । किन्तु उसको सहृदयों के हृदय को चमत्कृत करने का सामर्थ्य होना चाहिए ।। ३६ ।। श्रेष्ठ कवियों की सुन्दर उक्तियों से युक्त ग्रन्थ को कोष कहते हैं । वह ब्रह्म के समान अपरिच्छिन्न रस से युक्त होता है । वह सहृदय हृदयाह्लादक होता है ।। ३७ ।। सर्ग में जो भिन्न छन्दों की रचना होती है वह आभासोपम शक्ति है । उसके दो भेद होते हैं'- मिश्र एवं प्रकीर्ण । जिस रचना में श्रव्य एवं अभिनेय दोनों के लक्षण मिलें वह रचना मिश्र कहलाती हैं । जो रचना सकल उक्तियों से युक्त होती है, वह प्रकीर्ण कहलाती है ।। ३९।।

**इस तरह आदिमहापुराण अग्निपुराण का काव्य आदि के लक्षण वर्णन नामक तीन सौ सैंतीसवाँ अध्याय सम्पूर्ण हुआ ॥ ३३७ ॥**

**अग्निदेव ने कहा**— वसिष्ठ रूपक के सत्ताइस भेद माने गए हैं- नाटक, प्रकरण, डिम, ईहामृग, समवकार, प्रहसन, व्यायोग भाण, वीथी, अङ्क, तोटक, नाटिका, सट्टक, शिल्पक, कर्णा, दुर्मल्लिका, प्रस्थान, भाणिका, भाणी, गोष्ठी, हल्लीशक, काव्य, श्रीगदित, नाट्यरासक, रासक, उल्लाप्य तथा प्रेङ्खण ।। १-३ ।। लक्षण दो प्रकार के होते हैं- सामान्य लक्षण और विशेष लक्षण।

उल्लाप्यकं प्रेङ्क्षणञ्च सप्तविंशतिरेव तत् । सामान्यञ्च विशेषश्च लक्षणस्य द्वयी गतिः॥ ४॥ सामान्यं सर्वविषयं शेषः क्वापि प्रवर्त्तते । पूर्वरङ्गे निवृत्ते तु देशकालावुभावपि ॥ ५॥ रसभावविभावानुभावा अभिनयास्तथा । अङ्कः स्थितिश्च सामान्यं सर्वत्रैवोपसर्पणात्॥ ६॥ विशेषोऽवसरे वाच्यः सामान्यं पूर्वमुच्यते । त्रिवर्गसाधनं नाट्यमित्याहुः करणञ्च तत् ॥ ७ ॥ इतिकर्त्तव्यता तस्य पूर्वरङ्गो यथाविधि । नान्दीमुखानि द्वात्रिंशदङ्गानि पूर्वरङ्गके ॥ ८ ॥ देवतानां नमस्कारो गुरूणामपि च स्तुतिः । गोब्राह्मणनृपादीनामाशीर्वादादि गीयते॥ ९॥ नान्द्यन्ते सूत्रधारोऽसौ रूपकेषु निबध्यते। गुरुपूर्वक्रमं वंशप्रशंसा पौरुषं कवेः ॥ १० ॥ सम्बन्धार्थौ च काव्यस्य पञ्चैतानेष निर्दिशेत् । नटो विदूषको वापि पारिपार्श्विक एव वा ॥ ११ ॥ सहिताः सूत्रधारेण संलापं यत्र कुर्वते। चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ॥ १२ ॥ आमुखं तत् तु विज्ञेयं बुधैः प्रस्तावनापि सा । प्रवृत्तकं कथोद्घातः प्रयोगातिशयस्तथा ॥ १३ ॥ आमुखस्य त्रयो भेदा वीजांशेषूपजायते । कालं प्रवृत्तमाश्रित्य सूत्रधृग् यत्र वर्णयेत्॥ १४॥ तदाश्रयश्च पात्रस्य प्रवेशस्तत् प्रवृत्तकम् । सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा॥ १५॥ गृहीत्वा प्रविशेत् पात्रं कथोद्घातः स उच्यते । प्रयोगेषु प्रयनोगन्तु सूत्रधृग् यत्र वर्णयेत्॥ १६॥ ततश्च प्रविशेत् पात्रं प्रयोगातिशयो हि सः । शरीरं नाटकादीनामितिवृत्तं प्रचक्षते ॥ १७॥ सिद्धमुत्प्रेक्षितञ्चेति तस्य भेदावुभौ स्मृतौ। सिद्धमागमदृष्टञ्च सृष्टमुत्प्रेक्षितं कवेः ॥ १८॥ बीजं बिन्दुः पताका च प्रकरी कार्यमेव च । अर्थप्रकृतयः पञ्च पञ्च चेष्टा अपि क्रमात् ॥ १९॥ प्रारम्भश्च प्रयत्नश्च प्राप्तिः सद्भाव एव च । नियता च फलप्राप्तिः फलयोगश्च पञ्चमः॥ २०॥ मुखं प्रतिमुखं गर्भो विमर्शश्च तथैव च । तथा निर्वहणञ्चेति क्रमात्पञ्चैव संधयः ॥ २१॥ अल्पमात्रं समुद्दिष्टं बहुधा यत्प्रसर्पति । फलावसानं यच्चैव बीजं तदभिधीयते ॥ २२॥ यत्र

---

सामान्य लक्षण रूपक के समस्त भेदों में व्याप्त होते हैं । और विशेष लक्षण किसी-किसी में दृष्टिगोचर होते हैं ।। ४।। पूर्वरंग के पूरा हो जाने पर देश-काल, रस, भाव, विभाव, अनुभाव, अभिनय, अङ्क और स्थिति, ये सामान्यरूप से समस्त रूपकों में पाये जाते हैं ।। ५-६ ।। यहाँ सामान्य लक्षण पहले कहा जा रहा है, विशेष लक्षणों का तत्-तत् अवसरों पर निर्वचन किया जायेगा। नाटक को त्रिवर्ग का साधन कहा गया है, क्योंकि वह करण है ।। ७ ।। उसकी इतिकर्तव्यता (कार्यारम्भ) की विधि है कि पूर्वरङ्ग का विधिपूर्वक सम्पादन किया जाय । पूर्वरङ्ग के नान्दी आदि बाइस अङ्ग होते हैं ।। ८ ।। देवताओं को नमस्कार, गुरुजन की प्रशस्ति तथा गौ, ब्राह्मण तथा राजा आदि के आशीर्वाद को नान्दी कहा जाता है ।। ९ ।। रूपकों में यह लिखा जाता है कि 'नान्द्यन्ते प्रविशति सूत्रधारः' अर्थात् नान्दी के अन्त में सूत्रधार का प्रवेश होता है । इसमें कवि की पूर्व गुरुपरम्परा का, वंश प्रशंसा, पौरुष तथा काव्य के सम्बन्ध और प्रयोजन इन पाँच विषयों का निर्देश किया जाता है ।। १०।। नटी, विदूषक अथवा पारिपार्श्वक ये सभी अपने कार्य से सम्बद्ध प्रस्तुत विषय को उपस्थित करने वाले विचित्र वाक्यों द्वारा सूत्रधार के साथ परस्पर में जहाँ संलाप करते हैं, पण्डित जन उसको आमुख जानें। उसे प्रस्तावना भी कहते हैं ।। ११ ।। आमुख के तीन भेद होते हैं- प्रवृत्तक, कथोद्घात तथा प्रयोगातिशय । जब सूत्रधार उपस्थित काल का वर्णन करता है, तब उसका आश्रयभूत पात्र का प्रवेश प्रवृत्तक कहलाता है । इसका बीजांश में ही प्रादुर्भाव होता है ।। १३-१४ ।। जिस समय सूत्रधार एक प्रयोग में दूसरे प्रयोग का वर्णन करे, उस समय यदि पात्र वहाँ प्रवेश करे, तो वह प्रयोगातिशय होता है । जब पात्र सूत्रधार के वाक्य अथवा वाक्यार्थ का ग्रहण करके प्रवेश करे तो उसे कथोद्घात कहते हैं ।। १५।। जिस समय सूत्रधार एक प्रयोग में दूसरे प्रयोग का वर्णन करे उस समय यदि पात्र वहाँ प्रवेश करे तो उसे प्रयोगातिशय कहते हैं ।। १६।। इतिवृत्त को नाटक आदि का शरीर कहा जाता है । उसके दो भेद होते हैं- सिद्ध तथा उत्प्रेक्षित ।। १७।। शास्त्रों में वर्णित इतिवृत्त सिद्ध कहलाता है तथा कविकल्पित इतिवृत्त उत्प्रेक्षित है । नाटक की अर्थ प्रकृतियाँ पाँच होती हैं- बीज, विन्दु, पताका, प्रकरी तथा कार्य । चेष्टाएँ (कार्यावस्थाएँ) भी पाँच हैं । प्रारम्भ प्रयत्न, प्राप्तिसद्भाव, नियतफलप्राप्ति तथा फलयोग ।। १८-१९-२० ।। नाटक की पाँच सन्धियाँ क्रमशः इस प्रकार हैं- मुख सन्धि, प्रतिमुखसन्धि, गर्भसन्धि, विमर्शसन्धि तथा निर्वहण सन्धि।।२१।।

बीजसमुत्पत्तिर्नानार्थरससंभवा। काव्ये शरीरानुगतं तन्मुखं परिकीर्तितम् ॥ २३॥ इष्टस्यार्थस्य रचना वृत्तान्तस्यानुपक्षयः । रागप्राप्तिः प्रयोगस्य गुह्यानां चैव गूहनम् ॥ २४॥ आश्चर्यवदभिख्यातं प्रकाशानां प्रकाशनम् । अङ्गहीनो नरो यद्वन्न श्रेष्ठं काव्यमेव च ॥ २५॥ देशकालैर्विना किंचिन्नेतिवृत्तं प्रवर्तते । अतस्तयोरुपादानं नियमात्पदमुच्यते ॥ २६॥ देशेषु भारतं वर्षं काले कृतयुगत्रयम् । नर्ते ताभ्यां प्राणभृतां सुखदुःखोदयः क्वचित् ॥ सर्गे सर्गादिवार्त्ता च प्रसज्जन्ती न दुष्यति ॥ २७॥

इत्यादिमहापुराण आग्नेये काव्यादिलक्षणकथन नामाष्टत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३८ ॥

## उनत्रिंशदधिकत्रिश..तमोऽध्यायः

## शृङ्गारादिरसनिरूपणम्

अग्निरुवाच— **अक्षरं परमं ब्रह्म सनातनमजं विभुम् । वेदान्तेषु वदन्त्येकं चैतन्यं ज्योतिरीश्वरम् ॥ १॥ आनन्दः सहजस्तस्य व्यज्यते स कदाचन। व्यक्तिः सा तस्य चैतन्यचमत्काररसाह्वया॥ २॥ आद्यस्तस्य विकारो यः सोऽहङ्कार इति स्मृतः । ततोऽभिमानस्तत्रेदं समाप्तं भुवनत्रयम्॥३॥ अभिमानाद्रतिः सा च परिपोषमुपेयुषी । व्यभिचार्य्यादिसामान्यात् शृङ्गार इति गीयते ॥ ४ ॥ तद्भेदाः काममितरे हास्याद्या अप्यनेकशः । स्वस्वस्थादिविशेषोत्थपरिपोषस्वलक्षणाः॥ ५॥ सत्त्वादिगुणसन्तानाज्जायन्ते परमात्मनः । रागाद्भवति शृङ्गारो रौद्रस्तैक्ष्ण्यात्प्रजायते॥ ६॥ वीरोऽवष्टम्भजः सङ्कोचभूर्वीभत्स इष्यते । शृङ्गाराज्जायते हासो रौद्रात् तु करुणो रसः ॥ ७ ॥ वीराच्चाद्भुतनिष्पत्तिः स्याद् वीभत्साद् भयानकः । शृङ्गारहास्यकरुणा**

जो अल्पमात्र वर्णित होने पर अनेक प्रकार से विस्तार प्राप्त करता है जिसका पर्यवसान फल में होता है उसे बीज कहते हैं ।। २२ ।। जिसमें विविध वृत्तान्तों और रस से बीज की उत्पत्ति होती है काव्य के शरीर में अनुगत उसे मुखसन्धि कहते हैं ।। २३ ।। अभीष्ट अर्थ की रचना, कथावस्तु की अखण्डता, प्रयोग में अनुराग गोपनीय विषयों का गोपन, अद्भुत वर्णन, प्रकाश्य विषयों का प्रकाशन, ये काव्याङ्गों के छह फल हैं । अङ्गहीन मनुष्य के जैसे अङ्गहीन काव्य भी प्रयोग के योग्य नहीं होता है ।। २४-२५ ।। देश-काल के विना किसी भी इतिवृत्त की प्रवृत्ति नहीं होती है, इसीलिए नियमतः उन दोनों का उपादान पद कहलाता है ।। २६ ।। देशों में भारतवर्ष तथा काल में सत्ययुग, त्रेतायुग एवं द्वापरयुग का ग्रहण करना चाहिए । देशकाल के विना प्राणियों को कहीं भी सुख, दुःख की प्राप्ति नहीं होती है । सृष्टि के आदिकाल की वार्ता अथवा सृष्टिपालन आदि की वार्ता यदि प्राप्त हो तो वह वर्णनीय है । ऐसा करने में किसी भी प्रकार का दोष नहीं होता है ।। २७ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का नाटक निरूपण नामक तीन सौ अड़तीसवाँ अध्याय सम्पूर्ण हुआ ॥ ३३८ ॥**

**अग्निदेव ने कहा—** वसिष्ठ जी ! वेदान्तशास्त्र में जिस अक्षर, सनातन, अजन्मा, व्यापक, परब्रह्म को अद्वितीय, ज्ञानस्वरूप तथा प्रकाशस्वरूप कहा जाता है उसका सहज आनन्द कभी-कभी, व्यञ्जित होता है । उस आनन्द की अभिव्यक्ति का ही चैतन्य, चमत्कार और रस के नाम से वर्णन किया जाता है ।। १-२ ।। उस आनन्द का जो प्रथम विकार होता है उसे अहंकार कहा गया है । उससे अभिमान की उत्पत्ति हुई । उस अभिमान में तीनों लोक व्याप्त हो गया ।। ३ ।। अभिमान से रति की उत्पत्ति हुई वह व्यभिचारी आदि भाव सामान्य के सहयोग से परिपुष्ट होकर शृङ्गार के नाम से अभिहित की जाती है ।। ४ ।। शृङ्गार के ही इच्छानुसार हास्य आदि अनेक दूसरे भेद प्रकट हुए । उनके अपने-अपने विशेष स्थायिभाव होते हैं । उनके परिपोष (अभिव्यक्ति) ही विभिन्न रस हैं ।। ५ ।। वे रस परमात्मा के सत्त्व आदि गुणों के विस्तार से प्रकट होते हैं । अनुराग से शृङ्गार की उत्पत्ति होती है, तीक्ष्णता से रौद्र रस की ।। ६ ।। उत्साह से वीर तथा संकोच

रौद्रवीरभयानकाः ॥ ८ ॥ वीभत्साद्भुतशान्ताख्याः स्वभावाच्चतुरो रसाः । लक्ष्मीरिव विना त्यागान्न वाणी भाति नीरसा ॥ ९ ॥ अपारे काव्यसंसारे कविरेव प्रजापतिः । यथा वै रोचते विश्वं तथेदं परिवर्त्तते ॥ १० ॥ शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत् । स चेत् कविवीतरागो नीरसं व्यक्तमेव तत् ॥ ११ ॥ न भावहीनोऽस्ति रसो न भावो रसवर्जितः । भावयन्ति रसानेभिर्भाव्यन्ते च रसा इति ॥ १२ ॥ स्थायिनोऽष्टौ रतिमुखाः स्तम्भाद्याष्टौ च सात्त्विकाः । मनोऽनुकूलेऽनुभवः सुखस्य रतिरिष्यते ॥ १३ ॥ हर्षादिभिश्चमनसो विकाशो हास उच्यते । चित्रादिदर्शनाच्चेतो वैक्लव्यं ब्रुवते भयम् ॥ १४॥ जुगुप्सा च पदानां निन्दा दौर्भाग्यवाहिनाम्। विस्मयोऽतिशयेनार्थ दर्शनाच्चित्त विस्तृतिः॥ १५॥ अष्टौ स्तम्भादयः सत्त्वाद्राजसस्तामसः परम् । स्तम्भश्चेष्टा प्रतिघातो भयरागाद्युपाहितः॥ १६॥ श्रमरागाद्युवेतान्तः क्षोभजन्मवपुर्जलम्। स्वेदो हर्षादिभिर्देहोच्छ्वासाऽन्तः पुलकोद्गमः॥ १७॥ हर्षादिजन्म वाक्सङ्ग स्वरभेदो भयादिभिः। मनोवैक्लव्यमिच्छन्ति शोकमिष्टक्षयादिभिः॥ १८॥ क्रोधस्तैक्ष्णप्रबोधश्चप्रतिकूलानुकारिणि। पुरुषार्थसमाप्त्यार्थो यः स उत्साहउच्यते॥ १९॥ चित्तक्षोभभवोत्तम्भो वेपथुः परिकीर्त्तितः। वैवर्ण्यञ्च विषादादिजन्माकान्तिविपर्य्ययः॥ २०॥ दुःखानन्दादिजं नेत्रजलमश्रु च विश्रुतम् । इन्द्रियाणामस्तमयः प्रलयो लङ्घनादिभिः ॥ २१॥ वैराग्यादिर्मनः खेदो निर्वेद इति कथ्यते । मनः पीड़ादिजन्मा च सादो ग्लानिःशरीरगा ॥ २२ ॥ शङ्कानिष्टागमोत्प्रेक्षा स्यादसूया च मत्सरः । मदिराद्युपयोगोत्थं मनःसंमोहनं मदः ॥ २३॥ क्रियातिशयजन्मान्तःशरीरोत्थक्लमःश्रमः। शृङ्गारादिक्रियाद्वेषश्चित्तस्यालस्यमुच्यते॥ २४॥ दैन्यं सत्त्वादपभ्रंशश्चिन्तार्थपरिभावनम् । इतिकर्त्तव्यतोपायादर्शनं

से बीभत्स रस का उदय होता है । शृङ्गार रस से हास्य रस की रौद्र रस से करुण रस की वीर रस से अद्भुत रस की तथा बीभत्स रस से भयानक रस की उत्पत्ति होती है ।। ७ ।। शृङ्गार, हास्य, करुण, रौद्र, वीर, भयानक, वीभत्स, अद्भुत तथा शान्त ये नवरस हैं किन्तु सहज रस चार ही हैं- ।। ८ ।। जिस तरह त्याग के विना धन की शोभा नहीं होती है, उसी तरह रस के विना वाणी की भी शोभा नहीं होती है ।। ९ ।। अपार काव्य संसार का प्रजापति (स्रष्टा) अकेला कवि ही होता है । उसको जैसा काव्य अच्छा लगता है वैसा ही उसका निर्माण कर देता है ।। १० ।। यदि कवि शृङ्गारी होता है तो काव्य लोक रसमथ हो जाता है, यदि वह वीतराग होता है तो वह काव्य भी नीरस हो जाता है ।। ११ ।। भाव से रहित रस नहीं होता है तथा रस से रहित भाव नहीं होता है । चूँकि भावों से रस की भावना (अभिव्यक्त) होती है, अतएव 'भाव्यन्ते रसा एभिः' इस व्युत्पत्ति के अनुसार ये भाव कहलाते हैं ।। १२ ।। रति आदि आठ स्थायिभाव हैं तथा स्तम्भ आदि आठ सात्त्विक भाव हैं । मन के अनुकूल सुख के अनुभव को रति कहा जाता है ।। १३ ।। हर्ष आदि के कारण होने वाले मन के विकास को हास कहा जाता है । इष्टवस्तु के क्षय आदि के कारण होने वाली मन की विकलता को शोक कहा जाता है ।। १४ ।। अपने प्रतिकूल आचरण करने वाले पर होने वाली कठोरता का नाम क्रोध है । जो मनोभाव पुरुषार्थ के अनुकूल होता है उसे उत्साह कहते हैं ।। १५ ।। किसी चित्र अथवा भयंकर दृश्य के देखने से होने वाली चित्त की विकलता को भय कहते हैं । दुर्भाग्यवाही पदार्थों की निन्दा को ही जुगुप्सा कहते हैं ।। १६ ।। किसी आश्वचर्यकारी वस्तु को देखकर चित्त के अत्यन्त आश्चर्य से भर जाने को ही विस्मय कहते हैं । स्तम्भ आदि आठ सात्विक भाव हैं जो रजोगुण तमोगुण से परे हैं ।। १७ ।। भय अथवा राग आदि उपाधियों के कारण चेष्टा के प्रतिघात (रुक) हो जाने को ही स्तम्भ कहते हैं । श्रम तथा राग आदि से युक्त अन्तःकरण के क्षुब्ध हो जाने के काराण जो शरीर से पसीना निकलने लगता है उसे स्वेद कहते हैं । हर्ष आदि के कारण शरीर के उल्लसित हो जाने तथा उसमें रोंगटे खड़े हो जाने को रोमाञ्च कहते हैं ।। १८ ।। हर्ष आदि अथवा भय आदि के कारण शब्द का स्पष्ट उच्चारण न होना ही स्वरभेद कहलाता है ।। १९ ।। चित्त के क्षुब्ध हो जाने के कारण जो शरीर काँपने लगता है उसे वेपथु कहते हैं । विषाद आदि के कारण शरीर की कान्ति आदि के बदल जाने को वैवर्ण्य कहते हैं ।। २०।। दुःख अथवा आनन्द विशेष के कारण आँख से जो आँसू निकलने लगता है, उसे अश्रु कहते हैं । उपवास आदि के कारण इन्द्रियाँ अपने कार्यों से उपरत हो जाती हैं तो उसे प्रलय कहते हैं ।।२१।। वैराग्य आदि के कारण जो मन में उदासीनता आ जाती है, उसे निर्वेद कहते हैं । मानसिक पीडा आदि के कारण जो शरीर में शिथिलता उत्पन्न हो जाती है उसे ही ग्लानि कहते हैं ।। २२ ।। अनिष्ट

मोह उच्यते ॥ २५॥ स्मृतिः स्यादनुभूतस्य वस्तुनः प्रतिबिम्बनम् । मतिरर्थपरिच्छेदस्तत्त्व ज्ञानोपनायितः॥ २६॥ क्रीड़ानुरागादिभवः सङ्कोचः कोऽपि चेतसः । भवेच्चपलताऽस्थैर्य्यं हर्षश्चित्तप्रसन्नता॥ २७॥ आवेशश्च प्रतीकारः शयो वैधुर्य्यमात्मनः । कर्त्तव्ये प्रतिभाभ्रंशो जड़तेत्यभिधीयते॥२८॥ इष्टप्राप्तेरुपचितिः सम्पदाभ्युदयो धृतिः । गर्वः परेष्ववज्ञानमात्मन्युत्कर्षभावना॥ २९॥ भवेद्विषादो दैवादेर्विघातोऽभीष्टवस्तुनि। औत्सुक्यमीप्सिताप्राप्तेर्वाञ्छया तरला स्थितिः ॥ ३० ॥ चित्तेन्द्रियाणां स्तैमित्यमपस्मारोऽचला स्थितिः । युद्धे बाधादिभीस्त्रासो वीप्सा चित्तचमत्कृतिः॥३१॥ क्रोधस्याप्रशमोऽमर्षः प्रबोधश्चेतनोदयः । अवहित्थं भवेद् गुप्तिरिङ्गिताकारगोचरा ॥ ३२॥ रोषतो गुरुवाग्दण्डपारुष्यं विदुरुग्रताम् । ऊहो वितर्कः स्याद्व्याधिर्मनोवपुरवग्रहः ॥ ३३॥ अनिबद्धप्रलापादिरुन्मादो मदनादिभिः । तत्त्वज्ञानादिना चेतः कषायो परमः शमः॥३४॥ कविभिर्योजनीया वै भावाः काव्यादिके रसाः । विभाव्यते हिरत्यादिर्यत्र येन विभाव्यते ॥ ३५ ॥ विभावो नाम स द्वेधालम्बनोद्दीपनात्मकः। रत्यादिभाववर्गोऽयं यमाजीव्योपजायते॥ ३६॥ आलम्बनविभावोऽसौ नायकादिभवस्तथा । धीरोदात्तो धीरोद्धतः स्याद्धीरललितस्तथा ॥ ३७ ॥ धीरप्रशान्त इत्येवं चतुर्धा नायकः स्मृतः । अनुकूलो दक्षिणश्च शठो धृष्टः प्रवर्तितः॥ ३८॥ पीठमर्दो विटश्चैव विदूषक इति त्रयः । शृङ्गारे नर्मसचिवा नायकस्यानुनायकाः ॥ ३९ ॥ पीठमर्दः सम्बलकः श्रीमांस्तद् वेशजो विटः । विदूषको वै हसिकस्त्वष्टानायकनायिकाः॥ ४०॥ स्वकीया परकीया

वस्तु की प्राप्ति की सम्भावना को शंका कहते हैं । मत्सर (दूसरे के उत्कर्ष को नहीं सह सकने) को असूया कहते हैं । मदिरा आदि के सेवन करने के कारण जो मन में मोह (अज्ञान) उत्पन्न होता है उसे ही मद कहते हैं ।। २३ ।। अधिक कार्य करने के कारण शरीर में जो क्लान्ति उत्पन्न होती है उसी को श्रम कहते हैं । शृंगार आदि की क्रियाओं को धारण करने में जो चित्त का द्वेष होता है उसे आलस्य कहते हैं ।। २४ ।। धैर्य को त्याग देने को ही दैन्य कहते हैं तथा अभिप्रेत वस्तु की प्राप्ति न होने के कारण बार-बार उसके बारे में सोचने को चिन्ता कहते हैं । किसी कार्य को पूरा करने के उपाय के नहीं सूझने को ही मोह कहते हैं।। २५ ।। अनुभूत वस्तु का चित्त में प्रतिबिम्बित होना ही स्मृति कहलाती है । तत्त्वज्ञान के द्वारा अर्थों के निश्चय करने को ही मति कहते हैं।।२६।। अनुराग आदि के कारण होने वाले किसी अवर्णनीय मानसिक संकोच को ही ब्रीड़ा कहते हैं । चित्त की अस्थिरता को चपलता कहते हैं तथा चित्त की प्रसन्नता को ही हर्ष कहते हैं ।। २७ ।। प्रतिकार की आशा से चित्त में जो विकलता उत्पन्न होती है, उसे ही आवेश कहते हैं । कर्तव्य के विषय में प्रतिभा का काम नहीं करना जड़ता कहलाती है ।। २८ ।। अभीष्ट वस्तु की प्राप्ति से बढ़े हुए सन्तोष अथवा आनन्द के अभ्युदय को धृति कहते हैं । दूसरों में निकृष्टता तथा अपने में होने वाली उत्कृष्टता की भावना को गर्व कहते हैं ।। २९ ।। अभिप्रेत वस्तु की प्राप्ति के कारण होने वाले विघ्न के कारण जो दुख होता है उसे विषाद कहते हैं । अभिप्रेत वस्तु को प्राप्त करने की इच्छा से मन की चञ्चल स्थिति को उत्सुकता अथवा उत्कण्ठा कहते हैं ।। ३० ।। चित्त तथा इन्द्रियों में आयी हुई स्तिमितता के कारण जो चित की चंचलता है उसे अपस्मार कहते हैं । युद्ध आदि बाधाओं के आ जाने से स्थिर न रह पाना ही त्रास है ।। ३१ ।। क्रोध के शान्त न हो पाने को अमर्ष कहते हैं तथा चेतना के उदय को प्रबोध कहते हैं । चेष्टा तथा आकार से प्रकट होने वाले भावों को छिपाने को अवहित्था कहते हैं ।। ३२ ।। क्रोध में आकर गुरुजनों पर कठोरवाग्दण्ड का प्रहार ही उग्रता कहलाती है । चित्त की ऊहापोह की स्थिति को वितर्क कहते हैं तथा शरीर एवं मन के प्रतिकूल परिस्थिति को व्याधि कहते हैं ।। ३३ ।। काम आदि के कारण असम्बद्ध (उन्मत्त) प्रलाप करने को उन्माद कहते हैं । तत्त्वज्ञान हो जाने के कारण जो चित्त की वासना शान्त हो जाती है उसे शम कहते हैं ।। ३४ ।। कविजनों को चाहिए कि वे काव्य आदि में भावों तथा रसों का सन्निवेश करें । जिसमें रति आदि भावों की विभावना हो अथवा जिसके द्वारा उनकी विभावना की जाय उन्हें विभाव कहा जाता है । विभाव दो प्रकार के होते हैं- आलम्बन विभाव तथा उद्दीपन विभाव । रति आदि भाव समूह जिसका आश्रय लेकर निष्पन्न होते हैं, वह विभाव आलम्बन विभाव कहलाता है । यह नायक आदि का आलम्बन लेकर उद्भूत होते हैं ।। ३५-३६ ।। नायक चार प्रकार के कहे गये हैं- धीरोदात्त, धीरोद्धत, धीरललित तथा धीर प्रशान्त। इन चारों के चार-चार भेद होते हैं- अनुकूल, दक्षिण, शठ एवं धृष्ट । इस तरह नायकों की संख्या सोलह हो जाती है ।। ३७-३८।। पीठ मर्द, विट तथा विदूषक ये तीनों शृंगार रस में नायक के (नर्मसचिव नायक एवं नायिका को मिलाने वाले) तथा नायक के अनुगामी होते हैं ।। ३९ ।। पीठमर्द तो श्रीमान् (ऐश्वर्य सम्पन्न) तथा नायक के समान बलशाली होता

च पुनर्भूरिति कौशिकाः । सामान्या न पुनर्भूरिरित्याद्या बहुभेदतः॥ ४१॥ उद्दीपनविभावास्ते संस्कारैर्विविधैः स्थितैः । आलम्बनविभावेषु भावानुद्दीपयन्ति ये॥ ४२॥ चतुः षष्टिकला द्वेधा कर्माद्यैर्गीतकादिभिः । कुहकं स्मृतिरप्येषां प्रायो हासोपहासकः ॥ ४३ ॥ आलम्बनविभावस्य भावैरुद्बुद्धसंस्कृतैः । मनोवाग्बुद्धिवपुषां स्मृतीच्छाद्वेषयत्नतः ॥ ४४॥ आरम्भ एव विदुषामनुभाव इति स्मृतः । स चानुभूतये चात्र भवत्युत निरुच्यते ॥ ४५॥ मनोव्यापारभूयिष्ठो मन आरम्भ उच्यते । द्विविधः पौरुषस्त्रैण ईदृशोऽपि प्रसिध्यति॥ ४६॥ शोभा विलासो माधुर्य्यं स्थैर्य्य गाम्भीर्य्यमेव च । ललितञ्च तथौदार्य्यं तेजोऽष्टाविति पौरुषाः ॥ ४७ ॥ नीचनिन्दोत्तमस्पर्द्धा शौर्य्यं दाक्षादिकारणम् । मनोधर्मे भवच्छोभा शोभते भवनं यया ॥ ४८ ॥ भावो हावश्च हेला च शोभा कान्तिस्तथैव च । दीप्तिर्माधुर्य्यशौर्य्ये च प्रागल्भ्यं स्यादुदारता ॥ ४९ ॥ स्थैर्य्यं गम्भीरता स्त्रीणां विभावा द्वादशेरिताः । भावो विलासो हावः स्याद् भाव; किञ्चिच्च हर्षजः ॥ ५० ॥ वाचोयुक्तिर्भवेद् वागारम्भो द्वादश एव सः । तत्राभाषणमालापः प्रलापो वचनं बहुः॥ ५१॥ विलापो दुःखवचनमनुलापोऽसद्कृद्वचः । संलाप उक्तप्रत्युक्तमपलापोऽन्यथा वचः ॥ ५२॥ वार्त्ताप्रयाणं सन्देशो निर्देशः प्रतिपादनम्। तत्त्वदेशोऽतिदेशोऽयमपदेशोऽन्यवर्णनम्॥ ५३॥ उपदेशश्च शिक्षावाक् व्याजोक्तिर्व्यपदेशकः । बोधाय एष व्यापारः सुबुध्यारम्भ इष्यते । तस्य भेदास्त्रयस्ते च रीतिवृत्तिप्रवृत्तयः ॥ ५४॥

इत्यादिमहापुराण आग्नेये शृङ्गारादिरसनिरूपणकथनं नामोनचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३३९ ॥

---

है। विट (धूर्त) नायक के ही देश का कोई व्यक्ति होता है । विदूषक प्रहसन के द्वारा नायक को प्रसन्न करने वाला होता है । नायक की नायिकाएँ आठ प्रकार की होती हैं ।। ४० ।। स्वकीया, परकीया, पुनर्भू । कौशिका कार्य के मत से पुनर्भू नायिका होती है । कुछ लोग पुनर्भू को न मानकर उसके स्थान पर सामान्या को मानते हैं । सामान्या नायिकाओं के अनेक भेद होते हैं ।। ४१ ।। उद्दीपन विभाव विविध संस्कारों के रूप में स्थित रहते हैं । ये आलम्बन विभाव में भावों को उद्दीप्त करते हैं ।। ४२ ।। चौसठ कलाएँ कर्मादि तथा गीतिकादि के भेद से दो प्रकार की होती हैं । 'कुहक' तथा 'स्मृति' प्रायः हासोपहारक हैं ।। ४३ ।। आलम्बन विभाव के उद्बुद्ध संस्कार से युक्त भावों के द्वारा स्मृति, इच्छा, द्वेष एवं प्रयत्न के संयोग से किए गए मन, वाणी, बुद्धि तथा शरीर के कार्य को विद्वानों ने अनुभाव कहा है । 'स अत्र अनुभूयते अथवा अनुभवति' अर्थात् आलम्बन में जो अनुभव किया जाता है अथवा आलम्बन में जो दर्शन के पश्चात् अभिव्यक्ति होता है, यह अनुभाव शब्द की निरुक्ति है ।। ४४-४५ ।। मानसिक व्यापार की बहुलता से युक्त कार्य 'मन का कार्य' कहा जाता है । वह दो प्रकार का होता है- पौरुष (पुरुष सम्बन्धी) तथा स्त्रैण (स्त्री सम्बन्धी) । वह इस तरह से भी प्रख्यात है ।। ४६ ।। शोभा, विलास, माधुर्य, स्थैर्य, गाम्भीर्य, ललित, औदार्य तथा तेज- ये आठ प्रकार के पौरुष मानसिक कार्य हैं ।। ४७ ।। नीच जनों की निन्दा, उत्तम पुरुषों से स्पर्धा, शौर्य तथा चातुर्य इनके कारण मानसिक कार्य के रूप में शोभा का आविर्भाव होता है जैसे भवन की शोभा ।। ४८ ।। भाव, हाव, हेला, शोभा, कान्ति, दीप्ति, माधुर्य, शौर्य, प्रगल्भता, उदारता, स्थिरता एवं गम्भीरता, ये बारह स्त्रियों के विभाव बतलाए गए हैं ।। ४९ ।। विलास और हाव को भाव कहते हैं । भाव कुछ हर्ष से उद्भूत होता है । वाणी के योग को वागारम्भ कहते हैं उसके भी बारह भेद होते हैं ।। ५० ।। उसमें भी भाषण को आलाप कहते हैं , अधिक भाषण को प्रलाप कहते हैं, दुःखपूर्ण वचन को विलाप कहते हैं। बारम्बार किए जाने वाले कथन को अनुलाप कहते हैं । कथोपकथन को संलाप कहते हैं । किसी बात को झुठलाने को अपलाप कहते हैं ।। ५१-५२ ।। वार्ता के परिवहन को 'संदेश' तथा विषय के प्रतिपादन को निर्देश कहते हैं तत्त्वकथन को अतिदेश तथा निस्सार वस्तु के वर्णन को 'अपदेश' कहते हैं ।। ५३ ।। शिक्षापूर्ण वचन को उपदेश तथा व्याजोक्ति को व्यपदेश कहते हैं । दूसरों को अभिप्रेत अर्थ का ज्ञान कराने के लिए सुन्दर बुद्धि का आश्रय लेकर वागारम्भ का व्यापार होता है । उसके भी तीन भेद होते हैं- रीति, वृत्ति एवं प्रवृत्ति ।। ५४ ।।

इस तरह से आदिमहापुराण अग्निपुराण का शृङ्गार आदि रसों के वर्णन नामक तीन सौ उनचालीसवाँ अध्याय सम्पूर्ण हुआ ॥ ३३९ ॥

## चत्वारिंशदधिकत्रिशततमोऽध्यायः

## रीतिनिरूपणम्

अग्निरुवाच— **वाग्विद्यासम्प्रतिज्ञाने रीतिः सापि चतुर्विधा । पाञ्चाली गौड़देशीया वैदर्भी लाटजा तथा ॥ १ ॥ उपचारयुता मृद्वी पाञ्चाली ह्रस्वविग्रहा । अनवस्थितसन्दर्भा गौड़ीया दीर्घविग्रहाः ॥ २॥ उपचारैनबहुभिरुपचारैर्विवर्जिता । नातिकोमलसन्दर्भा वैदर्भी मुक्तविग्रहा ॥ ३ ॥ लाटीया स्फुटसन्दर्भा नातिविस्फुरविग्रहा । परित्यक्ताऽपि भूयोभिरुपचारैरुदाहृता ॥ क्रियास्वविषमा वृत्तिर्भारत्यारभटी तथा । कौशिकी सात्वती चेति सा चतुर्धा प्रतिष्ठिता ॥ ५ ॥ वाक्प्रधाना नरप्राया स्त्रीयुक्ता प्राकृतोक्तिता । भरतेन प्रणीतत्वाद् भारतीरीतिरुच्यते॥ ६॥ चत्वार्य्यङ्गानि भारत्या वीथी प्रहसनं तथा । प्रस्तावना नाटकादेर्वीथ्यङ्गाश्च त्रयोदश॥ ७॥ उद्घातकं तथैव स्याल्लपितं स्याद् द्वितीयकम् । असत्प्रलापो वाक्श्रेणी नालिका विपणं तथा ॥ ८॥ व्याहारस्त्रिमतश्चैव छलावस्कन्दिते तथा । गण्डोऽथ मृदवश्चैव त्रयोदशमथाचितम् ॥ ९॥ तापसादेः प्रहसनं परिहासपरं वचः । मायेन्द्रजालयुद्धादिबहुलारभटी स्मृता ॥ सङ्क्षिप्तकारपातौ च वस्तूत्थापनमेव च ॥ १० ॥**

इत्यादिमहापुराण आग्नेये रीतिनिरूपणं नाम चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४० ॥

## एकचत्वारिंशदधिकत्रिशततमोऽध्यायः

## नृत्यादिरङ्गकर्मनिरूपणम्

अग्निरुवाच— **चेष्टाविशेषमप्यङ्गप्रत्यङ्गे कर्म चानयोः। शरीरारम्भमिच्छन्ति प्रायः पूर्वोऽवलाश्रयः॥ १॥ लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम्।**

---

**अग्निदेव ने कहा—** वसिष्ठ ! अब मैं वाग्विद्या के सम्यक् ज्ञान के लिए रीति का निरूपण कर रहा हूँ । रीति चार प्रकार की होती है । पाञ्चाली, गौडी, वैदर्भी और लाटी ।। १ ।। इनमें से पाञ्चाली रीति उपचार से युक्त कोमल एवं लघु समासों से युक्त होती है ।। गौड़ी रीति में संदभर की अधिकता, तथा बड़े-बड़े समासों की बहुलता होती है ।। २ ।। वह अधिक उपचारों से युक्त नहीं होती । वैदर्भी रीति उपाचारों से रहित होती है, सामान्यतः कोमल सन्दर्भों से युक्त तथा समास से रहित होती है ।। ३ ।। लाटी रीति में संदर्भ स्फुट रूप से विद्यमान रहते हैं । उसमें समास अधिक स्पष्ट नहीं होते हैं । वह अनेक विद्वानों से परित्यक्त हैं फिर भी वह उपचार से युक्त रूप में पायी जाती है ।। ४ ।। जो क्रियाओं में विषमता को नहीं प्राप्त होती है वह वाक्य रचना वृत्ति कही जाती है । उसके चार भेद हैं- भारती, आरभटी, कैशिकी और सात्त्वती ।। ५ ।। भारती वृत्ति में वाचिक अभिनय की प्रधानता होती है, वह पुरुष प्रधान होती है, कभी-कभी स्त्रियों के आश्रित होने पर वह प्राकृत उक्तियों से युक्त होती है । भरत के द्वारा प्रयुक्त होने के कारण उसे भारती कहा जाता है ।। ६ ।। भारती वृत्ति के चार अंग होते हैं- बीथी, प्रहसन, आमुख तथा नाटकादि विषय की प्ररोचना। वीथी के भी तेरह अंग होते हैं ।। ७ ।। उद्घातक, लपित, असत् प्रलाप, वाक् श्रेणी, नालिका, विपण, व्याहार, त्रिगत, छल, अवस्यन्दित, गण्ड, मृदव और उचित ।। ८-९ ।। तापस आदि के परिहासयुक्त वचन को प्रहसन कहते हैं । आरभटी वृत्ति में, माया, इन्द्रजाल तथा युद्ध आदि की बहुलता बतलायी गयी है । आरभटी वृत्ति के भेद हैं- संक्षिप्तकारपात तथा वस्तूत्थापन।।१०-११।।

**इस तरह से आदिमहापुराण अग्निपुराण का रीति वर्णन नामक तीन सौ चालीसवाँ अध्याय सम्पूर्ण हुआ ॥ ३४० ॥**

**अग्निदेव ने कहा—** वसिष्ठ अब मैं अभिनय में नृत्य आदि के समय शरीरसे होने वाली चेष्टा विशेष को तथा अङ्ग प्रत्यङ्ग के कर्म को बतलाता हूँ । इसे विज्ञ पुरुष आङ्गिक कर्म मानते हैं।

मोट्टायितं कुट्टमितं विव्वोको ललितन्तथा ॥ २ ॥ विकृतं क्रीड़ितं केलिरिति द्वादशधैव सः । लीलेष्टजनचेष्टानुकरणं संवृतक्षये ॥ ३ ॥ विशेषान् दर्शयन् किञ्चिद् विलासः सद्भिरिष्यते । हसितक्रन्दितादीनां सङ्करः किलकिञ्चितम् ॥ ४ ॥ विकारः कोऽपि विव्वाको ललितं सौकुमार्य्यतः । शिरः पाणिरुरः पार्श्वं कटिरंघ्रिरिति क्रमात् ॥ ५ ॥ अङ्गानि भ्रूलतादीनि प्रत्यङ्गान्यभिजानते । अङ्गप्रत्यङ्गयोः कर्म प्रयत्नजनितं विना ॥ ६॥ न प्रयोगः क्वचिन्मुख्यन्तिरश्चीनञ्च तत् क्वचित् । आकम्पितं कम्पितञ्च धूतं विधूतमेव च॥ ७॥ परिवाहितमाधूतमवधूतमथांचितम् । निकुञ्चितं परावृत्तमुत्क्षिप्तञ्चाप्यधोगतम्॥८॥ ललितञ्चेति विज्ञेयं त्रयोदशविधं शिरः । भ्रू कर्म सप्तधा ज्ञेयं पातनं भ्रूकुटीमुखम् ॥ ९॥ द्रष्टिस्त्रिधा रसस्थायिसंञ्चारिप्रतिबन्धना । षट्त्रिंशद्भेदविधुरा रसजा तत्र चाष्टधा॥ १०॥ नवधा तारकाकर्म भ्रमणञ्चलनादिकम् । षोढ़ा च नासिका ज्ञेया निश्वासो नवधा मतः ॥ ११ ॥ षोढ़ोष्ठकर्मकं पाद्यं सप्तधा चिबुकक्रिया । कलुषादिमुखं षोढा ग्रीवा नवविधा स्मृता॥ १२॥ असंयुतः संयुतश्च भूम्ना हस्तः प्रयुज्यते । पताकास्त्रिपताकश्च तथा वै कर्त्तरीमुखः ॥ १३॥ अर्द्धचन्द्रोत्करालश्च शुकतुण्डस्तथैव च । मुष्टिश्च शिखरश्चैव कपित्थः केटकामुखः ॥ १४॥ सूच्यास्यः पद्मकोषोहि शिराः समृगशीर्षकाः । कामूलकालपद्मौ च चतुरभ्रमरौ तथा ॥ १५ ॥ हंसास्यहंसपक्षा च सन्दंशमुकुलौ तथा । उर्णनाभस्ताम्रचूड़श्चतुर्विंशतिरित्यमी ॥ १६॥ असंयुतकराः प्रोक्ताः संयुतास्तु त्रयोदश । अञ्जलिश्च कपोतश्च कर्कटः स्वस्तिकस्तथा॥ १७॥ कटको वर्धमानश्चाप्यसङ्गो निषधस्तथा । दोलः पुष्पपुटश्चैव तथा मकर एव च ॥ १८ ॥ गजदन्तो बहिस्तम्भो वर्धमानोऽपरे कराः । उरः पञ्चविधं स्यात् तु आभुग्ननर्त्तनादिकम्॥ १९ ॥ उदरं दुरतिक्षामंखण्डं पूर्णमिति त्रिधा । पार्श्वयोः पञ्चकर्माणि जङ्घाकर्म

इन सबों के अबलाजनों के आश्रित होने पर ये सब विच्छित्ति विशेष के पोषक होते हैं ।। १ ।। लीला विलास, विभ्रम विच्छित्ति, किलकिञ्चित, मोट्टायित, कुट्टमित, विब्वोक ललित, विकृत, क्रीडित तथा केलि- ये बारह नायिकाओं के यौवन काल में सहजभाव से उद्भूत होने वाले अलंकार हैं ।। २ ।। आवरण से आवृत्त स्थान में प्रियजनों की चेष्टा के अनुकरण को लीला कहते हैं ।। ३।। प्रियजनों के दर्शन आदि से मुख और नेत्र आदि में चेष्टा से होने वाले हास तथा शुष्क रुदन आदि के मिश्रण को किलकिंचित् कहते हैं ।। ४ ।। चित्त के किसी गर्वयुक्त विकार को विव्वोक कहते हैं, सौकुमार्य जनित चेष्टा विशेष को ललित कहते हैं । सिर, हाथ, वक्ष-स्थल, कमर के पार्श्व तथा पैर ये क्रमशः अंग हैं । भ्रूलता (भौंह) इत्यादि प्रत्यङ्ग अथवा उपाङ्ग हैं । अङ्ग प्रत्यङ्गों के प्रयत्नजनित कर्म (चेष्टा विशेष) के विना नृत्य आदि का प्रयोग सफल नहीं होता है । वह कहीं मुख्य रूप से तथा कहीं वक्र रूप से साधित होता है ।। ५-६ ।। आकम्पित, कम्पित, द्रुत, विद्रुत, परिवाहित, आघूत, अवधूत, अञ्चित, निकुंचित, परावृत्त उत्क्षिप्त, अधोगत एवं लोलित- ये तेरह प्रकार के शिरःकर्म होते हैं ।। ७-८।। भ्रूकर्म सात प्रकार के होते हैं- भ्रूकर्मों में पातन आदि कर्म प्रधान हैं ।। ९ ।। रस, स्थायिभाव एवं संचारी भाव के सम्बन्ध से दृष्टि का अभिनय तीन प्रकार का होता है । उसके भी छत्तीस भेद होते हैं । उनमें दस भेद रस से उत्पन्न होते हैं ।। १० ।। भ्रामण एवं संचालन के भेद से कनीनिका (आँख की पुतली) के कर्म नव प्रकार के होते हैं । नाक के कर्म छह प्रकार के होते हैं तथा निःश्वास के कर्म नव प्रकार के होते हैं ।। ११ ।। ओष्ठ के कर्म छह, पाद के कर्म, छह, चिबुक (ठोढ़ी) के कर्म सात तथा ग्रीवा (गर्दन) के कर्म नौ प्रकार के होते हैं ।। १२ ।। हस्त (हाथ) के कर्म दो प्रकार के होते हैं संयुत एवं असंयुत के भेद से । पताक,, त्रिपताक, कर्तरीमुख, अर्द्धचन्द्र, उत्कराल, शुकतुण्ड, मुष्टि, शिखर कपित्थ, केकटामुख ।। १३-१४।। सूच्यास्य, पद्मकोष, अतिशिरा, मृगशीर्षक, कामूल, कालपद्म, चतुर, भ्रमर, हंसास्य, हंसपक्ष, संदंश, मुकुल, ऊर्णनाभ एवं ताम्रचूड ये चौबीस भेद असंयुत हस्त के अभिनय कर्म के हैं तथा संयुत करके अभिनय तेरह प्रकार के होते हैं ।। १५-१६।। अंजलि, कपोत, कर्कट, स्वस्तिक, कटक, असंग, निषध, दोल, पुष्पपुट, मकर, गजदन्त, एवं वहिः स्तम्भ । संयुत हस्त के परिवर्द्धन से अन्य भेद भी होते हैं ।। १७-१८।। वक्षःस्थल के अभिनय पाँच प्रकार के होते हैं- अभुग्ननर्तन आदि के भेद से ।। १९ ।। उदर कर्म

च पञ्चधा। अनेकधा पादकर्म नृत्यादौ नाटके स्मृतम् ॥ २० ॥

इत्यादिमहापुराण आग्नेये नृत्यादिरङ्गकर्मनिरूपणं नाम एकचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४१ ॥

## द्विचत्वारिंशदधिकत्रिशततमोऽध्यायः

## अभिनयादिनिरूपणम्

अग्निरुवाच– **आभिमुख्यं नयन्नर्थान् विज्ञेयोभिनयो बुधैः। चतुर्धा सम्भवः सत्त्ववागङ्गाहरणाश्रयः॥ १॥ स्तम्भादिः सात्त्विको वागारम्भो वाचिक आङ्गिकः। शरीरारभ आहार्य्यो बुद्ध्यारम्भप्रवृत्तयः ॥ २ ॥ रसादि विनियोगोऽथ कथ्यते ह्यभिमानतः। तमन्तरेण सर्वेषामयार्थै व स्वतन्त्रता॥ ३॥ सम्भोगो विप्रलम्भश्च शृङ्गारो द्विविधः स्मृतः। प्रच्छन्नश्च प्रकाशश्च तावपि द्विविधौ पुनः॥ ४॥ विप्रलम्भाभिधानो यः शृङ्गारः स चतुर्विधः। पूर्वानुरागमानाख्यः प्रवासकरुणात्मकः॥ ५॥ एतेभ्योऽन्यतरं जायमानसम्भोगलक्षणम्। विवर्त्तते चतुर्धैव न च प्रागतिवर्त्तते ॥ ६॥ स्त्रीपुंसयोस्तदुदयस्तस्य निर्वर्त्तिका रतिः। निखिलाः सात्त्विकास्तत्र वैवर्ण्यप्रलयौ विना ॥ ७ ॥ धर्मार्थकाममोक्षैश्च शृङ्गार उपचीयते। आलम्बनविशेषैश्च तद्विशेषैर्निरन्तरः ॥ ८ ॥ शृङ्गारं द्विविधं विद्याद् वाङ्नेपथ्यक्रियात्मकम्। हासश्चतुर्विधोऽलक्ष्यदन्तः स्मित इतीरितः ॥ ९ ॥ किञ्चिल्लक्षितदन्ताग्रं हसितं फुल्ललोचनम्। विहसितं सस्वनं स्याज्जिह्मोपहसितन्तु तत्॥ १०॥ सशब्दं पापहसितमशब्दमतिहासितम्। यश्चासौ करुणो नाम स रसस्त्रिविधो भवेत्॥ ११॥ धर्मोपघातजश्चित्तविलासजनितस्तथा। शोकः शोकाद् भवेत् स्थायी कः स्थायी पूर्वजो मतः ॥ १२॥ अङ्गनेपथ्यवाक्यैश्च**

तीन प्रकार के होते हैं- दुरतिक्षाम, खण्ड तथा पूर्ण। पार्श्वभाग के भी अभिनय पाँच प्रकार के होते हैं तथा जंघा के भी अभिनय पाँच प्रकार के होते हैं। नाट्यनृत्य आदि में पाद कर्म (चरण के अभिनय) अनेक प्रकार के बतलाए गए हैं ।। २०-२१ ।।

**इस तरह से आदिमहापुराण अग्निपुराण का नृत्य आदि में उपयोगी अङ्गकर्म का निरूपण नामक तीन सौ एकतालिसवाँ अध्याय सम्पूर्ण हुआ ॥ ३४१ ॥**

**अग्निदेव ने कहा–** वसिष्ठ ! नाटक अथवा काव्य में वर्णित अर्थों को जो सामने उपस्थित कर देता है, विद्वानों ने उसे अभिनय कहा है। अभिनय चार प्रकार का सम्भव है- सात्त्विक, वाचिक, आङ्गिक तथा आहार्य ।। १ ।। स्तम्भ, स्वेद आदि सात्त्विक अभिनय हैं। जिसका आरम्भ वाणी से होता है उसे वाचिक अभिनय कहते हैं। शरीर से किए जाने वाले अभिनय को आङ्गिक अभिनय कहते है तथा जिसका आरम्भ बुद्धि से होता है, उसे आहार्य अभिनय कहते हैं ।। २ ।। रस आदि का विनियोग अभिमान से होता है, यह कहा गया है। रस के आधान के बिना सबकी स्वतंत्र सत्ता व्यर्थ ही है ।। ३ ।। शृंगार रस दो प्रकार का होता है सम्भोग तथा विप्रलम्भ। सम्भोग के भी दो भेद होते हैं- प्रच्छन्न एवं प्रकाश ।। ४ ।। विप्रलम्भ शृगार के चारभेद होते हैं- पूर्वानुराग हेतुक, मानहेतुक, प्रवासहेतुक तथा करुणा हेतुक ।। ५ ।। इनमें से पूर्वानुराग विप्रलम्भ से सम्भोग शृंगार की उत्पत्ति होती है। वह भी पूर्व का अतिक्रमण किए बिना ही चार भागों में विभक्त होता है ।।६।। यह स्त्री तथा पुरुष के आश्रित होता है तथा उसकी निर्वतिका रति होती है। उस सम्भोग शृंगार में वैवर्ण्य तथा प्रलय को छोड़कर सभी सात्त्विक भाव उत्पन्न होते हैं ।। ७ ।। धर्म, अर्थ,काम एवं मोक्ष से, आलम्बन विशेष के द्वारा, उन विशेषों के भी विशेष से शृंगार रस सदा उपचित होता है ।। ८ ।। अभिनेय शृंगार के दो भेद होते हैं- वचनक्रियात्मक तथा नेपथ्य क्रियात्मक ।। ८।। हास्य रस के स्थायीभाव भाव हास के पाँच भेद होते हैं स्मित, हसित, विहसित, अपहसित तथा अतिहसित। जिस हंसी में दाँत न दिखायी पड़े (मुसकुराहट मात्र) को स्मित कहते हैं ।। ९ ।। जिस हँसी में दाँत का अग्रभाग कुछ दिखायी पड़े और नेत्र विकसित हो जायँ वह हसित हैं। ध्वनियुक्त हास को विहसित तथा कुटिलता से युक्त (दृष्टि से देखकर किए गए हास को अपहसित कहते हैं और जिस हंसी

रौद्रोऽपि त्रिविधो रसः । तस्य निर्वर्त्तकः क्रोधः स्वेदो रोमाञ्च वेपथुः ॥ १३ ॥ दानवीरो धर्मवीरो युद्धवीर इति त्रयम् । वीरस्तस्य च निष्पत्तिहेतुरुत्साह इष्यते ॥ १४॥ आरम्भेषु भवेद् यत्र वीरमेवानुवर्त्तते । भयानको नाम रसस्तस्य निर्वर्त्तकं भयम् ॥ १५॥ उद्वेजनः क्षोभणश्च वीभत्सो द्विविधः स्मृतः । उद्वेजनः स्यात् प्लुत्याद्यैः क्षोभणो रुधिरादिभिः ॥ १६ ॥ जुगप्सारम्भिका तस्य सात्त्विकांशो निवर्त्तते । काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते ॥ १७ ॥ अलङ्करिष्णवस्ते च शब्दमर्थमुभौ त्रिधा । ये व्युत्पत्यादिना शब्दमलङ्कर्तुमिह क्षमाः॥ १८॥ शब्दालङ्कारमाहुस्तान् काव्यमीमांसकाविदः । छाया मुद्रा तथोक्तिश्च युक्तिर्गुम्फनया सह ॥ १९ ॥ वाकोवाक्यमनुप्रासश्चित्तं दुष्करमेव च । ज्ञेया नवालंकृतयः शब्दानामित्यसङ्करात्॥ २०॥ तत्रान्योक्तेरनुकृतिश्छाया सापि चतुर्विधा । लोकच्छेकार्भकोत्तीनामेकोक्तेरनुकारतः॥ २१॥ आभाणकोक्तिर्लोकोक्तिः सर्वसामान्य एव ताः । यानुधावति लोकोक्तिश्छायामिच्छन्ति तां बुधाः ॥ २२ ॥ छेका विदग्धा वैदग्ध्यं कलासु कुशला मतिः । तामुल्लिखन्ती छेकोक्तिश्छाया कविभिरिष्यते ॥ २३ ॥ अव्युत्पन्नोक्तिरखिलैरर्भकोक्त्योपलक्ष्यते । तेनार्भकोक्तिश्छाया तन्मात्रोक्तिमनुकुर्वती॥ २४॥ विप्लुताक्षरमश्लीलं वचो मत्तस्य तादृशी । या सा भवति मत्तोक्तिश्छायोक्ताप्यतिशोभते ॥ २५ ॥ अभिप्रायविशेषेण कविशक्तिं विवृण्वती । मुत्प्रदायिनीति सा मुद्रा सैव शय्यापि नो मते ॥ २६ ॥ उक्ति सा कथ्यते यस्यामर्थकोऽप्युपपत्तिमान् । लोकयात्रार्थविधिना धिनोति हृदयं सताम् ॥ २७ ॥ उभौ विधिनिषेधौ च नियमानियमावपि। विकल्पपरिसङ्ख्ये च तदीयाः षडधोक्तयः॥ २८॥ अयुक्तयोरिव मिथो वाच्यवाचकयोर्द्वयोः। योजनायै कल्प्यमाना युक्तिरुक्ता

में व्यक्ति जोर से ठहाका मारकर हँसता है वह अतिहसित है ।। १० ।। जो करुण नाम का रस है, उसके तीन भेद होते हैं । वह तीन कारणों से उद्भूत होता है- (१) धर्मोपघात जनित, (२) चित्तविलासजनित तथा (३) शोकदायक घटना जनित । यदि कोई यह कहे कि शोक जनित शोक में स्थायी कौन शोक होता है । तो इसका उत्तर है कि जो पूर्ववर्ती शोक से उत्पन्न हुआ है, वह ।। ११-१२ ।। अङ्गकर्म, नेपथ्यकर्म तथा वाक्कर्म इन तीनों से सम्बन्धित होने के कारण रौद्र रस भी तीन प्रकार का होता है । उसका स्थायी भाव क्रोध है तथा इसमें स्वेद, रोमाञ्च तथा वेपथु ये तीन सात्त्विक भाव उद्भूत होते हैं ।। १३ ।। वीर रस के भी तीन भेद हैं, दानवीर, धर्मवीर और युद्धवीर । उसकी उत्पत्ति का कारणभूत स्थायी भाव उत्साह है ।। १४ ।। जो प्रारम्भ में वीर का ही अनुसरण करता है तथा आगे चलकर जो भय का उत्पादक होता है, वह भयानक रस है । उसका निर्वर्तक स्थायी भाव भय है ।। १५ ।। बीभत्स रस के दो भेद होते हैं उद्वेजन और क्षोभण। पूति (दुर्गन्धि) आदि के कारण उद्वेजन नामक बीभत्स होता है तथा खून आदि के कारण क्षोभण बीभत्स होता है ।। १६ ।। इसका स्थायी भाव जुगुप्सा है तथा इसमें कोई भी सात्त्विक भाव नहीं उदित होता है ।। १६।। काव्य की शोभा को बढ़ाने वाले धर्मों को अलंकार कहते हैं । वे चूँकि शब्द अर्थ तथा शब्दार्थ को अलंकृत करते हैं अतएव उनके तीन भेद होते हैं ।। १७।। जो व्युत्पत्ति (प्रतिभा) आदि के द्वारा काव्य के शब्दों को अलंकृत करने में समर्थ होते हैं उन अलंकारों को काव्यमीमांसाकारों ने शब्दालंकार कहा है ।। १८।। संकरालंकार को छोड़कर शब्दालंकार के नव भेद होते हैं- छाया, मुद्रा, उक्ति, युक्ति, गुम्फना, वाकोवाक्य, अनुप्रास, चित्त और दुष्कर ।। १९-२० ।। दूसरे के कथन के अनुकरण करने को छाया कहते हैं । इस छाया के भी चार भेद होते हैं - लोकोक्ति, अनुकरण, छेकोक्ति अनुकरण, अर्भकोक्ति अनुकरण तथा मत्तोक्ति अनुकरण ।। २१ ।। आभाणक (कहावत) को लोकोक्ति कहते हैं । इनका सर्वसामान्य में प्रचलन होता है । लोकोक्ति का अनुसरण करने वाली रचना को विद्वज्जन लोकोक्तिछाया कहते हैं ।। २२ ।। विदग्ध (कुशल) को छेक कहते हैं । कला में कुशल बुद्धि को विदग्धता कहते हैं । उस बुद्धि का उल्लेख करने वाली रचना को विद्वानों ने छेकोक्तिछाया कहा है ।। २३ ।। सभी विद्वान् यह मानते हैं कि अर्भकोक्ति मूढ पुरुष की उक्ति का उपलक्षण है । उन मूढ पुरुषों की उक्ति का अनुसरण करने वाली रचना को अर्भकोक्तिछाया कहा जाता है ।। २४ ।। मत्त पुरुष की उक्ति अश्लीलता पूर्ण तथा वर्णक्रम हीन होती है । उस प्रकार की उक्ति का अनुसरण करने वाली रचना मत्तोक्ति छाया कहलाती है । वह भी यथावसर वर्णित होने पर सुशोभित होती है ।। २५ ।। अपने विशेष अभिप्राय के द्वारा कवित्वशक्ति का प्रकाशन करने वाली जो रचना सहृदयों को मोद प्रदान करती है, वह मुद्रा कहलाती है । हमारे मत में वही शय्या कहलाती है ।। २६ ।। जिसमें युक्तियुक्त अर्थविशेष का वर्णन हो तथा जो लोकप्रचलन के प्रयोजन की विधि से सज्जनों के अन्तःकरण को सन्तुष्ट करे उसे उक्ति कहते हैं ।। २७ ।। उक्ति से ही सम्बन्धित उक्ति के छह भेद होते

मनीषिभिः॥२९॥ पदञ्चैव पदार्थश्च वाक्यं वाक्यार्थमेव च। विषयोऽस्याः प्रकरणं प्रपञ्चश्चेति षड्विधः॥ ३०॥ गुम्फना रचनाचर्य्या शब्दार्थक्रमगोचरा। शब्दानुकारादर्थानुपूर्वाश्चेयं क्रमात् त्रिधा॥ ३१॥ उक्तिप्रत्युक्तिमद् वाक्यं वाकोवाक्यं द्विधैव तत्। ऋजुवक्रोक्तिभेदेन तत्राद्यं सहजं वचः॥ ३२॥ सा पूर्वप्रश्निका प्रश्नपूर्विकेति द्विधाभवेत्। वक्रोक्तिस्तु भवेद् भङ्गा काकुस्तेन कृता द्विधा ॥ ३३ ॥

इत्यादिमहापुराण आग्नेयेऽलङ्कारेऽभिनयादिकथनं नाम द्विचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४२ ॥

## त्रिचत्वारिंशदधिकत्रिशततमोऽध्यायः

### शब्दालङ्काराः

अग्निरुवाच— **स्यादावृत्तिरनुप्रासो वर्णानां पदवाक्ययोः। एकवर्णाऽनेकवर्णावृत्तिर्वर्णगुणो द्विधा॥ १॥ एकवर्णगतावृत्तेर्जायन्ते पञ्च वृत्तयः। मधुरा ललिता प्रौढ़ा भद्रा परुषया सह ॥ २ ॥ मधुरायाश्च वर्गान्तादधो वर्ग्या रणौ स्वनौ। ह्रस्वस्वरेणान्तरितौ संयुक्तत्वं नकारयोः॥ ३॥ न कार्य्या वर्ग्यवर्णानामावृत्तिः पञ्चमाधिका। महाप्राणोष्मसंयोगप्रविमुक्तलघूत्तरौ ॥ ४॥ ललिता बलभूयिष्ठा प्रौढ़ा या पणवर्गजा। ऊर्ध्वं रेफेण युज्यन्तेनटवर्गोनपञ्चमाः॥ ५॥ भद्रायां परिशिष्टाः स्युः परुषा साऽभिधीयते। भवन्ति यस्यामूष्माणः संयुक्तास्तत्तदक्षरैः ॥ ६ ॥ अकारवर्जमावृत्तिः स्वराणामतिभूयसी। अनुस्वारविसर्गौ च पारुष्याय निरन्तरौ॥७॥ शषसा रेफसंयुक्ताश्चाकारश्चापि भूयसा। अन्तस्थाभिन्नमाभ्याञ्च हः पारुष्याय संयुतः॥८॥**

---

हैं- विधि, निषेध, नियम, अनियम, विकल्प तथा परिसंख्या ।। २८ ।। परस्पर में पृथग्भूत के समान स्थित वाच्य तथा वाचक दोनों का परस्पर में मिलाने में समर्थ उक्ति को मनीषियों ने युक्ति कहा है ।। २९ ।। युक्ति के विषय छह हैं- पद, पदार्थ, वाक्य, वाक्यार्थ, प्रकरण तथा प्रपञ्च ।। ३० ।। रचनाचर्या को गुम्फना कहते हैं। उसके तीन भेद हैं- शब्दार्थ क्रमगोचरा, शब्दानुकारा तथा अर्थानुपूर्वार्था ।। ३१ ।। जिस रचना में उक्ति और प्रत्युक्ति (प्रश्न एवं उत्तर) दोनों हो उसे वाकोवाक्य कहते हैं। उसके भी दो भेद होते हैं- ऋजूक्ति तथा वक्रोक्ति। जो स्वाभाविक कथन है उसको ही ऋजूक्ति कहते हैं। उसके भी दो भेद होते हैं- अपूर्वप्रश्निका तथा प्रश्नपूर्विका। वक्रोक्ति के भी दो भेद होते हैं- भङ्गवक्रोक्ति तथा काकुवक्रोक्ति।

**इस तरह से आदिमहापुराण अग्निपुराण का अभिनयादि निरूपण नामक तीन सौ बयालीसवाँ अध्याय सम्पूर्ण हुआ ॥ ३४२ ॥**

**अग्निदेव ने कहा—** वसिष्ठ जी! पद एवं वाक्य में वर्णों की आवृत्ति को अनुप्रास कहते हैं। वृत्त्यनुप्रास के वर्णसमुदाय दो प्रकार के होते हैं- एक वर्ण तथा अनेक वर्ण ।। १ ।। एक वर्ण गत वृत्ति से पाँच वृत्तियाँ उत्पन्न होती हैं- मधुरा, ललिता, प्रौढा, भद्रा तथा परुषा ।। २ ।। मधुरा वृत्ति की रचना में वर्गान्त पञ्चम वर्ग के नीचे उसी वर्ग के अक्षर तथा ह्रस्वस्वर से अन्तरित र, ण, न, म, ये वर्ण प्रयुक्त होते हैं तथा दो नकार भीसंयुक्त होते हैं ।। ३ ।। वर्ग्य वर्णों की आवृत्ति पाँच से अधिक बार नहीं करनी चाहिए। महाप्राण (वर्गों के द्वितीय एवं चतुर्थ वर्ण) तथा लघु अक्षर वाली रचना मधुरा कही गयी है ।। ४ ।। ललिता में वकार एवं लकार का अधिक प्रयोग होता है। इसमें ऊर्ध्वगत रेफ से संयुक्त पकार एवं णकार तथा वर्ग्यवर्ण प्रयुक्त होते हैं, किन्तु इसमें टवर्ग तथा पञ्चमवर्ण का प्रयोग नहीं होता है ।। ५ ।। जिसमें अवशिष्ट असंयुक्त, रेफ, णकार आदि कोमल वर्ण प्रयुक्त होते हैं, उसे भद्रा अथवा कोमला वृत्ति कहते हैं। जिसमें विभिन्न अक्षरों से संयुक्त होकर उष्मा (श, ष, स, ह) वर्णों का प्रयोग होता है उसे परुषा वृत्ति कहते हैं ।। ६ ।। इस वृत्ति में अकार से अतिरिक्त अन्य स्वरोकी अत्यधिक आवृत्ति होती है। अनुस्वार तथा विसर्ग निरन्तर रूप में प्रयुक्त होकर परुषता को प्रकट करते हैं ।। ७ ।। रेफ संयुक्त, श, ष, स का प्रयोग अधिक अकार का प्रयोग, अन्तस्थ वर्णों का अधिक सन्निवेश तथा रेफ एवं अन्तस्थ से भेदित एवं संयुक्त

अन्यथाऽपि गुरुर्वर्णः संयुक्ते परिपन्थिनि । पारुष्यायादिमांस्तत्र पूजिता न तु पञ्चमी॥ ९॥ क्षेपे शब्दानुकारे च परुषापि प्रयुज्यते । कर्णाटी कौन्तली कौन्ती कोङ्कणी वामनासिका ॥ १० ॥ द्रावणी माधवी पञ्च वर्णान्तस्थोष्मभिः क्रमात् । अनेकवर्णावृत्तिर्या भिन्नार्थप्रतिपादिका ॥ ११ ॥ यमकं साव्यपेतञ्च व्यपेतञ्चेति तद् द्विधा । आनन्तर्य्यादव्यपेतं व्यपेतं व्यवधानतः॥ १२॥ द्वैविध्ये नानयोःस्थानपादभेदाच्चतुर्विधम् । आदिपादादिमध्यान्तेष्वेकद्वित्रिनियोगतः॥ १३॥ सप्तधा सप्तपूर्वेण चेत् पादेनोत्तरोत्तरः। एकद्वित्रिपदारम्भस्तुल्यः षोढा तदापरम् ॥ १४॥ तृतीयं त्रिविधं पादस्यादिमध्यान्तगोचरम्। पादान्तयमकञ्चैव काञ्चीयमकमेव च ॥ १५॥ संसर्गयमकञ्चैव विक्रान्तयमकं तथा । पादादियमकञ्चैव तथाम्रेडितमेव च ॥ १६ ॥ चतुर्व्यवसितञ्चैव मालायमकमेव च । दशधा यमकं श्रेष्ठं तद्भेदा बहवोऽपरे॥१७॥ स्वतन्त्रस्यान्यतन्त्रस्य पदस्यावर्त्तना द्विधा । भिन्नप्रयोजनपदस्यावृत्तिं मनुजा विदुः॥ १८॥ द्वयोरावृत्तपदयोः समस्ता स्यात् समासतः । असमासात् तयोर्व्यस्ता पादे त्वेकत्र विग्रहात्॥१९॥ वाक्यस्यावृत्तिरप्येव यथासम्भवमिष्यते । अलङ्काराद्यनुप्रासो लघुमध्येवमर्हणात् ॥ २०॥ यया कयाचिद् वृत्या यत् समानमनुभूयते । तद्रूपादिपदासत्तिः सानुप्रासा रसावहा॥ २१॥ गोष्ठ्यां कुतूहलाध्यायी वाग्बन्धश्चित्रमुच्यते । प्रश्नः प्रहेलिका गुप्तं च्युतदत्ते तथोभयम् ॥ २२ ॥ समस्या सप्त तद्भेदा नानार्थस्यानुयोगतः । यत्र प्रदीयते तुल्यवर्णविन्यासमुत्तरम् ॥ २३॥ स प्रश्नः स्यादेकपृष्ठद्विपृष्टोत्तरभेदतः। द्विधैकपृष्टो द्विविधः समस्तो व्यस्त एव च ॥ २४॥ द्वयोरप्यर्थयोर्गुह्यमानशब्दा प्रहेलिका । सा द्विधार्थी च शाब्दी च तत्रार्थी चार्थबोधतः ॥ २५ ॥ शब्दावबोधतः शाब्दी प्राहुः षोढ़ा प्रहेलिकाम्। यस्मिन् गुप्तेऽपि वाक्याङ्गे भाव्यर्थोऽपारमार्थिकः॥२६॥ तदङ्गविहिताकाङ्क्षस्तद्गुप्तं गूढ़मप्यदः। यत्रार्थान्तरनिर्भासोवाक्याङ्गच्यवनादिभिः॥२७॥

---

हकार भी परुषता का कारण होता है ।। ८ ।। अन्य प्रकार से भी जो गुरु वर्ण हैं, वे यदि माधुर्य विरोधी वर्ण से युक्त हों तो उनसे भी परुषता आती है । उस परुष रचना में यदि वर्ग का आदि अक्षर ही संयुक्त एवं गुरु हो तो श्रेष्ठ होता है । संयुक्त पञ्चमवर्ण का सन्निवेश परुष रचना में सर्वश्रेष्ठ नहीं माना गया है ।। ९ ।। यदि किसी पर आक्षेप करना हो अथवा किसी को कठोर वचन कहना हो तो वहाँ परुषा वृत्ति का ही प्रयोग किया जाता है । क, च, ट, त, प इन पाँच वर्णों, अन्तस्थवर्णों (य, र, ल, व) तथा उष्मा वर्णों के प्रयोग से जो आवृत्ति बनती है उसके बारह भेद हैं- कर्णाटी, कौन्तली, कोंकणी, वामनासिका, द्राविडी, माधुरी मत्सी, मागधी, ताम्रलिप्तिका, औण्ड्री, पौण्ड्री ।। १०-११ ।। जहाँ पर अनेक वर्णों की आवृत्ति हो तथा उसका अर्थ भिन्न हो वहाँ पर यमक नामक शब्दालंकार होता है । यमक के दो भेद होते हैं- अव्यपेत तथा व्यपेत ।। १२।। व्यवधान से युक्त वर्णों की आवृत्ति वाले यमक को व्यपेत तथा व्यवधान रहित को अव्यपेत कहते हैं।।१३।। इन दोनों यमकों के स्थान तथा पाद भेद के कारण दो-दो भेद होते हैं । इस तरह यमक चार प्रकार का होता है । आदि पाद के आदि, मध्य एवं अन्त में एक, दो एवं तीन वर्णों की पर्यायतः आवृत्ति होने पर कुल सात भेद हो जाते हैं । यदि सात पादों में उत्तरोत्तर पाद एक, दो और तीन पदों से आरम्भ हो तो अन्तिम पाद छह प्रकार का होता है ।। १४-१५ ।। तीसरे पाद के आदि मध्य एवं अन्त में आवृत्ति होने से वह तीन प्रकार का होता है । श्रेष्ठ यमक के दस भेद होते हैं- पादान्त यमक, काञ्ची यमक, समुद्र यमक, विक्रान्त्य यमक, चक्रवालयमक, संदष्ट यमक, पादादि यमक, आम्रेडित यमक, चतुर्व्यवसित यमक तथा माला यमक । इनके भी अनेक भेद होते हैं ।। १६-१७।। भिन्नार्थ वाचक पद की आवृत्ति को विद्वानों ने दो प्रकार का माना है- स्वतंत्र एवं अस्वतंत्र ।। १९ ।। दो आवृत्त पदों का समास होने पर समस्ता और उनके समास रहित होने पर व्यस्ता आवृत्ति कही जाती है ।। २० ।। यथासम्भव वाक्य की भी आवृत्ति इस प्रकार की होती है । अनुप्रास यमक आदि अलंकार लघु होने पर भी इस प्रकार समादृत होते हैं ।। २१ ।। आवृत्ति चाहे पद की हो या वाक्य की, जिस किसी भी आवृत्ति से वर्ण समूह समान अनुभव में आता है । उसआवृत्त रूप को आदि में रखकर जो सानुप्रास पद रचना की जाती है, वह सहृदयों के लिए आस्वाद्य होती है ।। २२ ।। सहृदयों की गोष्ठी में जो पदरचना कौतूहल पूर्वक पढ़ीएवं सुनी जाती है, उसे चित्र कहते हैं ।।२२।। इनके मुख्य सात भेद हैं- प्रश्न, प्रहेलिका, गुप्त, च्युताक्षर, दत्ताक्षर तथा च्युतदत्ताक्षर । इसमें अनेकार्थ प्रश्न होते हैं ।। २३।। जिसमें समानान्तर विन्यासपूर्वक उत्तर दिया जाये वह प्रश्न कहलाता है । वह दो प्रकार का होता है- एकपृष्टोत्तर तथा द्विपृष्टोत्तर ।। २४ ।। एक पृष्टोत्तर भी दो तरह का होता है- समस्त एवं व्यस्त । जिसमें दोनों अर्थों के वाचक शब्द गूढ़ होते हैं उसे प्रहेलिका कहा

तदङ्गविहिताकाङ्क्षस्तच्च्युतं स्याच्चतुर्विधम् । स्वरव्यञ्जनविन्दूनां विसर्गस्य च विच्युतेः॥ २८ ॥ दत्तेऽपि यत्र वाक्याङ्गे द्वितीयोऽर्थः प्रतीयते । दत्तं तदाहुस्तद्भेदाः स्वराद्यैः पूर्ववन्मताः ॥ २९ ॥ अपनीताक्षरस्थाने न्यस्ते वर्णान्तरेऽपि च । भासतेऽर्थान्तरं यत्र च्युतदत्तं तदुच्यते॥ ३०॥ सुश्लिष्टपद्यमेकं यन्नानाश्लोकांशनिर्मितम् । सा समस्यापरस्यात्मपरयोःकृतिसङ्करात्॥ ३१॥ दुःखेन कृतमत्यर्थं कविसामर्थ्यसूचकम् । दुष्करं नीरसत्वेऽपि विदग्धानां महोत्सवः॥ ३२॥ नियमाच्च विदर्भाच्च बन्धाच्च भवति त्रिधा । कवेः प्रतिज्ञा निर्माणरम्यस्य नियमः स्मृतः ॥ ३३ ॥ स्थानेनापि स्वरेणापि व्यञ्जनेनापि स त्रिधा । विकल्पः प्रातिलोम्यानुलोम्यादेवाभिधीयते ॥ ३४ ॥ प्रातिलोम्यानुलोम्यञ्च शब्देनार्थेन जायते । अनेकधावृत्तवर्णविन्यासैः शिल्पकल्पना ॥ ३५ ॥ तत्तत्प्रसिद्धवस्तूनां बन्ध इत्यभिधीयते । गोमूत्रिकार्द्धभ्रमणे सर्वतोभद्रमम्बुजम्॥ ३६॥ चक्रञ्चक्राब्जकं दण्डो मुरजश्चेति चाष्टधा । प्रत्यर्धं प्रतिपादं स्यादेकान्तरसमाक्षरा॥ ३७॥ द्विधा गोमूत्रिकां पूर्वामाहुरश्वपदां परे । अन्त्याङ्गोमूत्रिकां धेनुं जालबन्धं वदन्ति हि ॥ ३८ ॥ अर्द्धाभ्यामर्द्धपादैश्च कुर्य्याद् विन्यासमेतयोः । न्यस्तानामिह वर्णानामधोऽधः क्रमभागिनाम् ॥ ३९ ॥ अधोऽधः स्थितवर्णानां यावत् तुर्य्यपदं नयेत् । तुर्य्यपादान्नयेदूर्ध्वं पादार्द्धं प्रतिलोमतः ॥ ४० ॥ तदेवं सर्वतोभद्रं त्रिविधं सरसीरुहम् । चतुष्पत्रं ततो विघ्नं चतुष्पत्रे उभे अपि॥ ४१॥ अथ प्रथमपादस्य मूर्द्धन्यस्त्रिपदाक्षरम्। सर्वेषामेव पादानामन्ते तदुपजायते ॥ ४२ ॥ प्राक्पदस्यान्तिमं प्रत्यक् पादादौ

जाता है । उसके दो भेद होते हैं- शाब्दी प्रहेलिका और आर्थी प्रहेलिका । वह अर्थबोध के सम्बन्ध से आर्थी कही जाती है ।। २५-२६ ।। जिसमें शाब्दबोध का सम्बन्ध होता है, वह शाब्दी प्रहेलिका है । उसके छह भेद हैं । वाक्याङ्ग के गुप्त होने पर भी सम्भाव्य अपारमार्थिक अर्थ जिसके अंग में आकांक्षा से युक्त स्थित रहता है वह गुप्त कही जाती है । इसको गूढ़ भी कहते हैं ।। २७ ।। जिस पदरचना में वाक्याङ्ग की विकलता के कारण अर्थान्तर की प्रतीति विकलित अंग में साकांक्ष रहती है वह च्युताक्षर कही जाती है । उसके चार भेद हैं- स्वरच्युति, व्यञ्जनच्युति, विसर्गच्युति तथा विन्दु च्युति ।। २९ ।। जिसमें वाक्यांग के विकल अंश को पूरा कर देने पर भी दूसरे अर्थ की प्रतीति होती रहती है उसको दत्ताक्षरा कहते हैं । उसके भी स्वर आदि के कारण पूर्ववत् भेद होते हैं ।। ३०।। जिस रचना में लुप्त वर्ण के स्थान पर अक्षरान्तर को सन्निविष्ट कर देने पर भी अर्थान्तर का आभास होता रहता है, उसको च्युतदत्ताक्षरा वृत्ति कहते हैं ।। ३१ ।। जहाँ एक ही पद्य सुनियोजित ढंग से अनेक श्लोकांशों से निर्मित हो उस रचना को समस्या कहते हैं । समस्या दूसरे की रचना होती है और उसकी पूर्ति अपनी रचना होती है, इस तरह अपनी तथा दूसरे की रचना के सांकर्य से समस्या की पूर्ति होती है ।। ३२ ।। चित्रकाव्य अत्यन्त कठिन होता है, क्लेश साध्य होने पर भी वह कवि की कवित्वशक्ति का सूचक होता हैं यद्यपि यह नीरस होता है फिर भी विदग्ध (काव्यकला में कुशल) पुरुषों के लिए यह महोत्सव के समान अत्यन्त प्रिय होता है ।। ३३ ।। इसके तीन भेद होते हैं- (१) नियम, विदर्भ तथा बन्ध भेद के कारण । रमणीय कविता का निर्माण करने में समर्थ कवि की प्रतिज्ञा को नियम कहते हैं ।। ३४ ।। यह नियम भी तीन प्रकार का होता है- स्थानविषयक, स्वरविषयक तथा व्यञ्जन विषयक । विकल्प प्रातिलोम्य तथा आनुलोम्य के द्वारा होता है ।। ३५।। प्रातिलोम्य तथा आनुलोम्य शब्द एवं अर्थ के द्वारा होते हैं । अनेक प्रकार के वृत्तों के वर्णों के विन्यास के द्वारा विभिन्न प्रख्यात वस्तुओं के चित्रकर्मादि की कल्पना करने को बन्ध कहते हैं ।। ३६।। बन्धों के आठ भेद माने जाते हैं- १. गोमूत्रिका बन्ध, २. अर्धभ्रमण बन्ध, ३. सर्वतोभद्र बन्ध, ४. अम्बुज (कमल) बन्ध, चक्रबन्ध, चक्राब्जबन्ध, दण्डबन्ध तथा मुरजबन्ध ।।३७।। जिस रचना के प्रत्येक अर्द्धभागों तथा प्रत्येक पाद में एक-एक अक्षर के व्यवधान से अक्षर साम्य प्रयुक्त होता है उसको गोमूत्रिका बन्ध कहते हैं ।। ३८ ।। गोमूत्रिका बन्ध के दो भेद होते हैं- पूर्वागोमूत्रिका। इसको कुछ लोग अश्वदा गोमूत्रिका भी कहते हैं तथा अन्त्यागोमूत्रिका इसको धेनुजाबन्ध भी कहा जाता हे ।। (पूर्वागोमूत्रिका के प्रत्येक अर्द्धभाग में एक-एक अक्षर के बाद अक्षर साम्य से युक्त होती है और अन्त्यागोमूत्रिका प्रत्येक पाद में एक-एक अक्षर के अन्तर से अक्षर साम्य से युक्त होती है) ।। ३९ ।। गोमूत्रिका बन्ध के पूर्वोक्त दोनों भेदों का विन्यास क्रमशः अर्द्धभागों तथा अर्द्धपादों से करना चाहिए । यहाँ क्रमशः नीचे-नीचे विन्यस्त वर्णों का नीचे-नीचे स्थित वर्णों का जब तक चतुर्थ पाद पूरा न हो जाय तब तक नयन करें । चतुर्थ पाद पूरा हो जाने पर प्रातिलोम क्रम से अक्षरों को पादार्ध

